# अंशुमानागमम्

## आगमप्रतिष्ठा

भगवन् देवदेवेश लोकनाथ जगत्पते
आगमस्य प्रतिष्ठा तु श्रोतुमिच्छामि तत्वतः १
ईश्वर उवाच
साधु साधु रवे प्राज्ञा यत्त्वया परिचोदितः
आगमस्यायिदं प्राहु महीवचनमुच्यते २
तत्वागम्यते येन आगमेति विस्मृतम्
कामिकादिषु तन्त्राणि पुस्तकं श्लोकपूर्वकम् ३
पुस्तकस्य क्रमं वक्ष्ये शृणुष्वातलोचने
अणुरष्टौ विजानीयात् रथचक्रस्य दूषय ४
तेष्वष्टौ रोमकश्चैव रोमाष्टौ क्षीरकथ्यते
क्षीराष्टौ युगमध्याहु तदाष्टौ यवमध्यमम् ५
यवानामष्टमेवन्तु अङ्गुलन्त्विति चोच्यते
द्वादशस्य करं तालं अरत्निरितिरुच्यते ६
आयव्ययञ्च नक्षत्र योनिवारांशकानि च
एतत्सर्वं समाख्यातं शुभं पुस्तकलक्षणम् ७
दण्डेन राजवेश्मेन मध्ये वा ग्राममध्यमे
ग्रामादीना विनास्यश्च अङ्गुल्यायस्तथानना ८
अङ्गुल्या चैव हस्तादि आयानाञ्च समन्वितम्
पुस्तकञ्च प्रदीपञ्च लेखनत्रयमेव च ९
अन्यैश्च हस्तमात्रेण मानाङ्गुल्येन लक्षणम्
इदानीं पुस्तकं वक्ष्ये समासात्पूर्ण सम्प्रतम् १०
द्वाविंशदङ्गुलं दीर्घं मानाङ्गुलेन कारयेत्
पुस्तकस्य तु विस्तारं चतुरङ्गुलमुच्यते ११
एभिस्तु लक्षणैर्युक्तं लक्ष्मी तीद्रमिति स्मृतम्
एकविंशतिरङ्गल्यं विस्तारन्तु त्रयङ्गलम् १२

श्रीकरस्तु विजानीयादुत्तमान्मध्यमाधमम्
मध्यमस्योत्तमं वक्ष्ये शृणुकेष्ववतत् दिवाकरः १३
अष्टादशाङ्गुलायाममध्याधिक्यं द्वयाङ्गुलम्
नाळीकामिति विख्यातं मध्यमं वक्ष्यतेऽधुना १४
सप्तादशाङ्गुलायामं त्रित्रिपञ्चाङ्गुलद्वयम्
श्रीनिवासमिति ख्यातं श्रीभद्रमधुनोच्यते १५
षोडशाङ्गुलमायामं द्वयपञ्चाङ्गुलद्वयम्
मध्यमत्रयमेवोक्तमधमत्रयते शृणु १६
पञ्चदशाङ्गुलायामं यवाधिकद्वयाङ्गुलम्
लक्ष्मीवासवमित्युक्तमधमं चोच्यतेऽधुना १७
चतुर्दशाङ्गुलायामं मङ्गुलद्वयविस्मृतम्
एभिस्तु लक्षणैर्युक्तं सर्वसम्पत्करं नृणाम् १८
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्शिवमेव च
कालरुद्रो नीलरुद्रो प्रळयानिलस्सदाशिवः १९
अधिदेवास्समाख्यात यशश्चामधुनोच्यते
वामज्येष्ठादिपूर्वादि रौद्री चैव मनोन्मनी २०
विश्वामित्रश्च वाल्मीक काश्यपाश्चाङ्गिरस्तथा
गौतमालम्भनो लाभा वसिष्ठाश्चाशुनस्तथा २१
देवताश्शक्तयश्चैव ऋषयः कीर्तितः क्रमात्
आयव्ययादि यत्कर्ममर्च्यत्नेन तु परीक्षयेत् २२
एभिस्तु लक्षणैर्युक्तं पुस्तकं ग्राहयेत्ततः
भूर्जपत्रेण गृह्यात्तु तालपत्रमथापि वा २३
अथवा तालपत्रन्तु गृह्णीयात्तु विशेषतः
अध्यर्द्धमङ्गुलैर्युक्तं पत्रविस्तारमुच्यते २४
त्रिभागं तु चतुर्भागं मध्ये सुषिरमुत्तमम्
जातीचक्रकं वापि उशिरं नाळिकेरकम् २५

पत्रायामसमं कृत्वा यावमात्रघनं ददेत्
पार्श्वयोस्तु प्रकर्तव्यं दर्पणोदरवत्कृतम् २६
जातिलिङ्गं हरिश्मारैश्चित्रिकैर्लक्षणान्वितम्
कार्पाससूत्रं गृह्णीयात् रज्जुं कृत्वा विशेषतः २७
सप्तविंशतिसूत्रैस्तु उत्तमारज्जुमुच्यते
नवसूत्रेण संयुक्तमथवा रज्जुमुच्यते २८
लेखखण्डक्रमं वक्ष्ये यथावदनुपूर्वशः
उद्धायसेन कर्तव्यं नाराचं तालमात्रकम् २९
ग्रथवा मक्षिणाचैव कुलिकाग्रविशेषतः
पूर्वोक्तलक्षणैर्युक्तमाचार्याय प्रकल्पितम् ३०
तस्मात्सर्वप्रयत्नेन सर्वलक्षणसंयुतम्
प्रतिष्ठायां प्रवक्ष्यामि यथावित्तानुसारतः ३१
प्रासादाग्रतः कुर्यात् मण्टपं चतुरश्रकम्
पूर्वोक्तलक्षणैर्युक्तं सर्वालङ्कारसंयुतम् ३२
मण्टपस्य चतुर्दिक्षु चतुर्द्वारं प्रकल्पयेत्
यत्तन्मण्टपविस्तारं नवभागं विभाजिते ३३
मध्यमे कल्पयेद्वेदीं कुण्डानां परितो रविः
चतुरश्रन्तु पूर्वायां वह्ने ग्रश्वत्थ पत्रवत् ३४
याम्ये यां मर्द्धचन्द्राभं त्रिकोणं राक्षगोचरे
वृत्तकुण्डन्तु वारुण्यां वायव्यान्तु षडश्रकम् ३५
पद्ममुत्तरदेशे तु ऐशान्यामष्टकोणकम्
ईशाने दक्षिणे भागे वृत्तकुण्डं प्रधानकम् ३६
त्रिमेखलासमायुक्तं नाभ्यादीनि यथाक्रमम्
पूर्वोक्तलक्षणैर्युक्तं कुण्डान्येतानि कल्पयेत् ३७
पञ्चकुण्डानि वा कुर्यात् ग्रथवाप्येकमेव तु
चतुर्दिक्षु चैशान्यां पञ्चहोमन्तु कारयेत् ३८

ऐशान्यामेकमेवन्तु कारयेद्देशिकोत्तमः
मण्टपस्य चतुर्दिक्षु चतुर्द्वारं प्रकल्पयेत् ३९
गोमयालेपनं कुर्यात् श्वेतचूर्णैरलङ्कृतम्
दर्भमालाभिरावेष्ट्या चामरध्वजसम्युतम् ४०
वितानाद्यैस्समासाद्य पुष्पमाल्यैरलङ्कृतम्
चतुस्तोरणसंयुक्तं मङ्गलाष्टकसम्युतम् ४१
यथोक्तलक्षणैर्युक्तं यागशालां प्रकल्पयेत्
वास्तुहोमं ततः कुर्यात् पर्यग्निकरणं कुरु ४२
अङ्कुरार्पणपूर्वन्तु कारयेद्देशिकोत्तमः
शालिना विकरेत्तत्र वेदिकामध्यमे तथा ४३
तण्डुलान्विन्यसेत्तत्र श्वेतपद्मं समालिखेत्
पद्मासने समासीनं पुस्तकं शाययेत्क्रमात् ४४
तस्य पुस्तकमध्ये तु वागीशीं विन्यसेत् बुधः
चतुर्भुजां त्रिणेत्राञ्च पूर्णेन्दु वदनान्विताम् ४५
शुक्लां शुक्लाम्बरामक्षमालापुस्तकधारिणीम्
सदृशं दक्षिणे हस्ते करकं वामहस्तके ४६
दुकूलवाससां देवीं जटामकुटसम्युताम्
मुक्ताभरणसंयुक्तां सुप्रसन्नां सरस्वतीम् ४७
वेदिका मध्यमे ध्यात्वा प्राक्शिरं पुस्तकं ततः
सरस्वती तु वाचा च सर्वावयवरूपिणीम् ४८
आगत्यैर्वेदिमायाञ्च शाययेन्मूलविद्यया
तस्य दक्षिण पार्श्वे तु विघ्नेशं पूजयेत्ततः ४९
वर्द्धन्याष्टौ सुगन्धाद्यैस्सूत्रेण परिवेष्टयेत्
गन्धोदकेन सम्पूर्याश्चाष्टदिक्षु प्रपूजयेत् ५०
वामज्येष्ठाश्च रौद्रीश्च काळीकलविकर्णिका
बलविकरणी बाला सर्वभूता मनोन्मनी ५१

एतेषां विन्यसेद्बाह्ये वेदिकोपरि बाह्यतः
इन्द्रादिलोकपालञ्च तद्बाह्ये पूजयेत्ततः ५२
स्वनामपदमन्त्रेण प्रासादेन तु पूजयेत्
पञ्चरत्नसमायुक्तं पञ्चगव्येन सम्युतम् ५३
सकूर्चान् सापिधानञ्च सहिरण्यान् सवस्त्रकान्
सितपुष्पेण सम्पूज्य पायसान्नं निवेदयेत् ५४
ततो होमं प्रकुर्वीत शास्त्रदृष्टेन कर्मणा
पलाशोदुम्बराश्वत्थ प्लक्षन्यग्रोधमेव च ५५
एकविंशति संख्यात्तु हुत्वा तु परिकीर्तितः
समिधाज्य चरून् लाजान् सर्षपांश्च यवांस्तिलान् ५६
प्रत्येकमेकविंशन्तु पुरुषेण तु मन्त्रतः
पञ्चब्रह्मषडङ्गैस्तु हुत्वा हुत्वा विशेषतः ५७
व्याहृतिञ्च ततो हुत्वा शिरसा पूर्णमाह्वयम्
हुत्वा हुत्वा स्पृशं देवीं कूर्चेन तु विशेषतः ५८
द्रव्यान्ते व्याहृतिं हुत्वा तद्रात्रौ कारयेत् बुधः
चतुर्दिक्षु चतुर्वेदै कुर्यादध्ययनं ततः ५९
तस्य दक्षिण पार्श्वे तु दर्भाशय स नो बुधः
शुभाशुभानि स्वप्नानि तद्रात्रौ तु परीक्षयेत् ६०
शुभानि चेत् शुभं विद्यादशुभे होममाचरेत्
ततः प्रभातसमये स्नानं कृत्वा तु देशिकः ६१
नववस्त्रेण संवेष्ट्यास्सोष्णीषं चोत्तरीयकः
पञ्चाङ्गभूषणैर्युक्तं स्तोत्रशब्दसमायुतम् ६२
सुमुहूर्ते सुलग्ने च योगे च करणान्विते
स्नानवेदीं समासाद्य शिरसा धारयेद्धृदा ६३
आचार्यपूजनं कृत्वा वस्त्रहेमाङ्गुलीयकैः
वर्द्धन्यां वाहयेत्तत्र स्वस्तिसूक्तेन संयुतम् ६४

पूर्ववद्यां विरूपन्तु विन्यसेत्पुस्तके बुधः
पञ्चासन समायुक्तं कारयेद्विधि पूर्वकम्  ६५
हृदयं हृदये न्यस्य शिवशिरसि विन्यसेत्
शिखायान्तु शिखां न्यस्य कवचं स्तनमध्यतः  ६६
अस्त्रं हस्त प्रदेशे तु नेत्रं नेत्रेषु विन्यसेत्
प्रतिष्ठा वर्द्धनीं ग्राह्य प्रासादेन तु प्रोक्षयेत्  ६७
व्योमव्यापिति मन्त्रेण षडङ्गै ब्रह्मगैस्ततः
पञ्चवर्णहविं दद्यात् लोकपालान् क्षिपेत् बुधः  ६८
ब्राह्मणान् भोजयित्वा तु सप्तकन्यांश्च भोजयेत्
ततो भक्तजनैस्सार्धं भोजयेत्तु विशेषतः  ६९
गोदानं भूमिदानञ्च दापयेद्भक्तिसम्युतम्
रात्रौ महोत्सवं कुर्यात् शङ्खभेर्यादिनिस्वनैः  ७०
देवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
कुलैकविंशमुद्धृत्य शिवलोकं महीयते  ७१
आगमस्थापनं प्रोक्तं पुष्पमण्टपकं शृणु  ७२
इत्यंशुमान् तन्त्रे आगमस्थापनविधिः

नित्यपूजा प्रायश्चित्तविधिः

प्रायश्चित्तविधिं वक्ष्ये भूपतां रविसत्तम
प्रायो विनाशमित्युक्तं चित्तसन्धानमुच्यते
विनाशस्य तु सन्धानं प्रायश्चित्तमिति स्मृतम्  १
ब्राह्मे मुहूर्त्ते कर्त्तव्या क्रियाकर्म च पुष्कलम्
ब्राह्मे मुहूर्त्तमारभ्य क्षेत्रपालार्चनान्तकम्
क्रियायां करणे चैव व्यत्यासे विपरीतके  २
विस्मृते हव्यहीने च प्रायश्चित्तं विधीयते
वैरिञ्चेत्तु मुहूर्त्ते तु आचार्यो स्थापनन्नयेत्  ३

तस्य वायुर्भवेद्धीनं सावित्रीं तु शतञ्जपेत्
मूलमन्त्रशतं जप्त्वा तद्दोषशमनं कुरु ४
विध्युक्तस्नानहीने च महामारी प्रवर्तते
तद्दोषशमनार्थाय पवमानञ्जपेद्गुरुम् ५
मन्त्रस्नानं ततः कृत्वा पूर्ववत्स्नानमाचरेत्
देवादितर्पणे हीने पुत्राणां दोषकृद्भवेत् ६
तद्दोषशमनार्थाय पुनः स्नानं समाचरेत्
तर्पणं पूर्ववत्कृत्वा विधिना देशिकोत्तमः
सन्ध्यावन्दनकाले तु मन्त्राणां विपरीतके ८
क्रियाणां विपरीते तु कालातिक्रमणे सति
सावित्र्याजपहीने तु ब्राह्मन्तेज प्रणश्यति ९
तद्दोषशमनार्थाय पुनः स्नानं समाचरेत्
दशकृत्वाभिमन्त्र्यापः सावित्र्या च पिबेद्गुरुः १०
पुनरेवमनुष्ठेयं ततश्चोपवासयेत्
आर्द्रवस्त्रेण संयुक्तः कर्मकुर्यादतन्द्रितः ११
वृधा भवति तत्कर्म पुनः स्नानेन शुध्यति
पूर्वास्य उत्तरास्यो वा सर्वं कुर्याद्विचक्षणः १२
याम्ये च पश्चिमेनैव निष्फलं तदवाप्नुयात्
भस्मन्न्यासविहीने च सकळीकरणहीनकम् १३
प्रदक्षिणविहीने च आचार्यं नाशयेद्ध्रुवम्
तद्दोषशान्तयेद्धीमान् मूलमन्त्रं शतञ्जपेत् १४
भस्मन्न्यासादिकं सर्वं पुनः कुर्याद्विशेषतः
पञ्चघोषन्विहीने च सामान्यार्घ्यं विहीनके १५
द्वारपालार्च्चनाहीने भोगरङ्गस्यालये तथा
बधिरत्वमनादृष्टिः पैशाचाद्भयमादिशेत्
तद्दोषशमनार्थाय नन्दिमन्त्रं शतञ्जपेत् १६

पञ्चब्रह्म ततः पश्चान्मूलमन्त्रं शतञ्जपेत्
पुनश्च पूर्ववत्कृत्वा सर्वकर्माणि कारयेत् १७
पुनर्ध्यानविहीने च छत्रदीपविहीनके
शङ्खघोषविहीने च राजाराष्ट्रस्य दोषकृत् १८
तद्दोषशमनार्थाय अघोरन्तु शतञ्जपेत्
पुनस्सर्वं समादाय अशेषांश्च समाचरेत् १९
यामं प्रवेशतं पश्चात् ज्ञाते सति विशेषतः
मूललिङ्गविशेषेण स्नपनं शान्तिहोमकृत् २०
मार्गशुद्धविहीने च यन्मरुत्वात्त्वन्यथा भवेत्
शान्तिहोमं पुराकृत्वा नवकैरभिषेचयेत् २१
पुनर्यानविहीने च बालानां नाशनं भवेत्
तत्कालेन विशेषेण नवकस्नापनं कुरु २२
अरूपोदपकाले तु ज्ञाते सति च यानकम्
कर्तृणां नाशनं चैव राजराष्ट्रस्य दोषकृत् २३
पुनर्यानं ततः कृत्वा पादुकायां च बुद्धिमान्
नवकैरभिषिच्याथ मूलेर्शैर्वैर्विशेषतः २४
षोडशस्नपनं कुर्याच्छान्तिहोमपुरस्सरम्
महेशपूजा पूर्वे तु तन्ते यदि बुद्धिमान् २५
उत्तमन्तु भवेन्नृणां नृपाणां नाशनं भवेत्
यानं पुनर्यथा कुर्यान्नमकैरभिषेचयेत् २६
मूलेन पञ्चविंशद्भिः गौर्याः षोडशभिः क्रमात्
सौरार्हणायां काले वा तत्पूर्वे विदिते सति २७
पराराष्ट्राद्भयं भूमौ ज्वरमारी प्रवर्तते
तद्दोषशमनार्थाय पञ्चाशत्स्नपनं कुरु २८
तत्काले तु विशेषेण गौर्यस्नपनमाचरेत्
पुण्याह वाचनं हीनं पुण्याहे पञ्चगव्ये च

द्वारपालार्च्चने तथा । वास्तुनायार्च्चने
काले तु विशेषेण प्रातस्सन्ध्यादिकालके २९
होमकाले तु संप्राप्ते विदिते यदि वा पुनः
दुर्भिक्षं जायते लोके राजादुर्जयमाप्नुयात् ३०
तत्र शान्तिं प्रकुर्वीत शान्तिहोमपुरस्सरम्
मध्यमां मध्यमेनैव स्नपनैरभिषेचयेत् ३१
नित्योत्सवस्य काले तु ज्ञाते च सतिबुद्धिमान्
महाज्वरमवाप्नोति जनानाञ्च विशेषतः
मूलमन्त्रं शतञ्जप्त्वा शेषयानक्रमं कुरु ३२
यानान्ते तु विशेषेण घातुकायानमाचरेत्
मूललिङ्गे समायोज्य स्नानमष्टोत्तरं शतम् ३३
चन्द्रशेखरमूर्त्तेस्तु नवकैरभिषेचयेत्
नित्योत्सवान्त्ये काले तु दीपदानस्य कालके ३४
उपसन्ध्यार्च्चनात्पूर्वे तत्काले वा तदन्तके ३५
सध्यानां नाशनं प्रोक्तं ज्वरं सर्वत्र जायते
शान्तिहोमसमायुक्तमष्टोत्तरशतं मतम् ३६
तत्र सर्वत्र काले तु गौर्या स्नपनमादिशेत्
मध्याह्ने यजने काले ज्ञाते सति तदन्तिके ३७
पादुकायार्चनं कुर्यात् पुनर्यानादिकं बुधः
वर्षवातादिभिश्चैव लोकोपद्रमवाप्नुयात् ३८
तस्माद्दोषस्य शान्त्यर्थं द्विशताष्टोत्तरं बुधः
कलशैरभिषिच्याथ शान्तिहोमपुरस्सरम् ३९
चण्डपूजावसाने वा तत्काले वा तदग्रहे
ज्ञाते यदि तु तत्काले चण्डपूजां समाचरेत् ४०
परचक्राद्भयं भूमौ राजादुर्भिक्षमाप्नुयात्
ज्ञातकाले विशेषेण पुनर्यानं समाचरेत् ४१

सायाह्ने समये प्राप्ते तत्र शान्तिं समाचरेत्
मूर्त्तिहोमसमायुक्तमुत्तमान्मध्यमैर्बुधः ४२
कलशैरभिषिच्याथ गौर्याश्चैव तथैव च
सायरक्षां समारभ्य अर्धयामान्तके तथा ४३
तत्र काले तु विदिते पुनः स्नानं समाचरेत्
महामारी प्रवेषञ्च लोके चाग्निभयं भवेत् ४४
दुर्भिक्षजायते भूमौ राजराष्ट्रस्सदोषकृत्
तद्दोषशमनार्थाय शान्तिं कुर्याद्विचक्षणः ४५
मूर्तिहोमेन संयुक्तं संप्रोक्षणमथाचरेत्
सहस्रकलशैः स्नाप्य महाहविर्निवेदयेत् ४६
हीने च पाटुकाश्शान्ते मूललिङ्गे समाचरेत्
तद्दोषवासिनां नृपां शोकदुःखभयावहम् ४७
तद्दोषशमनार्थाय संप्रोक्षणमथाचरेत्
पुनः शक्तिं समावाह्या शेषं पूर्ववदाचरेत् ४८
उषसन्ध्यार्च्चना हीने तद्राष्ट्रे रोगसम्भवम्
तद्दोषशमनार्थाय नवकैरभिषेचयेत् ४९
तस्मात्सर्वप्रयत्नेन पुनः पूजां समाचरेत्
सकळाराधने हीने राजा दुर्ज्जयमाप्नुयात् ५०
तद्दोषशमनार्थाय नवकं शान्तिहोमकम्
सौरपूजाविहीने च भवते रोगसम्भवम् ५१
शान्तिहोमं ततः कृत्वा नवकैः स्नपनं चरेत्
उषःसन्ध्या च सर्वत्र पूर्ववत्कल्पयेद्बुधः ५२
भूमिशुद्धिविहीने च याः श्रीसात्वन्यधा भवेत्
तद्दोषशमार्थाय तन्मूलन्तु शतञ्जपेत् ५३
सङ्कल्पे तु विहीने च तत्क्रिया विफलं भवेत्
मूलमन्त्रं शतञ्जप्त्वा पुनस्सङ्कल्पमाचरेत् ५४

पुण्याहन्तु विहीने च तद्ग्रामत्वशुचिर्भवेत्
तद्दोषशमार्थाय पंचगव्याभिषेचनम्
पवतण्डुलहीने च पात्रे हीने च लक्षणम्
दर्भपुष्पविहीने च गन्धाक्षतविहीनके ५५
वृतवाचविहीने च व्रीहिहीने तथैव च
कर्तृणां नाशनं चैव नृपाणान्नाशनन्तथा ५६
लोके दुर्भिक्षमाप्नोति महाज्वरमवाप्नुयात्
तत्र शान्तिं प्रवक्ष्यामि नवकं शान्तिहोमकम् ५७
लक्षणोक्तप्रकारेण पूर्ववत्सर्वमाचरेत्
स्थण्डिले तु विहीने च तत्संख्या च विहीनके ५८
कोष्ठपूजा विहीने च पात्रपूजाविहीनके
पात्रलक्षणहीने च दिव्यप्रमाणहीनके ५९
क्षीरादीनां तथा पात्रं स्नापने विपरीतके
तत्तन्मन्त्रविहीने च तत्तद्योजनहीनके
कुशोदकविहीने च तथा कूर्चविहीनके
पिष्टादिद्रव्यहीने च तत्संख्या च विहीनके
मानेन मन्त्रहीने च आच्छादनविहीनके ६०
धूपदीपविहीने च महामारीप्रवर्त्तते
बालानां नाशनं चैव कर्तृणां नाशनं तथा ६१
तत्तन्मन्त्रशतञ्जप्त्वा मूलमन्त्रं सहस्रकम्
तद्द्रव्यद्विगुणं ग्राह्यं पूर्ववत्स्थापयेद्बुधः ६२
पात्रे तु पतिते भिन्ने पिपीलिकादि दृष्टिते
मार्ज्जारोच्छिष्टने चैव प्रष्टे वा शुचितद्विजैः ६३
पात्रसंख्या विहीने च उक्तस्थानविहीनके
गवां च नाशनं प्रोक्तं तद्द्रव्यन्तु विसर्जयेत् ६४
तद्दोषशमनार्थाय मूलेनैव सहस्रकम्

पुनर्गव्यन्तु सङ्गृह्य पूर्ववत्स्नापयेद्बुधः ६५
पञ्चगव्यं च तत्प्रोक्तं स्थण्डिलादि तथा रवेः
पञ्चामृतस्य तत्सर्वं प्रायश्चित्तादिकञ्चरेत् ६६
घृतेन स्नापयेच्छम्भुं ब्रह्ममन्त्रं शतञ्जपेत्
पाद्यादीनान्तु पात्राणान्तथा च परिकल्पयेत् ६७
पुल्लीपूजाविहीने च काष्ठाशुद्धिविहीनके
सस्यानां नाशनञ्चैव मूलमन्त्रं शतञ्जपेत् ६८
पात्रशुद्धिविहीने च बालानां नाशनं भवेत्
मूलमन्त्रशतञ्जप्त्वा तत्तत्कर्माणि कारयेत् ६९
गणेशस्यार्चने हीने नृपवाहननाशनम्
स्नपनं शान्तिहोमञ्च कारयेत्तु गणेश्वरम् ७०
पूर्ववत्पूजयित्वा तु तन्मूलेन शतं जपेत्
द्वारपूजाविहीने तु दुर्भिक्षञ्जायते भुवि ७१
शान्तिकुम्भस्थतोयेन देवेशमभिषेचयेत्
यजने वास्तु नाथस्य हीने रोगस्य संभवः ७२
तन्मूलेन शतं हुत्वा तद्दोषशमनं कुरु
मूले चावाहने हीने स्थापने च विहीनके ७३
सन्निधानन्तथा रोगः स्वागतञ्चासनन्तथा
अनुमानविहीने च महामारीप्रवर्तते ७४
तस्मात्तद्दोषशान्त्यर्थं घृतेनैवाभिषेचयेत्
शान्तिहोमसमायुक्तं नवकैरभिषेचयेत् ७५
स्थापितस्य तु गव्यस्य चाभिषेकविहीनके
बालानां नाशनञ्चैव पुनर्द्विगुणमाचरेत् ७६
तद्दोषशमनार्थाय अन्यसन्ध्याभिषेचनम्
स्नाने हीने तथा प्रोक्तं तद्दृष्टे कलवर्जितम् ७७
तद्दोषशान्तये धीमान्नवकैरभिषेचयेत्

तोयप्रमाणहीने च सस्यानान्नाशनं भवेत् ७८
अस्त्रमन्त्रं शतं जप्त्वा द्विगुणं चान्यसंधिषु
स्नानं द्रव्यविहीने च तद्राष्ट्रे जलवर्जितम् ७९
तद्द्रव्यद्विगुणं दद्यात् बहुरूपशतञ्जपेत्
दृष्टचेत् स्नानतोयेषु मत्स्यमण्डूकरोमकान् ८०
या श्रीसात्वव्यधा चैव तद्द्राष्टे जलवर्ज्जितम्
बेरशुद्धिं ततः कृत्वा चाष्टमृत्सलिलेन तु ८१
गन्धोदकेन संस्नाप्य बिल्वपत्रेण वष्टयेत्
पञ्चगव्याभिषेकन्तु स्नानमष्टोत्तरं शतम् ८२
मन्त्रपुष्पविहीने च मन्त्रान्नस्यविहीनके
तत्प्रमाणविहीने च तत्कालस्य विहीनेके ८३
खण्डयस्त्रविहीने च राक्षसानां प्रपीडनम्
नवकैरभिषिच्याथ शान्तिहोमपुरस्सरम् ८४
वस्त्रयुग्मविहीने च दुर्भिक्षञ्जायते भुवि
अष्टोत्तरशतञ्जप्त्वा तन्मूलेन तु देशिकः ८५
बहुरूपं शतञ्जप्त्वा अन्यसन्ध्यासु दापयेत्
भूषणस्योपवीतस्य हीने दारिद्रसम्भवः ८६
नवकैरभिषिच्याथ तद्दोषशमनं कुरु
चन्दनेन विहीने च भूपतेर्रोगसंभवः ८७
शान्तिं कृत्वा विशेषेण नवकैरभिषेचयेत्
गन्धद्रव्यविहीने च तद्राष्ट्रे भयमावहेत् ८८
अस्त्रमन्त्रशतं जप्त्वा तद्द्रव्यद्विगुणान्ददेत्
दामं च पुष्पपात्रञ्च अष्टपुष्पविहीनके ८९
तत्तत्सन्ध्योक्तपुष्पं वा पात्रं वापि विहीनके
पुष्पव्यत्थासने चैव अर्चने तु विशेषतः ९०
मन्त्राणां व्यत्यये चैव तथा मन्त्रविहीनके

बालानां नाशनं प्रोक्तं सस्यानां नाशनं भवेत् ९१
शान्तिहोमसमायुक्तं नवकैरभिषेचयेत्
तत्तत्संध्योक्तपुष्पादि पूर्ववत्सम्यगाचरेत् ९२
स्वायम्भुवादिलिङ्गानां प्रतिमानाञ्चराङ्गके
पुष्पहीने भवेद्राष्ट्रां श्रियञ्चैव प्रणश्यति ९३
मूलमन्त्रशतञ्जप्त्वा पुष्पं मूर्ध्नि प्रदापयेत्
हीने नित्यं पवित्रस्य भूपते रोगसम्भवः ९४
मूलमन्त्रशतञ्जप्त्वा नवकैरभिषेचयेत्
शान्त्यादिशक्तिपर्यन्तमासनार्च्चनहीनके ९५
आवरणार्च्चने हीने गोनाशं सस्यनाशनम्
नवकैरभिषिच्याथ तद्दोषशमनं कुरु ९६
पाद्यमाचमनार्घ्यं च तत्तद्द्रव्यविहीनके
तद्राष्ट्रे वर्षवर्ज्यं स्यात् महामारी प्रवर्त्तते ९७
तद्दोषशान्तये तस्मिन्नस्त्रमन्त्रं शतञ्जपेत्
तद्द्रव्यं द्विगुणं दद्यात् अन्यसन्ध्यां सुदापयेत् ९८
मुद्गान्नस्य विहीने तु तद्राष्ट्रे धान्यनाशनम्
शान्तिहोमसमायुक्तं नवकैरभिषेचयेत् ९९
नैवेद्यस्योपदंशस्य हीने दुर्भिक्षसंभवः
तद्दोषशमनार्थाय नवकैरभ्षेचयेत् १००
घृताक्षारमरीचीनां व्यञ्जने तु विहीनके
अतिपक्वमपक्वञ्चाधिगव्यं च जयेत् १०१
नैवेदितं तदन्नं च तद्राष्ट्रे क्षुद्रमयं भवेत्
नैवेद्योत्थापने काले स्वछिते त्वन्यजातिभिः १०२
स्पृष्टमन्नं तु तच्छेषं विग्रहन्तु तदन्नकम्
एतत्त्रिविधमन्नन्तु वर्जयेत्तु प्रयत्नतः १०३
तद्ग्रामस्य विशेषेण दुर्भिक्षं भवति ध्रुवम्

क्षीराभिषेचनं कृत्वा स्नपनैरभिषेचयेत् १०४
नैवेद्यस्थापने काले मार्गशुद्धिविहीनके
शंखध्वनिविहीने तु चन्नदीपविहीनके १०५
आच्छादनविहीने तु तद्राष्ट्रे जलवर्ज्जितम्
अघोरेण शतञ्जप्त्वा तदन्नं प्रोक्षयेद्बुधः १०६
नैवेद्योत्थापने काले नैवेद्यपतिते भुवि
क्षुद्रबाधाधाजायते नृणां ज्वरं सर्वत्र जायते १०७
तदन्नं वर्ज्जयित्वा तु बहुरूपशतञ्जपेत्
शेषमन्नं निवेद्याथ मूलमन्त्रं शतञ्जपेत् १०८
द्विगुणान्तण्डुलं ग्राह्यं नैवेद्यन्तु निवेदयेत्
नैवेद्यतण्डुलं वापि द्रष्टं वा पक्षिभिर्यतः १०९
पुनस्तण्डुलमादाय नैवेद्यं पूर्ववच्चरेत्
तत्पात्रं मुण्मयन्त्याज्यं शुचिः कांसस्य विद्यते ११०
नैवेद्यतण्डुलं वापि युज्यते च बहिः क्रमात्
तत्सर्वन्तु परित्यज्य नूतदन्नं च सङ्ग्रहेत्
तिर्यग्यानेन मक्रमाद्यै नैवेद्यन्तु विशेषतः १११
अग्रे गतं गृहीते तु अपरं तत्र वर्ज्जयेत्
विडाळस्पर्शने चैव भुज्यते च तथैव च ११२
क्षुद्रबाधा जायते नृणां तदन्नं वर्ज्जयेद्बुधः
पुनःपक्वं निवेद्येन नैवेद्यन्तु समाचरेत् ११३
विशोधनविहीने च क्षाळनस्य विहीनके
अपक्वमीषत्पक्वं च तण्डुलञ्च निवेदयेत् ११४
सस्यानां नाशनं चैव राष्ट्रे दुर्भिक्षसम्भवम्
अस्त्रमन्त्रशतं जप्त्वा नवकैरभिषेचयेत् ११५
पाषाणरोमत्स्यमण्डूकादिभिर्युक्तम्
पाषाणरोमव्रीहीणां दंशिते तु निवेद्यके

कृमिकूर्मास्तिकीटञ्च मत्स्यमण्डूकसर्पकान्
कर्कटाद्यादिदोषन्तु पिपीलिकादि दूषिते ११६
दृष्टे निवेदनात्पूर्वे लोके दुर्भिक्षमाप्नुयात्
तदन्नं वर्ज्जयेद्धीमान् जले वापि स्थलेऽपि वा ११७
पचनालयं विशेषेण मार्जनं लेपनं कुरु
पूर्ववत्पात्रशुद्धिश्च आज्याग्निसहितं तथा ११८
मूलमन्त्रशतं जप्त्वा नवकैरभिषेचयेत्
कृमिकीटौ तथा मत्स्यौ सर्पौ रोमनखेऽपि वा ११९
पाषाणाद्यादि दोषैस्तु पृथक्शेषस्तु संभवेत्
निवेदिते तु नैवेद्य पश्चात् दृष्टे त्यजेत् स्फुटम् १२०
परचक्राद्भयं राज्ये राजादुर्ज्जयमाप्नुयात्
बेरशुद्धिं ततः कृत्वा जलसंप्रोक्षणं कुरु १२१
गोमूत्रं गोघृतं क्षीरं दधिसर्पिर्निवेदयेत्
ब्रह्मकूर्चाभिषेकञ्च संहिता होममाचरेत् १२२
अष्टोत्तरशतैः कुम्भैरभिषिञ्चैव शङ्करम्
किञ्चिदस्मिन् विशेषास्मिन्पाषाणं व्रीहि दर्शने १२३
नवकैरभिषिच्याथ तद्दोषशमनं कुरु
एवमेव प्रकारेण व्यञ्जनेष्वपि कल्पयेत् १२४
यामान्तस्तथन्तु नैवेद्ये स्पृष्टे सत्यशुचिद्विजैः
बिडाळोच्छिष्ठमेवन्तु तदन्नं वर्ज्जयेत् बुधः १२५
क्षुद्बाधा जायते भूमौ स्नपनं शान्तिहोमकम्
निवेदिते तु नैवेद्ये तत्काले पटहीनके १२६
प्राणिनां नाशनञ्चैव लोके दुर्भिक्षमाप्नुयात्
नवकैरभिषिच्याथ अस्त्रमन्त्रं शतं जपेत् १२७
कदळी पत्रहीने च स्थालिका पात्रहीनके
ज्वरमार्यादिपीड्यन्ते मूलमन्त्रं शतं जपेत् १२८

हविः प्रमाणहीने च क्षुद्रबाधाजायते नृणाम्
नवकैरभिषिच्याथ द्विगुणन्नान्यसन्धिके १२९
निर्वाणदीपहीने च मध्ये नैवेद्यकालके
इति दोषो भवेत्पुंसां पुनर्दीपन्तु रोपयेत् १३०
सन्ध्यान्तरे तु शम्भोस्तु घृतेन स्नापयेद्बुधः
पञ्चगव्याभिषेकञ्च नवकैरभिषेचयेत् १३१
महेशप्रतिमादीनां नवकैरभिषेचयेत्
धामान्तस्यं तदन्नन्तु नैवेद्यं तु विहीनके
क्षुद्रबाधा जायते नृणां होमप्रागाहुते सति
अस्त्रमन्त्रोपसंप्रोक्ष्य तदन्नं च निवदयेत्
होमादूर्ध्वं तु विदिते लोके दुर्भिक्षसम्भवम् १३२
आढकैस्तण्डुलैश्चैव पुनः पाकं समाचरेत्
बहुरूपेण संप्रोक्ष्य तदन्नञ्च निवेदयेत् १३३
नवान्ने नैव सार्यं वै नैवेद्यन्तु समाचरेत्
नित्योत्सवान्ते विदिते तदन्नं वर्ज्जयेत् बुधः १३४
राष्ट्रे नश्यति कल्याणं महामारी प्रवर्तते
तद्दोषशमनार्थाय स्नपनं पञ्चविंशतिः १३५
द्विगुणं तण्डुलं ग्राह्यं अन्यसन्ध्यासु पादयेत्
तद्रव्यस्य विहीने तु कर्तृनाशो न संशयः १३६
अस्त्रमन्त्रं शतं जप्त्वा द्विगुणञ्चान्यसन्धिके
परिचारार्दने हीने दास दासि विनाशनम् १३७
मूललिङ्गे विशेषेण नवकैरभिषेचयेत्
परिवारन्विशेषेण नवकैरभिषेचयेत् १३८
पानीये मुखवासे च विहीने बलवर्जिते
बहुरूपशतं जप्त्वा षोडशस्नपनमाचरेत्
तद्द्रव्यं द्विगुणं दद्यादन्यसंध्यासुदापयेत्

पुनश्च सर्वमेवन्तु तद्विधानात्समाचरेत्
नित्याग्निहोमहीने च अनावृष्टिर्भवेद्ध्रुवम् १३९
बहुरूपशतं जप्त्वा षोडश स्नपनं भवेत्
समिदाज्य चरून्दर्भान् स्रुक्स्रुवी च विहीनके १४०
आहुतीनां प्रमाणञ्च तत्संख्या च विहीनके
परिस्तरणहीने च आज्य संस्कारहीनके १४१
अवनिष्टवहीने च दिक्पालार्च्चनहीनके
परिषेचनहीने च आवाहनविहीनके १४२
अन्तर्बलिविहीने च तद्राष्ट्रन्नश्यति ध्रुवम्
नवकैरभिषिच्याथ पुनः होमं समाचरेत् १४३
होमकाले विहीने च अग्निज्वालाविहीनके
इन्धने तु विहीने च नेत्ररोगं न संशयः १४४
तन्मूलन्तु शतञ्जप्त्वा पूर्ववत्परिकल्पयेत्
कुण्डे अग्निविहीने तु तत्तन्मन्त्रविहीनके १४५
आचार्यस्य भवेन्मृत्युः कर्तृनाशो भवेद्ध्रुवः
मूलमन्त्रं शतञ्जप्त्वा नवकैरभिषेचयेत्
अग्निमूलं शतं जप्त्वा मूलेचावाहनात्पुरा १४७
आचार्यस्तु शुचिः स्पृष्टा मूलेनैव शुचिर्भवेत्
लोके चाग्निभयञ्चैव महामारी प्रवेशनम् १४८
पुनस्नानं समादाय नवकैरभिषेचयेत्
पुनश्च मृतिमादाय मूललिङ्गे समर्पयेत् १४९
लोके चाग्नि भयञ्चैव स्नपनं शान्तिहोमकम्
मूले चावने हीने त्वग्निस्तस्यास्य मूर्त्तिनः १५०
मूलादावहनाहीने चन्द्रशेखरमूर्त्तिनः
धामश्रीस्त्वन्यथा चैव मूलमन्त्रशतञ्जपेत् १५१
नित्योत्सवस्य काले तु भेरी ताडनहीनके

धामश्रीस्त्वन्यथा चैव नवकैरभिषेचयेत् १५२
नित्योत्सवस्य हीने तु बलं राष्ट्रं विनश्यति
तस्मात्तन्निष्कृतिञ्चैव स्नपनं शान्तिहोमकम् १५३
पीठप्रक्षाळने हीने धामश्रीस्त्वन्यथा भवेत्
अष्टमन्त्रशतं जप्त्वा तद्दोषशमनं कुरु १५४
बलिदीपविहीने तु नेत्ररोगन्तु सम्भवेत्
तस्मात्तद्दोषशान्त्यर्थं नवकैरभिषेचयेत् १५५
नित्योत्सवस्य काले तु मध्ये दीपविहीनके
धामश्रीस्त्वन्यथा चैव तत्र देशे च संस्थिताः १५६
अघोरेण शतञ्जप्त्वा तद्दोषशमनं कुरु
पुनर्दीपं समादाय शेषकर्म समाचरेत् १५७
घण्टारवविहीने तु राक्षसानान्तु सम्भवम्
तद्दोषशमनार्थाय नवकैरभिषेचयेत् १५८
तद्वक्त्रचर्महीने च सस्यनाशं न संशयः
नन्दिमन्त्रं शतञ्जप्त्वा अस्त्रमन्त्रं शतञ्जपेत् १५९
नवमन्त्रं परिग्राह्य पूर्ववत् ताडायेत्क्रमात्
तत्कोण पतने चैव तद्ग्रामन्तु विनश्यति १६०
तद्दोषशमनार्थाय नवकं शान्तिहोमकम्
वाद्यकर्त्ता गृहीत्वा तु अन्येनैव तु ताडयेत् १६१
तद्ग्रामवासिनां नृणां बधिरत्वं प्रवर्त्तते
वाद्यकन्तुर्भवेत्मृत्युः प्रतिमन्त्रं शतञ्जपेत् १६२
शान्तिहोमसमायुक्तन्नवकैरभिषेचयेत्
जयघण्डां तु पतिते भेदेच्छेदे वलीनके १६३
बहिरत्वमनावृष्टिः नवकैरभिषेचयेत्
कटिद्वये तु पतिते कर्तृणान्नाशनं भवेत् १६४
नन्दिमन्त्रशतञ्जप्त्वा नवकैरभिषेचयेत्

भेरीताडनकर्त्ता च मध्ये हीनन्तु सम्भवेत् १६५
कर्त्तारं योगसम्भूतं नवकैरभिषेचयेत्
भेरीताडनकर्ता तु शेषं पूर्ववदाचरेत् १६६
द्वारादिभूतपीठान्तं बलिमेकेन दापयेत्
तदन्येन कृतं चेत्तु तस्मादाचार्यसङ्करम् १६७
महामारीप्रवर्तन्ते लोके तु बलवर्ज्जिते
तद्दोषशमनार्थाय नवकं शान्तिहोमकम् १६८
प्रमादाद्दोषमुत्पन्ने अन्येनैव तु कारयेत्
बहुरूपं शतञ्जप्त्वा शेषकर्मणि कारयेत् १६९
पतिते बलिपात्रे तु राष्ट्रे दुर्भिक्षसम्भवः
तद्दोषशमनार्थाय बहुरूपं शतं जपेत् १७०
पुनः पात्रं समादायमस्मे नैव तु शुध्यति
अन्यमन्नं गृहीत्वा तु बहुरूपशतं जपेत् १७१
मूलमेन्त्रेण संप्रोक्ष्य बलिशेषं समाचरेत्
दीक्षाविहीन वर्णैश्च स्पृष्टे तु बलिपात्रके १७२
तदन्नं वर्ज्जयित्वा तु स्नात्वा तु परिचारकः
राज्ञां रोगेन सम्भूतिः पुरुषन्तु शतञ्जपेत् १७३
नवमन्नं तु सङ्गाह्य बहुरूपं शतं जपेत्
शेषधाने तु मतिमास्तत् शेषं बलिमाचरेत् १७४
बलिप्रदानकाले तु आचार्यस्य तु हस्तके
मर्कटादि प्रकृष्टे वै तत्पुरुषादि सम्भवम् १७५
कलाश्च रोगसम्प्राप्ते तदन्नं वर्ज्जयेद्बुधः
तत्र संस्थाप्य देवन्तु शेषमन्नञ्च वर्ज्जयेत् १७६
आचार्यश्शिष्य सहितस्सचेलस्नानमाचरेत्
तद्दोषशमनार्थाय नवकं शान्तिहोमकम् १७७
पुनरन्नं गृहीत्वा तु बहुरूपं शतञ्जपेत्

पुनद्वारे तु संप्राप्ये शङ्घघोषविहीनके १७८
स्त्री नाशं स्यात् गवां नाशं राक्षसानान्तु सम्भवे
तद्दोषशमनार्थाय बहुरूपं शतञ्जपेत् १७९
नृत्तकाले विशेषेण गणिका पतिता भवेत्
राजराष्ट्रेषु शोकस्यान्नवकैरभिषेचयेत् १८०
आच्छादनमलक्षिण्यं स्नानबद्धविहीनके
राष्ट्रे नश्यति कल्याणं कर्तृनाशो न संशयः १८१
तद्दोषशमनार्थाय नवकैरभिषेचयेत्
तत्कालोचितगार्त्तादि विपरीतं भवेद्यदि
उन्मत्तश्चत्रवेत्कर्त्ता नवकैरभिषेचयेत् १८२
शुद्धनृत्तविहीने च स्तोत्रपाठविहीनके
बलिताडविहीने च विन्यासे विपरीतके
बालानां नाशनं चैव नवकैरभिषेचयेत्
गन्धप्रमाणहीने तु पुष्पमानविहीनके
दशोपचारहीने च हविर्मानविहीनके १८३
बलिनाथविहीने तु धामनाशन्धनक्षयम्
मूलमन्त्रशतं जप्त्वा द्विगुणं चान्य सन्ध्यके १८४
गन्धपुष्पविहीने च अनावृष्टिर्न संशयः
मूललिङ्गे विशेषेण नवकैरभिषेचयेत् १८५
बलिप्रदाने त्वज्ञाने पूर्वपीठे बलिं विना
अपरेस्मिन्पीठके तु बेरयुक्तं प्रवेशयेत् १८६
अथवा बलिदाने च स्थित्वा बेरन्तु तत्र वै
निवृत्येव तथाचार्यो बलिवाद्येन संयुतम्
पतिमन्त्रं शतञ्जप्त्वा तत्पीठे बलिदानकम् १८७
पुनर्यानक्रमेणैव बलिशेषं समाचरेत्
पृथक्प्रदक्षिणे काले अज्ञाते बलिहीनके १८८

द्वितीये प्रदक्षिणे काले ज्ञाते सति त्र्यबुद्धिमान्
अस्त्रमन्त्रं शतं जप्त्वा बलिदानं समाचरेत् १८९
ब्रह्मविष्णू बलीदाने नवकैरभिषेचयेत्
नित्योत्सवस्य काले तु बलिनिर्माल्य लम्बनम् १९०
निर्माल्यं वर्जयेत्प्रोक्ष्य शेषदानं समाचरेत्
स्पृष्टे तु मार्जनश्चेदकाले नित्योतसवस्य तु
धामश्रीस्त्वन्यथा चैव कर्तृनां रोगसमभवः
तत्र स्थाने तु संस्थाप्य नवकैरभिषेचयेत् १९१
नित्योत्सवस्य काले तु बलिनिर्माल्य दर्शने
निर्माल्यं वर्ज्जयेत्प्रोक्ष्य शेषयानं समाचरेत् १९१
दृष्टे तु मार्ज्जनच्छेदकाले नित्योत्सवस्य ++
धामश्रीस्त्वन्यथा चैव कर्तृणां रोगसम्भवः १९२
शान्तिहोमसमायुक्तं नवकैरभिषेचयेत्
बलिप्रदानकाले तु मध्ये दोषन्तु सम्भवेत् १९३
दृष्टतो बलिनिर्माल्यं पक्षीणां स्पर्शनन्ततः
धामश्रीस्त्वन्यथा चैव संहितामन्त्रमुच्चरेत् १९४
बलिनिर्माल्यमुद्वास्य दासीनां क्षाळयेत्ततः
बहुरूपेण संप्रोक्ष्य बलिशेषं समाचरेत् १९५
नित्योत्सवस्य काले तु मूले चाशुचिर्भवेत्
अनावृष्टिर्भवेल्लोके तत्तच्छुद्धिक्रमं कुरु १९६
इन्दुशेखरमूर्तेस्तु तत्रस्थेने तु संस्थितः
नवकैरभिषिच्याथ शेषं पूर्ववदाचरेत् १९७
स्पर्शितै प्रतिलोमैश्च श्वानकाकादिभिस्ततः
आचार्यस्य च बेरस्य अन्तरागमनं भवेत् १९८
महामार्याप्रवर्त्तन्ते तद्राष्ट्रे कलहो भवेत्
तस्मिन् देशे तु संस्थाप्य षोडशस्नपनं भवेत् १९९

नित्योत्सवे वर्त्तमाने बेरे वा देशिकोपरि
अस्थिविष्ठादिमांसादि तिर्यक् जातिच्युते यदि  २००
महामार्या प्रवर्त्तन्ते तद्राष्ट्रे कलहो भवेत्
पूर्ववत् बेरशुद्धिञ्च स्नपनं शान्तिहोमकम्  २०१
आलयाभ्यन्तरे गच्छे स्थूले च स्नपनं कुरु
नित्योत्सवस्य काले तु आचार्यः पतितो भुवि  २०२
अस्त्रमन्त्रशतञ्जप्त्वा शेषं पूर्ववदाचरेत्
सामान्यार्घ्येषु पतिते तद्राष्ट्रे जपवर्ज्जितम्  २०३
तद्दोषशमनार्थाय बहुरूपं शतञ्जपेत्
पुनर्ज्जलं समानीय हुं फडन्तेन शुध्यति  २०४
तत्काले स्फटिते भग्ने स्थाननाशं न संशयः
नवकैरभिषिच्याथ नवमात्रं परिग्रहेत्  २०५
आलयाभ्यन्तरे चैव वारस्त्री तु रजस्वला
अथवा नृत्तकाले तु मार्ज्जनं प्रोक्षणं तथा  २०६
महामारी प्रवर्त्तन्ते समुद्वास्य च तां स्त्रियम्
यत्र देशे स्थिता सा तु संलिप्य परिमार्ज्जयेत्  २०७
बलिबेरं तु संस्थाप्य नवकं शान्तिहोमकम्
यानशेषं पुनः कृत्वा आलयाभ्यन्तरे गते  २०८
पीठं मलादि मूत्रञ्च श्वानकुक्कुटमेव चा
सुरामांसादि रुधिरं शूद्रादि स्पर्शनेपि च  २०९
नित्योत्सवस्य काले तु तद्दोषस्य संभवे
प्राणिनान्नाशनञ्चैवा दुर्भिक्षं जायते भुवि  २१०
स्पर्शनं यत्र देशे तु तत्र संस्थाप्य बेरकम्
पुरभा द्वा++ स्तथा +++ सम्भवेत्  २११
दृष्टमात्रे विसृज्याथ स्थानशुद्धिं समाचरेत्
चन्द्रशेखरमूर्तेस्तु स्नपनं शान्तिहोमकम्  २१२

शेषयानं ततः कृत्वा आलयाम्यन्तरे गते
मूललिङ्गे विशेषेण शताष्टकशतं मतम् २१३
महेशप्रतिमादीनां स्नपनं षोडशं भवेत्
इतरेषाञ्च देवानां पुण्याहं प्रोक्षणं कुरु २१४
मन्त्रपुष्पञ्च मन्त्रान्नं शेषं पूर्ववदाचरेत्
नित्योत्सवस्य काले तु बेरे च पतिते सति २१५
कर्तृणान्नाशनञ्चैव तद्राष्ट्रे कलहं भवेत्
तस्यानेनैव संस्थाप्य षोडशस्नपनं भवेत् २१६
तत्काले चाङ्गहीने च राजाराष्ट्रं विनश्यति
दिनवारमुहूर्तादि निरपेक्ष्यसमाचरेत् २१७
सद्यस्संप्रोक्षणं कृत्वा प्रतिष्ठां कारयेद्बुधः
प्रत्यङ्गोपाङ्गहीने च सद्यस्सन्धानमाचरेत् २१८
संप्रोक्षणं तथा चैव नवकैरभिषेचयेत्
मूललिङ्गे विशेषेण षोडशस्नपनं भवेत् २१९
नित्योत्सवस्य काले तु वामके पतिते भुवि
तद्ग्रामवासिनां नृणामिति दोषस्य सम्भवः २२०
तद्दोषशमनार्थाय तन्मूलन्तु शतञ्जपेत्
पारशैवे तु तत्काले पतिते तु विशेषतः २२१
बधिरत्वमवाप्नोति नन्दिमन्त्रं शतञ्जपेत्
सन्ध्यायोश्च बलौ हीने सस्यानां नाशनं भवेत् २२२
स्नपनं शान्तिहोमञ्च रात्रौ कुर्याद्विशेषतः
सायाह्ने तु बलौ हीने राज्ये कूश्माण्ड सम्भवः २२३
तद्दोषशमनार्थाय अघोरेण शतञ्जपेत्
मूललिङ्गे विशेषेण षोडश स्नपनं भवेत् २२४
एकाहन्तु बलाहीने तद्ग्रामे रोगसम्भवः
तद्दोषशमनार्थाय स्नपनं पञ्चविंशतिः २२५

दिनद्वयेपि पक्षान्तं मासान्तं वा विशेषतः
कर्तॄनां नाशनञ्चैव तद्राष्ट्रो कलहं भवेत् २२६
तद्दोषशमनार्थाय स्नानमष्टोत्तरं शतम्
द्विमासात्तुर्यमासान्तं नित्योत्सवविहीनकम् २२७
तद्राष्ट्रनाशनञ्चैव भूपते रोगसम्भवः
तद्दोषशमनार्थाय द्विशतं स्नपनं कुरु २२८
पञ्चमादष्टमासान्तं बलिहीने तु सम्भवे
परचक्राद्भय राज्ञो दुर्भिक्षं जायते भुवि २२९
तद्दोषशमनार्थाय बहुरूपशतञ्जपेत्
उत्तमं मध्यकलशे स्नपनं कारयेद्बुधः २३०
नवमासादि वर्षान्तं बलिनित्योत्सवं नयेत्
राजाराष्ट्रं विनाशं स्याद्बहुरूपं शतं जपेत् २३१
तद्दोषशमनार्थाय सहस्रकलशैर्युतम्
नित्योत्सवं पुनः कुर्यात् पूर्वोक्तविधिमाचरेत् २३२
मूलमन्त्रादि विष्टादि बलिपीठ यदि स्थितम्
धामश्रीस्त्वन्यथा चैव महामारी प्रवर्त्तते २३३
पञ्चगव्येन सम्प्रोक्ष्य जळेन क्षाळयेत्ततः
तुळसी बिल्वपत्रं च कर्षयेत्तु पुनः पुनः २३४
अथवा बाह्यदेशे तु स्नानशुद्धिञ्च पूर्ववत्
तालमात्रं खनित्वा तु पुण्याहं गव्यसेचनम् २३५
बलिपीठे च बेरे च स्नपनं शान्तिहोमकम्
शेषाधारं ततः कृत्वा मूले च स्नपनं कुरु २३६
पादे पाषाणमाविश्य कण्डकं पादमाविशेत्
तत्काले रुधिरस्रावे महाज्वरमवाप्नुयात् २३७
पञ्चशुद्धिक्रमेणैव स्थलशुद्धिं ततः कुरु
नवकं शान्तिहोमञ्च चन्द्रशेखरमूर्त्तिनः २३८

मूलेन पञ्चविंशद्भिः स्नपनैरभिषेचयेत्
रक्तकस्त्रावहीने च कर्तृणां रोगसम्भवः २३९
मूललिङ्गे तथा संख्यैः कलशैरभिषेचयेत्
पादप्रक्षाळने हीने तद्राष्ट्रे जलवर्ज्जितम् २४०
तद्दोषशमनार्थाय स्वमन्त्रं च शतञ्जपेत्
इन्दुशेखरमूर्त्तेस्तु आरात्रिकविहीनके २४१
मूले चावाहने हीने धूपदीपविहीनके
आरात्रिकविहीने च सस्यानान्नाशनं भवेत् २४२
तद्दोषशमनार्थाय नवकैरभिषेचयेत्
धूपदीपप्रदाने तु घण्टारवविहीनके २४३
बधिरत्वमवाप्नोति अस्त्रमन्त्रं शतञ्जपेत्
धूपप्रदानकाले तु धूपद्रव्य विहीनके २४४
तत्पात्रे त्वग्निहीने तु लक्षणेन विहीनके
दीपप्रदानकाले तु दीपहीनं भवेद्यदि २४५
वृक्षबीजोद्भवे स्नेहैर्दीपमारोप्यते यदि
कार्पासवृत्तिहीने च आदशं च तथा भवेत्
कार्पासवृत्तिहीनं चेच्चक्षुरोगं च सम्भवेत् २४६
तद्दोषशमनार्थाय बहुरूपशतञ्जपेत्
तत्पात्रे पतिते भिन्ने त्तल्लक्षणविहीनके २४७
लोकः पंकुत्वमामप्नोति घृतस्नानं समाचरेत्
धूपदीपप्रदाने तु वाद्यताळविहीनके २४८
आरात्रिकप्रवृत्ते तु ताळवृत्तविहीनके
धामश्रीस्त्वन्यथा चैव वस्त्रनाशं भवेद्ध्रुवम् २४९
शान्तिहोमसमायुक्तन्नवकैरभिषेचयेत्
चक्रचामरहीने तु आदर्शञ्च तथा भवेत् २५०
भस्मताम्बूलहीने च पूगकर्पूरहीनके

राज्यश्रीस्त्वन्यथा चैव बहुरूपं शतञ्जपेत् २५१
द्विगुणान्दापयेत्पश्चात् ताम्बूलं याज्यसन्धिके
वेदादि श्रवणे चैव स्तोत्र पञ्चाङ्गहीनके २५२
शास्त्रहीने भवेल्लोके कर्त्ता चैव विनश्यति
तद्दोषशमनार्थाय नवकैरभिषेचयेत् २५३
सायरक्षे विहीने च बालानान्नाशनं भवेत्
शान्तिहोमसमायुक्तं नवकैरभिषेचयेत् २५४
विघ्नेशयजने हीने पुण्याहन्तु विहीनके
दीपलक्षणहीने च दीपद्रव्यविहीनके २४६
गणेशाराधने हीने महाज्वरमवाप्नुयात्
तद्दोषशमनार्थाय स्नपनं शान्तिहोमकम् २४७
पुनः पुण्याहमारभ्य शेषं पूर्ववदाचरेत्
आरात्रिक प्रवृत्ते तु नयनोच्छिष्टकर्मणाम्
दीपे प्रशान्ततन्मध्ये निष्फलं तदवाप्नुयात् २४८
पुनः पुण्याहमारभ्य शेषः पूर्ववदाचरेत्
आरात्रिक प्रदानन्तु तत्क्षाळनविहीनके २४९
वर्तीना छिन्नसम्युक्तमारात्रिकसपात्रके
अज्ञाते तु गृहीत्वा तु पुनरारात्रिकन्ददेत् २५०
ज्वरापस्मारसंप्राप्तिर्नवकैरभिषेचनम्
आरात्रिकस्य पात्रस्य पश्चाच्छुद्धिं समाचरेत् २५१
पञ्चसंस्कारके शुद्धिर्भविष्यति च संशयः
नयनोच्छिष्टकर्मान्ते मारात्रिकप्रदानके २५२
तत्काले तु विशेषेण दीपहीनं भवेद्यदि
धामश्रीस्त्वन्यथा गच्छेत्सस्यानान्नाशनं भवेत् २५३
अस्त्रमन्त्राम्बुना प्रोक्ष्य पुनर्दीपं सुयोजयेत्
दीपदाने विशेषे तु दीपज्वालाविहीनके २५४

एकाद्येकविंशद्भिः क्रमेणैव विहीनके
एकादि चत्वारिंशद्भिः दीपहीनं भवेद्यदि २५५
धामश्रीस्त्वन्यथा गच्छेदस्त्रमन्त्रं शतञ्जपेत्
सर्वदीपे पुविच्छिन्ने लोके मृत्युस्तु सम्भवेत् २५६
तद्दोषशमनार्थाय नवकैरभिषेचयेत्
नयनोच्छिष्टदीपन्तु मण्डपाभ्यन्तरे गते २५७
वर्तिका पतिते चैव धामश्रीस्त्वन्यथा भवेत्
तस्मात्सर्वप्रयत्नेन पीठबाहुविसर्ज्जयेत् २५८
तद्दोषशमनार्थाय नवकैरभिषेचयेत्
प्रातस्सन्ध्यार्च्चनाकाले शुद्धनृत्तादिहीनके २५९
महाज्वरमवाप्नोति मध्याह्ने स्नपनं कुरु
मध्याह्ने येजने चैव शुद्धनृत्तादि हीनके २६०
महेश प्रतिमादीनां शुद्धनृत्तविहीनके
महामार्यं प्रवर्त्तन्ते सायाह्ने स्नपनं कुरु २६१
सायं काले विशेषेण शुद्धनृत्तविहीनके
महेशप्रतिमादीनां शुद्धनृत्तविहीनके २६२
कर्त्तारं नेत्ररोगन्तु प्रदोषे स्नपनं कुरु
सायाह्ननृत्तहीने तु अर्धयामे तु निष्कृतिः २६३
अर्धयाम विहीने तु प्रभाते स्नपनं कुरु
एकाहन्तु विहीने तु लोकान्मत्तं समादिशेत् २६४
शान्तिहोमसमायुक्तन्नवकैरभिषेचयेत्
निशिसन्ध्यार्च्चनाहीने प्रातस्सन्ध्योक्तवत्कुरु २६५
चण्डार्च्चनविहीने च राजसेनाविनाशनम्
तद्दोषशमनार्थाय स्नपनं शान्तिहोमकम् २६६
चण्डमन्त्रं शतञ्जप्त्वा पश्चात् चण्डं समर्चयेत्
अर्धयामार्च्चनाहीने परराष्ट्रे प्रवेशनम् २६७

तद्दोषशमनार्थाय स्नपनं शान्तिहोमकम्
देवं देवीविशेषेण स्नपनं कल्प्य बुद्धिमान्  २६८
भोगाङ्गयानकाले तु पाटुका पतिते भुवि
प्राणीनां रोगसम्भूतिः मन्त्रदाने तु संस्थितः  २६९
नवकं शान्तिहोमञ्च शेषयानं समाचरेत्
भोगाङ्गयानकाले तु मोहादज्ञानतोऽपि वा  २७०
पादुका खड्गवस्त्रादिनेकमेकञ्च नूतनम्
धामश्रीस्त्वन्यथा चैव तद्ग्रामे रोगसम्भवः  २७१
तद्दोषशमनार्थाय गौरीमन्त्रं शतञ्जपेत्
वस्त्रादीनां च संग्राह्य शेषयानं समाचरेत्  २७२
ताम्बूलं सङ्ग्रहं वस्त्र खट्गखेटविहीनकम्
ग्रहणे श्यति कालेण पु+++ पेत्  २७३
पुनश्च सर्वमादाय शेषयानं समं कुरु
चक्रचामरहीने च तमथादीपहीनके  २७४
गाननृत्तन्तथागीतं वाद्यताळविहीनके
एतद्दोषैर्विशेषेण सर्वनित्योत्सवं क्रमात्  २७५
भोगाङ्गमण्डपे चैव द्वारार्च्चनविहीनके
सस्यानां नाशनञ्चैव तद्दोषशमनं स्मृतम्  २७६
पादुकादीनि सर्वाणि मण्डपावेशहीनके
वृषमन्त्रं शतञ्जप्त्वा सूक्तमन्त्रशतं जपेत्  २९७
पुनश्च योजयेदविद्वान् शेषं पूर्ववदाचरेत्
गौर्याश्च वाहने हीने स्त्रीनाशं भवति ध्रुवम्
तद्दोषशमनार्थाय गौर्या स्नपनमाचरेत्
तद्दोषशमनार्थाय गौरी शक्रेस्तु योजयेत्
भोगाङ्गपूजाहीने तु पुत्रनाशं न संशयः  २९८
तद्दोषशमनार्थाय संप्रोक्षणसमाचरेत्

भोगाङ्गयानकाले तु तत्काले सृष्टिवेशनम्  २९९
गवानान्नाशनञ्चैव बहुरूपं शतञ्जपेत्
तस्मिन्देशेषु संस्थाप्य स्नपनं कारयेद्बुधः  ३००
शेषयानक्रमं कृत्वा शिवधाम्वि विशेषतः
पूर्ववत्पूजयेद्विद्वान् पुनर्यानं प्रभातके  ३०१
मूललिङ्गे विशेषेण स्नपनं कल्प्य बुद्धिमान्
भोगाङ्गपूजा पूर्वे तु मण्डपावेशितद्वयम्  ३०२
भोगाङ्गलयादि अग्निदृष्टियकतम्  ३०३
द्विजाद्यैश्चैव चण्डाद्यैः पावकस्य शनं यदि
नवकैरभिषिच्याथ शेषं पूर्ववदाचरेत्  ३०४
पुनस्स्नानस्य पश्चात्तु मूलेशस्नपनं कुरु
भोगाङ्गयानकाले तु मूले चार्चादिभिर्भवेत्  ३०५
लोके मारिप्रवृत्तिश्च भविष्यति न संशयः
ततश्च शुद्धिक्रमेणैतान् शुद्धिं कृत्वा विचक्षणः  ३०६
तत्र स्थाने तु संस्थाप्य पादुके स्नपनं कुरु
शेषयानक्रमं कृत्वा गौर्यांश्चैव तथैव च  ३०७
पूर्ववत् स्थानशुद्धिञ्च क्षेत्रपालार्चनं बुधः
भोगाङ्गमण्डपे चैव तद्वारञ्च कवाटयोः  ३०८
पर्यङ्कन्तूलिकां चैव चन्द्रकं चोपधानकम्
अग्निना दूषिते चैव तद्ग्रामेऽग्निभयं भवेत्  ३०९
देवन्देवीं विशेषेण नवकैरभिषेचयेत्
नूतनं पूर्ववत्कृत्वा पश्चाच्छुद्धिं च समादिशेत्  ३१०
पुनर्यानक्रमं कृत्वा स्नपनं पूर्ववत्कुरु
सृष्टिकाले स्पृष्टिवेशं शोकरोगभयावहम्  ३११
पूर्ववत्स्थानशुद्धिञ्च पादुकै शुद्धिमाचरेत्
पञ्चगव्याभिषेकञ्च नवकैरभिषेचयेत्  ३१२

पुनर्यानक्रमेणैव मूललिङ्गं तु योजयेत्
देवन्देवीं विशेषेण नवकैरभिषेचयेत् ३१३
सप्तकाले विशेषेण अग्निना दूषिते सति
तद्ग्रामेऽग्निभयञ्चैव वृषमन्त्रं शतञ्जपेत् ३१४
नवकं पञ्चगव्यञ्च पादुकेष्वभिषेचयेत्
तत्काले जीर्णमेवन्तु स्थाननाशन्धनक्षयम् ३१५
तद्द्रव्यं भूगतं कृत्वा त्रिपादेन त्रिनाडिका
पादुकां पूर्ववत्कृत्वा पूर्ववत् शुद्धिमाचरेत् ३१६
सप्तकाले विशेषेण चोरैस्सङ्गाह्यते यदि
तद्राष्ट्रे रोगसम्भूतिः गुह्यमन्त्रं शतञ्जपेत् ३१७
स्वर्णरजतताम्रैर्वा पूर्ववत् कल्पयेद्बुधः
अथवा दारुजैर्वापि वस्त्रं वा खड्गमेव वा ३१८
पूर्ववत्कल्पयेद्धीमान् पुनर्यानक्रमं कुरु
देवन्देवीं विशेषेण नवकैरभिषेचयेत् ३१९
सप्तकाले विशेषेण मूले चोरादिभिस्पृशेत्
अग्निना दण्डके चैव लोकोन्मत्तं समादिशेत् ३२०
नृपाणां ज्वरमाप्नोति शुद्धं शास्त्रवदाचरेत्
पुनर्यानञ्च पश्चात्तु पादुके स्नपनं कुरु ३२०
ततः परं विशेषेण गौर्या स्नपनमाचरेत्
एतद्दोषस्तु गौर्यायाः यामालायात्तु सम्भवेत् ३२१
प्रायश्चित्तादकं सर्वं मूललिङ्गवदाचरेत्
क्षेत्रपालार्च्चनाहीने क्षेत्रनाशकरं भवेत् ३२२
तद्दोषशमनार्थाय षोडशस्नपनं भवेत्
तस्मात्सर्वप्रयत्नेन क्षेत्रपालार्च्चनं कुरु ३२३
अथवा अर्च्चनाहीने शस्त्रबाधा भवेन्नृणाम्
पुनर्यानस्य पूर्वे तु स्नपनं शान्तिहोमकम् ३२४

अर्च्चनं पूर्ववत्कृत्वा पुनर्यानन्तु पूर्ववत्
निर्वाणदीपहीने तु धामश्रीस्त्वन्यथा भवेत् ३२५
तद्दोषशमनार्थाय घृतस्नानं समाचरेत्
एकाहस्य विहीने तु महामारी प्रवर्त्तते ३२६
पुनर्दीपं समारोप्य नवकैरभिषेचयेत्
क्रियादीपविहीने च तत्क्रिया विफलं भवेत् ३२७
तद्दोषशमनार्थाय बहुरूपशतञ्जपेत्
नित्यपूजाविहीने च तद्राष्ट्रञ्च विनश्यति ३२८
तद्दोषशमनार्थाय स्नपनं पञ्चविंशति
दिवा सन्ध्यार्च्चनाहीने तद्राष्ट्रे रोगसम्भवः ३२९
मूलमन्त्रशतञ्जप्त्वा शर्वर्पाद्विगुणं यजेत्
एकाहस्य विहीने तु तद्राष्ट्रे कलहो भवेत् ३३०
स्नानमेकोनपञ्चाशत् शान्तिहोमं समाचरेत्
द्वितीयाह्ने तृतीयाह्ने चतुर्थाह्ने विशेषतः ३३१
महामार्याः प्रवर्तन्ते तद्राष्ट्रे कलहो भवेत्
तद्दोषशमनार्थाय स्नानमष्टोत्तरं शतम् ३३२
पञ्चाहादि दशाहान्तं यजने च विहीनके
तद्राष्ट्रस्य विनाशं स्यात् राजा दुर्ज्जयमाप्नुयात् ३३३
पञ्चशुद्धिक्रमं कृत्वा स्नानमष्टोत्तरं शतम्
एकादशाधि पक्षान्तं मासान्तं यजनं नयेत् ३३४
महामार्या प्रवर्त्तन्ते तद्राष्ट्रे कलहो भवेत्
तद्दोषशमनार्थाय संप्रोक्षणमथाचरेत् ३३५
द्विमासस्याष्टमासान्तं नित्यपूजाविहीनके
भूपतिस्त्वन्यथा चैव महामारी प्रवर्त्तते ३३६
चतुर्दशाष्टकलशैः स्नापयेत्परमेश्वरम्
नवमासादि वर्षान्तं पूजाहीनन्तु सम्भवेत् ३३७

परचक्रात् भयं राज्यो भूपतिस्त्वन्यथा भवेत्
पञ्चशुद्धिः क्रमं कृत्वा सहस्रकलशैः क्रमात् ३४०
इत्यंशुमान्तन्त्रे नित्यपूजाप्रायश्चित्तविधिपटलः

## पुण्याहविधिः

पुण्याहस्य विधिं वक्ष्ये श्रूयतां रविसत्तमः
पुकारं पापनाशं स्यात् ण्यहारं देहशुद्धिदम् १
हकारस्यात्मशुद्धिं स्यात् पुण्याहन्तु विधीयते
नित्यनैमित्तिके काम्ये स्नानबिम्बादि शुध्यति २
अथवा मङ्गले कार्ये पुण्याहं वाचयेत्ततः
देशिकस्नापयेत्पश्चात् शुद्धवस्त्रोत्तरीयकम् ३
उत्तराभिमुखो भूत्वा सकळीकृतविग्रहः
गोमयालेपनं कृत्वा शिवाग्रे वादि दिक्षु च ४
चतुरस्थण्डिलं कृत्वा हस्तमात्रेण शालिभिः
उत्तमन्द्रोणमेवोक्तं मध्यमन्तु तदर्धकम् ५
अधमञ्चाढकं प्रोक्तं त्रिविधं परिकल्पयेत्
तन्मध्ये नळिनं लिख्य दर्भैः पुष्पैः परिस्तरेत् ६
उत्तमं स्वर्णपात्रन्तु मध्यमं राजतं भवेत्
अधमं ताम्रमित्युक्तं अधमं मृण्मयं भवेत् ७
द्वादशाङ्गुलमुत्सेधं नाहद्वाविंशदङ्गुलम्
ओष्ठमर्धाङ्गुलञ्चैव कर्णन्तु चतुरङ्गुलम् ८
कुक्ष्योत्सेधं षडङ्गुल्यं पादं सार्धाङ्गुलं भवेत्
घ्राणवेदाङ्गुलं प्रोक्तं पात्रलक्षणमुच्यते
काळं भिन्नञ्च सुषिरं भेदच्छेदन्तलीनकम् ९
दुर्गन्धञ्च पुराणञ्च वर्जयेच्च प्रयत्नतः
बिम्बाविलसमाकारं वर्द्धनीं गृह्यवेशिकः १०

तन्तुना वेष्टयेत् पात्रं गवाक्षसदृशान्तरम्
सामान्यार्घ्येन सम्प्रोक्ष्य विघ्नेशं पूजयेत् बुधः ११
विघ्नेशयजनं पूर्वं पुराशम्भु प्रसीदतः
आवाह्य गन्धपुष्पाद्यैः सम्पूज्य च स्व वामके १२
भक्ष्यादिषु च सर्वेषु नाळिकेरं विशिष्यते
तस्मात् गणेशनैवेद्यन्नाळिकेरेण कारयेत् १३
नाळिकेरद्विधाकृत्वा निवेद्याप्यन्दधेत् गुरुः
च्छिन्ने क्रिया विनाशं स्याच्चक्षुभिन्नेषु निष्फलम् १४
खड्गं दशगुणं जप्त्वा नृतनेन समाचरेत्
क्रियामूर्त्तिनिमित्ताय विघ्नेशं प्रार्थयेत् गुरुः १५
कर्मारम्भस्य तत्काले सङ्कल्पमिति बुद्धिमान्
वेदवेदाङ्गतत्वज्ञात् भूसुरान् युग्मसंख्यया १६
आवाह्य स्थापयितुं पश्चात् प्राङ्मुखो वाप्युदङ्मुखः
दर्भद्वयन्तु सङ्ग्राह्य द्वादशाङ्गुलमायतः १७
आचार्यन्दक्षिणे हस्ते नामिकायान्तु बन्धयेत्
प्राणायामन्त्रयं कृत्वा प्रणवेन समन्वितम् १८
वामहस्तेन्यसम्योज्य दक्षजानुपरन्यसेत्
एतत्कर्मकरिष्यामि दर्भोद्वासनमुत्तरेत् १९
जलोपस्पर्शनं कृत्वा दर्भौन्दत्वाय देशिकः
स्थण्डिलेन रमां पूज्य धूपदीपेन योजयेत् २०
वर्द्धन्याधोमुखं स्थाप्य दर्भैराच्छाद्य देशिकः
पात्रमुद्धारणं कृत्वा गन्धतोयेन प्राशयेत् २१
आपो वा इति मन्त्रेण अस्त्रेणैवाथ कारयेत्
सकूर्चस्सोपिधानञ्च सवस्त्रं हेमसङ्गतम् २२
चलासनमथाभ्यर्च्य पूजयेत् कलशाधिपान्
पृष्ठे ब्रह्माणमभ्यर्च्य मध्यमे विष्णुमेव च २३

ओष्ठे चैव रुद्रमभ्यर्च्य पार्श्वयोर्नन्दिकाळभौ
घ्राणे विघ्नेश्वरश्चैव जले चाष्टकतीर्थकम् २४
गङ्गा च यमुना चैव नर्मदा च सरस्वति
सिन्धुगोदावरी चैव कावेरी ताम्रपर्णिका २५
शिवतण्डुलमुत्कृष्टं मध्यमन्तु तदर्द्धकम्
द्विप्रस्थम्मधमं प्रोक्तं तण्डुलैस्तु सन्निभैः २६
कांस्य पात्रेषु संस्थाप्य ताम्बूलं फलसंयुतम्
बृहतीफलसंयुक्तं दर्भपुष्पसमन्वितम् २७
स्थालिकां चन्द्रमभ्यर्च्य तण्डुलैस्तारकामपि
गन्धपुष्पादिनाभ्यर्च्य धूपदीपेन पूजयेत् २८
पुण्याहं वाचयिष्येति भवद्भिः पदपूर्वकम्
वाचयित्वा गुरुः पूर्व वाच्यतामिति भूसुरा २९
आपप्रयोगमाचार्यं शिवासु वाक्यकम्
गन्धाभ्यर्चनमाचार्यां सुगन्धाप्रदिवाचकम् ३०
देशिकस्तु मनाश्चैव सौमनस्यञ्च भूसुरा
अक्षतं देशिकं चैवाक्षताञ्चारिष्टभूसुरा ३१
देशिकं दक्षिणां दत्वा विप्रैस्तु प्रतिवाचकम्
बहुदेयस्तथाचार्या अस्तु विप्रे तु वाचकम् ३२
देशिकस्तु जपित्वा तु भूसुराणां जपैस्सह
उत्थाय वर्द्धनीं धृत्वा चोर्ध्वे तण्डुलपात्रकम् ३३
मनस्समाधीतेत्यादि ब्राह्मणे प्रतिवाचकम्
यद्देवोद्दिश्य पुण्याहं तद्देवं प्रियवाचकम् ३४
प्रीयतां देवमित्युक्तं प्रीयतामिति भूसुरौ
स्वस्ति मध्ये तु यत्कर्म तत्कर्म स्वस्तिवाचकम् ३५
ऋद्धिवाचकमासाद्य ऋध्यतामिति भूसुरा
प्राणेनास्रावयेत्तोयं पूर्वे वा चोत्तरे भुवि ३६

तेनैव राक्षसाद्यैश्च तृप्तिमाप्नोति ते ध्रुवम्
स्थापयेत् स्थरिडलेनैव पुनश्च स्नानमर्च्चयेत् ३७
आपोहिष्ठेति मन्त्रञ्च हिरण्यं पवमानकम्
जपान्ते शान्तिरित्युक्त्वा धूपदीपादिनर्चयेत् ३८
एवं क्रमेण पुण्याहं कारयेत्सर्वकर्मसु
पूर्वाह्ने चैव मध्याह्ने प्रदोषे चार्धयामके ३९
अन्यसन्धिषु सर्वेषु चान्यजात्याभिवृद्धये
माषमग्नजलं पीत्वा देहशुध्यर्थकारणम् ४०
प्रोक्षणे स्थानशुद्धिः स्यात् द्रव्येष्वपि विशेषतः
पुण्याहफलमेवोक्तमाचार्यादींस्तु पूजयेत्
एवं पुण्याहमाख्यातं शङ्खपूजाविधिं शृणु ४१
इत्यंशुमान् तन्त्रे पुण्याहविधिपटलः

## पञ्चगव्यविधिः

पञ्चगव्यविधिं वक्ष्ये श्रूयतां रविसत्तमः
पकारं पापनाशं स्यात् चकारं पुत्रवर्द्धनम् १
गकारं मोक्षसिध्यर्थं व्यकारं व्याधिनाशनम्
सर्वसिध्यर्थमेवोक्तं मध्यमन्तु तदर्धकम् २
अधमञ्चाढकं प्रोक्तं यथालभ्यमथापि वा
पयो दधिघृतं चैव गोमूत्रं गोमयन्तथा ३
श्वेतरक्ताश्च कपिलाश्चैव श्वेतवर्णमथापि वा
अभावे सर्ववर्णानां ग्राहयेत् पञ्चगव्यकम् ४
गोश्रेष्ठमिदं प्रोक्तं गव्यसंख्यास्तथा शृणु
त्रिप्रस्थं क्षीरमित्युक्तं द्विप्रस्थं दधिरुच्यते ५
आज्ये प्रस्थेन कर्त्तव्यं षट्प्रस्थं गोजलं भवेत्
गोमयन्तु चतुःप्रस्थमुत्तमन्तु विधीयते ६

सार्धप्रस्थन्तु गोक्षीरं प्रस्थार्धं दधिरुच्यते
पादप्रस्थघृतञ्चैव द्विप्रस्थं गोजलं भवेत् ७
द्विप्रस्थगोमयं प्रोक्तं मध्यमन्तु प्रकीर्तितम्
त्रिपादं क्षीरमित्युक्तं द्विपादं दधिरुच्यते ८
एकपादघृतं चैव षड्पादं चैव गोजलम्
गोमयन्तु चतुष्पादं कन्यसन्तु प्रकीर्तितम् ९
उत्तमे मध्यमे चैव गोमयं कुक्कुटाण्डावत्
अधमेवाक्षमात्रं स्यात् जलेनैव प्रपूरयेत् १०
वस्त्रपूतं प्रकर्तव्यं स्थापयेद्विधिपूर्वकम्
अलाभे दधिनी क्षीरं क्षीरालाभे भवेद्दधि ११
गोमूत्रं गोमयालाभे तदालाभे तु गोमयम्
पञ्चगव्येषु यद्यस्यादलाभेस्तद्धृतं भवेत् १२
क्षीरं सदाशिवञ्चैव ईश्वरो दधिरुच्यते
घृतं वै रुद्रदैवत्यं गोमूत्रं विष्णुदैवतम् १३
गोमयं ब्रह्मदैवत्यं पञ्चगव्याधिदेवताः
पयसश्चत्रुनाशं स्यात् दधिपुत्रस्य वर्धनम् १४
घृतं मोक्षप्रदञ्चैव गोमूत्रं श्रीप्रदायकम्
गोमयं रोगनाशं स्यात् पञ्चगव्यफलं क्रमात् १५
कौशिकं क्षीरकुम्भन्तु काश्यपं दधिरुच्यते
भारद्वाजं घृतञ्चैव गोमूत्रमात्रयं तथा १६
गौधमं गोमयञ्चैव पात्राणामधिदेवताः १७
प्रस्थन्तु पिष्टचूर्णं स्यात् तदर्द्धामलकं भवेत्
रजनी कुडुपं श्रेष्ठं तदर्द्धमध्यमं भवेत् १८
तदर्द्धमधमं प्रोक्तं यथालभ्यमथापि वा
उशिरं चन्दनोपेतं कुशाग्रैस्तु समन्वितम् १९
कुशाभमिति निर्दिष्टमथवा कुशतोय युक्

एवं सम्पाद्य सर्वन्तु शालिभिस्थरिडलं कुरु २०
गोमयालेपनं कृत्वा लिङ्गाग्रे चान्यदेशके
पिष्ठचूर्णैरलङ्कृत्य वितानाद्युपशोभितम् २१
आचार्यस्सकळीकृत्यास्सोष्णीषं चोत्तरीयकम्
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः २२
विघ्नेशयजनं पूर्वं पुण्याहं तत्र कारयेत्
प्राक्सूत्रं युगसूत्रन्तु उदक्सूत्रन्तथैव च २३
सूत्रात् सूत्रान्तरं तालं नवकोष्ठं प्रकल्पयेत्
अथवा भूतसूत्रन्तु प्रागग्रमुदगग्रकम् २४
मध्ये चतुष्पदञ्चैकं पूर्ववत् द्विद्विकं पदम्
आग्नेयादीश पर्यन्तमेकैकं पदमेव हि २५
ग्राहयेत् नवकोष्ठन्तु शेषरेखां विलेपयेत्
एकहस्तं द्विहस्तं वा चतुरश्रस्थरिडलं कुरु २६
उत्तमन्तु चतुःप्रस्थं मध्यमन्तु तदर्धकम्
अधमं प्रस्थ शालीन्तु पदं प्रति पदं प्रति २७
तण्डुलैस्तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत्
पूर्वोत्तराग्रान् परिस्तीर्य त्रिकुशान् प्रतिरेखगान् २८
मध्यमे शिवतत्वन्तु पूर्वकोष्ठे सदाशिवम्
विद्यातत्वं दक्षिणं स्यात् पुरुषतत्वं तथोत्तरे २९
पश्चिमे कालतत्वन्तु पृथिवीतत्वन्तु पावके
अम्बरं निर्ऋतिकोष्ठन्तु वायुकोष्ठे मरुत्क्रमात् ३०
ईशाने प्रकृतिकोष्ठञ्च कोष्ठैरेतैः प्रपूजयेत्
स्वर्णरौप्यादिपात्रैर्वा लाभे मृण्मयस्तु वा ३१
त्रिसूत्रैर्वेष्टयित्वा तु धूपितैः स्थापितैः क्रमात्
मध्यमे सुप्रतिष्ठञ्च सुशान्तं पूर्वपात्रके ३२
तेजोवद्दक्षिणे चैव अमृतपात्रं तथोत्तरे

रत्नोदं पश्चिमे चैव पञ्चपात्रेषु पूजयेत्  ३३
अथवाप्येक पात्रञ्चेत् सुप्रतिष्ठानि पूजयेत्
पात्राणि शिरसावाह्य कौशिकादीनि पूजयेत्  ३४
आग्नेयां नियतीं पूज्य कालतत्वञ्च नैर्ऋते
कलातत्वन्तु वायव्यामव्यक्तमीशगोचरे  ३५
गन्धपुष्पादिनाभ्यर्च्य पूजयेत् स्वस्वनामतः
पात्रेषु विधिनापूर्य मध्यादीशान्तकं क्रमात्  ३६
क्षीरं विन्यस्य मध्ये तु दधिपूर्वे तु विन्यसेत्
दक्षिणे तु घृतं न्यस्य गोमूत्रं चोत्तरे तथा  ३७
गोमयं पश्चिमे चैव आग्नेयां पिष्ठसंयुतम्
नैर्ऋत्यामामलीं स्थाप्य वायव्यां रात्रिचूर्णकम्  ३८
कुशोदकं तथैशान्यां तत्तत्स्थापनमाचरेत्
पुष्पान् कूर्चान् समायुक्तान् धूपदीपादिपूजयेत्  ३९
अप्यायस्वेति च क्षीरं दधिक्राविणोति वै दधि
शुक्रमसी घृतञ्चैव सावित्रीं गोजलस्य तु  ४०
गन्धद्वारेति मन्त्रेण गोमयेदं प्रपूजयेत्
अग्निमीळे तु पिष्ठं स्यात् इषेत्वामलकं न्यसेत्  ४१
अग्न आयाहि मन्त्रेण रजनीं स्थापयेत्ततः
शन्नो देवीति मन्त्रेण कुशोदकन्तु विन्यसेत्  ४२
देवस्यत्वेति मन्त्रेण स्थापयेद्देशिकोत्तमः
ईशानादीनि सद्यान्तं मन्त्रं जप्त्वा विचक्षणः  ४३
एकद्वित्रिचतुष्पञ्च षड्भिः कृत्वाभिमन्त्रयेत्
कुशोदकेन संयोज्य मूलमन्त्रमनुस्मरन्  ४४
मध्ये दध्यादि संयोज्य ईशानमन्त्रमुच्चरन्
तत्पुरुषाय विद्महे दधिमध्ये सुयोजयेत्  ४५
अघोरेभ्यश्च मन्त्रेण घृतं चैव सुयोजयेत्

वामदेवीति मन्त्रेण गोमूत्रञ्च सुयोजयेत् ४६
सद्योजातेति मन्त्रेण गोमयञ्च सुयोजयेत्
शिवगायत्रि मन्त्रेण कुशोदकं सुयोजयेत् ४७
त्र्यम्बकेति मन्त्रेण मर्द्दयेत्तु प्रदक्षिणम्
अष्टोत्तरशतञ्चैव मूलमन्त्रं जपेद्बुधः ४८
सुरभिमुकुळञ्चैव दिग्बन्धावकुण्ठयेत्
गन्धपुष्पादिनाभ्यर्च्य धूपदीपौ च मूलतः ४९
दर्भैराश्छाद्य तत्पात्रं साधयित्वा समन्वितम्
पञ्चगव्यं भवेद्धीमान् महापातकनाशनम् ५०
प्रोक्षयेत् पञ्चगव्येन स्थानशुध्यादिशुद्धये
पञ्चगव्यमिति प्रोक्तं पञ्चामृतविधिं शृणु ५१
इत्यंशुमान् तन्त्रे पञ्चगव्यविधिपटलः

पञ्चामृतविधिः

पञ्चामृतविधिं वक्ष्ये श्रूयतां रविसत्तमः
पकारं शत्रुनाशं स्यात् चकारं रोगनाशनम् १
अमृतं मृत्युनाशं स्यात् पञ्चामृतमिहोच्यते
देवाग्रे स्वष्टदेशे तु रम्यदेशे मनोरमे २
गोमयालेपनं कृत्वा चतुरश्रसमन्वितम्
शालीनामाढकं श्रेष्ठं त्रिप्रस्थं परिकल्पयेत् ३
प्राक्सूत्रं युगसूत्रञ्च भूतकोष्ठं च विन्यसेत्
ईशाने पद्ममालिख्य अब्धसूत्रेण विन्यसेत् ४
मध्यमे रुद्रतत्वन्तु शक्तितत्वन्तु पूर्वके
सव्ये सादाख्य तत्वन्तु उत्तरे कालतत्वतः ५
विद्यातत्वन्तु पश्चिम्यां व्योमतत्वञ्च दीशके
सोमामृतमयं पात्रं मध्यकोष्ठे तु विन्यसेत् ६

ज्ञानामृतमयं पात्रं पूर्वकोष्ठे समर्चयेत्
पुष्पयोगामृतं पात्रं दक्षिणे तु समर्चयेत् ७
धर्मामृतमयं पात्रं पश्चिमे तु समर्चयेत्
सर्वामृतमयं पात्रं उत्तरे तु समर्चयेत् ८
पात्रान् संपूज्य संस्थाप्य कूर्चपुष्पाक्षतेन तु
भूताक्षरेण इवो ++++++ ९
द्विपादं क्षौद्रसंयुक्तं क्षीरं त्रिः प्रस्थमेव च
युग्मप्रस्थदधिं चैव द्विपादं घृतसंयुतम् १०
शर्करा द्विफलं चैव उत्तमं चेति कीर्तितम्
क्षौद्रं कुबेरसंयुक्तं षड्पादं क्षीरमेव च ११
प्रस्थं दधि समायुक्तं आज्येन कुडुबं युतम्
शर्कराश्च फलं चैव मध्यमं चेति कीर्तितम् १२
कुडुबं मध्यमेवञ्च क्षौद्रञ्चैव तु संयुतम्
त्रिपादं क्षीरमित्युक्तं द्विपादं दधिरुच्यते १३
कुडुबादर्धमेवञ्च आज्येनैव समायुतम्
शर्कराफलमेकञ्च अधमञ्चेति कीर्तितम् १४
पञ्चामृतमिति प्रोक्तं सर्वयज्ञफलं भवेत्
इत्यंशुमान् तन्त्रे पञ्चामृतविधिपटलः

## शङ्खाभिषेकविधिः

शङ्खाभिषेचनं वक्ष्ये श्रूयतां रविसत्तम
आयुश्री मृत्युञ्जयदं व्याधिनाशं रिपुक्षयम् १
धर्मार्थकाममोक्षञ्च पुत्रपौत्रविवर्द्धनम्
शान्तिकं पौष्टिकं प्रोक्तं सर्वपापविनाशनम् २
तस्मात्सर्वप्रयत्नेन शङ्खतोयाभिषेचनम्
रोहिण्यां शनिसंयुक्ते गुरुपुष्ये तथैव च ३

आदित्ये हस्तसम्युक्ते भृगुरेवति संयुते
कुजे स्वाति समायुक्ते यजमानानुकूलतः ४
अष्टम्याञ्च चतुर्दश्याममावासायां सुक्रमे
यजमानस्य जन्मर्क्षे कुर्यात् शङ्खाभिषेचनम् ५
शङ्खत्रिविधमित्युक्तं पुमान्नारी नपुंसकम्
मूलस्थूलं भवेन्नारी अग्रस्थूलं नपुंसकम् ६
अग्रमूलसमं चेत्तु पुल्लिङ्गमिति कीर्तितम्
शङ्खं चतुर्विधं ज्ञेयं ब्राह्मणादि क्रमेण तु ७
लघुचालिकसद्भावदीर्घाश्रं प्रष्टतस्समम्
उदरं पूर्णयित्वा तु ब्रह्मशङ्खमिहोच्यते ८
क्षत्रियं शङ्खमेवञ्च ईषत्पीतनिभन्तथा
मूलदीर्घं लघुश्चैव वैश्यशङ्खमिति स्मृतम् ९
शूद्रशङ्खं लघुञ्चैव दीर्घाग्रं ह्रस्वप्रष्ठकम्
शङ्खलक्षणमित्युक्तं शङ्खोद्भवमतः परम् १०
ताम्रपर्ण्युद्भवं शङ्खमुत्तमञ्चेति कीर्तितम्
गङ्गायामध्यमञ्चैव तदर्धमधमं भवेत् ११
दक्षिणावर्तकं शङ्खं सुप्रमाणं विधीयते
पुश्चाग्रहेमरत्नादि भूषिताञ्चातिसुन्दरम् १२
सहस्रशङ्खं संस्थाप्य उत्तमञ्चेति कीर्तितम्
शङ्खञ्च शतसंख्याञ्च स्थापनञ्च क्रमेण तु १३
संख्यायैकोनपञ्चाशत् कन्यसं चेति कीर्तितम्
एवं क्रमेण विधिवत् स्नपनोन्नवार्चयेत् १४
अथवान्यप्रकारेण शङ्खतोयाभिषेचनम्
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः १५
पञ्चगव्यञ्च संस्नाप्य पञ्चामृतमथाचरेत्
स्नपनं कारयेद्धीमान् पूर्ववद्विधिमाचरेत् १६

पाद्याचमनञ्चार्घ्यं पृथक् पात्रे च विन्यसेत्
जलभाण्डन्तु सङ्ग्राह्य जलेनापूरयेत्ततः १७
तत्तत् द्रव्येण संयुक्तं सुगन्धकुसुमादिभिः
मुखं वस्त्रेण संवेष्ट्य स्थापयेत्तु विचक्षणः १८
शङ्खपूजाविधानार्थं शिवाग्रे स्थण्डिलं न्यसेत्
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः १९
शङ्खञ्च क्षाळयेद्धीमान् तुषादण्डेन शुध्यति
शङ्खपादत्रिकोणञ्च मध्यमेखलयं न्यसेत् २०
गुरुं विष्णुं विरिञ्चौ च त्रिकोणाग्रे समर्चयेत्
शङ्खं चन्द्रादिदैवत्यं कुक्षौ वरुणमेव च २१
प्रष्ठे प्रजापतिः प्रोक्तं पार्श्वे चाश्वनि दैवतु
रेखायां लक्ष्मिदेव्यौ च शङ्खस्याग्रे सरस्वती २२
शङ्खस्य शुक्तिकुक्षौ च सप्तवारी जलेन तु
ईशानादि शिरोन्तञ्च सप्तवारीञ्च मन्त्रतः २३
पात्राघारं न्यसेद्मध्ये तस्योर्ध्वे शङ्खगन्यसेत्
नाडीसन्धानमार्गेण तत्वत्रयं समर्चयेत् २४
रागोनियतिविद्या च काचकाला च मोहिनी
विद्याचेश्वरसादाख्यं शक्तिश्शिव इति स्मृतः २५
शक्त्यादिशक्तिपर्यन्तं गन्धपुष्पैस्समर्चयेत्
कूर्चन्तु मध्यमे स्थाप्य शिवगायत्रिमन्त्रतः
गन्धतोयेन संयोज्य चाष्टगन्धञ्च विन्यसेत् २६
चन्दनागरुकर्पूरं तमालं जलकुङ्कुमम्
उशिरं कोष्ठसंयुक्तं शैलगन्धाष्टकं न्यसेत् २७
गन्धद्वारेति मन्त्रे चन्दनञ्चैव विन्यसेत्
शिवगायत्रिमन्त्रेण आमकर्पूरयोन्यसेत् २८
किं वा सायेति मन्त्रेणामलकं चैव विन्यसेत्

तत्वायामीति मन्त्रेण वदनं चैव विन्यसेत् २९
भूमिर्भूम्नेति मन्त्रेण उशिरं चैव विन्यसेत्
नाकेसुपर्णमन्त्रेण कुङ्कुमं चैव विन्यसेत् ३०
कूर्चेन मथनं कृत्वा यद्वादेवेति मन्त्रतः
न्यस्त्वा भागीरथी मध्ये अध्वागी च तरङ्गिकाम् ३१
कृताञ्जलिपुटो भूत्वा सर्वाभरणभूषितम्
तरङ्गवस्त्रसम्युक्तां पीनोरुजघनस्तनाम् ३२
ध्यायेत् गङ्गां समावाह्य धूपदीपं समर्चयेत्
शङ्खपूजावसाने तु जलपात्रं समर्चयेत् ३३
शालिभिस्थण्डिलं कृत्वा पद्ममष्टदळं लिखेत्
त्रिपादं मध्यमे स्थाप्य तस्योर्ध्वे पात्रकं न्यसेत् ३४
वस्त्रेण मुखमावेष्ट्य गन्धतोयेन पूरयेत्
नवतीर्थं समावाह्य सुगन्धकुसुमादिभिः ३५
धूपदीपं समभ्यर्च्य द्वारपूजार्चनं तथा
स्थापयित्वा कृतं द्रव्यं तैलाभ्यङ्गन्तु कारयेत् ३६
पिष्ठामलकञ्चैव रजनीचैव लेपयेत्
स्थानतोयेन संस्नाप्य पञ्चगव्यामृतैरपि ३७
गन्धतोयाभिषेकान्ते मन्त्रपुष्पन्तु दापयेत्
पायसान्नं निवेद्याञ्च वस्त्रगन्धन्तु दापयेत् ३८
शङ्खाभिषेचनं कुर्यात् रुद्रसूक्तेन मन्त्रतः
चमकं पुरुषसूक्तञ्च श्रीसूक्ते पवमानकम् ३९
आचार्यश्शङ्खमुद्धृत्य लिङ्गाग्रे चतुरङ्गुलम्
तज्जलं धारयेद्धीमान् नान्यैश्च स्नापयेत्ततः ४०
तत्तत्संख्यावसाने तु अर्चयेत्तु विचक्षणः
स्नानं वस्त्रञ्च गन्धञ्च पुष्पदामं तथैव च ४१
नैवेद्यं चैव ताम्बूलं धूपदीपं तथैव च

षोडशैरुपचारेण प्रतिसन्ध्यां समर्चयेत् ४२
शिवकुम्भन्तु सङ्ग्राह्य परिचारकमूर्धनी
हर्म्यं प्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम् ४३
गर्भगेहं प्रविश्याथ शिवाग्रे स्थण्डिलोपरि
कुम्भान् बीजान् समादाय लिङ्गमध्ये तु विन्यसेत् ४४
मन्त्रपुष्पं ततो दत्वा मन्त्रान्नञ्च निवेदयेत्
एवं क्रमेण विधिवत् सन्ध्याशेषं समापयेत् ४५
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्
इत्यंशुमान् तन्त्रे शङ्खाभिषेकपटलः

## शङ्खलक्षणम्

शङ्खन्त्रिविधमित्युक्तं पुमान्नारीनपुंसकम्
मूलस्थूलभवेन्नारी अग्रस्थूलन्नपुंसकम् १
अग्रमूलसमञ्चे तु पुमाञ्चेति प्रकीर्तितम्
ताम्रपर्ण्युद्भवं शङ्खं उत्तमञ्चेति किर्तितम् २
गङ्गायामध्यमञ्चैव नर्मदायाञ्च कन्यसम्
दक्षिणावर्त्तकं शङ्खं जातिश्रेष्ठमिति स्मृतम् ३
दक्षिणावर्त्तकं शङ्खं स्वप्रमाणं विधीयते
पुञ्चाग्रहेमरत्नादि भूषितञ्चातिसुन्दरम् ४
शङ्खञ्चाळयेद्धीमान् तुषदग्धेन शुध्यति
शङ्खपादन्त्रिकोणञ्च मध्यमे वलयान्वितम् ५
अलाभे तु दधिक्षीरं क्षीराभावे भवेद्दधि
गोमूत्रं गोमयालाभे तदलाभे तु गोमयम् ६
पञ्चगव्येषु यस्य स्यादलाभस्तत् घृतं भवेत्
उत्तमे मध्यमञ्चैव गोमयं कुक्कुटाण्डवत् ७
अथवाक्षमात्रं स्यात् जलेनैव प्रपूरयेत्

वस्त्रपूतं प्रकर्त्तव्यं स्थापयेद्विधिपूर्वकम् ८
मध्ये क्षीरन्तु संस्थाप्य तत्पूर्वे दधिरुच्यते
दक्षिणे तु घृतं स्थाप्य गोमूत्रञ्चोत्तरन्यसेत् ९
गोमयं पश्चिमे न्य सृष्टिन्यासक्रमेण तु
गोमूत्रं स्थापयेन्मध्ये गोमयं पूर्वतो न्यसेत् १०
दक्षिणे तु दधिञ्चैव उत्तरे क्षीरमेव च
पश्चिमे तु घृतं स्थाप्य संहारक्रममेव च ११
ऐशान्यां कुशोदकञ्च स्थापयेत्तु विशेषतः
पिष्टमामलकञ्चैव रजनीञ्च विशेषतः १२
अग्निकोष्ठादि वायव्यां हृदाकवचमेव च १३

## पाद्यादिविधिः

पाद्यादीनां विधिं वक्ष्ये श्रूयतां रविसत्तमः
देवाग्रे स्थण्डिलं कृत्वा चतुरश्रसमन्वितम् १
सकळं पदमेवञ्च युगसूत्रेण वेष्टयेत्
तत्सूत्रतत्पदञ्चैव द्विपदं लेप्य बुद्धिमान् २
पाद्यपात्रेण संयुक्तं प्रस्थार्थं जलमेन तु
आत्मतत्वत्रयञ्चैव कोष्ठपूजां विधीयते ३
अनन्तरं पात्रमित्युक्तं विजयञ्चैव पात्रकम्
व्योमञ्च पात्रमेवञ्च पात्रपूजां विधीयते ४
पात्रमध्ये न्यसेत्कूर्चं अस्त्रमन्त्रेण देशिकः
आपोवायेति मन्त्रेण पूर्वाञ्चैव तु विन्यसेत् ५
ईशानञ्चैव मन्त्रेण कुङ्कुमञ्चैव विन्यसेत्
गन्धद्वारेति मन्त्रेण गन्धञ्चैव तथैव च ६
शिवगायत्रिमन्त्रेण दूर्वाञ्चैव तु विन्यसेत्
नाके सुपर्णमन्त्रेण उशिरं चैव संयुतम् ७

कितवासेति मन्त्रेण सिद्धार्थं चैव विन्यसेत्
कवचेन तु मन्त्रेण मर्दयेत्तु विचक्षणः ८
शन्नो देवेति मन्त्रेण पाद्यञ्चैवाभिमन्त्रयेत्
एवं पाद्यं ततो दत्वा आचमनीयमतः परम् ९
एवं पात्रं न्यसेत्कूर्चं शिखामन्त्रं तथैव च
शुद्धैरुद्धैति मन्त्रेण जलेनापूरयेत्ततः १०
त्रयम्बकेन तु मन्त्रेण पाद्यञ्चैव तु विन्यसेत्
सन्ते यागुंसि मन्त्रेण जातीं चैव तथैव च ११
सद्योजातञ्च मन्त्रेण आमकर्पूरविन्यसेत्
इन्द्रं विश्वाहमन्त्रेण लवङ्गञ्च तथैव च १२
कूर्चेन मथनं कृत्वा नेत्रमन्त्रेण बुद्धिमान्
यद्वेदादिति मन्त्रेण अभिमन्त्र्यञ्च देशिकः १३
एवमाचमनं प्रोक्तं मर्घ्यञ्चैवमतः परम्
चूळिकामन्त्रसंयुक्तं कूर्चं पात्रस्य मध्यमे १४
वासां देवेति मन्त्रेण जलेनैव तु पूरयेत्
सावित्रीमिति मन्त्रेण आपश्चैव तु योजयेत् १५
हिरण्यपात्रमन्त्रेण क्षीरञ्चैव तु विन्यसेत्
ततुरुषायेति मन्त्रेण कुशाग्रञ्चैव संयुतम् १६
अग्निमीळेति मन्त्रेण अक्षतं चैव विन्यसेत्
द्रायेति मन्त्रेण कुशाग्रञ्चैव संयुतम्
भूमिर्भूम्नेति मन्त्रेण यवं चैव तु विन्यसेत् १७
तत्वायामीति मन्त्रेण सिद्धार्थं चैव पूरितम्
उदित्यं जातमन्त्रेण मर्दयेत्तु विचक्षणः १८
इमामापस्वमन्त्रेण अर्घ्यं चैवाभिमन्त्रयेत्
दर्भेणाश्छादनं कृत्वा पाद्यादिक्रममुच्यते १९
अथवा शुद्धजलेनैव गन्धेनैव समन्वितम्

शिवमन्त्रमनुस्मृत्य पाद्यमाचमनार्घ्यकम् २०
पाद्यादि क्रममेवोक्तं पञ्चगव्यविधिं श्रुणु
इत्यंशुमान् तन्त्रे पाद्यादिविधिपटलः

## सकळस्थापनविधिः

सकळस्थापनं वक्ष्ये श्रूयतां रविसत्तम
आयुरारोग्यजयदं पुत्रश्रीकीर्तिवर्धनम् १
केवलं सहजं चैव पौनः पुरायं त्रिधास्मृतम्
केवलं त्वेकबेरं स्यात्स्थापनं त्विति विन्यसेत् २
महेश्वरादिबिम्बानां सुशक्तिः प्रथमादिकम्
परिवारामरादीनां वाहनायुधविग्रहान् ३
भक्तादि प्रतिमां चैव एकस्मिन्नेककालके
एकाचार्येण कर्तव्यं स्थापनं सहजं स्मृतम् ४
वर्णादि स्फोटने चैव अङ्गोपाङ्गादिहीनके
त्याज्य बिम्बं तु संस्थाप्य पौनः पुरायमिति स्मृतम् ५
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
सुवारे सुमुहूर्ते च स्थापनं सम्यगाचरेत् ६
शैललोहजरत्नैश्च सुधामृद्दारुबिम्बयोः
भक्तिचित्रे प्रयोक्तव्यं विशेषं किञ्चिदिष्यते ७
चलं चैवाचलं चैव प्रासादं प्रतिमन्त्रतः
अचलं गर्भसंयुक्तं तत्स्थाने तु दृढीकृतम् ८
गर्भहीनं तु तद्वस्तु चलमेवं प्रकीर्तितम्
अचलं स्वस्वदेशे तु चलं सर्वत्र देशके ९
रत्नजैश्चित्रबिम्बैश्च रत्नन्यासादिकं विना
प्रथमं बेरनिर्माणं द्वितीयं द्रव्यसङ्ग्रहम् १०
पश्चान्मराटपनिर्माणं चतुर्थं दृष्टिमोचनम्

पञ्चमं प्रतिमाशुद्धिं षष्ठं ग्रामप्रदक्षिणम् ११
सप्तमन्तु जले वासमष्टमं मण्टपार्चनम्
रक्षाबन्धञ्च नवमं शय्याधिवासनं परम् १२
एकादशाधिवासञ्च द्वादशं होमकर्मणि
त्रयोदशं प्रतिमोद्धारं दक्षिणादानतत्परम् १३
तत्परं प्राणविन्यासं अभिषेकन्तु षोडश
सप्तदशं निवेद्यं स्यात् कलशस्थापनं परम् १४
प्रभूतहविषं पश्चात् धूपदीपादिकं ददेत्
एवं विंशति भागेन प्रतिष्ठाविधिरुच्यते १५
यागार्थं मण्टपादीनां पूर्वोक्तविधिना कुरु
अङ्कुरं चाग्निकार्यञ्च परिवारघटादिकम् १६
मण्टपस्यार्चनादींश्च एकेमेवं प्रकल्पयेत्
तत्तद्ब्रह्मघटादींश्च पृथक्चैतां प्रकल्पयेत् १७
प्रतिष्ठा ऋक्षपूर्वे तु त्रिदिने तद्दिनेऽपि वा
अङ्कुरार्पणकार्यञ्च पूर्वोक्तविधिना सह १८
नेत्रद्वययुते ऋक्षे चाक्षिमोक्षणमाचरेत्
ततस्तक्षकमाहूय देशिकानां प्रयत्नतः १९
भ्रूरेखां पक्षरेखां च शिल्पी कुर्यात्सुलक्षणम्
गोभूहिरण्यवस्त्रादीन् दत्त्वा शिल्पं विसर्जयेत् २०
स्थण्डिलं शालिभिः कृत्वा पद्ममष्टदळं लिखेत्
तण्डुलैश्च तिलैर्लाजैर्दर्भैः पुष्पैः परिस्तरेत् २१
तस्य मध्ये तु संस्थाप्यं महेशप्रतिमादिकम्
पुण्याहं वाचयित्वा तु रक्तपुष्पैरलङ्कृतम् २२
कलशानष्टसंख्यातान् ससूत्रान् सापिधानकान्
सवस्त्रान्पल्लवोपेतान् नाळिकेरफलैर्युतान् २३
गन्धैः पुष्पैः समभ्यर्च्य विद्येशानभितो यजेत्

गन्धपुष्पादिनाभ्यर्च्य प्रच्छन्नपटमाविशेत् २४
ईशानेन तु मन्त्रेण पद्मरेखां समालिखेत्
कृष्णमण्डलमालिख्य सद्योजातेन मन्त्रतः २५
ज्योतिर्मण्डलमालिख्य नेत्रमन्त्रमनुस्मरन्
मधुवाता ऋतायेति मधुपात्रं प्रदर्शयेत् २६
दधिक्राविण्णेति मन्त्रेण दधिपात्रं प्रदर्शयेत्
शिवगायत्रिमन्त्रेण प्रत्युरञ्च प्रदर्शयेत् २७
गौर्धेनुहव्यमन्त्रेण सवत्साङ्गां प्रदर्शयेत्
ब्रह्मजज्ञानमन्त्रेण ब्राह्मणान् दर्शयेत्ततः २८
सुमङ्गलीतिमन्त्रेण कन्यकानां प्रदर्शयेत् २९
एषामीशेति मन्त्रेण धान्यराशिं प्रदर्शयेत्
प्रच्छन्नपटमावर्ज्य जनान्सर्वान्प्रदर्शयेत् ३०
बेरशुद्धिं ततः कृत्वा पञ्चमृत्पञ्चगव्यकैः
रत्नोदैश्शुद्धतोयेन स्नापयेद्देशिकोत्तमः ३१
वस्त्रैराभरणैर्माल्यैरलङ्कृत्य विशेषतः
अथवा शिबिकोर्ध्वे तु देवानां रोप्य भक्तितः ३२
ग्रामप्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम्
जलतीरं समाश्रित्य प्रपां कृत्वा तु सुन्दरम् ३३
तन्मध्ये स्थण्डिलं कल्प्य साष्टपत्रं सकर्णिकम्
दर्भैः पुष्पैः परिस्तीर्य कलशान्नवसंख्यया ३४
संस्थाप्य हृदयेनैव पुण्याहं वाचयेत्ततः
प्राक् शिरश्चोर्ध्ववक्त्रं स्यात् मूलेनैव जलं क्षिपेत् ३५
त्रिरात्रमेकरात्रं वा याममेकमथापि वा
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु ३६
पुण्याहं वाचयेत्तत्र मण्टपस्यार्चनं कुरु
जलादुत्तीर्य बिम्बन्तु शुद्धिं कृत्वा विचक्षणः ३७

मुखं मण्टपमासाद्य रक्षाबन्धनमाचरेत्
पुण्याहं तु ततः कृत्वा प्रयतो वेदिकोपरि ३८
स्थण्डिलं शालिभिः कृत्वा तण्डुलैश्च सुशोभितम्
शयनं कल्पयेत्तत्र अण्डजाद्यैरनुक्रमात् ३९
अर्चयित्वा तु गन्धाद्यैस्तत्तन्मूलेन देशिकः
शयितं शयने तत्र प्रतिष्ठा वस्त्रवेष्टितम् ४०
प्राक् श्चिरस्तु ततो देवाः पूजयेत् स्वस्वमूलतः
तस्य दक्षिणपार्श्वे तु शिवकुम्भञ्च वर्द्धनीम् ४१
सवस्त्रान् पल्लवोपेतान् सकूर्चान् फलसम्युतान्
हेमरत्नसमायुक्तान् शुद्धाम्बुपरिपूरितान् ४२
कुम्भे शम्भुं समावाह्य तन्मूलेनैव देशिकः
वामकुम्भे मनोन्मन्यां पूजये देशिकोत्तमः ४३
अभितः कलशानष्टौ विद्येशानां प्रकल्पयेत्
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत् ४४
ऋगाद्यध्ययनं कुर्यात् दिग्विदिक्षु विशेषतः
ततो होमं प्रकुर्वीत एकाग्नौ तु विशेषतः ४५
अग्न्याधानादिकं सर्वमाज्यभागान्तमाचरेत्
वह्निमध्ये समभ्यर्च्य बहुबेरं स्वमूलतः ४६
गन्धपुष्पादिनाभ्यर्च्य तत्तन्मूर्त्तिर्दशाहुतिः
समिदाज्येन चरुणा लाजांश्च सर्षपांस्तिलान् ४७
यवांश्चैव तु सप्तैते आज्यमूलेन होमयेत्
समिधादीनि षड्द्रव्यैः हृदादिश्चैव हूयते ४८
प्रत्येकं षोडशं वाथ व्याहृतीं जुहुयात्ततः
तत्तत्स्वमूलमन्त्रेण आज्येनाष्टशताहुतिः ४९
एकत्रिंशत्कलाञ्चैव तत्तत्स्थाने स्पृशेद्धुनेत्
सर्वद्रव्यैर्विशेषेण हव्यवाहेन हूयते ५०

गेयन्नृत्तसमं कुर्याद्रात्रिशेषं व्यपोह्य च
ततः प्रभातसमये आचार्यो मूर्तिपैस्सह ५१
कृत्वा स्नानत्रयं तत्र सकळीकरणं कुरु
शयने शाययेद्बिम्बं गन्धपुष्पादिनार्चयेत् ५२
अभितः कलशानष्टौ विद्येशान् संप्रकल्पयेत्
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत् ५३
ऋगादध्ययनं कुर्यात् चतुर्दिक्षु विशेषतः
ततो होमं प्रकुर्वीत एकाग्नौ तु विशेषत ५४
अग्न्यादानादिकं सर्वमाज्यभागान्तमाचरेत्
वह्निमध्ये समभ्यर्च्य बहुबेरं समूलतः ५५
गन्धपुष्पादिनाभ्यर्च्य तत्तन्मूर्त्तिदशाहुतिः
समिदाज्येन चरुणा लाजसर्षपकान् तिलान् ५६
यवांश्चैव तु सप्तैते आज्यं मूलेन होमयेत्
समयादीनि षट् द्रव्यैः हृदादींश्चैव होमयेत् ५७
प्रत्येकं षोडशं वाथ व्याहृतीं जुहुयात्ततः
तत्तस्वमूलमन्त्रेण आज्येनाष्टशताहुतिः ५८
एकत्रिंशत्कलाश्चैव तत्तत्स्थानेषु श्रावयेत्
सर्वद्रव्यैर्विशेषेण हव्यवाहनहूयते ५९
गेयन्नृत्तसमाकुर्यात् रात्रिशेषं व्यपोह्य च
ततः प्रभात समये आचार्यो मूर्तिपैस्सह ६०
कृत्वा स्नानत्रयं तत्र सकळीकरणं कुरु
शयने शाययेत् बिम्बं गन्धपुष्पादिनार्चयेत् ६१
नानावाद्यसमायुक्तं नानादीपसमायुतम्
नानाचत्रसमोपेतं नानालङ्कारसम्युतम् ६२
नानाभक्तजनैस्सार्धं स्वस्तिसूक्तसमन्वितम्
हर्म्यप्रदक्षिणं कुर्यात् स्नानवेद्युपरि न्यसेत् ६३

पुण्याहं वाचयेत्तत्र एकत्रिंशत्कलां न्यसेत्
ब्रह्मकुम्भं समभ्यर्च्य पूर्ववत्समलङ्कृतम् ६४
धामप्रदक्षिणं कुर्याद्देवाग्रे स्थापयेद्बुधः
मुहूर्तं निरीक्ष्य देवज्ञं गन्धपुष्पाक्षतार्चयेत् ६५
ताम्बूलं दापयेद्विद्वान् दक्षिणां दापयेत्ततः
जीवन्यासं ततः कृत्वा सुमुहूर्ते च लक्षणः ६६
तत्तत्स्वमूलबीजेन कुम्भतोयाभिषेचयेत्
मन्त्रान्नं दापयेत्पश्चात् परिवारघटादिकम् ६७
स्वस्वस्थानेऽभिषेकन्तु गन्धपुष्पञ्च दापयेत्
वस्त्रैराभरणैर्माल्यैः प्रभूतहविषं ददेत् ६८
धूपं दीपं ददेच्छंम्भोस्ताम्बूलञ्च निवेदयेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ६९
गोभूहिरण्यधान्याद्यैर्मनस्सन्तोषयेत्ततः
उत्सवं कारयेत्तत्र यथावित्तानुसारतः ७०
भक्तांश्च परिवाराणां दक्षिणां दापयेत्ततः
दीनान्धकृपणाश्चैव यथाशक्त्या तुदक्षिणा ७१
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
यानि यान् कामयते कामान् तान् तान् कामानवाप्नुयात्
७२
इहैव धनवान् श्रीमान् सोऽन्ते सायुज्यमाप्नुयात्
सकळस्थापनं प्रोक्तं सकळार्चनविधिं श्रुणु ७३
इत्यंशुमान् तन्त्रे सकळस्थापनविधिपटलः

## सकळाराधनम्

सकळस्यार्चनं वक्ष्ये श्रूयतां रविसत्तम
आयुरारोग्यजयदं पुत्रश्रीकीर्तिवर्द्धनम् १

सृष्ट्यर्थं लोकरक्षार्थं लोकस्योत्पत्तिकारणम्
साधकानां हितार्थन्तु स्वेच्छया गृह्णते तनुम् २
साधनं द्वविधाश्चेति प्रोक्तस्सकळनिष्कळः
सकळन्तु तथा ज्ञेयमुच्यते क्रमशस्तथा ३
सर्वावयवसंयुक्तः सकळश्चेति कीर्तितः
तद्बिम्बं द्विविधं प्रोक्तं चलं चैवाचलं तथा ४
लोहञ्च पटचित्रञ्च रत्नजं बाणलिङ्गकम्
चलमेवं समाख्यातं शैलजं मृण्मयन्तथा ५
दारुजं भित्तिचित्रञ्च अचलं चेति कीर्तितम्
भित्तिचित्रस्य बिम्बस्य चित्रयुक्तोपलस्य च ६
मृण्मयस्य विशेषेण कर्मार्चायां सहार्चयेत्
आर्द्री कृतन्तु यद्बिंबं कर्मार्च्च प्रतिमां विना ७
आर्द्रायां प्रोक्षणं बाधा लोहजेन समर्चयेत्
लोहजेन महास्नानं कुर्यात्पर्वणि पर्वणि ८
केवलं सहजञ्चैव पौनः पुण्यं त्रिधा स्मृतम्
स्वतन्त्रं केवलं प्रोक्तं परिचारादितिर्युतम् ९
सर्वोपचारसंयुक्तं तत्तन्त्रोक्तवदाचरेत्
केवलस्यार्चनं प्रोक्तं सहजं परिवारकम् १०
परिवारे विशेषेण हविष्यन्तु यजेत्ततः
स्नानं वस्त्रञ्च गन्धञ्च पुष्पैर्नैवेद्यमेव च ११
पञ्चोपचारमेवं स्यात् परिवारं समर्चयेत्
दीपान्तमर्चनं कुर्यात् लोहजानां विशेषतः १२
यद्वेदादेति मन्त्रेण स्नानसंप्रोक्षयेद्बुधः
गन्धं पुष्पञ्च नैवेद्यं धूपदीपं तथैव च १३
षडङ्गत्विति च विख्यातं लोहजानां समर्चयेत्
सहजस्यार्चनं प्रोक्तं पौनः पुण्यार्चनं शृणु १४

यद्ध्रुवं मूलबिम्बञ्च तद्ध्रुवस्यानुकूलतः
उत्सवस्य प्रधानञ्च पौनः पुण्यमिति स्मृतम् १५
अरुणोदयवेळायामर्चयेत्तु महेश्वरम्
पाद्यमाचमनं दत्वा निर्माल्यमपनीय च १६
गन्धपुष्पं ददेच्छम्भोर्नैवेद्यं दापयेद्बुधः
एवमभ्यर्चयेद्विद्वान् अरुणोदयपूजनम् १७
ततस्सन्ध्यावसाने तु महेशस्याग्रदेशके
संशोध्य बहुरूपेण प्रोक्षयेत् पुरुषेण तु १८
शङ्खञ्च जलभाण्डञ्च पात्राधारञ्च पादुकम्
गन्धपुष्पञ्च धूपञ्च दीपञ्छत्रञ्च दर्पणम् १९
खण्डवस्त्रञ्च खड्गञ्च खेटकं चामरं ततः
कौपीनं चित्रवस्त्रञ्च भूषणञ्चोपवीतकम् २०
खेटकासनसंयुक्तं तस्योर्ध्वे वस्त्रविन्यसेत्
कौपीनं खण्डवस्त्रञ्च दन्तकाष्ठं तथैव च २१
तालुशोधनमेवञ्च दर्पणैश्च समन्वितम्
चित्रवस्त्रं तथा चैव केशशोधनमेव च २२
भूषणञ्चोपवीतञ्च करोद्वर्तनमेव च
गन्धञ्च हिमतोयञ्च मृगमदैश्च सम्युतम् २३
आमकर्पूरमेवञ्च पञ्चकर्पूरमेव च
मुखवासं तथा चैव घृसृणञ्चैव विन्यसेत् २४
श्वेत ताम्बूलमेवञ्च नासिकाश्छेदनं तथा
तैलेनैव तु संमिश्रं क्रमुखस्य फलं तथा २५
पूजादिसमायुक्तमश्मचूर्णं तथैव च
भसितं दर्पणं चैव चामरं तालबृन्दकम् २६
कोद्यादव्यञ्जनं चैव ++ मेव च
ताम्बूलं रम्भमेवञ्च वीटिकैश्च समन्वितम् २७

खड्गखेटक संयुक्तं खेटकोपरि विन्यसेत्
अास्ये च जलपात्रञ्च काळाञ्चि चैवमेव च २८
महेशन्दक्षिणे पार्श्वे अासीनं देशिकोत्तमः
स्थानशुद्धिं ततः कृत्वा चतुरश्रसमन्वितम् २९
शालीनामाढकं चैव त्रिप्रस्थमध्यमं भवेत्
द्विप्रस्थं मधमं चैव स्थण्डिलं चैव विन्यसेत् ३०
सकळं पदमेवञ्च पूगसूत्रेण वेष्टयेत्
तत्सूत्र तत्पदञ्चैव द्विपदञ्चैव बुद्धिमान् ३१
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः
पात्रं पाद्येन संयुक्तं प्रस्थनञ्च जलेन तु ३२
अात्मतत्वत्रयञ्चैव कोष्ठपूजां विधीयते
अनन्तपात्रमित्युक्तं विजयं चैव पात्रकम् ३३
सोमञ्च पात्रमेवञ्च पात्रपूजां विधीयते
पवित्रमध्ये न्यसेत्कूर्चे अस्त्रमन्त्रेण देशिकः ३४
अापो वायेति मन्त्रेण जलेनैव तु पूरयेत्
ईशानं चेति मन्त्रेण कुङ्कुमञ्चेति विन्यसेत् ३५
गन्धद्वारेति मन्त्रेण गन्धञ्चैव तथैव च
शिवगायत्रिमन्त्रेण दूर्वां चैव तु विन्यसेत् ३६
नाकेसुपर्णमन्त्रेण उशिरं चैव विन्यसेत्
कितवासेति मन्त्रेण सिद्धार्थं चैव विन्यसेत् ३७
कवचेन तु मन्त्रेण दर्पयेत्तु विचक्षणः
शन्नो देवीति मन्त्रेण पादञ्चैवाभिमन्त्रयेत् ३८
एवं पाद्यन्ततो दद्यात् अाचमनमतः परम्
एवं पात्रं न्यसेत्कूर्चं शिखामन्त्रं तथैव च ३९
शुद्धिं रुद्धेति मन्त्रेण जलेन पूरयेत्ततः
अङ्केन तु मन्त्रेण स्यैवं चैव तु विन्यसेत् ४०

त्वं ते वयांसि मन्त्रेण जातिं चैव तु विन्यसेत्
सद्योजातेति मन्त्रेण आमकर्पूरविन्यसेत् ४१
एषामीशेति मन्त्रेण दीपं चैव तु विन्यसेत्
ईषेत्वोर्जेन मन्त्रेण ताम्बूलञ्चैव विन्यसेत् ४२
इन्द्रं विश्वाह मन्त्रेण लवणं चैव विन्यसेत्
कूर्चेन मधनं कृत्वा नेत्रमन्त्रेण बुद्धिमान्
यद्वादायेति मन्त्रेण आचमनञ्च देशके ४३
एवमाचमनं प्रोक्तं अर्घ्यमेव ततः परम्
चूळिकामन्त्रसंयुक्तं शुद्धपात्रस्य मध्यमे ४४
यासां देवेति मन्त्रेण जलेनैव तु पूरयेत्
सवित्र इति मन्त्रेण तण्डुलञ्चैव विन्यसेत् ४५
भूमिर्भूम्नेति मन्त्रेण यवञ्चैव तु विन्यसेत्
तत्वायामीति मन्त्रेण सिद्धार्थं चैव विन्यसेत् ४६
उदित्यं जातमन्त्रेण मर्दयेत्तु विचक्षणः
इमा आचस्य मन्त्रेण अर्घ्यञ्चैवाभिमन्त्रयेत् ४७
दर्भेणाश्छादनं कृत्वा पाद्यादिक +++ ते
अङ्गशुद्धजलेनैव +++++ समन्वितम् ४८
पृथक्पात्रे विशेषेण स्थापयेत्तु विचक्षणः
स्नानार्द्धन्तु मृदं ग्राह्य शुद्धिं कृत्वा तु देशिकः ४९
द्वारपूजां ततः कृत्वा पूर्वोक्तविधिना सह
मण्टपे नैर्ऋते देशे द्वारार्चनपूर्वकम् ५०
प्रविश्याभ्यन्तं पश्चात् पटं तत्रापनीय च
पूर्वसन्धार्चितामाला हृदयेन विसर्जयेत् ५१
नवपुष्पन्तु सङ्ग्राह्य देवमूर्द्धा च विन्यसेत्
अन्यद्राजोपचारस्य चिह्नानि विविधानि च ५२
बिम्बाग्रे विन्यसेद्धीमान् प्रोक्षयेदस्त्रवारिणा

पाद्यमाचमनं चार्घ्यञ्च कल्पयेद्विधिपूर्वकम् ५३
स्नानार्थमुदकं ग्राह्य शुद्धिं कृत्वा तु देशिकः
प्रोक्षयेदस्त्रमन्त्रेण कल्पयेद्व्यमानसम् ५४
आवाहयेत्ततो देवं हृन्मन्त्रेण समर्चयेत्
पाद्यमाचमनञ्चार्घ्यं दापयेत्तु महेश्वरम् ५५
पूर्वसन्ध्यार्चितं पुष्पं ईशानेन विसर्जयेत् ५६
दर्पणन्दर्शयेद्विद्वान् स्नापयेद्युपरि न्यसेत्
रुद्रसूक्तमनुञ्जप्त्वा दर्पणं स्नानमाचरेत् ५७
गौरीमिमायमन्त्रेण देव्या स्नानञ्च पूर्ववत्
प्रोक्षयेद्बीजमुख्येन शुद्धतोयेन देशिकः ५८
खण्डवस्त्रेण संमृज्य वस्त्रपुष्पगन्धादिभिः
भूषणाद्यैरलङ्कृत्य कलामन्त्रैस्समर्चयेत् ५९
अङ्गमन्त्रेण चाभ्यर्च्य नैवेद्यादि निवेदयेत्
धूपदीपन्ददेत्पश्चात् भसितं दापयेद्बुधः ६०
छत्रञ्च चामरं खड्गं दापयेन्मूलमन्त्रतः
सर्वोपचारैः सन्तोष्य राजोपचारमार्गतः ६१
एककालं द्विकालं वा अर्चयेत्सन्धिपूर्वके
नैवेद्यं मूलबिम्बस्य नैवेद्यान्ते निवेदयेत् ६२
दीपान्ते दीपदानं स्यात्तदन्ते भसितं ददेत्
पौनः पुण्यार्चनं प्रोक्तमाश्रयस्यार्चनं शृणु ६३
स्नानान्ते स्नानकर्मञ्च नैवेद्यान्ते निवेद्यकम्
तदन्ते दीपदानं स्यात् स्तोत्रादीं चैव तोषयेत् ६४
एवमेव प्रकारेण सकळाराधनं कुरु
संशोध्य मृण्मयं बिम्बं वस्त्रबिम्बेन वायुना ६५
आभास चित्रबिम्बैश्च शिखिपिञ्छैश्च शोधयेत्
रात्रिचूर्णं सुवर्णं च रजतं लवणेन तु ६६

ताम्रमाम्लेन शुद्धिं स्यादस्त्रमन्त्रेण सुव्रतः
एवं यः कुरुते मर्त्यः सपुण्यां गतिमाप्नुयात् ६७
सकळाराधनं प्रोक्तं नैवेद्यस्य विधिं शृणु
इत्यंशुमान् तन्त्रे सकळाराधनविधिपटलः

## पाषाणप्रत्ययविधिः

पाषाणप्रत्ययं वक्ष्ये श्रूयतां रविसत्तमः
सत्यासत्यविशुध्यर्थं प्रत्ययं कारयेद्बुधः १
अङ्गारे सूर्यवारे वा कारयेद्देशिकोत्तमः
वृषभस्याग्रतः कुर्यात् कृत्वा मण्डलमेव च २
तालमात्रेण देवेश भ्रामयेत्पूर्णचन्द्रवत्
षोडशैर्दळसंयुक्तं तन्मध्ये पद्ममालिखेत् ३
तस्य मध्ये न्यसेद्राष्ट्रं गन्धपुष्पादिनार्चयेत्
तस्य बाह्ये तु परितो ब्रह्माण्यङ्गानि विन्यसेत् ४
पूजयेत्तु विशेषेण गन्धपुष्पेण संयुतम्
तद्राष्ट्रध्यैन्यसेद्देवीमर्चयित्वानि शास्त्रकम् ५
स्वनाम्ना चैव सम्पूज्य पार्श्वे ब्रह्मादि पूजयेत्
कुलिशी भागिनी चैव सती सत्यं नृती तथा ६
योगी सर्वमयी देवी कौशिकी गौननी तथा
तस्याधिपं स्येत तस्मत् तत् बाह्ये पूजयेत् गुरुः ७
तासां स्वनाममन्त्रेण पूजयेद्देशिकोत्तमः
तस्य बाह्ये तु परितो लोकपालान् सुपूजयेत् ८
चतुर्दिक्षु चतुश्शूलैः पूजयित्व विशेषतः
कोणे चक्रं समाख्यातं इष्टका पूर्णसंयुतम् ९
आयसेनैव कर्तव्यं तस्य पात्रं शतं फलम्
तस्य तापञ्च तालं स्यात्तस्य धारद्वयङ्गुलम् १०

द्राष्ट्रे परिन्यसेद्देवीं हृदा चक्षुरकायुतम्
तस्य दक्षिणदेशे तु धर्मदेशं समर्चयेत् ११
स्वनाममन्त्रैस्सम्पूज्य गन्धपुष्पेण सम्युतम्
सप्न पाषाणरूपन्तु तत्पात्रे विन्यसेद्बुधः १२
तस्यौ तु पूर्वरात्रौ तु प्राशयेत् पञ्चगव्यकम्
तत्र तत्र क नामानि आलिखेत्तालदृष्टके १३
तत्पात्रमूर्ध्नि निक्षिप्य जपात् पुष्पेण संयुतम्
त्रिः कृत्वा चैककृत्वा तु पाषाणस्पर्शनं तथा १४
सद्यादीशानपर्यन्तं प्रत्येकन्तु जपेत्ततः
तद्धस्तमग्निना दग्धं मदस्यञ्च परीक्षयेत् १५
दण्डे दाषी दग्धे तु रदोषाय प्रकल्प्यते
पश्चाद्देवं सुसम्पूज्य महाहविर्निवेदयेत् १६
तस्य मुद्दिश्य यत् द्रव्यं तदाकार्यं परित्यजेत्
पाषाणप्रत्ययं प्रोक्तं तन्तच्छेद विधिं शृणु १७
इत्यंशुमान् तन्त्रे पाषाणप्रत्ययपटलः

## परशुप्रत्ययम्

परशुप्रत्ययं वक्ष्ये श्रूयतां रविसत्तमः
सत्यासत्य विशुध्यर्थं प्रत्ययं कारयेत्ततः १
सुमुहूर्ते सुलग्ने च परशुं चैव कारयेत्
सौवर्णं रजतं ताम्रं अयसं वाथ कारयेत् २
द्वादशाङ्गुलमायामं पञ्चाशत्फलसम्युतम्
पञ्चाङ्गुलन्तु विस्तारमग्रद्वयं विशेषतः ३
मध्यमं चतुरङ्गुल्यं दर्पणोदरवत्कृतम्
एभिस्तु लक्षणैर्युक्तं परशुं कारयेत्ततः ४
शिल्पिनं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः

प्रतिष्ठाविधि वक्ष्यामि समासात् श्रुणु सुव्रतः ५
पूर्वोक्तश्चैव नक्षत्रे योगे च करणान्विते
स्थिरराशौ तु कर्तव्यमुभयराश्यां तथापि वा ६
पुण्याहं वाचयेत्तत्र ब्राह्मणैश्च विशेषतः ७
खेटके शिबिकाश्चैव रोपयेत्परशुं ततः
ग्रामप्रदक्षिणं कृत्वा सर्वचिह्नसमन्वितम् ८
मन्त्रगेयसमायुक्तं गणिकानृत्तसम्युतम्
मण्टपाग्रे तु परशुं प्रासादेन तु मन्त्रतः ९
प्रासादाग्रतः कुर्यात् मण्टपं पञ्चहस्तकम्
ब्रह्माङ्गन्तु देवं स्यात् कुण्डं पूर्वोक्तवत्क्रमात् १०
चतुर्दिक्षु च वस्त्रं स्याद्दीशान्यामष्टकोणकम्
अथवा चैककुण्डं वा कारयेद्देशिकोत्तमः ११
त्रिरात्रमेकरात्रं वा जले चैवाधिवासयेत्
शयनं पूर्ववत् कृत्वा कम्बळोपरि मध्यमे १२
अथवान्यप्रकारेण शयनं कारयेद्बुधः
शिवबीजेन मन्त्रेण शयने शाययेत्ततः १३
अष्टकुम्भं समादाय विद्येश्वरसमायुतम्
उग्रणी चैवोग्रीया दण्डिनी पाशिनी तथा १४
सती सत्यानृती चैव कूलिनीत्याशकी तथा
परिबाह्यन्तु परत एतैर्देव्यास्तु पूजयेत् १५
ततो होमं प्रकुर्वीत पूर्वोक्तविधिना सह
शिवबीजेन मन्त्रेण प्रत्येकन्तु शताष्टकम् १६
ततः प्रभाते विमले प्रासादेन तु मन्त्रतः
एकादशार्चनं कुर्यात् पञ्चवर्णहविं ददेत् १७
आचार्यं पूजयेत्पश्चात् धारणालक्षणं श्रुणु
अङ्गारे सूर्यवारे वा ईशान्यां भूसुखस्थितम् १८

गोमयालेपनं कृत्वा मण्डलान् सप्तविन्यसेत्
षोडशाङ्गुलमानेन भ्रामयेत् पूर्णचन्द्रवत् १९
अष्टदिक्ष्वष्टकापूर्णैः शूलरूपन्तु रेखयेत्
मण्डलस्योत्तरे पार्श्वे पूजयेत् धर्मदैवतम् २०
ओङ्कारादि नमोन्तन्तु नाममन्त्रेण पूजयेत्
पूर्वरात्रौ तु परशुमधिवासे स्वबीजतः २१
पायसान्नं निवेदित्वा नववस्त्रेण वेष्टयेत्
विमानप्रदक्षिणं कुर्यात् परशुं सर्वशोभितम् २२
मण्डलद्दक्षिणे भागे परशुं विन्यसेत्ततः
मण्डलार्चा चतुर्हस्ते कृशानुर्दक्षिणे यजेत् २३
मण्डलात्पूर्वदेशे तु वलाशं विन्यसेत्ततः
विषारे च तुषाङ्गारे शुल्लिनाश्चिल्लिवायुना २४
अग्निना दग्धपरशुं प्रासादेन तु मन्त्रतः
मनुष्यात् स्त्रियनारीयं स्त्रीयो वा पुरुषस्तु वा २५
उपेष्य पूर्वरात्रन्तु करतलं शोधयेत्क्रमात्
अश्वत्थसप्तपत्राणि तत्तन्मन्त्रेण वेष्टयेत्
परशुं विन्यसेद्धस्ते इदं मन्त्रं समुच्चरन् २६
त्वं मनो सर्वभूतो नामन्तच्छरति यावकम्
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम २७
ओं मं ईश्वरं ईश्वरस्तनृत्यानृत्य पिशोधयेत्
मम रूपमनुप्रविशशयोश्माथ पतये नमः २८
इदं मन्त्रं समुच्चार्य हस्तयो परशुं क्षिपेत्
सप्तमण्डलमाक्रान्तं न्यासयेत्तु शिवं सदा २९
मानिषं करतले न्यस्त्वा अपकालमपरे क्षिपेत्
दग्धं चैव महादोषि अदग्धे शुद्ध उच्यते ३०
अन्ते चैव परशुं पतिते दग्धको भवेत्

आचार्य पूजनं कृत्वा वस्त्रहेमाङ्गुलीयकैः ३१
ब्राह्मणान् भोजयित्वा तु पूजयेत् शक्तितस्तथा
परशुप्रत्ययं प्रोक्तं सत्यप्रत्ययमथ श्रुणु ३२
इत्यंशुमान् परशुप्रत्ययपटलः

## सत्यप्रत्ययम्

सत्यप्रत्ययं वक्ष्ये श्रूयतां रविसत्तमः
अङ्गारे सूर्यवारे च शिवालय समीपतः १
पूर्वेद्योरधिवासं स्यात् कलशान् नवसम्युतम्
पूर्वोक्तमराटपे रम्ये कलशान् स्थापयेत्क्रमात् २
गोमयालेपनं कृत्वा पीष्ठचूर्णैर्विचित्रयेत्
शालिनं विकिरेत्तत्र तराडुलाश्च तिलान्यसेत् ३
दर्भैश्च वपरिस्तीर्य स्थापयेत् मध्यमे शिवः
प्रासादेन तु मन्त्रेण स्थापयेत् शिवकुम्भकम् ४
वर्धनीं तस्य वामे तु गौरीबीजेन स्थापयेत्
सत्यं हेम समावाह्य वस्त्रगव्यादिभिर्यजेत् ५
अभितः कलशानष्टौ विन्यसेत्तु विशेषतः
सकूर्चान् सापिधानञ्च सवस्त्रान् हेमसंयुतान् ६
उग्री चैव उदग्री च यशती सत्यनृती तथा
गोमुखी सुमुखी चैव कुलिशी कौतुकी तथा ७
एता देव्याश्च देवीशी कलशेषु न्यसेत्ततः
पूजयेत्तु यथान्यायं स्वस्वनाम्नां विशेषतः ८
गन्धैः पुष्पैश्च धूपैश्च दीपैरर्घ्यैश्च पूजयेत्
ततो होमं प्रकुर्वीताश्चैशान्ये स्थरिडले ततः ९
समिदाज्य चरूल्लाजान् सर्षपाञ्च संयुतान्
पञ्चद्रव्यसमायुक्तं प्रासादेन तु मन्त्रतः १०

जुहुयाद्देव देवेशि प्रत्येकं पञ्चविंशतिः
शुद्धाशुद्धपरीक्षार्थं जनानाहूय सर्वशः ११
दन्तदानवपूर्वन्तु स्थानं कुर्यात्परिहनि
तद्दिने चोपवासन्तु शुचिस्नानसमन्वितम् १२
दर्भशाय्यासनं तन्तु कलानां दक्षिणे वसेत्
सत्यं कृष्णास्तु वचनं तालपात्रे तु लेखयेत् १३
कुम्भपात्रे न्यसेद्देवीं शिवबीजेन मन्त्रतः
ततः प्रभाते विमले सन्ध्यायां पूजयेत्ततः १४
पूर्वाह्णे चोत्तमं विद्यात् मध्याह्ने मध्यमं भवेत्
मध्याह्नात् परतो देवी पूजयेत्सत्यमेवति १५
कलशं स्थापयेद्विद्वान् प्रासादेन तु मन्त्रतः
वर्धनीं स्वस्वबीजेन स्थापयेत्पीठमेव च १६
कलशान् स्नानवस्त्रन्तु अन्यवस्त्रेण वेष्टयेत्
तालपत्रन्तु देवेशीं शिरसाधारयेत्ततः १७
पीठप्रदक्षिणं कुर्यात् सत्यप्रत्ययमब्रवीत्
कलशं स्थापयेत्तत्र स्वस्वनाम्ना विशेषतः १८
हविर्निवेदयेत्पश्चात् ताम्बूलं दापयेत्ततः
जना सन्निधर वारियुक्तस्नानं समाचरेत् १९
तालपत्रन्तु देवेशी शिरसा धारयेत्ततः
पीठप्रदक्षिणं कुर्यात् सत्यप्रत्ययमब्रवीत् २०
षाण्मासाभ्यन्तरे देवी
तत्तदायं भवेत्सर्वमिति शास्त्रस्य निश्चयम्
सत्यमुद्दिश्य यत्रप्यधर्मार्थायान्निवेदयेत् २१
इत्यंशुमान् तन्त्रे सत्यप्रत्ययविधिपटलः

## विनायकव्रतम्

विनायकव्रतं वक्ष्ये श्रूयतां रविसत्तमः
जगद्विघ्नविनाशार्थं सर्वाभीष्टफलप्रदम् १
सर्वोपद्रविनाशार्थं पूजयित्वा गणेश्वरम्
कृत्तिका दीपतः पश्चात् षष्ठीञ्च सितपक्षके २
शतवारं समायुक्तं अयुक्तं वा समाचरेत्
तद्दिनस्यादि रात्रौ तु देवेशं पूजयेत्ततः ३
पञ्चगव्यामृतेनैव पूजयेद्विघ्ननायकम्
कौतुकं बन्धयेद्धीमान् नववस्त्रेण वेष्टयेत् ४
अपूपं पायसाद्यन्नमुपदंशसमन्वितम्
ताम्बूलं मुखवासञ्च दापयेत्तु गणेश्वरम् ५
धूपदीपादिकं दत्वा स्तोत्रं कुरु यथेप्सितम्
नृत्तगानैश्च सन्तोष्य रात्रिशेषं व्यपोह्य च ६
ततः प्रभातसमये नित्यानुष्ठानमाचरेत्
आमोदञ्च पदपैश्च तरङ्गं चात्र वेष्टयेत् ७
मुक्तसृं धाम विविधैर्द्रव्यैर्विघ्नेश्वरान्वितम्
वृतं विज्ञाप्य देवेशं पञ्चगव्यामृतेन च ८
अर्घैश्च स्नपनै द्रव्यै स्नापयेत्तु गणेश्वरम्
अलङ्कृत्य विशेषेण गन्धपुष्पाक्षतादिभिः ९
भक्ष्य भोज्यादिकं दद्यात् धूपदीपादि सम्युतम्
मूलमन्त्रैस्समभ्यर्च्य अभीष्टं प्रार्थयेश्छुभम् १०
एवं प्रभात समये पूजयेत् विघ्ननायकम्
ततस्सायालसमये स्नपयेत् स्नपनार्हकैः ११
अभ्यर्च्य गन्धपुष्पाद्यै धूपदीपादिकं ददेत्
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् १२
इत्यंशुमान् तन्त्रे विनायकव्रतपटलः

## मकुटमण्टपविधिः

मकुटमण्टपं वक्ष्ये श्रूयतां रविसत्तमः
प्रासादं पूर्वदिग्भागे दक्षिणे चोत्तरेऽपि वा १
पश्चिमे त्वीशदेशे वा नेत्रादे वायुगोचरे
ईशाने पावके वाथ गोपुरद्वार पार्श्वके २
पञ्चप्राकारबाह्ये वा अन्तरे वास्तु मध्यमे
मकुटमण्टपात्पूर्वे सौम्ये वा दक्षिणेऽपि वा ३
नैर्ऋते त्वीश देशे वा कल्पयेल्लिङ्गमण्डलम्
गुणदेवकरारभ्य द्विद्विहस्तैर्विवर्द्धना ४
नवमानप्रकर्तव्यं विंशदेकोनविंशकम्
मण्टपं वा प्रपां वापि कूटाकारमथापि वा ५
विमानाकृतिकं वापि कल्पयेत् रङ्गमण्टपम्
चतुर्द्वारसमायुक्तं विदिक्रव्यसमन्वितम् ६
बलितोलिन्द्रमेकांशात् द्विभागं वा प्रकल्पयेत्
तत्समं द्विगुणं वापि बाह्ये सञ्चारपङ्क्तिकम् ७
अक्ष्यानि भूतवेदांशैश्चतुर्दिक् मुखभद्रकम्
विस्तारसदृशायामं तलोत्सेधांशमानकम् ८
अष्टाष्टस्तम्भसंयुक्तं दर्भमालासमन्वितम्
द्वारतोरणसंयुक्तं गात्रवेष्टनसंयुतम् ९
वितानध्वजसंयुक्तमुक्तादामैर्विभूषितम्
कुर्याच्छिद्रसमोपेतं तरङ्गं वेष्टनान्वितम् १०
नानाश्चर्यसमोपेतं मण्टपं परिभूषितम्
मार्जनं प्रोक्षणं कृत्वा गोमयानुलेपनम् ११
आचार्यो मूर्तिपैस्सार्धं विधिना स्नानमाचरेत्
सकलीकरणं कृत्वा पुण्याहं वाचयेत्ततः १२
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु

गोमयालेपनं कृत्वा प्रोक्षयेन्मण्टपं कुरु १३
मकुटमण्टपं प्रोक्तं प्राकारलक्षणं शृणु १४
इत्यंशुमान् तन्त्रे मकुटमण्टपविधिपटलः

## सर्वप्रायश्चित्तम्

प्रायश्चित्तविधिं वक्ष्ये श्रूयतां रविसत्तमः
प्रायोवसानक्रमप्रोक्तं चत्तस्य वनमुच्यते
अवस्ये यस्य संसूर्य प्रायश्चित्तमितीरितम् १
प्रदीकारस्तु सर्वोयन्तस्माद्दोषनिवारणम्
अग्रे तु कल्पिते द्रव्ये विहीने दोषभाजनम् २
तद्दोषशान्तये तस्मात् प्रायश्चित्तं प्रकीर्तितम्
अग्निश्चितस्य द्रव्यस्य हीनदोषन्न विद्यते ३
प्रासादे पतिते चैव राजराष्ट्रस्य दोषकृत्
बालस्थापनन्तु सङ्कल्प्य स्थापयेद्विधिपूर्वकम् ४
सदनं पूर्ववत्कृत्वा संप्रोक्षणमथाचरेत्
हर्म्ये तु स्फोटने भिन्ने कूटकूर्पविहीनके ५
मृत्युना मरणं शीघ्रं दुर्भिक्षं जायते भुवि
अनावृष्टिर्जपेत् पश्चात् पुनस्सन्धानमाचरेत्
शान्तहोमं ततः कृत्वा संप्रोक्षणमथाचरेत् ६
महानास्यल्पना सीच इवानार्दिविहीनकम्
विमानस्थानदेवानां मङ्गोपाङ्गविहीनके ७
तद्राष्ट्रे वर्षवर्ज्यं वा महामारी प्रवर्त्तते
सद्यस्यन्धानकं कृत्वा संप्रोक्षणमथाचरेत् ८
स्थूपी दण्डस्य विच्छिन्ने पतिते च प्रभिन्नके
तद्राष्ट्रे रोगसम्भूति भूपतिस्त्वान्यथा भवेत् ९
तद्दोषशमनार्थाय स्थापये तु विचक्षणः

स्थूपिवर्गविहीने च महामारि प्रवर्त्तते १०
प्रमाणकर्त्तव्य कृत्वा योजयेत्तु दृढं बुधैः
तद्दोषशमनार्थाय सद्यसंप्रोक्षणं कुरु ११
पिण्डिका चलिते भिन्ने विशिष्टबन्धनादिके
अष्टबन्धविहीने च स्त्रीनाशन्तु न संशयः १२
विधिना बन्धनं कृत्वा श्शीतकुम्भन्तु कारयेत्
लिङ्गबेरे च चलिते भिन्ने च स्फटिते तथा १३
मृत्युना मरणं शीघ्रं दुर्भिक्षं जायते भुवि
लोके दुर्भिक्षमाप्नोति राजादुर्ज्जयमाप्नुयात् १४
पूर्ववत्कर्मयोग्येन स्थापयेत्तु दृढं बुधः
++++ विधानोक्तमार्गेण स्थापयेन्नव
गजचोरैश्च चलिते लिङ्गबेरे विशेषतः १५
नृपतिस्त्वन्यथा ज्ञेय स्थापनैर्विधिपूर्वकम्
नदिस्त्रोतेन चलिते महामारि प्रवर्त्तते १६
तत्स्थानञ्चोत्तरे चैन्द्रे ऐशान्ये पश्चिमेऽपि वा
इष्टदेशे मनोरम्ये स्थापयन्तु विशालके १७
शतदण्डं बोह्लाथ प्रासादन्तु नवीन्तुतम्
प्रासादं कल्पयेद्धीमान् संप्रोक्षणमथाचरेत् १८
नदिस्त्रोतोभिरत्युग्रैर्मस्वयम्भो प्रतिलिङ्गकै
प्रतिलिङ्गं प्रतिष्ठाप्य नित्यपूजां समाचरेत् १९
मार्जनालेपनं हीने गोनाशं सस्यनाशनम्
मार्जनालेपनं कुर्यात् गव्येन प्रोक्ष्यते तले २०
कालादिक्रमणार्थाय तद्राष्ट्रे बलवर्जितम्
स्थूलशुद्धिविहीने च दुर्भिक्षं जायते भुवि
स्थानशुद्धिञ्च कर्तव्यं अघोरं युतं जपेत् २१
पूर्वे तु कल्पिते काले अतिक्रम्यबलक्षयम्

तद्दोषशमनञ्चैव पञ्चगव्याभिषेचनम्  २२
अरुणस्यार्च्चना हीने नृपाणां रोगमाविशेत्
तस्मात् गव्याभिषेकञ्च मघोरमयुतं जपेत्  २३
शान्तिहोमन्ततः कृत्वा नवकैरभिषेचयेत्
सकळाराधनाहीने च सस्यान्नान्नाशनं भवेत्
तद्दोषशमनार्थाय नवकैरभिषेचयेत्  २४
अरुणपूजाविहीने च लोकोन्मत्तं समादिशेत्
+++ तिषेकञ्च पूर्ववत् सर्वमाचरेत्  २५
पुण्याहोत्र विहीने च तद्राष्ट्रे नश्यति श्रियः
तद्दोषशमनार्थाय क्षीराभिषेचनं चरेत्  २६
पञ्चगव्य विहीनन्तु पञ्चामृतविहीनकम्
महारोगं भवेद्ग्रामे स्त्रीनाशं भवति ध्रुवम्  २७
महामार्या प्रवर्त्तन्ते गोनाश सस्यनाशनम्
क्षीरेण स्नापयेच्छम्भुं मन्त्रं घोरायुतं जपेत्  २८
चुल्लिपूजाविहीने च काष्ठशुद्धिविहीनके
सस्यानान्नाशनं प्रोक्तं मूलेनैव शतञ्जपेत्  २९
पात्रशुद्धिविहीने च बालानान्नाशनं भवेत्
तद्दोषशमनार्थाय मूलमन्त्रशतञ्जपेत्  ३०
विघ्नेशपूजाहीने च लोकोन्मत्तसमाविशेत्
स्नपनं शान्तिहोमञ्च कारयेत्तु गणेश्वरम्  ३१
पूर्ववत् पूजयित्वा तु तन्मूले तु शतञ्जपेत्
नाळिकेरञ्च नैवेद्यं गणेशप्रतिमाचरेत्
द्वारपूजा विहीने च राजा दुर्ज्जयमाप्नुयात्  ३२
शान्ति कुम्भे स्थतोयेन देवेशमभिषेचयेत्
अभिषेकविहीने च महामारी प्रकोपनम्  ३३
तद्दोषशान्तयेद्धीमान् स्नानमष्टोत्तरं शतम्

स्नानमर्च्य विहीने च तद्राष्ट्रे वर्षवर्ज्जितम् ३४
बहुरूपशतञ्जप्त्वा पुनद्रव्येण योजयेत्
स्नानार्थे तु जले दृष्ट्वा मत्स्यमण्डूकरोमकान् ३५
राजश्रीस्त्वन्यथा चैव कर्त्ता भक्ता विनश्यति
बेरशुद्धिं ततः कृत्वा अष्टमृत्सलिलेन तु ३६
गन्धोदकेन संस्नाप्य बिल्वपत्रेण घर्षयेत्
गव्येन स्नापयेत् शम्भुं स्नपनैरथमोत्तमम् ३७
मन्त्रपुष्पविहीने च मन्त्राणाञ्च विहीनके
वस्त्रसंमार्ज्जने हीने राक्षसानान्तु संभवेत् ३८
तद्दोषशमनार्थाय नवकैरभिषेचनम्
वस्त्रयुग्मविहीने च अनावृष्टिर्भविष्यति ३९
अष्टोत्तरशतं जप्त्वा तन्मूलेन तु मन्त्रतः
मूलमन्त्रं शतं जप्त्वा तत्संख्यं बहुरूपतः
बहुरूपं शतं जप्त्वा अन्यसन्ध्यां सुदापयेत् ४०
अन्यसन्ध्यासमायुक्तं दापयेत्तु विचक्षणः
उपवीति भूषणञ्चैव लोकोन्मत्तं समाविशेत् ४१
सहस्त्रं मूलमन्त्रेण जपेत्पाशुपतं शतम्
चन्दनेन विहीने तु भूपते रोगसम्भवम् ४२
गन्धपुष्पविहीने च +++ हीनके ४३
तद्दोषशमनार्थाय नवकैरभिषेचयेत्
गन्धद्रव्यविहीने च तद्राष्ट्रे भयमाविशेत् ४४
अस्त्रमन्त्रं शतञ्जप्त्वा तद्द्रव्यद्विगुणन्ददेत्
दामञ्च पुष्पमेवञ्चाष्टपुष्पविहीनकम्
नित्यापवित्रहीने च भूपते रोगसम्भवम् ४५
तद्दोषशमनार्थाय तत्तन्मन्त्रं शतञ्जपेत्
शक्त्यादि शक्तिपर्यन्तमासनार्चन विहीनके ४६

आसनावरणाहीने दासीदासविनाशनम्
तद्दोषशान्तयेद्धीमान् तत्तन्मन्त्रं जपेच्छतम्  ४७
पाद्यमाचमनञ्चार्घ्यं तत्तद्द्रव्यविहीनके
पाद्यादि द्रव्यहीने च तद्राष्ट्रे वर्षवर्ज्जितम्
तद्राष्ट्रे वर्षवर्जं स्यात् महामारि प्रवर्त्तते  ४८
मूलमन्त्रं शतञ्जप्त्वा तद्दोषशमनं कुरु
तद्द्रव्यद्विगुणं दद्यादन्यसन्ध्यासु दापयेत्  ४९
मुद्गान्नन्तु विहीने तु लोके दुर्भिक्षमेव च
तद्दोषशमनार्थाय तद्राष्ट्रे धान्यनाशनम्
नैवेद्यस्योपदंष्ट्रस्य हीने दुर्भिक्षसम्भवम्  ५०
नैवेद्यन्तु विहीने च +++ श विहीनके
तद्दोषशमनार्थाय नवकैरभिषेचयेत्  ५१
सस्यानान्नाशनं प्रोक्तं स्नपनैरभिषेचयेत्
घृतक्षीरमरीचीनां व्यञ्जनन्तु विहीनके  ५२
मरीचि लवणैर्युतं क्षारहीनन्तु व्यञ्जनम्
पक्वापक्वमेवञ्च नैवेद्यञ्चैव सम्भवेत्  ५३
एतैरन्नन्निवेदित्वा क्षुद्भयं ग्रामवासिनाम्
पुरुषामयुतञ्जप्त्वा पुनः पाकन्निवेदयेत्  ५४
नैवेद्योत्थापनाकाले मार्गशोधनहीनके
तदन्नं वर्ज्जयित्वा तु शेषमन्नं निवेदयेत्  ५५
उत्थापनस्य काले तु स्पर्शनं स्त्वन्यजातिभिः
तदन्नं चैव तत् शेषं निक्षिपेज्जलमध्यमे  ५६
शङ्खध्वनिविहीने च आच्छादनविहीनकम्
आच्छादनविहीने तु च्छत्रदीपविहीनके  ५७
अघोरेण शतञ्जप्त्वा तदन्नं प्रोक्षयेद्बुधः
नैवेद्यं तण्डुलं वापि श्वानकादि दूषिते  ५८

छत्रदीपविहीने च लोकोन्मत्तं भवेत् ध्रुवम्
दर्भेण स्पर्शयित्वान्तन्मूलमन्त्रं शतञ्जपेत् ५९
तण्डुलन्तु पुनर्ग्राह्यं नैवेद्यं पूर्ववत्कुरु
तण्डुलश्चैव पाल्यस्थं भक्ष्यते श्चात्यजातिना ६०
तत्पात्रं मृत्पवन्त्यक्त्वा शुद्धिः कांसस्य विद्यते
तत्पात्रन्त्रेनवी कृत्वा पूर्ववत् शुद्धिमाचरेत् ६१
नैवेद्यार्थन्तु तण्डुल्यं स्पर्शते वा न जातिः
त्यजेत्स्वल्पन्तु वा द्रव्य महहेतत्परिर्गते ६२
तिर्यग्योनौ तु मर्त्याद्यैर्नैवेद्यन्तु विशेषतः
अग्रेगतं गृहीत्वा तु अपरं तत्र वर्जयेत् ६३
विलाळे स्पर्शने श्चैव मशकादि तथैव च
मूलमन्त्रेण संप्रोक्ष्य नैवेद्यञ्च निवेशयेत् ६४
विशोध्य मुसलेनैव क्षाळयेच्छुद्धवारिणा
तण्डुलं पाचयेद्धीमान् ते विहीनन्निवेदितम् ६५
गवानान्नाशनञ्चैव क्षुद्रोगं ग्रामवासिनाम्
तद्दोषशमनार्थाय स्नपनं षोडशं भवेत् ६६
रोमपाषाणव्रीही नैवेद्यस्यन्तु दर्शने
राष्ट्रनाशं भवेत्तत्र राजामरणमाप्नुयात् ६७
अस्त्रमन्त्रं शतञ्जप्त्वा तद्दोषशमनं कुरु
शिवाय दत्तनैवेद्ये कृमिकीटास्थिदुष्टिदे ६८
मत्स्यमण्डूकसर्पश्चात् कर्कटाद्यैश्च दर्शनम्
परचक्रात् भयं भूमौ राजादुर्ज्जयमाप्नुयात् ६९
बेरशुद्धिञ्च तत्कृत्वा जलसंप्रोक्षणं कुरु
दिशाहोमञ्च कर्तव्यं महास्नपनमाचरेत् ७०
व्यञ्जने वापि रोमञ्च कृमिकीटास्थिदुष्टितम्
तन्मात्रञ्च गृहीत्वा तु वर्जयेत् प्रोक्ष्यचास्त्रतः ७१

बहुरूपं शतञ्जप्त्वा पुनरन्नन्तु पाचयेत्
तण्डुलादिषु पञ्चेषु भारातञ्चाल्पदं भवेत् ७२
नैवेद्य पूर्वनैवेद्यं धामामान्ते स्पृष्टिवेशनम्
तदन्नं वर्जयेद्धीमान् जलेवापि स्थले खनेत् ७३
बिलादुश्चिष्टमेवन्तु तदन्नं वर्जयेद्बुधः
तद्द्रव्यञ्चाल्पमे तु त्याज्यं सर्वञ्च बुद्धिमान् ७४
पानीय मुखवासञ्च हीने लोकभयं भवेत्
दशाक्षरं शतञ्जप्त्वा अन्यसन्ध्यासुदापयेत् ७५
निवेदये तु नैवेद्ये तत्काले पदहीनकम्
प्राणिनानाशनञ्चैव लोके दुर्भिक्षमाप्नुयात् ७६
तद्दोषशमनार्थाय नवकैरभिषेचयेत्
हीने नित्याग्निहोमञ्च अनावृष्टिर्भविष्यति ७७
अग्निमूलशतञ्जप्त्वा नवकैरभिषेचयेत्
नित्योत्सवविहीने तु भेरीताडनहीनके ७८
धामश्रीस्त्वन्यथा चैव नवकैरभिषेचयेत्
राज्यो युद्धन्तु सम्प्राप्य अनावृष्टिश्च जायते ७९
तद्दोषशमनार्थाय स्नपनं पञ्चविंशतिः
नित्योत्सवबलिहीने च राष्ट्रे दुर्भिक्षमाप्नुयात् ८०
स्नपनं पञ्चगव्यञ्च तद्दोषशमनं कुरु
पीठशुद्धि विहीने च राज्यश्री नाशमेव च ८१
तन्मन्त्रञ्च शतञ्जप्त्वा पीठशुद्धिञ्च पूर्ववत्
बलिदीपविहीने च तत्र देशे तु संस्थितिः ८२
चक्षुरोगं भवेत् नृणां नेत्रमन्त्रं शतञ्जपेत्
पुनदीपं समादाय बलिशेषं समाचरेत् ८३
घण्टानाद विहीने च राक्षसानां प्रियं भवेत्
नेत्रमन्त्रं शतं जप्त्वा तद्दोषशमनं कुरु ८४

भेर्यादि पतिते भूमौ राजराष्ट्रं विनश्यति
तदर्थन्नवकै स्नाप्य घोरमन्त्रायुतञ्जपेत् ८५
मुखचर्मणि विच्छेदे गोगणानान्तु नाशनम्
अस्त्रमन्त्रशतञ्जप्त्वा नवचर्म परिग्रहेत् ८६
बलिपात्रे तु पतिते नृद्रोगो ग्रामवासिनाम्
मूलमन्त्रं शतं जप्त्वा तद्दोषस्य च शान्तयेत् ८७
पात्रमन्यं परिग्राह्य शेषं पूर्ववदाचरेत्
पाद्यादि सर्वहीने च तद्ग्रामे रोगमाविशेत् ८८
नन्दिमन्त्रं शतं जप्त्वा मूलमन्त्रं शतञ्जपेत्
गोपुरे वाद्यनिश्शब्द शङ्खघोषविहीनकम् ८९
बालानान्नाशनञ्चैव लोकोन्मत्तं भविष्यति
+++ वर मूलेन अष्टोत्तरशतञ्जपेत् ९०
गणिका नृत्तकाचैव पतिते राष्ट्रनाशनम्
पञ्चगव्यन्तु संस्नाप्य नवकैरभिषेचयेत् ९१
बलिताळविहीने च शुद्धगीत विहीनके
होत्रोपाङ्गविहीने च राज्ये रोगन्तु सम्भवेत् ९२
नवकैरभिषेकञ्च तद्दोषशमनं कुरु
बलिदानस्त्य काले तु पूर्वे तु बलिहीनकम् ९३
अन्यपीठे बलिं कुर्यात् पुनः प्रक्षाळनं चरेत्
तत्र स्थाने तु वैश्याथ मूलमन्त्रं शतञ्जपेत् ९४
बलिञ्च पूर्ववत्कृत्वा शेषं पूर्ववदाचरेत्
द्वितीयावरणे काले ब्रह्मविष्णु बलिन्न चेत् ९५
अघोरमयुतञ्जप्त्वा अन्यसन्ध्यासु दापयेत्
बलिदानस्य काले तु निर्माल्यं लङ्घनं यदि ९६
राज्यक्षोभन्तथा चैव राजा दुर्ज्जयमाप्नुयात्
तद्दोषशमनार्थाय नवकैरभिषेचयेत् ९७

शेषप्रदक्षिणे काले निर्माल्यं यत्र दृश्यते
तत्रस्थाने स्थितं कुर्यान्निर्माल्योद्वासनं कुरु ९८
मार्जनालेपनञ्चैव शेषं पूर्ववदाचरेत्
बलिप्रदानकाले तु दोषं वा यत्र सम्भवेत् ९९
तत्र दोषं विसर्ज्याथ ब्रह्ममन्त्रं समुच्चरन्
अस्त्रेणैव तु सम्प्रोक्ष्य शेषयानं समाचरेत् १००
प्रतिलोमाश्वमानादि स्पर्शे त्वाचार्यबेरयोः
अन्तरागमनञ्चैव राजराष्ट्रं विनश्यति १०१
तत्र स्थाने स्थितिं कृत्वा स्नपनं पञ्चविंशतिः
आलयस्या तु गणिका बलिकाले रजस्वला १०२
अन्येष्वपि च कले तुष्ठ प्राकारत्तु क्षयो भवेत्
बलिकाले विशेषेण स्नपनं बलिबेरकम् १०३
अन्यकाले विशेषेण मूले तु स्नपनं कुरु
नित्योत्सवस्य काले तु बेरे तु पतिते भुवि १०४
तद्राष्ट्रनाशनञ्चैव बधिरत्वं प्रवर्त्तिते
तत्रैव स्नपनं कृत्वा शेषयानं समापयेत् १०५
तद्बिम्बे चाङ्गहीने च राजादुर्ज्जयमाप्नुयात्
दिनवारमुहूर्त्तादि दोषान्तु न विचिन्तयेत् १०६
प्रतिष्ठाविधिमार्गेण संप्रोक्षणमथाचरेत्
दिव ++ हीनन्तु क्षुद्भयं ग्रामवासिनाम् १०७
मूलमन्त्रं शतञ्जप्त्वा षोडश स्नपनं मतम्
अहोरात्र विहीने तु महामारी प्रवर्त्तये १०८
स्नपनं पञ्चविंशत्या तद्दोषशमनं कुरु
अतश्चौर्ध्वन्तु मासान्तन्तद्राज्यन्तु विनश्यति १०९
अष्टोत्तरशतै स्नाप्य तद्दोष शमनं कुरु
भूताद्याद्यष्टमासान्तं बलिहीनन्तु कुर्यते ११०

नृपाणां मरणञ्चैव व्रद्योङ्गमत्रिवासिनाम्
अस्त्रमन्त्रेण संप्रोक्ष्य पञ्चगव्याभिषेचनम् १११
द्विशतः पञ्चविंशत्या स्नपनैरभिषेचयेत्
ग्राममासादि पक्षान्तं बलिनित्योत्सवान्नयेत् ११२
भूपतिस्त्यन्यथा चैव राज्यञ्च भयमानशत्
तद्दोषशमनार्थाय महास्नपनमाचरेत् ११३
नित्योत्सवादि यत्कार्यं पूर्वमेवसुभाषितम्
मूत्राविष्ठादिशांसाद्या बलिपीठे यदि स्थिताः ११४
राज्यभ्रष्टास्तु ते सर्वे महाज्वरमवाप्नुयात्
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन् ११५
स्थानशुद्धिं ततः कृत्वा तैलेनैव तु सेचयेत्
भूभ्यान्तथैव संप्राप्ते स्थानशुद्धिं ततः कुरु ११६
अवरन्तालमात्रेण खनित्वा मृतवर्जितम्
शुद्धमृद्भिः पूरयित्वा तु अस्त्रमन्त्रं शतञ्जपेत् ११७
बलिबेरं पुरास्थाने अरात्रकविहीनके
मूललिङ्गे समारोप्य धूपदीपविहीनके ११८
आरात्रिकविहीने च नेत्रमन्त्रं शतञ्जपेत्
दर्पणादीनि सर्वाणि अन्यसन्ध्यासु दापयेत् ११९
ऋग्वेदाद्यादिहीने च होत्रपाठविहीनके
तद्दोषशमनार्थाय अघोरेण शतञ्जपेत् १२०
सायरक्षा विहीने च आरात्रिक विहीनके
नयनोच्छिष्टहीने च लोके रोगं भविष्यति १२१
स्नपनैरभिषिच्याथ तद्दोषशमनं कुरु
पुनः पुण्याहमेवोक्तन्धूपदीपन्तु योजयेत् १२२
आरात्र्याभक्तितः पश्चात् ताळयेत्तु विचक्षणः
आरात्रिक प्रदाने तु दीपहीने तु ते सति १२३

राजराज्यञ्च योग्रञ्च गनानान्नाशनं भवेत्
अस्त्राम्बु प्रोक्षयेद्विद्वान् पुनर्दीपं सुयोजयेत् १२४
तत्रदीपन्तु विच्छिन्ने राज्यञ्च कलको भवेत्
स्नपनैरभिषिच्याथ तद्दोषशमनं कुरु १२५

## सर्वप्रायश्चित्तविधिः

चण्डपूजाविहीनञ्च क्षुद्भयं ग्रामवासिनाम्
नवकैरभिषिच्याथ तत्पातकोपशान्तये १
तन्मन्त्रञ्च शतञ्जप्त्वा पश्चात् चण्डं समर्चयेत्
भोगाङ्गार्चनहीने च लोकोन्मत्तं भविष्यति २
भोगाङ्ग शक्तिविशेषेण स्नपनैरभिषेचयेत्
भोगाङ्गमण्टपे चैव कवटाद्यग्नि दूषिते ३
शिवं शक्तिं विशेषेण स्नपनं कल्पयेद्बुधः
तत्र स्थाने स्थितिं कृत्वा स्नपनं कल्प्य पूर्ववत् ४
तच्छेषं पूर्ववत्कृत्वा शिवधाम्नि विशेषतः
त +++ वृष्टिवेशन्तु लोके तस्करमाविशेत् ५
पतिमन्त्रं शतञ्जप्त्वा पूर्वच्छुद्धिमाचरेत्
क्षेत्रपालार्चनं हीने तद्ग्रामे भूतमाविशेत् ६
नवकैरभिषिच्याथ अर्चनं पूर्ववद्बुधः
सप्तकाले विशेषेण अन्यजातिश्वस्पर्शनैः ७
तद्ग्रामे रोगसंप्राप्त दुर्भिक्षे जायते शुचि
पञ्चगव्याभिषेकञ्च नवकैरभिषेचयेत् ८
पादुकेनैव शुद्धिस्यात् पुनध्यानक्रमं कुरु
मूलल्ङिगे तु संयोज्य द्वौ मूले स्नपनं कुरु ९
अथवा सुप्तकाले च तस्करै ग्रह्यपादुकाम्
तद्राष्ट्रकलहञ्चैव पतिमन्त्रं शतञ्जपेत् १०

पूर्ववत्पादुकञ्चैव ग्राहयेल्लक्षणान्वितम्
पूर्ववत्स्नपनं कृत्वा मूलेनैवाभिषेचयेत् ११
यानकाले विशेषेण पादुकं खट्ग वस्त्रकम्
अज्ञानाम्मोहकातो वापि राजदुर्ज्ञयमाप्नुयात् १२
दशाक्षरं शतञ्जप्त्वा गृहीतं पूर्वयोग्यकम्
हीने निर्वाणदीपन्तु राज्यश्री नाशमेव च १३
बृहुरूपं शतं जप्त्वा तद्दोषशमनं कुरु
विहीने नित्यपूजाञ्च तद्ग्रामञ्च विनश्यति १४
नवकैरभिषिच्याथ अस्त्रमन्त्रं शतञ्जपेत्
अहस्तु पूजाहीनञ्चेत् कर्ता मरणमाप्नुयात् १५
पतिमन्त्रं शतं जप्त्वा शर्वर्यां द्वितयं यजेत्
एकास्यार्चनहीनेना अनावृष्टि भविष्यति १६
कलशैः पदसंख्याश्च शान्तिहोमन्तु कारयेत्
पक्षाहादीदशान्तञ्च यजनञ्च विहीनके १७
राष्ट्रस्य भयमाप्नोति राजदुर्जयमाप्नुयात्
स्थलशुद्धिं पुराकृत्वा अष्टोत्तरशतेन तु १८
एतत् स्नपनमार्गोक्तदशाहान्त क्रमेण तु
एकादश अमासान्त यजनञ्च विहीनके १९
तद्राष्ट्र कलहञ्चैव राजा मरणमाप्नुयात्
तद्दोषशमनार्थाय द्विशतस्नपनं कुरु २०
द्विमासाद्रविमासान्तं पूजाहीनन्तु दोषकम्
तद्राष्ट्र नाशनञ्चैव भूपतिस्त्वन्यथा भवेत् २१
चतुश्शताष्टकञ्चैव स्नापयेत्तु विशेषतः
अब्दोत्सवविहीने तु नृपतेस्य नश्यते श्रियः २२
अघोरमयुञ्जप्त्वा लब्धमाधे तु कारयेत्
तत्संख्या तद्दिनन्तञ्च पूर्ववत् सम्यगाचरेत् २३

दराडस्य दिधि प्रवेशञ्च बालानां रोगसम्भवेत्
वृषमूलं शतञ्जप्त्वा पूर्ववत्कल्पयेत् बुधः २४
ऋधिवासनकाले तु पटञ्च बहुधा भवेत्
ऋग्न्यां बहुषितं चेत् परसेना भयङ्करम् २५
ऋल्पच्छिद्रं विशेषोऽस्ति न दोषाय भवन्ति हि
महत्ते ग्रामनाशं स्यात् तत्पटान्त्याज्यमेव च २६
ऋल्पस्या वृषम्मन्त्रे सहस्र जपमाप्नुयात्
यवाष्टमानमल्पस्यात्तदूर्ध्वम्महदित्यपि २७
नवमन्यमपरिग्राह्य तत्कालत्वधिवासयेत्
त्रिपादेन त्रिनाडी च ऊर्ध्वे त्वारोहणं कुरु २८
ध्वजरज्जुच्छेदम्
ऋारोहणस्य काले तु दर्भरज्जु विहीनके
तत्काले च्छिन्नमेवन्तु लोके सर्पभयं भवेत् २९
पुनश्च लक्षणै ग्राह्य दराडमूले तु योजयेत्
घराटामाला च पतिते राक्षसप्रीतिमाचरेत् ३०
सम्भवं वृषभमन्त्रं शतञ्जप्त्वा तद्दोषशमनं कुरु ३१
ऋतिदेवाश्च सर्वत्र दराडमूले तु योजयेत्
महापातप्रकोपे च तत्पटे मच्छिन्तमेव च ३२
पूर्ववत् तत्पटं ग्राह्य शीघ्रमारोहणं क्रमु
नवकं पञ्चगव्यञ्च दराडमूलेऽभिषेचयेत् ३३
वलयं पूर्ववत् ग्राह्य ऋारोपणं क्रमं कुरु
वातं गृहीत काले च पटच्छेदनमेव च ३४
तद्ग्रामे शोकमाप्नोति राजरोगो भविष्यति
मूललिङ्गे विशेषेण स्नपनं पञ्चविंशति ३५
पटमन्यं परिग्राह्य वृषभस्नपनं कुरु
शीघ्रमारोपणं कृत्वा पञ्चगव्यञ्च साधयेत् ३६

शान्तिहोमं तथा प्रोक्तं नवकैरभिषेचयेत्
दराडमूलमिति प्रोक्तं मुद्गान्नञ्च निवेदयेत् ३७
अक्षादिवर्णहीने च गवानान्नाशनं भवेत्
नदिमूलं शतञ्जप्त्वा तद्दोषशमनं कुरु ३८
उन्मत्तैर्बधिरैर्मूकै चोरैस्सङ्ग्राह्य तत्पटम्
तद्द्राष्ट्रे रोगसम्भूतिः भूपतिस्त्वन्यथा भवेत् ३९
वृषमन्त्रं शतञ्जप्त्वा लिङ्गं च स्नपनं कुरु
तत्काले तत्पटं दृश्य प्रोक्षयेत्पञ्चगव्यकैः ४०
अधिवासनादि सर्वत्र ध्वजारोहणपूर्ववत्
पटदृश्य विहीनञ्चेत् नवमन्यं परिग्रहेत् ४१
अधिबं स्नाति सर्वादि सद्यत्काले समाचरेत्
आरोपयेत् पदं शीघ्रं पूर्वोक्तविधिमार्गतः ४२
समुद्रे च नदीस्रोते कूपे चैव तटाकके
वृक्षे च शुद्धिभ्र++ ध्वजन्तु पतिते भुवि ४३
महापापप्रकोपे च राजरोगं भविष्यति
स्नपनं शान्तिहोमञ्च मूले च वृषभे तथा ४४
पटन्तु सङ्गृहीत्वा तु पूर्ववत् सदृढं कुरु
शौचस्य ग्रहे वापि श्मशाने सुतकाग्रहे
चराडालानां ग्रहे वापि इतराणा ग्रहेऽपि च ४५
वातकोपेन सङ्ग्राह्य पतरेपि च
तत्पटं तद्द्राष्ट्रे रोगसम्भूति गपतीनां तथैव च ४६
सहस्त्रं वृषमूलेन जपेत्पाशुपतं शतम्
शान्तिहोमसमायुक्तं मूले च स्नपनं कुरु ४७
पटमन्यं पतिग्राह्य सद्योदेमधिवासनं कुरु
आरोपयेत्ततशीघ्रं पूर्वमेव सुभाषितम् ४८
आरोहणं स्यात्पूर्वे तु रक्तस्त्रावन्तु सम्भवेत्

तद्ग्रामे रोगसम्भूति दुर्भिक्षं जायते भुवि ४९
नवकं पञ्चगव्यञ्च शाङ्गवत् मन्त्रमुच्चरन्
त्वक्सारस्य तु दण्डस्य वर्जयेत्तु प्रयत्नतः ५०
अन्तस्सरस्य दण्डे तु पूर्ववत् शुद्धिमाचरेत्
माला च पटमेवञ्च रक्तं पूर्वोक्तवत् ग्रहेत् ५१
दण्डाग्रे पक्षिनीढे तु महारोगं भविष्यते
शीघ्रं त्यक्त्वास्त्रमन्त्रेण पञ्चगव्येन शुध्यति ५२
मूले तु स्नपनं कृत्वा तत्तत् दोषशान्तये क्रमात्
स्कन्धत्रयन्तु विश्छिन्ने उपदण्डं तथैव च ५३
दुर्भिक्षं जायते लोके +++ पारबाधान्तथैव च
मूले च स्नपनं कृत्वा नवमन्यं प्रतिग्रहे
अधिवासनप्रष्ठो तत्तत्काले च समाचरेत् ५४
आरोहणस्य पूर्वे तु दोषं वा यत्र दृश्यते
राज्यक्षोभमवाप्नोति गवानान्नाशनं भवेत् ५५
प्रतिदण्डं ++++ आरोहणादि पूर्ववत्
ध्वजदण्डे तु पतिते तद्राष्ट्रे शमनं भवेत् ५६
स्नपनं पञ्चविंशत्य तत् शान्तिं योजयेत्क्रमात्
तत्प्रोक्षण ततः कृत्वा सद्यत्काले समाचरेत् ५७
अस्त्रञ्च पादुके चैव अन्नलिङ्गहविस्तथा
एतानि पतिते कर्तुरायुक्षयं भवेत् ५८
अन्नलिङ्गन्त्यजेद्धीमान् बल्यन्तन्तु तथैव च
षट्त्रिंशदर्भसम्युक्तं कृत्वर्चत +++ ५९
योजयेत्पञ्चगव्येन गव्याभिषेचनं ++++
अस्त्रञ्च पादुकञ्चैव च्छेदने वक्रमेव च ६०
पञ्चगव्येन सम्प्रोक्ष्य शेषं यानं समाचरेत्
पूर्वोक्तविधिना ग्राह्य पूर्ववच्छुद्धिमाचरेत् ६१

श्वानादियानकाले च भूषणं यदि सम्भवः
ग्रामे नश्यन्ति कल्याणं महाज्वरमवाप्नुयात् ६२
मूलेनाष्टोत्तरं चैव प्रतिमा नव संख्यया
अघोरमयुतं जप्त्वा तद्दोषशमनं कुरु ६३
स्पर्शञ्चेद्यागमूर्तिञ्च कलशादीन्यपोह्य च
स्थानशुद्धिं ततः कृत्वा पूर्ववत्स्नपनं कुरु ६४
उत्सवे प्रोक्षणे काले प्रतिष्ठादिषु कालके
यागशालाग्नि दग्धे च महाज्वरमवाप्नुयात् ६५
सर्वाश्च कलशा त्याज्यं शुद्धिं कृत्वा महीतले
पूर्ववत् कलशान् स्थाप्य मूलेनाष्टोत्तरं मतम् ६६
उत्सवादिषु कालेषु चोराणां स्पृष्टिवेशनम्
ग्रामे नश्यति कल्याणं यानान्ते स्नपनं कुरु ६७
यानकाले रथेनाष्टेस्सद्यस्सन्धानमाचरेत्
न शक्यं बलहीनन्तु शिबिके यानमाचरेत् ६८
एतत्कर्म क्रमेणैव वाहनादि तथैव च
यानहीनन्तु कर्तव्यं राज्यक्षोभमवाप्नुयात् ६९
तस्मात्सर्वप्रयत्नेन तद्दिनान्तन्तु यानकम्
पूर्वेद्युरर्च्चितं पुष्पमशुद्धमपरोऽहनि ७०
न त्याज्यन्नच कुर्वीत कर्ता दृष्टा विनश्यति
स्नपनन्तु तथा कुर्यात् शुद्धिरेव भविष्यति ७१
सन्ध्यां प्रि +++ ति विशेषेण नै ++ विवर्जयेत्
तत्रैव शुद्धिहीनन्तु नृपश्रीनष्टमेव च ७२
स्नपनं मूललिङ्गं च तद्दोषश्मनं कुरु
दैविक +++ नञ्च शस्त्र बाधा भवेन्नृणाम् ७३
मूले तु स्नपनं कृत्वा तच्छाखा विसृजेत्तमः
आशौचद्वयसंप्राप्ते कर्तृणान्तु विशेषतः ७४

द्रव्यं धान्यमेवन्तु न योग्यन्देवतार्हकम्
अज्ञानात् मोहतो वापि आलयन्तु प्रवेशने ७५
कर्तॄणां रोगसम्भूति अपमृत्युर्भविष्यति
स्नपनं पञ्चगव्यञ्च अभिषेचनशाम्यति ७६
पक्षीणां मर्कटञ्चैव सर्प धाम प्रवेशनम्
पूर्वं वाराहिकं कुर्यादपरन्तु न दोषभाक् ७७
तत्र त्याज्यञ्च खात्वा तु ++++
अन्तर्मण्डलसालाद्यपूगोपुरान्तानि कथ्यते ७८
वल्मीकम्मधुनिग्धञ्चेद्यत्र स्थाने तु दृश्यते
राज्यक्षोभमवाप्नोति नृपाणां रोगमाविशेत् ७९
तत्र त्याज्यञ्च खनित्वा तु शुद्धमृत्पूरणं कुरु
पञ्चगव्याभिषेकञ्च क्षीरधारां समाचरेत् ८०
गजार्धमण्डपादि स्यात् सोपानान्तन्तथैव च
यत्र स्थाने तु वल्मीकं राजादुर्जयमाप्नुयात् ८१
पूर्ववत् शुद्धिदं कृत्वा तुळसी बिल्वपत्रकैः
मूलमन्त्रं शतं जप्त्वा शान्तिहोमन्ततः कुरु ८२
पूर्ववत्स्नपनं कृत्वा तद्दोषशमनं तथा
चोराद्यालिङ्गसंस्पृष्टे राष्ट्रञ्च कलहो भवेत् ८३
संप्रोक्षणन्ततः कृत्वा महास्नपनमाचरेत्
नानाद्यायुधिरे स्नावे लिङ्गाद्यादि स्पृहे यदि ८४
राज्यन्तु भवमाप्नोति महाज्वरमवाप्नुयात्
त्यन्तु मृण्मयं पात्रं वास्तुहोमं ततः कुरु ८५
लिङ्गपीठस्थलं सम्यक्वशुद्धिं कृत्वा तु पूर्ववत्
संप्रोक्षणं ततः कुर्यात् सद्यस्काले समाचरेत् ८६
अन्तर्मण्डलशालादौ पूर्ववद्दोषसम्भवेत्
राज्यक्षोभमवाप्नोति दुर्जयं स्नामवासिनाम् ८७

अ +++ कर्तव्यं पर्यग्निकरणं कुरु
स्नपनैरभिषिचित्वा तद्दोषशमनं कुरु ८८
अनुलोमेषु सर्वेषु लिङ्गादिस्पिष्टबेरकम्
महावदप्रकोपन्तु ग्रामे कल्याण नश्यति ८९
पर्यग्निकरणं कृत्वा संप्रोक्षणमथाचरेत्
लिङ्गाद्यादिषु बेरेषु रक्तकन्या प्रवेशके ९०
गर्भाद्या गोपुरन्तन्तु विशेद्राज्यञ्च नश्यति
मृत्पात्राणि त्यजेत्सर्वन्त्याज्यञ्चाणि क्रमं शृणु ९१
संप्रोक्षणन्ततः कुर्यान्तस्य शान्तिन्न संशयः
कुक्कुटाद्यादि पक्षीणां श्वानादि मृगमेव च ९२
लिङ्गादिस्पर्शने चैव राज्यञ्च भयमाविशेत्
पञ्चगव्येन सम्प्रोक्ष्य शान्तिहोमं समाचरेत् ९३
स्नपनैरभिषिच्छित्वात् सद्यशान्तिन्न संशयः
लिङ्गाद्यादिषु बेरेषु अग्निना दूषिते कृते ९४
तद्ग्रामेऽग्निभयञ्चैव राजमरणमाप्नुयात्
आवाहन क्रमेणैव स्नपनञ्च यथा क्रमम् ९५
तद्विषादि च मासादीन् प्रथमाचरणे यदि
महामार्य प्रवर्त्तन्ते तद्राष्ट्रे कलहो भवेत् ९६
पूर्ववत् स्नानशुद्धिञ्च स्नपनं पञ्चविंशति
अन्तर्मण्डलसालादे महामण्डलमेव वा ९७
प्रस्तुतिं पामृतं वापि तत्तद्दोषस्य भैरवान्
परञ्चक्रात् भयं राज्ये भूपतिस्त्वन्यधा भवेत् ९८
शुद्धिं कृत्वा विशेषेण संप्रोक्षणमथाचरेत्
पञ्चगव्याभिषेकञ्च सहस्रकलशं मतम् ९९
प्रथमावरणे चैव प्रविशेत् यदि दोषकम्
तद्राष्ट्रे रोग सम्भूति भूपतिस्त्वन्यथा भवेत् १००

चतुश्शताष्टकलशै स्नापयेत्परमेश्वरम्
पञ्चमेवञ्च शुद्धिञ्च पार्वती मन्त्रकं शतम्  १०१
प्रसादसिद्धिमेवोक्तं पर्यग्निकरणं कुरु
महेशप्रतिमादीनां नवकैरभिषेचयेत्  १०२
द्वितीया वरणे चैव प्रविशेत्तद्विशेषतः
तद्ग्रामे रोग सम्भूति तद्राष्ट्रे वर्षवर्जितम्  १०३
तद्दोषशमनार्थाय स्नानमष्टोत्तरं शतम्
पूर्ववत्स्थानशुद्धिञ्च चूळिकामन्त्रमुच्चरन्  १०४
तृतीयावरणे मूत्रं पुरिषमरणं यदि
निर्गमन्तु विशेषेण मुखद्वारे विवर्जयेत्  १०५
गमनञ्चैव मुखद्वारे कर्तृणान्नाशनं भवेत्
मुखद्वारेणां बन्धं तद्वारेण तु निर्गमम्  १०६
नृपक्षोपात् विशेषेण यामान्ते प्रवासकम्
दिनमेकादि पक्षान्तर्मासान्तं वा द्विमासकम्  १०७
त्रिमासमृतुमासान्तं पूजाहीनन्तु सम्भवम्
भूतवैताळपैशाच आलयन्तु प्रवेश्य च  १०८
लोकोचाग्निभयं प्रोक्त राजामरणमाप्नुयात्
स्नानशुद्धिं ततः कृत्वा हस्तमात्रं खनोद्भुवि  १०९
प्रासादशुद्धिमेवोक्तम्महास्नपनमाचरेत्
पुण्याह प्रोक्षणं कुर्यात्तन्मन्त्रेणैवमाचरेत्  ११०
तद्दोषशमनार्थाय विमानप्रोक्षणं कुरु
प्रतिमादिषु सर्वेषु स्नपनैरभिषेचयेत्  १११
चण्डाळानां प्रविश्याय धामादिगोपुरान्तकम्
राष्ट्रे रोगमवाप्नोति नृपाणान्तु तथैव च  ११२
बेरशुध्यादिपूर्वोक्तं तत्तत्स्थानस्य शुध्यति
संप्रोक्षणन्ततः कृत्वा महास्नपनमाचरेत्  ११३

प्रथमावरञ्चैव नवसूत्र पुरीषके
धामश्रीस्त्वन्यथा चैव तद्ग्रामे रोगसम्भवः ११४
स्थानशुद्धिन्ततः कृत्वा पर्यग्निकरणं कुरु
पञ्चशुद्धि क्रमेणैव तत्स्थाने शुद्धिमाचरेत् ११५
बहुरूपं शतं जप्त्वा स्नपनं पञ्चविंशति
आस्थानमण्टपादि स्यात् यागान्तं मण्टपे सति ११६
अग्निना दूषिते चैव कर्तृरायुष्ययो भवेत्
पञ्चगव्याभिषेकञ्च स्नपनैरभिषेचयेत् ११७
सर्वञ्च पूर्ववत्कल्प्य शुद्धं कृत्वा पुरस्सरम्
गोपुराभ्यन्तरे चैव गर्भार्थम्मण्डपेऽपि च ११८
नृपाणां रोगसम्भूति राज्ये तु कलहो भवेत्
तद्दोषशमनार्थाय नवकैरभिषेचयेत् ११९
नृपवेश्मनिकेवापि अथवा चान्यधामके
श्वानादिरोहणान्दृष्टन्तद्राष्ट्रे कलहो भवेत् १२०
तद्दोषशमनार्थाय स्नपनं पञ्चविंशतिः
शान्तिहोमं ततः कृत्वा संहितामन्त्रमुच्चरन् १२१
महेशप्रतिमादीनां नवकैरभिषेचयेत्
अथवान्नं एककुम्भन्तु स्नापयेत्तु विचक्षणः १२२
अशनिर्वात्र दिव्यापि गेहे मण्डपलिङ्गयोः
जिन्यदश्वप्रवेशञ्च लोके दारिद्र्यहं भवेत् १२३
तद्दोषशमनार्थाय एकाशीति घटं भवेत्
पूर्ववत्कल्पयेद्धीमान् सम्प्रोक्षणमथाचरेत् १२४
इत्यंशुमान् तन्त्रे प्रायश्चित्तिविधिपटलः

## आस्थानमण्टपम्

आस्थानमण्टपं वक्ष्ये श्रूयतां रविसत्तमः

प्रासादे पूर्वदिग्भागे दक्षिणे चोत्तरेऽपि वा १
पश्चिमत्वोशदेशे वा नैर्ऋते वायुगोचरे
प्राकाराभ्यन्तरे देशे गोपुरद्वारदेशके २
पञ्च प्राकारबाह्ये वा ह्यन्तरे वास्तु मध्यमे
मनोरम्येन देशे वा उद्याने वा विधीयके ३
मण्टपं कारयेद्धीमान् एकविंशत्करायुतम्
विस्तारं सप्तभागं स्यात् तत् वासं पञ्चपन्तिकम् ४
आयाममिति संख्याश्च पंतिमानमथोच्यते
व्यासे त्रिपंति विस्तारं एकपन्ति प्रकल्पयेत् ५
पुण्याहं वाचयित्वा तु प्रोक्षयेत्पञ्चगव्यकैः
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु ६
दुकूलं पट्टदेवाङ्गैस्तरङ्गैर्गात्रवेष्टनैः
वितानैश्च ध्वजश्चैव मुक्तादामैस्सदर्पणैः ७
पुष्पैर्नानाविधैश्चत्रैः क्रमुकै यत्र पक्षिभ्यः
नानाश्चर्यसमोपेतं मण्टपं भूरिभूषयेत् ८
शिवस्नपने चैव प्रोक्षणान्ते विशेषतः
रामाभिषेक समये सौख्य संख्यावसानने ९
नित्यनैमित्तिकं चैव मण्टपं कारयेत् बुधः
आस्थानमण्टपं प्रोक्तं मकुटमण्टपं शृणु १०
इत्यंशुमान् तन्त्रे आस्थानमण्टपविधिः

## चण्डेश्वरार्चनविधि

चण्डेशस्यार्चनं वक्ष्ये श्रूयतां रविसत्तमः
केवलं सहजं चैव स्वतन्त्रञ्च त्रिधा मतम् १
आत्मार्थं केवलं प्रोक्तं मण्डले तु समर्चयेत्
यामाङ्गं सहजं ज्ञेयं बहुरूपं प्रतिष्ठितम् २

भ्रामाङ्गं चोर्ध्वतं स्या श्चराडेशस्यार्चनं त्रिधा
स्रात्मार्थयजनान्ते तु सन्ध्यां प्रति विशेषतः ३
देवस्यामीशदिग्भागे गोमयालिप्तभूतले
टङ्काभमर्धचन्द्राभं लिखेत् चराडस्य मन्त्रतः ४
ध्वनि चराडेश्वरश्चेति हुंफटान्तेन मन्त्रवित्
तद्रूपं मध्यमध्यार्था पाद्यमाचमनं ददेत् ५
विलेपनञ्च दामञ्च दत्वा मूलन्तु मन्त्रतः
नैवेद्यं चैव ताम्बूलं तन्मूलेनैव वापयेत् ६
पराङ्मुखार्घ्यं दत्वा तु एवं प्रत्याङ्गमाचरेत्
केवलस्यार्चनं प्रोक्तं सहजस्यार्चनं श्रुणु ७
स्रन्तर्मराडलवेश्ये च मराटपस्त्वीशगोचरे
चराडेशं स्थापयेद्विद्वान् निर्माल्यश्चैव वार्चयेत् ८
सौरादि चराडपर्यन्तं नित्यं शम्भुं समर्चयेत्
पूजा पर्यूषितं द्रव्यं सङ्ग्रहे स्थलिकान्तके ९
वस्त्रं कुमुददामञ्च गन्धं नैवेद्यमेव च
ताम्बूलं भक्ष्य भोज्यादौ निर्माल्यमिति कीर्तितम् १०
स्रन्यानि सर्वद्रव्याणि निर्माल्यं न च कारयेत्
सन्ध्यां प्रति समभ्यर्च्य पञ्चाङ्गेनैव देशिकः ११
स्नानं वस्त्रञ्च गन्धञ्च पुष्पं नैवेद्यमेव च
पङ्काङ्गमिति विज्ञेयं सन्ध्यां प्रतिसमर्चयेत्
एवं कृत्वा दिवाकाले रात्रौ पातद्विशेषतः १२
स्रर्धार्धयामपूजान्ते चडनाथं समर्चयेत्
पूजापर्युषितं द्रव्यं स्थापयेच्चराडसन्निधौ १३
ध्वनि चराडेश्वरायेति हुंफडान्तेन मन्त्रतः
तन्नामाद्यक्षरेणैव पुष्याङ्गं संप्रकल्पयेत् १४
स्रर्धार्धयामपूजान्ते क्षेत्रपालं समर्चयेत्

क्षेत्रेशं क्षेत्ररक्षार्थं पूजास्यादर्धयामके १५
क्षेत्रपालार्चनं कुर्यात् पूर्ववद्देशिकोत्तमः
चण्डेशस्यार्चनं प्रोक्तं चन्द्रपूजाविधिं शृणु १६
इत्यंशुमान् तन्त्रे चण्डेशार्चनविधिः

## यागमण्टपनिर्माणविधि

यागङ्मण्टपं वक्ष्ये तद्रूपं श्रुणु मन्त्रवे
क्ष्माकारे तु मकारं स्यात् दशशब्दे तु ण कारकम् १
अग्निनाम्ने धकारन्तु पवनाद्यं पकारकम्
व्योमाकारे मकारन्तु पञ्चवर्णोद्भवं क्रमात् २
पञ्चवर्णाभिधानं स्यात् पञ्चभौतिकरूपकम्
पञ्चभूतं पञ्चकलां तद्रूपं मण्टपोच्यते ३
अध्वषट्कयुतैर्मन्त्रैराश्रयेयुर्मखालयम्
अध्वमन्त्र श्रये यस्मिन् पूजाञ्चक्रे तथाणुभिः ४
तस्मात्तत्तन्नाममन्त्रैर्वा यागमण्टपमुच्यते
मण्डपन्तु क्रियारूपन्तल्लक्षणमिहोच्यते ५
यस्याग्निशिवशालन्तु तद्देशे कल्पयेत् बुधः
माननिश्चित्य तत्पूर्वे निखने तत्परिग्रहे ६
त्रितालं वा द्वितालं वा एकतालमथापि वा
मृदमुद्धार्य संशोध्य अन्यमृद्भिः प्रपूरयेत् ७
पुण्यक्षेत्रे नदीतीरे शुद्धदेशे मनोरमे
सङ्ग्राह्यमृदमादाय तद्गतं पूरयेत्समम्
निघट्टनं वालुकाभिन्ने निम्नोन्नतविवर्जितम् ८
एकहस्तं तदर्धं वा तलादुन्नतवेदिकाम्
मानं निश्चित्य तद्भागे गर्भस्तम्भस्य गर्भकम् ९
उत्तमादीनि संख्यानि कलाधर्माष्टकालकम्

प्रभायां सममानानि मराटपे मध्यदैर्घ्यकम् १०
स्तम्भमानं यथायोग्यं त्र्यंशकोर्ध्व मध्यगात्
उत्तमं त्रयोस्तम्भान् चतुष्षष्टी प्रकल्पितम् ११
षट्त्रिंशं गात्रसम्युक्तं मध्यमत्रितयेषु च
षोडशस्तम्भ संयुक्तान् कन्यसत्रयमराटपे १२
मानमात्राङ्गुलाभ्यां वा मराटपं माननिश्चितम्
यागाङ्गादिनि सर्वाणि मात्राङ्गुलेन कारयेत् १३
पञ्चहस्तं समारभ्य एकहस्त निवर्द्धनात्
त्रयोदश करानान्तु कन्यसादि त्रयं त्रयम् १४
पञ्चहस्तात्समारभ्य द्विद्विहस्तविवर्द्धनात्
एकविंशत्करान्तन्तु नवधा मानमुच्यते १५
हस्तमानस्य लिङ्गस्य लिङ्गमानं यथाविधि
कन्यसामुत्तमान्तं हि नवधा मराटपं विदुः १६
एतेषां मराटपानान्तु यथाकर्मार्हं कल्पितम्
श्रायादि शुभसम्युक्तं यजमानानुकूलतः १७
लोवाञ्चेष्टकां वा सा न दारुमयेन वा
शिलां वा चेष्टनां वापि सारदारुमयेन वा १८
समाश्रमराटपं कुर्याद्वायथाश्रमथापि वा
षट्सप्तांशाद्व्यायुसाधिक्य मुखायामं विधानवित् १९
एवं मराटपनिर्माणं स्थानं निर्देशमुच्यते
श्राद्यं बालप्रतिष्ठादि क्रिया सर्वत्र पूर्वके २०
क्रियाङ्गमराडपार्थन्तु स्थानं सङ्कल्पना कुरु
देवाग्रे वा द्वयो पार्श्वौ सोमशाङ्करदेशके २१
निर्ऋृतिवरुणायाम्येषु यथायोग्य प्रदेशके
श्रन्तर्हारादि सर्वेषु यागशालां प्रकल्पयेत् २२
श्रन्तर्हारान्तसाले तु लिङ्गस्य स्थापनार्थकम्

पीठस्थापनमेवात्र चान्यत्सर्वं न कल्पयेत् २३
अन्तर्हारे तु मर्यादौ मध्ये वा भित्तिपार्श्वके
महामर्यादि साले तु मध्ये वाभ्यन्तरेऽपि वा २४
एषु स्थानेषु सर्वेषु मण्टपात्वष्टदेशके
उत्तमत्रयलिङ्गानां स्थापनं चोत्तमं बुधः २५
मध्यमत्रयलिङ्गानां षट्त्रिंशगात्रमण्टपे
कन्यसत्रयलिङ्गानां षोडशस्तम्भमण्टपे
एवं मण्तपनिर्माणं चतुरश्रसमं कुरु २६
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
निवृत्यां पश्चिमे द्वारं मण्टपे तत्प्रधानतः २७
प्रत्येकद्वारदेशे तु कल्प्यन्ते मुखमण्टपम्
द्वाराणि त्रीणि वर्णानि कम्पद्वारमथापि वा २८
तद्वारस्यार्धमर्धञ्च द्वारसंकल्प्य पूर्ववत्
स्थानं संकल्प्य युक्तं चेत् पूर्वे वा दक्षिणेऽपि वा २९
एवं द्वारस्य निर्माणं मण्टपाभ्यन्तरे बुधः
तद्देशं समलंकृत्य सूत्रन्यासं समाचरेत् ३०
दशसूत्रं समारभ्य पञ्चांशत् तुर्यमन्तकम्
सूत्रभेदं प्रवक्ष्यामि तत्तत् भेदं पृथक्पृथक् ३१
पङ्क्त्यादित्यमनुश्चैव सूत्रसंख्यामथादिके
पादमानं प्रकर्तव्यं क्रियाभेदाद्विभेदितम् ३२
लिङ्गस्य स्थापने चैव विमानस्थापनेऽपि च
उत्सवे चैव दीक्षायां कृतमाचार्यसेचने ३३
त्रयोदश पदे कार्यं मण्टपेरविसूत्रके
प्रतिमा बेरसर्वस्य स्थापने प्रेक्षणेऽपि च
पवित्राण्यधिवासे तु विमानप्रोक्षणेऽपि च ३४
एकादशपदे कार्य मण्टपे रविसूत्रके

बाललिङ्गप्रतिष्ठाञ्च प्रायश्चित्तादिकर्मणि ३५
अष्टबन्धन कार्येऽपि नित्यनैमित्तिकेऽपि वा
एतश्चान्यत्र कार्येषु तत्तत्कर्म विचक्षणः ३६
मण्टपाभ्यन्तरे भागे प्रागुदग्दशसूत्रकम्
एकाशीति पदं कृत्वा मर्धादि पदभागिकम् ३७
मध्ये नवपदं वेदि षोडशाद्युपवेष्टितम्
हस्तमानस्य योत्सेधं दर्पणोदरसन्निभम् ३८
चतुरङ्गुलमुत्सेधमष्टाङ्गुलसुविस्मृतम्
उपवेद्यश्चतुष्कोणे मध्यस्तम्भयुगस्थितम् ३९
तदावृत्या चतुर्विंशत् पदेष्विन्द्रादिदिक्षु च
चतुरश्रादि कुण्डानि तत्तत्स्थानोचितं क्रमात् ४०
प्रधानस्त्वीशदेशे तु पञ्चाग्न्यायतनन्तु वा
एकाग्न्यातनं चैव पूर्वे वा त्वीशदेशके ४१
तद्बाह्ये पदमध्येकं चतुद्वारं प्रकल्पयेत्
द्वाराणामुभयो पार्श्वे अष्टाविंशत्पदावृतम् ४२
पूर्वद्वारादि नन्द्यादि महाकाळान्तकं क्रमात्
नन्दी भद्रा च वह्निञ्च यमं विघ्नविनायकम् ४३
विद्याकलाचाग्निकोणे सप्तैते पदभागिनः
भृङ्गिर्वास्तोष्पतिर्विष्णु निर्ऋतिर्लक्ष्मिगुहस्तथा ४४
निवृत्तिश्चैव सप्तैते मन्त्रैते पदभागिनः
अस्त्रमन्त्रञ्च वरुणं पवनोऽथ गणेश्वरम् ४५
चण्डेशञ्च प्रतिष्ठाञ्च वायुकोणे च सप्तके
देवी सोम गुरुर्वीशौ विरिञ्चि काळशाक्तिकौ ४६
ईशकोणेश्च सप्तैते पदभागाष्टविंशतिः
एवं बाह्यपदस्ताश्च ईशं कुण्डस्य पश्चिमे ४७
द्विपदं कुम्भवर्द्धन्यो पदशेषं परित्यजेत्

त्रित्रिभात् सूत्रसन्ध्यौ च वरणाद्वादशस्थितिः ४८
पदाकाश्च दशास्त्राणि दिग्गजाष्टकमेव च
मण्टपावृत देशेषु द्वारपार्श्वौ स्थितः क्रमात् ४९
एवं सर्वं समापाद्य कन्यसे मण्टपे बुधः
भानुसूत्रात् समुद्भूतामेकविंशशतं पदम् ५०
पदभात् कर्मभागानि भानुसूत्रान् पृथक्पृथक्
वेदिकां चोपवेदींश्च पूर्वादीनष्टकुण्डकम् ५१
इन्द्रईशानयोर्मध्ये प्रधानं द्विपदान्तरे
तद्बाह्येकपदावृत्या सञ्चारार्धं विलोप्य च ५२
तद्बाह्ये पदभागेषु दिक्षु द्वारार्धकं पदम्
त्रीणि त्रीणि पदं ग्राह्य शेषं पूर्ववदेवहि ५३
मण्टपादिपदैवांश्च यजनार्थं परिग्रहेत्
तन्मण्टपे क्रियां कुर्यात् प्रतिमाद्यधिवासनम् ५४
षोडशप्रतिमानान्तु परिवारामनादिनाम्
शयनाद्यधिवासान्तं सर्वं कुर्याद्विचक्षणः ५५
तन्मण्टपे तु कर्तव्यं पवित्राण्यधिवासनम्
मध्यमे वेदिकायान्तु लतालिङ्गोद्भवादिकम् ५६
उपवेद्यास्तु परितः कुण्डात्कुर्याद्यथा विधि
दक्षिणे मल्लिका कल्प्य स्थालीपाकार्थमेव हि ५७
प्रधानकुण्डवारुण्यां पवित्राण्यामधिवासनम्
उपवेद्यास्तु परितो वृताङ्ग द्रव्यसाधनम् ५८
शेषं पूर्वमुद्दिष्टं पवित्रारोहणान्तकम्
तन्मण्टपे कृतः कुर्यात् दमनारोहणक्रमम् ५९
सर्वं पवित्रवत्कुर्यात्स्थालीपाकादिकं विना
एकादशपदेकार्ये एवमादीनि कारयेत् ६०
अथ सूत्रं समावृत्य भूतांशं षण्णवोत्तरम्

पदभागानि कृत्वेव मध्यमे वेदिकां कुरु
नवपदं गृह्य विस्तारं हस्तोत्सेध समं कुरु ६१
तत्पूर्वादि चतुर्दिक्षु वेदिकां चोपभद्रिकाम्
नवपदं चतुरश्रन्तु तदर्द्धोत्सेधमानयेत् ६२
आग्नेयादि चतुष्कोणे तदर्द्धोत्सेधमानकम्
मध्यादि नववेद्याय त्वेकाशीति पदं विदुः ६३
मध्यादि पञ्चवेद्यायां कलशस्थापनं क्रमात्
आग्नेय्यां पञ्चगव्यन्तु नैर्ऋत्यां नवरत्नकम् ६४
इष्टका वायुदेशे तु स्थूपिदण्डं तथैशके
कुण्डा सर्व कार्याणि सर्वं पूर्ववदाचरेत् ६५
विमानस्थापनं ह्येवं तदेव प्रोक्षणं कुरु
मध्यादि पञ्चवेद्यास्तु पूर्वाद्यं पञ्चकुण्डकम् ६६
तद्विधानोक्तवत्सर्वं शेषं पूर्ववदाचरेत्
विमान प्रोक्षणं ह्येवं दीक्षादीनि विधानकम् ६७
दीक्षादीनि विधाने तु विशेषं किञ्चिदस्तिभिः
मण्टपं पूर्ववत्कृत्वा पदं सूत्रं तथैव च ६८
मध्ये नवपदं वेदीं हस्तमानेन चोन्नतम्
तत्पूर्वे तु पदं ग्राह्य कुण्डं कुर्याद्विधानतः ६९
पश्चिमे नवपदं वेदीं शिवलिङ्गार्चनार्थकम्
कुण्डवेदिकयोर्दक्षे पूर्वोऽयं तद्विभागिकम् ७०
वेदिकां यजनार्थन्तु शिष्यसंवेशनार्थकम्
उत्तरे नवपदं वेदीं कलशे स्थापनार्थकम् ७१
पञ्चौषधिं पञ्चशालिं पञ्चमृद्भिस्तु वायवे
कत्रिका तेन सूत्रन्तु पञ्चगव्यं नथैशके ७२
परितः पदमेकन्तु सञ्चारार्थं विलेपयेत्
छुल्लिकां दक्षिणे स्थाप्य धर्मराजं तदग्रके ७३

शेषं पूर्ववद्दिष्टं तत्पदे तद्विधानके
त्रीणि दीक्षा प्रकुर्वन्ति साम्भवं कुरु सेचनम्  ७४
शिष्य पक्वं परिक्ष्याथ गुरूणां सर्वमाचरेत्
एककर्म विभागोक्तं कलशस्थापनोच्यते  ७५
नवकादिसहस्रान्तं कलशस्थापनं क्रमात्
अधमत्रितयं चेत्तु कन्यसत्रयमण्टपे  ७६
कलशस्थापनार्थन्तु मध्ये वेद्यां यथा तथा
कुण्डादीनि च तत्सर्वं पूजयेन्मण्टपाधिपान्  ७७
भास्करादीनि सर्वाणि पादयेत्पार्श्वयुग्मके
स्वस्वमन्त्रैस्समभ्यर्च्य कुम्भवर्द्धिनिकौ विना  ७८
मध्ययत्रतयञ्चेत्तु कलशस्थापनोक्तवत्
तत्तत्संख्यानि सूत्राणि पादयेत्पार्श्वयुग्मके  ७९
त्रित्रिसूत्रं प्रकर्तव्यं प्रागादीनि चतुर्द्दिशि
होमार्थं पदमेकन्तु सञ्चारार्थन्तु तद्बहिः  ८०
तदावृत्य पदेकन्तु द्वारादि यजनार्थकम्
एतत्सर्वं विधानोक्तं मार्गेणैव समाचरेत्  ८१
उत्तमं द्वितयादौ तु ++ बाह्येऽग्निकार्यकम्
उत्तमत्रितये कार्यं मध्यव्यूहस्य चावृतौ  ८२
अष्टव्यूहपदे मध्ये अग्निकार्यं समाचरेत्
तत्तत्संख्यानि सूत्राणि पादयेत्तु चतुर्दिशि  ८३
द्विद्विसूत्रं प्रकर्तव्यं पदमानयथा बुधः
सञ्चारार्थं पदेकन्तु तद्बाह्यावृतभागिके  ८४
चतुद्वारं प्रकर्तव्यं शेषं द्वारादिपूजनम्
एतत्सूत्रं विभागेन नवकादि नवान्तकम्  ८५
लिङ्गस्य स्थापनार्थन्तु मण्टपं शृणु मन्त्रवे
हस्तमानस्य लिङ्गस्य मण्टपे रविहस्तके  ८६

द्विद्विहस्तविवृत्ताद्ध्या लिङ्गमानं यथाविधि
तत्तन्मानं गृहीत्वा तु मराटपं कल्प्य बुद्धिमान् ८७
एतत्सर्वं विधानोक्तं समानं सर्वमराटपे
एकाशीति पदाभाव्य पदमानं विशेषतः ८८
मराटपं बहुधा प्रोक्तं पदभागमनेकधा
तस्मादपि पुनः कार्यमेकाशीति पदं विदुः ८९
मराटपं मनसा भाव्यं पदाद्ध्वा रूपभावनम्
किंरूपं मराटपं ह्येवं पदं मे पार्वतीपतिः ९०
मराटपन्तु कलारूपं चतुर्वक्त्रन्तु भास्करः
मराटपावयवं कल्प्य पञ्चभौतिकरूपकम् ९१
तन्मराटपं चतुर्द्वारं चतुस्तोररणभूषितम्
गजाष्टदिक्पताकञ्च दशास्त्रं शक्तिसंयुतम् ९२
मराटपावृतदेशेषु कृत्वा तन्मराटपे बुधः
घटे लिङ्गे च बेरे च याम्य द्रव्ये च बेरके
ग्रध्वाणुभिः प्रकल्प्यन्ते सर्वाङ्गान् यवान् क्रमात् ९३
सर्वमन्त्रैश्चाधिवासे तदधिवासनमराटपे
तस्मात्तन्मराटपं कृत्वा कलारूपं स्मरेद्रवे ९४
कलायां सर्वमुत्पन्नं यत्र द्रूपं कलामयम्
साकलां मन्त्ररूपन्तु तस्मात्तन्मराटपार्चनम् ९५
पदाध्वा पदभागेषु वर्णाध्वा पदमध्यमे
घटोदरेषु मन्त्राध्वा बेरस्यावयवेषु च ९६
मराटपावयवद्रव्यत्वाध्वा संस्थितः क्रमात्
भुवनाध्वादि ऊर्ध्वायां सर्वमापाद्य रक्षतु ९७
कलाध्वा सर्वगर्भी च षडध्वा परिमरिडतः
सर्वं कृत्वा तु तन्त्रज्ञस्सर्वकर्माहको भवेत् ९८
यागाङ्गमराटपं ह्येवमर्चनाद्यधुनोच्यते

इत्यंशुमान् तन्त्रे मगटपनिर्माणविधिः

## मगटपाराधनम्

मगटपाराधनं वक्ष्ये श्रूयतां रविसत्तम
सर्वतन्त्राणि गर्भस्यात् कलाञ्चाध्वररूपिणीम् १
इन्द्राद्यैर्लोकपालाद्यैस्त्रैरक्षणीयं मखालयम्
तन्त्राणामुद्भवात्याय मगटपाराधनं कुरु २
तस्मात्तन्मगटपाराध्यं क्रिया पूजां विचक्षणः
पूर्वमानं विनिश्चित्य मगटपं कल्प्य पूर्ववत् ३
चतुर्द्वारयुतं कार्यं चतुस्तोरणभूषितम्
ग्रष्टदिक् ध्वजसंयुक्तं दर्भमालासमावृतम् ४
पुष्पयुक्तदळीपूकस्तम्भौ द्वारस्य पार्श्वकौ
चित्रपत्रैरलङ्कृत्य पूकपुष्पाद्यलङ्कृतम् ५
तत्र वेष्टनसंयुक्तं मुक्तादामैरलङ्कृतम्
गात्रवेष्टनसम्युक्तं चित्रवस्त्रैरलङ्कृतम् ६
ग्रर्धचन्द्रां कृतिर्युक्तं दर्पणादि विधानवत्
मगटपालङ्कृतं ह्येवं नानादीप समन्वितम् ७
मार्जनालेपनं कृत्वा शालीपिष्ठञ्च तन्तुना
सूत्रविन्यासमार्गेण पदभागं क्रमात् बुधः ८
तन्मध्ये वेदिकां कृत्वा चोपवेदीसमन्वितम्
हस्तमानस्य चोत्सेधं दर्पणोदरसन्निभम् ९
परितस्त्रिपदं मध्ये कुगडमानं प्रकल्पयेत्
नवपञ्चैककुगडं वा यथाकर्मार्ह कल्पितम् १०
कर्मान्तं कुगडरूपन्तु मेखलादीन्यथा तथा
पूर्वादीनि चतुर्दिक्षु चतुर्द्वारं प्रकल्पयेत् ११
द्वाराणामुभयो पार्श्वे ग्राग्नेयादि विदिक्षु च

मराटपस्याधिदेवानां कलशस्थापनार्थकम् १२
सप्तसप्तपदं वेदीं विस्मृतं तालमात्रकम्
कुम्भवर्द्धनि चासीनमीशकुराडस्य पश्चिमे १३
उत्सेधं तालमात्रन्तु विस्त्रितैक द्विरायतम्
एवं वेद्याश्च निर्माणं यागाङ्गानि विचक्षणः १४
तोरणादी पताकांश्च कर्माद्यासनकल्पितम्
अष्टमङ्गलरूपाणि सृक्सृवादीनि पात्रकान् १५
अवगाहनदारुश्च त्रिपादी फलकान् क्रमात्
एवमादीनि सर्वाणि कुर्यात्तं मानवित्तमः १६
एवं सर्वं समापाद्य शिल्पिकर्मावसानके
शिल्पिनं विसृजेत्तत्र मार्जनं प्रोक्षणं कुरु १७
वेद्याग्रे वाथ चाग्नेय्यां वास्तुपूजां समारभेत्
विघ्नेशयजनं पूर्वं पुरायाह प्रोक्षणं कुरु १८
सामान्यार्घ्यन्तु संकल्प्य पञ्चगव्यन्तु साधयेत्
पदविन्यासमार्गञ्च कृत्वा ब्रह्मादिनार्चनम् १९
समर्यकादिदेवानां बलितृप्तिं समाचरेत्
वास्तुकुम्भं समभ्यर्च्य समर्यादीनि मन्त्रकैः २०
अग्निकार्योक्तमार्गेण चाग्निकार्यं समाचरेत्
वास्तु कुम्भस्तु देवानां स्वस्वस्थाने च हूयते २१
पूर्णाहुत्याञ्च विधिवत् पर्यग्निकरणं कुरु
विसृजेत् बलिनिर्माल्यं मार्जनादि यथाक्रमम् २२
समाप्ते वैर्गुरुस्नात्वा सकळी करणं कुरु
यागोपकरणद्रव्यान् सर्वान्सम्पाद्ययेत्ततः २३
सर्वं निरीक्ष्य तन्त्रज्ञो मूर्तिपैर्वेदपारगैः
समर्थै परिचारैश्च शिष्ययुक्तो गुरूत्तमैः २४
यागशालां प्रविश्याथ दर्शयेद्दिव्य चक्षुषा

पूर्वद्वारस्य दक्षे तु सौरपूजां समारभेत् २५
इन्द्रपावकयोर्मध्ये स्थण्डिलं पद्ममालिखेत्
सौरकुम्भं प्रतिष्ठाप्य प्राङ्मुखासनसंस्थितम् २६
देहशुद्धिं पुराकृत्वा सकळीकरणादिकम्
अर्घ्यं ताम्रादिपात्रेषु रक्तचन्दनपुष्पयुक् २७
तज्जले द्रव्यमात्मानं भूमिं संप्रोक्ष्यचास्त्रतः
विघ्नानुत्सार्यतस्थाने निरीक्ष्य हृदयेन तु २८
पश्चिमद्वारमभ्यर्च्य द्वारं सम्प्रोक्ष्य पार्श्वकौ
मूर्त्तिध्यानं पुराकृत्वा अर्च्चयेद्दण्डपिङ्गळौ २९
ईशानाग्नेयदिग्भागे गणपं गुरुमर्चयेत्
प्रभूताविमलासारा आराध्या परमस्सुखः ३०
आग्नेयादि कोणेषु स्वस्वमन्त्रैस्समर्चयेत्
श्वेतपद्मासने मध्ये पद्मासनं समर्चयेत् ३१
पूर्वादिकेसराग्रेषु नवशक्तीं समर्चयेत्
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमलाशुभा ३२
अमोघाविद्युता चैव मध्यमे सर्वतो मुखी
पद्मासनस्य मध्ये तु अर्कासनखषोल्ककौ ३३
डाडिमी पुष्पशोभाढ्यं सितमम्बोरुहस्थितम्
स्फुरत्तेजो रुणो वृत्तमण्डले मध्यगस्थितम् ३४
सनाळाब्जसमायुक्तं करद्वयसमन्वितम्
वराभयकराश्चैकवक्त्रं भानुं विभावयेत् ३५
नेत्रन्यासाञ्जलिं हस्तौ पुष्पाक्षतसमन्वितम्
ललाटबिन्दुस्फुरद्रक्ततेजोभान्याञ्जलिस्थितम् ३६
तन्मूलानां समावाह्य व्यापकं सूर्यबिम्बके
स्थापिन्यासौधमुद्रान्तं बिम्बमुद्राञ्च व्यापकम् ३७
पाद्यमाचमनञ्चार्घ्यं स्वागतांतमखषोल्कना

पुस्पाञ्जलित्रयं पद्म बिम्बमुद्राञ्च दर्शयेत् ३८
भोगाङ्गपूजां सम्प्रार्थ्य आग्नेयादि विदिक् दळे
हृदाद्यङ्गानि चत्वारो नेत्रन्यासं तदग्रके ३९
अस्त्रञ्च दिग्दळाग्रेषु भाव्यरूपं समर्चयेत्
धेनुमुद्रां गोविषाणां त्रासिनी मुद्रकां ददौ ४०
पूर्वादिदिग्दळाग्रेषु सोमज्ञौ गुरुभार्गवौ
विदिग्दळाग्रेष्वङ्गारशनैश्च राहुकेतुकौ ४१
समभ्यर्च्य स्वमन्त्रेण नमो मुद्रां प्रदर्शयेत्
धूपदीपनिवेद्यञ्च ताम्बूलाचमनार्घ्यकौ ४२
सर्वोपचारैस्सम्पूज्य सार्घ्यतोयं जपं ददेत्
स्तोत्रैस्तुत्वा नमस्कृत्य विमुखार्घ्यं समर्पयेत् ४३
तेजश्चण्डतथैशान्यां सम्पूज्य विसृजेत्ततः
एवं सौरं समभ्यर्च्य निर्गत्वा मण्टपाद्बहिः ४४
प्रक्षाळ्य पाणिपादौ तु समाचम्य विधानतः
भस्म सन्धारणं कृत्वा सकळी करणं कुरु ४५
सामान्यार्घ्यञ्च सङ्कल्प्य पूर्वादिषु यथाक्रमम्
द्वाराण्यस्त्रेण सम्प्रोक्ष्य द्वारतोरणमध्यमे ४६
शान्तिभूतबलारोग्य शान्तियुक्तास्समर्चयेत्
प्रागादीनिश्चतुद्वारपार्श्वयोरेककुम्भके ४७
शान्तिर्विद्या निवृत्तिश्च प्रतिष्टा द्वारशक्तयः
पूर्वादि द्वारपार्श्वौ स्थौ द्वौ द्वौ कुम्भौ समर्चयेत् ४८
प्राक्द्वारेण नन्दिकाळौ च दक्षे भृङ्गी विनायकौ
पश्चिमे वृषभस्कन्दौ देवी चण्डौ च सौम्यके ४९
ध्यानपूर्वं स्वमन्त्रेण आवाह्यार्घ्यकं क्रमात्
पश्चिमे तु महालक्ष्मीं पूजयेत्कलशस्थिताम् ५०
पूर्वे प्रशान्तशिशिरौ पर्जन्याशोकदक्षिणे

भूतसञ्जीवममृतधनतश्रीपदोत्तरे ५१
एवं ध्वजाष्टकं पूज्य लोकेशान्यायुधान्यजेत्
वज्रं शक्तिञ्च दण्डञ्च खड्गं पाशं ध्वजां कुशम् ५२
गदात्रिशूलपद्मञ्च चक्रं चेति दशायुधम्
कुमुदाद्या स्थिता क्काळि कृष्णे द्वळि शशिन्द्रभान् ५३
द्विलोचनाद्विबाहुश्च दण्डाभयकरान्वितम्
कुमुदकुमुदाक्षश्च पुण्डरीकश्च वामनः ५४
शङ्ककर्णस्सर्पनेत्रस्सुमुखस्सुप्रतिष्ठकः
पूर्वशाद्यात् क्रमात्पूज्य प्रविशे द्वारपश्चिमे ५५
नित्यवत् द्वारपालान्यष्ट्वा विघ्नत्रयनिवारकम्
पाष्णी घातत्रयं घण्टां ताडनं कुसुमं क्षिपेत् ५६
अन्यद्वाराणि सङ्कट्य निवृत्तिद्वारवेशनम्
देहळ्यां स्पर्शनं सव्ये पादेनान्तं प्रविश्य च ५७
प्रत्यङ्मुखस्समभ्यर्च्य द्वारवामे समर्चयेत्
प्रदक्षिणवशात् गत्वा निर्ऋतौ वास्तु पूजनम् ५८
यागमण्टपकम्पेषु स्तृणस्तम्भादिषु क्रमात्
पृथिव्यादि पञ्चतत्वानि क्रमात् देशेषु संयजेत् ५९
विताने दर्भमालायां चन्द्रवासुकिनं यजेत्
उपवेद्याश्च परितश्चान्तराळाष्टदेशके ६०
दर्पणं पूर्णकुम्भञ्च वृषभं युग्मचारम्
श्रीवत्सं स्वस्तिकं शङ्कदीपो देवाष्टमङ्गळम् ६१
शक्तिहस्ताधृतास्सर्वे दर्पणादीनि चार्चयेत्
सदाशिवपदं व्याप्तिमण्टपं भाव्यरूपकम् ६२
वेदिकायास्तु दक्षिण्याञ्चोत्तराभिमुखस्थितः
स्वासनं सम्यगाभ्यर्च्य कूर्मस्थरुचिरासनम् ६३
नित्यवत् भूतशुध्यादि सकळीकरणं कुरु

दराडभङ्गी वक्त्रभङ्गी कलाभङ्गी यथाक्रमम् ६४
अष्टत्रिंशत्कलाभङ्गी मातृकादीन्यथान्यसेत्
मुराडभङ्गी यथास्थानं भस्मयुक्तक्रमान्यसेत् ६५
आपक्षीरकुशाग्राणि यवसिद्धार्थतराडुलम्
तिलञ्च कुसुमाष्टाङ्गमर्घ्यं संसाध्यपात्रके ६६
द्रव्यां संप्रोक्ष्य चात्मानं शिवहस्तं प्रकल्पयेत्
करतलञ्चन्दनालिप्य षडुत्थासनकल्पितम् ६७
सकळीकृत्यमावाह्य शिवं सम्पूज्य भावतः
तन्मूर्ध्नि विन्यसेत्तेजस्तमः पटलधूननम् ६८
षट्त्रिंशत् दर्भबन्धञ्च ज्ञानखड्गास्त्रजप्तकम्
उष्णीषञ्चोत्तरीयञ्च गुरुदेहमलङ्कृतम् ६९
कट्यादक्षे तु विन्यसेस्तेजस्तमः पाटल धूननाम्
कट्यां दक्षे तु सन्धार्य पञ्चगव्यन्तु साधयेत् ७०
षट्त्रिंशत् दर्भबन्धञ्च ज्ञानसन्धार्य पञ्चगव्यन्तु साधयेत्
तत्वतत्वेश्वरं न्यस्य मूर्तिमूर्तीश्वरान्यसेत् ७१
विद्याङ्गं विन्यसेद्धीमान् हृदिस्थं यजते शिवम्
हृन्नाभिबिन्दुस्थानेषु यजनं होमचिन्तनौ ७२
ललाटे तिलकं कृत्वा पञ्चाङ्गं भूष्य भूषितान्
यागोपकरणं द्रव्या विकिरे तु तसम्भृतान् ७३
निरीक्षणादि चतुश्शुद्धं कृत्वा नैर्ऋतदेशके
ईशानाभिमुखस्थित्वा मराटपं प्रोक्ष्य गव्यकैः ७४
संस्तुत्याष्टादशकैश्चतुष्पादान्तसंस्तुतैः
लाजादीन्यस्त्रजप्ताश्च विकिरानस्त्रतेजसा ७५
आचार्याञ्जलिभिन्नैश्च चतुष्पादान्तपादितः
संस्कृत्य विकिरान् ग्राह्य वर्द्धन्यासनमीशके ७६
नैर्ऋते वास्तुनाथञ्च पश्चिमे तु रमां यजेत्

ऐशान्यां घटवर्द्धन्यौ सप्तधान्योपरिस्थितौ ७७
कुम्भसापूरिसौ स्वर्णरत्नपल्लवकूर्चकौ
वाससी परिधानान्तु चलासनमथार्चयेत् ७८
कुम्भे शिवं समभ्यर्च्य यजेदावरणान्वितम्
पाशुपतास्त्रं वर्द्धन्यां यजेध्यानपुरस्सरम् ७९
मण्टपाभ्यन्तरे दिक्षु सायुधान् लोकपान्यसेत्
शिवाज्ञा श्रावयेस्सर्वान् लोकपालान् क्रमेण तु ८०
कुम्भाग्रकां वर्द्धन्याञ्जलेना विश्छिन्नधारया
प्रदक्षिणय भ्रमं कृत्वा स्वस्थाने कुम्भवर्द्धनीम् ८१
स्थिरायनमथाभ्यर्च्य शिवं साङ्गं समर्चयेत्
सिंहासनस्थां वर्द्धन्यां यजेत्पाशुपतास्त्रकम् ८२
नैवेद्यन्धूपदीपौ च जप्त्वा जपसमर्पणम्
ज्ञानखड्गं समभ्यर्च्याथ मुद्रादर्शनकं यथा ८३
शिवाज्ञां यागरक्षार्थं यजेद्यागावसानकम्
वायव्यादिशिमासाद्य यजेद्विघ्नविनायकम् ८४
निर्विघ्नस्त्वं प्रसन्नोऽस्मि त्वत्प्रसादात् गजानना
गुरुं यष्ट्या तथैशान्यां लब्धानुज्ञा प्रसन्नधीः ८५
तन्त्रज्ञो शिष्य युक्तस्सन् तत्कर्माद्यं समारभेत्
बेरशुद्धिं पुराकृत्य रक्षाबन्धं ततः परम् ८६
पञ्चशर्याधिवासञ्च तत्रिखण्डस्य कल्पनम्
कुम्भसंस्थापनम् पश्चात् वेदिकोर्ध्वे समर्चयेत् ८७
शर्यार्थं पञ्चतल्पञ्च पञ्च भौतिकरूपकम्
लोकपालान् परितः कल्प्यरक्षार्थन्तु शिवाज्ञया ८९
पूर्ववत्संस्कृतं कुण्डमग्न्याधानादिकं कुरु
मूर्तिकुण्डादिसर्वत्र मग्निभागं विभज्य च ९०
चरुपाकक्रमं कृत्वा विवाहान्तं हुनेत्क्रमात्

पूर्णान्तन्त्रिखरडभावं स्पर्शं सम्पातहोमकम् ९१
प्रतिभागादिपञ्चैव तत्वतत्वेश्वरा हुनेत्
पञ्चपक्षेष्टपक्षे वा प्रतिमन्त्रं हुनेत्क्रमात् ९२
लिङ्गबेरे तथा कुम्भे शिष्यसूत्रे पवित्रके
ध्वजस्तम्भे ध्वजपटे धान्यवस्तु नियोग्यकम् ९३
तेषु मन्त्रारयधिवसेदधिवासनमीरितम्
ध्वजमन्त्ररयधिवसे गङ्गावयवसन्धिषु ९४
तत्परं मुक्तपुष्पेरा सम्पूर्याश्छाद्य वस्त्रकम्
तश्चेष्टं कर्म निर्वत्य रात्रिशेषं व्यपोह्य च ९५
प्रातस्नात्वा च शिष्यस्तु नित्यं कर्म समाचरेत्
देवालयं प्रविश्याथ प्रदक्षिरय क्रमात्सुधीः ९६
मराटपन्तोरणादिश्च द्वारे द्वारपमर्चयेत्
मराटपान्तः प्रविश्याथ भूतशुध्यादिषु क्रमात् ९७
विशेषार्घ्यं द्रव्यशुद्धिञ्च कुम्भवर्द्धनि लोकपान्
गरापं गुरुपङ्क्यन्तं क्रमात्सम्पूज्य देशिकः ९८
साग्निकुराडान्त्रिकं गत्वा ब्रह्मादीन् लोकपान्यजेत्
सृक् स्त्रुवाज्यादि संस्कृत्य पूर्णान्तं हुतमाचरेत् ९९
अग्निहृत्पद्ममध्ये तु तत्तत्कर्माधिपं यजेत्
पूर्ववत्सर्वमन्त्राणि अध्वमन्त्रान्त्रिभागिकम् १००
स्पर्शाहुतिञ्च सम्पातं पूर्णान्तं सर्वमाचरेत्
तत्तत्कर्म विभागेन कर्मपर्यन्तमाचरेत् १०१
प्रतिष्ठान्तञ्चोत्सवान्तञ्च आरोहणादिकं क्रमात्
उक्तवत्सर्वकर्माणि तन्त्रज्ञस्सर्वमाचरेत् १०२
इत्यंशुमान्तन्त्रे मराटपाराधनविधिपटलः

## सेनास्तम्भनविधिः

सेनास्तम्भविधिं वक्ष्ये श्रूयतां रविसत्तमः
रहस्यमिति विज्ञेयं परापरमिति स्मृतम् १
खेटं चापं कपालञ्च सव्ये त्रिशूलसम्युतम्
टङ्कासिञ्च समायुक्तं डमरुनवरैर्भुजैः २
खट्वाङ्गञ्च कपालञ्च दधानं खेटपाशकौ
वृश्चिकं पालिसन्नद्धं मालिका प्रतिकन्धरम् ३
पङ्कजासनमध्यस्तं वामपादपुरस्सरम्
शत्रुसेनां समुद्दिश्य सदधापनसम्युतम् ४
रक्तवस्त्रधरं पीतं नागाभरणभूषितम्
बालचन्द्रवदाकारं दंष्ट्रादिभिर्भयङ्करम् ५
ऊर्ध्वकेशं महास्वश्रीज्वलत् ज्वलनलोचनम्
किंकिणी मालिकापाशि वशीकृत धनुर्धरम् ६
एवं ध्यानं समाख्यातं ततः पूजा समारभेत्
द्वारादिलिङ्गशुध्यन्तं पूजयेत् पूर्ववन्यसेत् ७
कर्मस्य पूर्ववत्कृत्वा चाष्टत्रिंशत्कलान्वितम्
न्यस्त्वाघोरं समावाह्य कुर्यादावाहनादिकम् ८
तदङ्गानि च विन्यस्य दद्यात् पाद्यादिकं त्रयम्
तैलाभ्यङ्गं ततः कृत्वा गव्यपञ्चामृतेनपि ९
अभिषिच्याथ वस्त्रेण वेष्ट्य गन्धञ्च पुष्पकम्
समर्प्य कुम्भमुद्धृत्य वाद्यघोषसमन्वितम् १०
यजमान समोपेतं कृत्वा हर्म्यप्रदक्षिणम्
शिवाग्रे स्थापयित्वा तु धूपदीपं समर्चयेत् ११
अघोरमन्त्रसमुच्चार्य स्नापयेत्परमेश्वरम्
वर्द्धनीं पदमन्त्रेण चण्डिकामभिषेचयेत् १२
अष्टविद्येशकलशैस्संस्नाप्यस्ततनन्तरम्
स्थापितै कलशै प्रायादभिषेकं समाचरेत् १३

सूक्ष्मवस्त्रेण संमृज्य कृष्णगन्धानुलेपनम्
कृष्णचर्माम्बरोपेतं कृष्णवर्णसृगान्वितम् १४
मन्त्रान्नादि निवेद्याष्ट पञ्चावरणमर्चयेत्
मरीची लवणोपेतं तिलचूर्णे विमिश्रितम् १५
महाहविं निवेद्याथ दन्यादावमनन्ततः
ताम्बूलञ्च समर्प्याथ कुण्डे वाथ स्थण्डिलेऽथवा १६
कृत्वा कुण्डादि संस्कारं शिवाग्नि हृदयेत्ततः
अघोरमनुनावाह्य साङ्गं सन्तप्ययेत् गुरुः १७
समिद्भिः वेदिरैपश्चादष्टोत्तरशतं हुनेत्
घृतेन चरुणा पश्चात् मधुनाभि तथा हुनेत् १८
भगवत्परसेनाथ स्तम्भनं कुरु कुर्वति
पतिमं वदेदेवमवसाने गुरूत्तमः १९
प्रतिद्रव्यं हुनेन्मन्त्री व्याहृतिस्विष्टकृत्तमः
नैवेद्याचमनं हुत्वा श्यामा ताम्बूलमर्पयेत् २०
तद्भस्मं गृहित्वाथ शुद्धपात्रे निवेशयेत्
अष्टपुष्पकियादेवं सम्पूज्यार्घ्यं पराङ्मुखम् २१
दत्वा देवं विसृज्याथ व्याहृत्याहुतिमाचरेत्
शिवाग्निं विसृजेत्पश्चात् धूपदीपादिकं ददेत् २२
जपं कृत्वा समर्प्याथ प्रार्थयेत्स्तम्भनं कुरु
एवं दिनत्रयं कृत्वा यन्त्रं सङ्ग्राह्य बुद्धिमान् २३
शिवाग्रे स्थापयित्वा तु गन्धपुष्पादिभिर्यजेत्
साधकैस्सहितैर्विद्यात् तत्तन्मन्त्रशतं जपेत् २४
शास्तु रायतनादग्नि प्रदेशे मध्यरात्रके
बलिं दत्वा वने तत्र यन्त्रादूर्ध्वमुखं सुधीः २५
मृतमापूर्यतत्काले तत्तत् ध्यानमनुस्मरन्
आचार्यं पूजयेत्तत्र वस्त्रकाञ्चनभूषणैः २६

तत्फलं लभते मर्त्य सत्यं सत्यं दिवाकरः
सेनास्तम्भमिदं प्रोक्तं अश्वस्तम्भमिति श्रुणु २७
इत्यंशुमान् तन्त्रे सेनास्तम्भविधिपटलः

## अश्वस्तम्भनविधिः

अश्वस्तम्भनविधिं वक्ष्ये श्रूयतां रविसत्तमः
रहस्यमाचरेन्मन्त्री प्रकाशेनैव सिध्यति १
अश्वापलायनं पक्षो पलाशो वृक्षमाहरेत्
एकताल प्रमाणेन वृक्षं कुर्यात्तु देशिकः २
प्राणप्रतिष्ठां कृत्वा तु गन्धपुष्पादिनार्चयेत्
कृसरान्नं निवेद्याथ वृषमन्त्रं जपेश्छदम् ३
कैलासधवळाकार काळकण्ठप्रियावहम्
दीर्घशृङ्गद्वये नारी शीघ्रं घातय घातय ४
वृषमन्त्रमिति प्रोक्तं सर्वक्षोभनिवारणम्
प्रत्यंतद्दिनान्तन्तु पूजामेवं समाचरेत् ५
रहस्य चक्रमालिख्य ताम्रपट्टे यथाविधि
तस्य प्रतिष्ठां कृत्वा तु सम्पूज्य प्रतिवासरम् ६
पूजावसानदिवसे मध्यरात्रन्तु देशिकः
रहस्य चक्रवृषभं गृहीत्वा तु चतुष्पदे ७
महाभूत बलिं दत्वा गुरुमार्गविधानतः
अथवा काळिकोष्ठे तु हस्तमात्रं घनेत्ततः ८
अधो मुखन्तु तच्चक्रं विन्यसोर्ध्वे वृषं न्यसेत्
तत्समं मृदमापूर्य तत्रस्थित्वा गुरूत्तमः ९
रहस्य चक्रमन्त्रञ्च जपेदष्टोत्तरं शतम्
त्रयङ्गुल्यं समारभ्य पञ्चाङ्गुलसमावधि १०
चक्रविस्तारमेवं हि प्रस्तारत्वधुनोच्यते

प्रागग्रमुदगग्रञ्च दशसूत्रं प्रसारयेत् ११
पञ्चविंशति कोष्ठानि मध्यमे ग्राह्य बुद्धिमान्
धूपमध्ये तु विन्यस्य परीन्नाना समायुतम् १२
अष्टाक्षरेण कर्तव्यं पूर्वादि पदमध्यमे
श्रीं ह्रीं हौं सौं प्रकर्तव्यो महाशासु प्रकल्पयेत् १३
अन्यानि पदमध्ये तु परितो नाम सम्युतम्
अष्टाक्षरेण कर्तव्यं पूर्वादि पदमध्यमे १४
अन्यानि पदमध्ये तु बीजमुख्यं क्रमाल्लिखेत्
चन्द्रबीजं लिखेत् प्राज्ञो कोणे च पदमध्यमे १५
आग्नेयादिषु कोणेषु ऐशान्याय विशेषतः
अन्तर्द्वारस्य पार्श्वे तु अकारादि क्रमान्यसेत् १६
द्वारपार्श्वौ विना कुर्यात् तत्तत्कोष्ठस्य मध्यमे
मनसा चिन्तयेत्कर्तु परनामसमन्वितम् १७
सूर्यचन्द्रभार्गवञ्च अमृताग्रे पृथक्पृथक्
शास्तारं चैव रुद्रेशं क्षेत्रेशं वटुकं तथा १८
तत्तद्बीजं समालिख्य पूर्वादिद्वारपार्श्वयोः
एवं चक्रं समाख्यातं गुरुणोक्तं विधानतः १९
परचक्रात् समुध्यन्तु वृषं चक्रं च संस्थितम्
रहस्यं चक्रमाख्यातं गळमन्त्रमथ श्रुणु २०
प्रथमस्य द्वितीयन्तु चक्रमेकं निवेशयेत्
चतुर्थन्तु समुद्धृत्य सप्तमादि द्वितीयकम् २१
पञ्चमं पञ्चमस्यैव तच्चतुर्थमुदाहृतम्
सप्तमस्य त्रयं येन तृतीयप्रथमं भवेत् २२
चतुर्थस्य द्वितीयन्तु पञ्चमात् प्रथमाद्भवेत्
सप्तमादि समायोज्य गौरीमन्त्र समुच्चरन् २३
काळीनवाक्षरं मन्त्रं सर्वद्रव्याणि होमयेत्

पायसापूप संयासा रुज्यादीनि च पूर्ववत् २४
औदुम्बरार्कसमिधं अपामार्गञ्च पूर्वकम्
तन्मन्त्रेणैव होतव्यं शतसंख्या पृथक्पृथक् २५
शिवमन्त्रमनुस्मृत्य पूर्णाहुतिमथाचरेत्
एवं प्रतिदिनं कुर्यात् उपदेशस्य मार्गतः २६
देवि रक्षाविधानं स्य शिवपूजां समारभेत्
महिषं चैव महाकाळं सद्यो जातं द्विराण्डकम् २७
पञ्चान्तकञ्च खड्गीशं मध्येद्वीशमथोत्तरे
झषण्डशश्ममुद्धृत्य त्रिमूर्तिञ्च विनायकम् २८
क्रोधेश्वामनाकान्तं ततो लाङ्गूलनन्तथा
अनन्तपालिनञ्चैव चण्डीशं लकुळेश्वरम् २९
पुनस्सूक्ष्मञ्च झण्डीशं लकुळीशञ्च सूक्ष्मकम्
ततो विराण्डमुद्धृत्य श्रीकण्ठञ्च द्विरण्डकम् ३०
त्रिमूर्तिध्योत सोमेशान् भृगुसूक्ष्मोषसीश्वरान्
पुनरीशानसूक्ष्मौ च महाकाळञ्चलोभितम् ३१
भुजङ्गविलिनं कूर्ममेकनेत्रं यथाक्रमम्
आदौ प्रणवसम्युक्तं अन्ने स्वाहासमन्वितम् ३२
नीलकण्ठमनुप्रोक्तं यावद्भयनिवारणम्
अनेन मनुनाकृत्य दशवारं समर्चयेत् ३३
जपेत्स्वदेहरक्षार्थं तद्दिनाविधि नित्यशः
भूचक्रदेविबीजत्वां चक्रमन्त्रमनुस्मरन् ३४
सपुषष्ट्यक्षरणं मन्त्रं सर्वकर्मफलप्रदम्
प्रदोषसमये नित्यमष्टाविंशति यो जपेत् ३५
तस्य सिध्यति सर्वाणि मनसाचिन्तितानिभिः
वश्याकर्षणविद्वेष स्तम्भनोच्चाटनादिकम् ३६
अयनैव साध्यं स्यात्तस्मादेन सदा जपेत्

जपित्वा मन्त्रमदनं सङ्ग्रामे प्रविशेन्यति ३७
निश्चित्य सहजा शत्रून् कल्याणैः परिपूयते
परचक्रादि वक्ष्येहं शुद्धारं तत्र शान्तदा ३८
येन केन प्रकारेण खन्दृष्टं पदा भवेत्
चैत्यवृक्षसमीसौम्य देवालयाग्रके ३९
मृत्युञ्जयं समावाह्य कुम्भाग्रे चक्रविन्यसेत्
चक्रादीन्प्राणमादाय कर्तृकेन समन्वितम् ४०
प्राणप्रतिष्ठामार्गेण कुम्भे संयोजयेत्सुधीः
अन्यमन्त्राणि सर्वाणि शिवलिङ्गे सुयोजयेत् ४१
मृत्युञ्जयं जपेद्धीमान् सहस्त्रं वा तदर्धकम्
कुम्भान् बीजं समादाय कर्तृरङ्गे सुयोजयेत् ४२
तञ्जलेरभिषिच्याथ कर्तृभस्मञ्च दापयेत्
द्रोणं वापि तदर्धं वा पयः पाये सुपूजयेत् ४३
तच्चकादि विनिक्षिप्य पञ्चसप्तदिनान्तकम्
तदन्ते शिथिलं कृत्वा जपमध्ये व्यपोह्य च ४४
मृत्युञ्जयं शतं जप्त्वा शिवपूजां विशेषतः
अश्वस्तम्भादिमिति प्रोक्तं काम्यकर्मविधिं श्रुणु ४५
इत्यंशुमान्तन्त्रे अश्वस्तम्भनविधिपटलः

## अष्टम्याराधनम्

अष्टम्याराधनं वक्ष्ये श्रूयतां रविसत्तमः
सर्वलोकहितं पुण्यं सर्वैश्वर्यप्रदायकम् १
अनावृष्टौ ज्वरोत्पन्ने महामारी प्रकोपने
प्रवर्त्तन्तेन दिग्दाहे तद्ग्रामे रोगसम्भवे २
घृतं पूज्यं तु मोक्षं स्यात् पुत्रपौत्रविवर्धनम्
मोक्षसिद्धिकरं पुण्यं सर्वशत्रु विनाशनम् ३

तत्फलं सुखमाप्नोति रुद्रलोकेमभीष्टये
अष्टाम्याञ्च नवम्यां च चतुर्दश्याञ्च वर्मणोः ४
सङ्क्रान्ते विषुवे चैव अयने ग्रहणे तथा
कृष्णपक्षे तु अष्टम्यां विशेषं पूज्यते विधिम् ५
प्रातर्माध्यह्नसायाह्ने शिवं पूज्यत बुद्धिमान्
अहोरात्राष्टभिमुख्या परन्धा च मध्यमा ६
पूर्वविद्धाधमा प्रोक्ता अष्टम्यां शिवमर्चयेत्
प्रदोषे च कलामात्रमष्टमीं संप्रगृह्यताम् ७
एकमासे द्विपक्षे तु अष्टमीं संप्रविश्य च
यज्ञा समधिकञ्चोक्तद्विपक्षे तु शिवं यजेत् ८
यन्मासञ्चाष्टमीहीकन्तन्मासम्मूर्धमासके
सातिथिद्वितयमप्राप्तेर्हिनमासार्धकं यजेत् ९
पूर्वे तु अपराष्टम्यामपरे पूर्वमर्च्चयेत्
विप्रक्षत्रियशूद्राणामुपवासं प्रकल्पयेत् १०
द्विजानां शिवभक्तानां सर्वप्राणिहितावहम्
स्नानकर्म विधिं प्रोक्तं नववस्त्रोत्तरीयकम् ११
पादप्रक्षाळनं कृत्वा आचम्य विधिना बुधः
उत्तराभिमुखो भूत्वा भूतशुद्धिन्तु कारयेत् १२
देशिकस्य शिवोभावचन्दनं पुष्पमूर्धिनी
ऐशान्ये मण्टपे वापि वेदिकं कुण्डसम्युतम् १३
अष्टद्रोणैरलङ्कृत्य स्थण्डिलं कल्पयेद्बुधः
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् १४
वितानध्वजसंयुक्तं मुक्तादामैरलङ्कृतम्
कलशं लक्षणोपेतसूत्रेणैव तु वेष्टयेत् १५
प्रक्षाळ्य सद्यमन्त्रेण कुम्भस्थापनमारभेत्
वस्त्रकूर्चसमायुक्तं पल्लवं रत्नसम्युतम् १६

यागपूजाविधिं प्रोक्तं प्रधानं कुम्भविन्यसेत्
घृतंम् पूज्येन सम्युक्तं शिवमन्त्रेण योजयेत् १७
पुण्याहं वाचयेद्धीमान् पञ्चगव्यं समाचरेत्
द्वारपूजां ततः कृत्वा पाष्णिघातत्रयं कुरु
अभिषेकं ततः कृत्वा पूजयेत् घृतसंयुतम् १८
उष्णोदकं समायुक्तं मुद्गमाषं तिलन्तथा
क्षीरञ्च नाळिकेरञ्च फलत्रय समन्वितम् १९
शुद्धतोयं ततः कृत्वा स्नपनं विधिपूजयेत्
शुद्धतोयाभिषेकन्तु सर्वमन्त्रेण पूजयेत् २०
तुळसीबिल्वपत्रैश्च लिङ्गपीठन्तु घर्षयेत्
गन्धाद्यै शुद्धतोयेन अभिषेकन्तु पूजयेत् २१
शुक्लवस्त्रैरलङ्कृत्य शुक्लमाल्यैरलङ्कृतम्
अपूपं पायसं प्रोक्तं नैवेद्यं परिकल्पयेत् २२
धूपदीपं समादाया ताम्बूलन्तु निवेदयेत्
वृतानामुत्तमं प्रोक्तं अष्टम्यान्तु महाव्रतम् २३
वृतानां पूजनार्थाय अष्टम्यान्तु फलं भवेत्
सहस्त्रार्द्धं घृतञ्चैव रुद्रलोके महीयते २४
अष्टोत्तरशतञ्चैव घृतस्नानं समारभेत्
पुत्रपौत्रादि सिध्यर्थं पञ्चविंशत् घृतान्वितम् २५
एकविंशत् घृतञ्चैव भोगार्थन्तु विशेषतः
षोडश द्वादशञ्चैव सर्वयज्ञफलप्रदम् २६
प्रस्थपाद घृतं वापि कुडुपञ्च घृतन्तु वा
यवमात्रं मनोबुद्धि घृतं पूज्येन बुद्धिमान् २७
पूर्वायाञ्च घृतञ्चैव स्नापयेत् लिङ्गमूर्धनि
आयुरारोग्यसिद्धिं स्यात् सर्वकामफलप्रदम् २८
सषैचैव मनुष्याणां घृतानामुत्तमं फलम्

आचार्यं पूजयेत्तत्र वस्त्रं हेमाङ्गुलीयकैः २९
भक्तानां परिचाराणां यथाशक्तिविशेषतः
अष्टम्याराधनं प्रोक्तं गौर्यापूजविधिं श्रुणु ३०
इत्यंशुमान् तन्त्रे अष्टमीपूजाविधिपटलः

## गौर्यार्चनै

गौर्यार्चनविधिं वक्ष्ये श्रूयतां रविसत्तमः
एकैव शिवशक्तिस्तु मूर्तिभेदादनेकत १
मूर्तिभेदात् क्रमेणैव शक्तयस्त्रिविधास्मृताः
शक्तिर्मनो मनो गौरि भवानी च त्रिधा उमा २
निष्कळमिश्रशक्तिस्तु मिश्रास्तु सकळातिः
सकळातशक्तिभेदाश्च तत्तन्मूर्तेस्सवामके ३
लिङ्गपीठन्तु क्रिया शक्तिं नवशक्तिमिश्ररूपिणी
लिङ्गवामे स्थिता शक्ति सकळा सा मनोन्मनी ४
द्विभेदनोन्मनी रूपा द्विभुजा च चतुर्भुजा
समवेदा शिवश्शक्ति योग्यं पीठाकृतिर्भवेत् ५
दक्षिणे चोत्तरे मासं स्यमुत्तरे पादपङ्कजौ
तन्मध्ये योनिरूपं स्यात् कृतवारि भुजद्वयम् ६
तच्छेषावयवं गव्या रूपं सकळनिष्कळम्
सकळा तस्य वामे तु स्थितं वा वासनन्तु वा ७
शुक्लवर्णा द्विनेत्राय किरीटमकुटान्वितम्
सर्वाभरणसंयुक्त द्विभुजा पङ्कजासना ८
उत्फलं सव्यहस्ते तु वामहस्तप्रसारिता ९
एवं मनोन्मनीरूपं चतुर्हस्तमथापि वा
त्रिणेत्रं शुक्लवर्णाढ्यां जटामकुटमण्डितम् १०
सर्वाभरणसंयुक्ताश्चतुर्भुजसमन्वितम्

एकवस्त्रन्तु सौभाग्यं वामे काकर्णपुष्पकम् ११
अभयं पङ्कजं दक्षे वामे वरदमुत्पलम्
मनोन्मनी रूपमाख्यातं गौरीरूपमिहोच्यते १२
श्यामवर्णा द्विनेत्राञ्च गौरीदक्षकरोत्पलम्
लम्बितं वामहस्ते तु सर्वाभरणसम्युता १३
गौरीरूपमिति प्रोक्तं भवान्याकृतिरुच्यते
गौरीलक्षणवत्सर्वमासीनं वा स्थितन्तु वा १४
महेशमूर्तिभेदानां वामभागे स्थिता भवेत्
द्विनेत्रा द्विभुजाश्यामकिरीटमकुटान्विता १५
योगं भोगञ्च वीरञ्च शक्तिरेव त्रिधा भवेत् १६
योगपीथाकृतं प्रोक्तं भोगं वामे तु पूजिताम्
वीरशक्तिं स्वतन्त्रञ्च त्रिधाभेदं रवे श्रुणु १७
देवस्यालय पार्श्वे तु वामे वामे समाश्रुते
जन्नभारन्त सन्मेषु वीरशक्तिस्थिता भवेत् १८
स्नानान्ते स्नानकार्यान्तु भविष्यन्त हविर्ददेत्
नित्यहोमं नदन्ते तु द्वारादि बलिरुच्यते १९
द्वारादि बलिदेवानां तच्छक्तिं स्ववामके
बलिं सर्वत्र दातव्यं शक्तिहीनमथापि वा २०
आश्रालाय स्वशक्तिश्चेदर्चिते श्वेकद देशिकः
एकद्रव्यशुद्धिं स्यादेकत्र श्चाग्निकार्यकम् २१
तथैव बलिकार्यस्य एकसन्धेककालके
सर्वोपचारं कर्तव्यं तदन्तेन समाचरेत् २२
एवमादिषु सर्वेषु पृथक्कार्यस्वतन्त्रके
क्रियाभेदविशेषोऽस्ति स्वतन्त्राराधनं श्रुणु २३
मध्यस्नान रात्रि सालेषु स्वतन्त्रन्तत्प्रसानकम्
नित्यार्चनादि सर्वेषु स्वस्वकाले समाचरेत् २४

नित्याग्निबलिकार्यञ्च नित्योत्सवमहोत्सवम्
शिववत्सर्वकार्याणि पवित्रान्तं समाचरेत् २५
भोगाङ्गाराधनान्तं यत् स्वतन्त्रे नित्यमाचरेत्
द्वारपूजादि बल्यन्त यावत्सन्ध्या विधिं कुरु २६
एवं विन्धेषु तन्त्रज्ञशक्तिमाराधयेत्सुधीः
प्रातरुत्थाय मनसा देवीं सञ्चिन्तयेद्बुधः २७
तद्ग्रामात् बहिष्क्रम्य विरामूत्रञ्च विसर्जयेत्
शौचमाचमनं स्नानं सन्ध्यावन्दनतर्पणम् २८
भूतशुद्धिं ततः कृत्वा शेषदद्ध्यमृतप्लवम्
आत्मानं स्वहृदिव्याप्ततत्वतत्वेश्वरा न्यसेत् २९
ब्रह्मागान्यादि कलान्यासं मातृकान्यासमाचरेत्
स्वान्तस्थां शक्तिमाराध्य सोऽहं भावेन भावयेत् ३०
सर्वशान्तमयं भावं स्नानशुद्धिं समाचरेत्
तत्स्थानेषु रमापूज्य गन्धपुष्पाक्षतान्वितम् ३१
स्थानशुद्धिं ततः कृत्वा द्रव्यशुद्धिं समाचरेत्
सामान्यार्घ्यञ्च सङ्कल्प्य पात्रशुद्धिं हृदा बुधः ३२
शालिस्थण्डिलं कुर्यात् पुण्याहं वाचयेत्ततः
गव्यं पञ्चामृतं स्थाप्य स्नानद्रव्याणि सर्वतः ३३
वस्त्रं गन्धञ्च माल्यञ्च शक्तिब्रह्माङ्गमातृकैः
स्वदेहमन्त्रमनुभाव्य ललाटे तिलकं कुरु ३४
शान्तस्वरूपमात्मानमर्चयेत् भाव्यमन्त्रकैः
गुरुत्रयं समाराध्य शब्दानुज्ञासमारभेत् ३५
विघ्नेशयजनं कृत्वा भक्ष्यादीनि निवेदयेत्
नाळिकेरफलं दद्यात् निर्विघ्नत्वं प्रसीदये ३६
गन्धपुष्पादिनाभ्यर्च्य धूपदीपसमन्वितम्
द्वारमस्त्राम्बुना क्षाम्ये द्वारोर्ध्वोदुम्बरोपरि ३७

विघ्नेशं दक्षिणेभ्यर्च्य दुर्गामुत्तरदेशके
गन्धपुष्पै समभ्यर्च्य तन्मध्ये भुवनेश्वरीम् ३८
द्वारस्य दक्षिणे भागे गङ्गाञ्च योगिनन्तकः
द्वारस्य वामपार्श्वे तु काळी चैव साकिनीम् ३९
विमलञ्च सुबाहुञ्च मर्चयेत्तु कवाटयो
तत्स्कन्दपट्टिकामध्य कावेरीसत्यगर्चयेत् ४०
वृषभं पूजयेदग्रे गन्धपुष्पै स्वनामभिः
पाष्णिघातं स्त्रघराटाञ्च पुष्पाक्षतप्रतं कुरु ४१
दक्षाशाखाश्रमाश्रित्य प्रविशेदर्धमराटपे
देहळी मध्यदेशे तु शक्त्यस्त्रं सम्यगर्चयेत् ४२
गर्भगेहं प्रविश्याथ पीठाग्रे तु विशेषतः
नीलरौद्रिसमभ्यर्च्य धूपदीपं समाचरेत् ४३
पूजासंप्रार्थ्य गौर्यास्तु पाद्यमाचमनार्घ्यकम्
कृत्वा पर्युषिता पूज्य जनिर्माल्यन्तु विसर्जयेत् ४४
चराडेशीं पूजनार्थाय ऐशान्यां सङ्ग्रहेद्बुधः
अस्त्रांपुना प्रसंक्षाळ्य पीठदेशे विशेषतः ४५
शुक्लवस्त्रेरा निषस्य शुद्धतैलेन सेचयेत्
विषामलकतोयैश्च स्नापयेत् परमेश्वरीम् ४६
गव्यै वचामृतै स्नाप्य पञ्चामृतजलैरपि
शितगन्धोदकै स्नासव्य रजनीमिश्रतोयकैः ४७
उमासूक्तञ्च भूसूक्तं श्रीसूक्तं पञ्चशान्तिकम्
दुर्गासूक्तञ्च चमकं शम्भुवर्गं जपेद्द्विजः ४८
देवीमावाह्य सम्पूज्य गन्धौदैरभिषेचयेत्
मन्त्रपुष्पन्तु मन्त्राञ्च तत्काले दापयेत् बुधः ४९
सूक्ष्मवस्त्रेरा समृज्य देवी देहजलाद्रकम्
चित्रवस्त्रैरलङ्कृत्य मुकटादीनि भूषितम् ५०

स्वर्णरत्नैश्च सम्युक्तै सर्वाङ्गं योग्यभूषणैः
अलङ्कृत्य विशेषेण गन्धपुष्पासृगादिभिः ५१
पाद्यमाचमनञ्चार्घ्यं तत्तन्मन्त्रेण दापयेत्
पीठार्चनक्रमं कृत्वा पद्मस्थां शक्तिमर्चयेत् ५२
आधारशक्तिमभ्यर्च्य तस्योर्ध्वेऽनन्तमासनम्
धर्माधर्मास्त्रिरूपाश्चन्नामाद्यष्टशक्तयः ५३
तत्कन्दं पृथिवीतत्वं कालतत्वान्तनाळकम्
मायातत्वमयग्रन्थिशुद्धमायोर्ध्वपद्मकम् ५४
वामादिशक्तयश्चाष्टौ दळमूले च संयजेत्
दळाग्रे केसराग्रे च कर्णिकाग्रे तु वृत्तके ५५
आदित्यञ्चांशुमालिञ्च चन्द्रजोत्स्नासमन्वितम्
अग्निञ्च ज्वालिनी शक्तिर्मण्डलत्रयमर्चयेत् ५६
सरस्वती च रौद्री च अर्चयेत् मण्डलाधिपः
कुण्डली कर्णिका मध्ये ज्ञानशक्ति स्वरूपिणम् ५७
इच्छाशक्तिर्दक्षभागे क्रियाशक्तिस्तु वामके
तदूर्ध्वे सकळां शक्तिं द्विभुजाश्यैकवक्त्रकाम् ५८
उत्पलं दक्षिणे हस्ते वामहस्तप्रलम्बिताम्
सर्वाभरणसम्युक्तां किरीटम्कुटान्विताम् ५९
श्यामवर्णां द्विनेत्राञ्च गौरीरूपं विभावयेत्
श्रीधारात् ब्रह्मरन्ध्रञ्च द्वादशान्ता धृदिस्थितम् ६०
मन्त्रसम्पुटयोगेन ललाटात् प्राणचारिणम्
तन्मन्त्रम्मुकुळीहस्ते पुष्पयुक् शक्तिबीजकम् ६१
लक्ष्मीमूर्तै समावाह्य पाद्यं पादतले न्यसेत्
मुखेष्वाचमनं दद्यात् दर्घ्यं शिरसिविन्यसेत् ६२
तन्मूर्ध्नि पुष्पमभ्यर्च्य गन्धं सर्वाङ्गलेपनम्
पुष्पाञ्जलित्रयं दत्वा देवीं संप्रार्थयेद्बुधः ६३

ईशाद्यावरणन्देव्यो पूजयामि तवाज्ञया
गुरुपुत्रन्त्यनुज्ञात शक्ते या वरुणं यजेत् ६४
ईशानी पूरणी घोरी वमदेवी तथैव च
सद्योजातेति पञ्चैते शक्तब्रह्माङ्गपूर्ववत् ६५
सर्वज्ञत्वावतृप्तिश्च नादिबोधस्वतन्त्रता
सुनीन्त्याप्तशक्ती च नन्ताचास्त्रमन्त्रकम् ६६
एते षडङ्गसम्युक्ता पूर्ववत् सम्यगर्चयेत्
प्रथमावरणं ह्येवं द्वितीयावरणं श्रुणु ६७
धारिका दीपिका चैव उग्रा ज्योत्स्ना सुचेतनः
बलोत्कटा च धात्री च भीमरूपाषशक्तयः ६८
पूर्वादीशानपर्यन्तं क्रमेणैव स्वनामतः
द्वितीयावरणं प्रोक्तं तृतीयावरणं श्रुणु ६९
वृषाणी च सम्भद्री च देवयानी च कुन्दळी
भृङ्गिणी पुष्पगन्धी च ब्रह्मादीसौदरी तथा ७०
दिग्विदिक्षु क्रमेणैव स्वस्वनामा समर्चयेत्
तृतीयावरणं प्रोक्तं चतुर्थावरणं श्रुणु ७१
शशी सुधा च नीवी च जातरी हर्षणी तथा
शीघ्रवेगिनीशीच ईशानी चाष्टशक्तयः ७२
धात्री च भूम्नि देवी च चतुर्थावरणं श्रुणु
वज्री शक्ती च दण्डी च खड्गी पाशी तथाङ्कुशी ७३
गता त्रिशूली शत्री च पद्मा चेत्यस्त्रशक्तयः ७४
पञ्चावरणं ह्येवं क्रमेणैव यजेद्गुरुम्
तृतीयावरणं वापि त्रिवेकराणामथापि वा ७५
आवाह्य दुपचाराणि प्रत्येकं पूजयेद्बुधः
मूलमन्त्रेण सम्पूज्य गन्धपुष्पसमन्वितम् ७६
पाद्यमाचमनीयार्घ्यं धूपदीपं हृदा ददेत्

तत्काले ताडयेत् घराटां पटन्तत्रैव निक्षिपेत् ७७
नैवेद्येत्थापने काले शङ्खध्वनिसमन्वितम्
सर्वव्यञ्जनसम्युक्तं देव्यग्रे स्थापयेत् बुधः ७८
वर्णादिस्थलिकां क्ष्याम्बु त्रिपाद्युपरि विन्यसेत्
उपस्थीर्य हविपूर्य फलदद्युपदंशकैः ७९
सम्पूर्य घृतसंसिच्य पानीयं पात्रपूरितम्
धूपदीपं हृदा दत्वा वर्मेण परिषिच्य च ८०
पुष्पं वारि गृहीत्वा तु हृदयेन निवेदयेत्
पानीयन्दापयेत्पश्चात् पुनराचमनं ददेत् ८१
निर्माल्यन्तु विसृज्याथ होमदेवान् विसर्जयेत्
स्थलशुद्धिं पुरा कृत्वा पाद्यमाचमनन्ददेत् ८२
विज्ञापयेत्तु होमार्थं लब्धवानन्तु देशिकः
गत्वा कुराड समीपे तु पचनालय देशिके ८३
नित्याग्निं कारयेद्धीमान् पूर्वोक्तविधिना ततः
अन्तर्बलि विधानञ्च घराटा तु ताडयेद्बुधः ८४
देवीं पुष्पेण सम्पूज्य आचमनीयं ददेत् बुधः
परिवारालय बल्यर्थं संप्रार्थ्य ज्ञापयेत्तथा ८५
बलिबेरं समभ्यर्च्य गन्धमाल्यैरलङ्कृतम्
गन्धपुष्पेण संयुक्तं अर्घ्यपात्रसमं ततः ८६
आचार्य शिष्य संयुक्तौ घराटारवसमन्वितम्
गन्धपुष्प हविः पात्रं बलिबेरयुतन्तु वा ८७
शक्तयस्त्रेण युतं वापि भेरीघोषसमन्वितम्
द्वारादि बलिपीठान्तं स्वस्वनाममनुस्मरन् ८८
द्वारस्य दक्षिणे वामे गङ्गाश्च यमुनां क्रमात्
अग्रेषु वृषभं यष्ट्वा चाग्नेर्याममृतेश्वरीम् ८९
श्रीदेवीं दक्षिणेभ्यर्च्य तद्देशे सप्तमातृकाः

मातङ्गी निर्ऋतौ देशे देवयानीञ्च वारुणे ९०
वायव्यां मोहिनीञ्चैव चण्डेशीञ्च तथोत्तरे
भैरवीञ्च तथैशान्यां अग्रे च सर्वतो मुखीम् ९१
प्रथमावरणं ह्येवं शोभाचारस्य पार्श्वकौ
सव्ये शङ्खनिधिञ्चैव वामे पद्मनिधिन्तथा ९२
वृषेन्द्रमग्रपीठे तु द्वारबालबलिं क्षिपेत्
इन्द्राणी च स्वधां देवीं काळकण्ठी सुकेशिनम् ९३
हर्षणीं माहिषीञ्चैवन्तु रूपञ्च ++ शूलिम्
लक्ष्मीञ्च निर्ऋतौ देशे सावित्रीमीशदेशके ९४
सोमशङ्करयोर्मध्ये सुन्दरेशीं बलिंस्तु वा
द्वितीये च महापीठे तदग्रेस्त्रबलिं क्षिपेत् ९५
वज्रिणीं शक्तिनी दण्डिं खड्गिणीं पाशरूपिणीम्
अङ्कुशी दण्डधारिञ्च शूलधारिञ्च चक्रिणीम् ९६
पद्मिनीं शङ्करे देशे महापीठा व्रतं बलिम्
उग्ररूपीं सिंहवक्त्रा शुष्कोरमभयावहीम् ९७
विभीषिणीं घोररूपी विश्वधात्रीञ्च शङ्करी
अथवा पञ्चपक्षे तु क्रमो दिक् पूर्वदिक् दळे ९८
प्रमोदन्दक्षिणे चैव समुलिः पश्चिमे दळे
दुर्मुखीञ्चोक्तपत्रे विघ्नकत्रञ्च शङ्करे ९९
कर्णिकोर्ध्वे महावत्रीं महापीठादिदेवताः
एवं बलिक्रमं प्रोक्तं विशेषमधुनोच्यते १००
द्वारादि वृषपर्यन्तं शौचकद्विति विद्यते
वज्राण्याद्या विना चेत्तु शान्तिकं प्रति विधीयते १०१
इन्द्राण्याद्या विनासौख्यौ शैवक प्रथमं विना
द्वाराविध्व भनान्तञ्च सन्ध्याः प्रतिबलिं क्षिपेत् १०२
द्वितीयावरणं हीनं प्रथमावरणे बलिम्

द्वारान् भैरवपीठान्तं प्रथमे बलिमाचरेत्  १०३
मन्त्राणा बलिपीठेषु द्वितीये च बलिं क्षिपेत्
प्रथमे च महापीठे बलिन्दद्याद्विशेषतः  १०४
अम्भिनीं जम्भिनीं रौद्रीं शान्तिनिश्मवारिणीम्
पूर्वादीशानपर्यन्तं दळमूले बलिं क्षिपेत्  १०५
स्वस्वनाम्ना बलिन्दद्यात् कर्णिके सर्वतोमुखीम्
तृतीये सोपचाराणि स्तोत्रनृत्तञ्च भीतकम्  १०६
वाद्यभेदक्रमं श्रुत्वा परिवेषत्रयं क्रमात्
द्वारदेशं समानीय पादौ पाद्यं हृदा दयेत्  १०७
आरात्रिकन्तु तच्छक्तिं मूलबेरे तु दापयेत्
पाद्यमाचमनञ्चार्घ्यं पुष्पन्दद्याद्विशेषतः  १०८
फलादीनि निवेद्याथ ताम्बूलं दापयेत्क्रमात्
धूपदीपं ददेत्पश्चादारात्रिकं ददेद्धृतः  १०९
भस्मदर्पणछत्रञ्च चामरं व्यजनन्तथा
वेदश्रवणपञ्चाङ्ग द्राविडस्तोत्रवाचकम्  ११०
नृत्तगीतञ्च वाद्यञ्च शुद्धनृत्तान्तमाचरेत्
जपस्तोत्र नमस्कारे पुष्पाञ्जलि दिने पुनः  १११
चुळुकोदप्रदानान्त क्रमात्पूजां समाचरेत्
अस्त्र किञ्चिद्विशोस्ति वर्तमाना दिने दिने  ११२

## सम्प्रोक्षणै

संप्रोक्षणविधिं वक्ष्ये श्रूयतां रविसत्तम
आवर्तं प्रथमञ्चैव अनावृत्तद्वितीयकम्  १
तृतीयं पुनरावृत्तं चान्तरीञ्च चतुर्थकम्
कर्षणादि प्रतिष्ठान्तमावर्तञ्चेति कीर्तितम्  २
प्रायश्चित्तादिकञ्चैव अनावृत्तं तथोच्यते

प्रत्यङ्गोपाङ्गहीने च बेरचित्रादिहीनके ३
स्थलकर्मविहीने च पिण्डिकाब्जविहीनके
कुषणायुद्धहीने च प्रोक्षणञ्चान्तरीयकम् ४
पुनरावर्तकञ्चैव द्विविधञ्चेति कीर्तितम्
युगे युगे तु सम्पूज्य जीर्णे कालान्तरे भते ५
प्रासादं पतितञ्चैव लिङ्गञ्च लासनसम्युतम्
स्थानशक्तिं समावाह्य बालबिम्बे तु योजयेत् ६
प्रासादं पूर्ववत्प्रोक्तं कृत्वा प्रोक्षणमथाचरेत्
एवं क्रमेण विधिवत् विशालार्थविधिं श्रुणु ७
अविशालविशालार्थं मनोत्कृष्टञ्च कारयेत्
मूलालयात् समावाह्य बालबिम्बे तु योजयेत्
पञ्चरं लिङ्गमित्याहु शिवञ्चैवर्तु कारवत् ८
तच्छक्तिघटमध्ये च बालबिम्बे तु योजयेत्
तल्लिङ्गे तच्छिवञ्चैव भावयेच्छैत्रपक्षिवत् ९
लिङ्गपञ्चरमेवञ्च योजयेत् दारुपञ्जरे
तस्मात्तद्रक्षितञ्चैव शुकपञ्जरनामतः १०
विप्रवाक्यं शुभं योग्यं कारयेत्तु वशालकम्
शिल्पिश्पर्शनकर्यञ्च मनोत्कृष्टेन कारयेत् ११
नित्यपूजाविहीनञ्च सर्वकर्मविहीनकम्
तस्मात्सर्वप्रयत्नेन प्रासादञ्चैव कारयेत् १२
उद्वास्य शिल्पिनं पश्चात् मार्जनं प्रोक्षणन्तथा
मण्टपं गर्भगेहञ्च प्राकारं परिवारकम् १३
पचनालयमेवे च प्रासादं बलिपीठकम्
ततश्शुद्धिक्रमं कृत्वा पूर्ववत् कल्पयेत् बुधः १४
अष्टदिग्दहनञ्चैव तद्भस्मञ्च विवर्जयेत्
शिवसंप्रोक्षणं कृत्वा तत्तत्पीठाकृतिर्यथा १५

तथा कुण्डाकृतिप्रोक्तमग्निकार्यं समाचरेत्
सद्येनस्समिधा हुत्वा मूलेनास्यन्तु होमयेत् १६
अघोरेण चरुं हुत्वा लाजन्तत्पुरुषेण तु
मुद्गं हृदयमन्त्रेण माषन्तु शिरसा हुनेत् १७
नेत्रमन्त्रं यवं हुत्वा तिलन्वामेन भूयते
शालिमीशानमन्त्रेण गोधूमञ्चास्त्रमन्त्रतः १८
शिखामन्त्रेण नीवारं कवचेन तु सुक्तकम्
पाशुपतेन सिद्धार्थं बीजमुख्ये हुनेदधि १९
दशाक्षरेण मन्त्रेण दग्धन्तु जहुतात्ततः
शुळी हृदयमन्त्रेण दशाक्षरफलं हुनेत् २०
नाळिकेरं शिखा हुत्वा मन्त्रैर्वदितसम्युतम्
समवाताहुनीमेवञ्च स्पर्शाहुतिसमाचरेत् २१
दशाष्टद्रव्यसम्युक्तं होमयेत् देशिकोत्तमः
एवं जाकरणा रात्रौ प्रभाते स्नानमाचरेत् २२
भस्मन्यासादिकं कृत्वा सकळीकरणं कुरु
मण्डपस्यार्चनं कुर्यादग्निकार्यं समाचरेत् २३
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिञ्च शिरसा स्विष्टमग्नेति मन्त्रतः २४
कुण्डाद्देवं समावाह्य स्तम्भमध्ये तु योजयेत्
मुहूर्तान् पूर्वकाले तु सर्वातोद्य समन्वितम्
शङ्खदुन्दुभिनादैश्च सर्वघोषसमन्वितम्
स्वस्तिवाचकसम्युक्तं जीवसङ्कल्प्यमेव च २५
ब्रह्मघोषसमायुक्तन्नानाभक्तजनैर्युतम्
कुम्भनानृत्यशिरसा कृत्वा धर्मप्रदक्षिणम् २६
गर्भगेहं प्रविश्याथ लिङ्गाग्रे चैव विन्यसेत्
मन्त्रन्यासादिकं कृत्वा ध्वान्यासक्रमात्ततः २७

सम्पूज्य देशिकं चैव दक्षणां दापयेत्ततः
देशिकस्य मनस्तुष्टिद्देवसान्निध्यमेव च २८
द्देशिकं दोषयेत्तस्मात् सन्नधीकरणाय च
शुचिदेशे मृदं ग्राह्य पूर्णं समतलं कुरु २९
स्थानशुद्धिं पुनः कृत्वा गोमयालेपनं कुरु
मण्डवादिषु सर्वेषु प्राकारगर्भगेभरे ३०
एकरात्रित्रिरात्रिञ्च गोनिवासनमेव च
तस्थानं मार्जनं कृत्वा अमन्त्रमभिषेचयेत् ३१
क्षीरञ्च फलसम्युक्तं सगुञ्च निवेदयेत्
स्थानशुद्धिं ततः कृत्वा पर्यग्निकरणं कुरु ३२
अङ्कुराण्यर्पयेद्धीमान् पूर्वोक्तविधिमाचरेत्
तैलाभ्यङ्गञ्च विप्राणां तद्दिनात् प्राग्निनत्रयेत् ३३
प्राकारे मण्टपे चैव ब्राह्मणान् भोजयेत्ततः
तस्थान मार्जनं कृत्वा गोमयालेपनं कुरु ३४
शुद्धैरुद्धैति मन्त्रेण प्रोक्षयेत्पञ्चगव्यकैः
स्थानशुद्धिं मम प्रोक्तं प्रासादशुचिमाचरेत्
विघ्नेश्वरसमभ्यर्च्य पुण्याहं वाचयेत्ततः ३५
शिवाग्रे स्थण्डिलं कृत्वा नवकोष्ठं प्रकल्पयेत्
मध्यादि पदपञ्चेषु स्थापयेत्पञ्चगव्यकम् ३६
आग्नेयादिषु कोणेषु शुध्यर्थं द्रव्यसङ्ग्रहम्
नाळिकेरददेर्मुष्टिराग्नेर्यादि शिवं न्यसेत् ३७
श्रीपत्रदर्भमुष्टिञ्च नैर्ऋते विन्यसेद्बुधः
विन्यसेत् द्वारदिग्भागे स्थालिं तन्मध्यमे न्यसेत् ३८
दुद्वासिध्यर्थकञ्चैव तण्डुलं क्षीरसंयुतम्
तन्तुना दर्भमालाञ्च नववस्त्रेण सम्युतम् ३९
विन्यसेत्वीशदेशे तु हृदयादि चतुष्टये

पञ्चगव्येन संप्रोक्ष्य वायुबीजेन मार्जनम् ४०
शोधयेद्धृदयेनैव श्रीपत्रे दर्भमुष्टिना
क्षीरमिश्रेण तद्द्रव्यं विकिराण्यस्त्रमन्त्रतः ४१
कवचेन तु संवेष्ट्य तन्तुना दर्भमालया
नववस्त्रेण तम्मात्रं प्यालमव्यलतान्तकम् ४२
असुराक्षेनाशार्थं रक्षोघ्नन्तु तमाचरेत्
प्रासादपूर्वदिग्भागे अथवा दक्षिणां पिवा ४३
विघ्नेश्वरसमभ्यर्च्य पुण्याहं वाचयेत्ततः
स्थण्डिलं तत्र कुर्वीत चाष्टपत्रं सकर्णिकम् ४४
तन्मध्ये विन्यसेत्कुम्भं परिवारघटं विना
कुम्भमध्ये तु सम्पूज्य ध्यायेद्राक्षोघ्नदेवतः ४५
कपालडमरुञ्चैवन्त्रिशूलपरशुं तथा
बिभ्राणमुग्रवपुषं त्रिणेत्रं चन्द्रशेखरम् ४६
दंष्ट्राकराळविलसत् भ्रुकुटीकुटिलाननम्
भूतप्रेतपिशाचादीन् भक्षयन्तं महाप्रभुम् ४७
बडामुखाग्निसदृशं भावयेत्तु विचक्षणः
गन्धैः पुष्पैस्समभ्यर्च्य नैवेद्यं धूपदीपकम् ४८
कुम्भस्य दक्षिणे वामे स्थण्डिलं कल्पयेत्ततः
दारुपीठन्यसेन्मध्ये वस्त्रन्तस्योपरिन्यसेत् ४९
दक्षिणे सित वस्त्रन्तु उत्तरोत्तरवस्त्रकम्
तदूर्ध्वे तण्डुलन्नस्य साष्टपत्रं सकर्णिकम् ५०
दक्षिणे नाळिकेरन्तु खड्गमुत्तरभागतः
शक्त्यादि शक्तिपर्यन्तं मासनस्थं सदाशिवम् ५१
गन्धैः पुष्पैस्समभ्यर्च्य पञ्चमावरणार्चनम्
नैवेद्यधूपदीपञ्च ताम्बूलन्दापयेत्ततः ५२
पश्मादुत्तरपीठे तु खड्गैपण्मध्यमेऽर्चयेत्

महादेवी च पार्वती कृत्तिकायनि+++ ५३
ममोच्छुष्मारक्तशक्तिकाळिकाचरिडकायनि
तन्मध्ये वीरशक्तिश्च अर्चयेत्तु विचक्षणः ५४
नवशक्तिं समावाह्य खड्गन्तु मध्यमन्न्यसेत्
खड्गेशमूर्तिमावाह्य तन्मूलं मन्त्रमुच्चरन् ५५
करवाळकपालोद्यत्करशार्दूलवाससम्
कट्टभासोल्लसद्वक्त्रं त्तघघोरो मुखनस्वनम् ५६
रत्नकुरडलकेयूरज्वलद्धावकसन्निभम्
एवं ध्यात्वा समभ्यर्च्य खडेशं मन्त्रवित्तमः ५७
असिताङ्गोरुरुश्चरडः क्रोधा उन्मत्तभैरवः
कपालभीषणश्चैव संहारश्चाष्टभैरवः ५८
पूर्वादीशानपर्यन्तं अर्चयेत् स्वस्वनामतः
नैवेद्यन्धूपदीपञ्च अस्त्रमन्त्रेण देशिकः ५९
कुम्भाग्रे स्थरिडलं कल्प्य नवकेषु प्रकल्पयेत्
मध्ये रक्षोघ्नमावाह्य रक्तपुष्पै समर्चयेत् ६०
ब्राह्मणादि वीरभद्रान्तं स्वस्वनामरेर्चयेत्
पाद्यमाचमनञ्चार्घ्यं गुळान्नञ्च बलिन्ददेत् ६१
बलिमरडलपूर्वे तु अग्निकार्यं समाचरेत्
आधानादिह्वान्तं अग्निकार्योक्तमाचरेत् ६२
राक्षोस्मि मूर्तिमावाह्य वह्निमध्ये तु कल्पयेत्
द्रव्यं प्रति विशेषेण तन्मूलेनैव होमयेत् ६३
रक्षोघ्न सूक्तमन्त्रेण प्रतिसर्वसमाचरेत्
++ दहशा इति मन्त्रेण तज्जलेनैव संघृतम् ६४
क्रमादाज्येन हुत्वा सम्पादं गृह्य विबुद्धिमान्
पूर्णाहुतिन्ततः कृत्वा स्विष्टान्तं होममाचरेत् ६५
वह्निं सम्पूज्य वैशं कुम्भमध्ये तु योजयेत्

कुम्भस्थं पीठसंयुक्तं खड्गस्थं स्वहृदे यजेत् ६
प्रासादशुद्धिमेवन्तु तज्जलं संप्रोक्ष्य तास्त्रतः
बिम्बशुद्धिं ततः कृत्वा चतुश्शुद्धिक्रमं ततः ७
शिवाग्रे स्थण्डिलं कल्प्य युगकोष्ठञ्च कल्पयेत्
सकळीकरणं कृत्वा पुण्याहं वाचयेत्ततः ८
आग्नेय्यादि चतुः कुम्भान् स्थापयेत्तु विचक्षणः
वृषशृङ्गे च सुक्षेत्रे समुद्रे गजदन्तके ९
पर्वते च नदीतीरे वल्मीके कर्कटावने
मृताष्टकं जलैर्युक्तं बीजमुख्येन मन्त्रतः १०
पलशोदुम्बराश्वर्थम्मधुकल्वक्षपाटलि
जम्बूक्त्वक्भिस्समायुक्तं दशबीजं न्यसेत्ततः ११
गोक्षीरसहदेवी च विष्णुक्रान्ती च मल्लिका
रात्रिपूर्णसमायुक्तं क्षुरिकामन्त्रमुच्चरन् १२
पूर्वाग्रश्चाकुशाग्रञ्च स्थलपट्टलसर्षपम्
भद्रश्चन्द्रेण पुरुषञ्च संहितामन्त्रमुच्चरन् १३
तत्तस्थापनमन्त्रेण बेरचैवाभिषेचनम्
तज्जलं नैव कर्तव्यं पुष्पमूर्ध्निञ्च विन्यसेत् १४
बेरशुद्धि क्रमं ह्येवं फलादीनि निवेदयेत्
चतुश्शुद्धिक्रमं प्रोक्तमवगाहक्रमं ततः १५
पञ्चगव्येन संस्थाप्य पञ्चब्रह्मामनुस्मरन्
एकरात्रित्रिरात्रिं स्यात् लिङ्गे चैवापगाहकम् १६
औदुम्बराश्वर्यवृक्षपनसैव विशेषतः
गोळकावत्सत्य कृत्वा मस्थकवर्षितम् १७
कर्माङ्गुलोत्तमञ्चैव चतुर्थाङ्गुलमध्यमम्
अधमं त्यङ्गुलं चैव विविरिञ्चैव कल्पयेत् १८
दारूणायन्त्रमेवञ्च पीठोर्ध्वे सप्रमाणतः

मुद्गचूर्णञ्च पिष्टा च विव++ञ्चैव बन्धयेत् १९
अवगाहक्रमं प्रोक्तं लेपनद्रव्यसम्युतम्
एलालवङ्गकच्चोलं तापूतिफलं म्मुरम् २०
चन्दनागरुकर्पूरमुशिरं कुंकुमैर्युतम्
प्रत्येकं प्रोक्षणं कृत्वा हिमतोयेन मिश्रितम् २१
लिङ्गस्य लेपनं कृत्वा एकाहञ्चोषिको निशि
अपरे दिनमारभ्य उदकं स्नानमाचरेत् २२
स्थापये नवकुम्भन्तु नवशक्त्याधिदैवताः
सकूर्चान् स्थापिधानञ्च स्वस्त्रान्हेम संयुतान् २३
सर्वद्रव्य समोपेतान् नाळिकेफलैर्युतान्
उदकोदकमेवन्तु पात्रोदकमिति स्मृतम् २४
बन्धोदकक्रमञ्चैव मूलोदकफलोदकम्
वल्कलोदकमेवञ्च पुष्पोदकमिति स्मृतम् २५
शक्त्योदकततः पश्चामन्योदकमतः परम्
आमकुम्भजलञ्चैव हिमतोयसमन्वितम् २६
नाळिकेरोदकञ्चैव उदकोदकक्रममुच्यते
तुळसीबिल्वपत्रञ्च धातकी च तपस्विनीम् २७
अपामार्गशमीञ्चैव पत्रोदकमिहोच्यते
चन्दनं कृष्णलोहञ्च शं परेण शिरकुम्भकम् २८
हरिबेरञ्च कर्पूरं कोष्ठञ्चानि फलं मुरम्
उदकेन समायुक्तं गन्धोदकमिहोच्यते २९
उत्फलस्य तु कन्दञ्च कन्दनीलोत्फलन्तथा
कुमुदस्य तु कन्दञ्च रक्तपद्मस्य कन्दकम् ३०
उशिरं मिरुबेरञ्च उक्तमुलोदकं भवेत्
मायुरञ्चतुरङ्गुल्यं बिल्वञ्चैव कपिर्थकम् ३१
निर्गुण्डिका पञ्चैव एतस्या वल्कलोदकम्

पुन्नाकुलञ्चैव नन्द्यावर्तञ्च धूत्तुरम् ३२
श्वेतार्कवत्रिदळैर्युक्तं पुष्पोदकमिहोच्यते
कोष्टञ्च कुटजमेघञ्चन्दनं कुङ्कुमन्तथा ३३
कर्पूरोशिरसम्युक्तं शान्त्योदकमिहोच्यते
माधुरामलगीञ्चैव गोरोंजनमनश्शिला ३४
निर्गुण्डीगिरिकर्णी च र्युक्तमात्योदकं भवेत्
नवोदकक्रमं प्रोक्तं जलधारं समाचरेत् ३५
मत्स्य कूर्मञ्च रूपञ्च स्वर्णनैव तु विन्यसेत्
पद्मनाळसमायुक्तं धारापात्रञ्च विन्यसेत् ३६
हेमनाळसमायोज्य जलधारं समाचरेत्
उदयामुद्यान्तञ्च जलधारं समाचरेत् ३७
लिङ्गशुद्धिक्रमं प्रोक्तं वेदपारायणं परम्
शिवसङ्कल्पमेवञ्च ततो मारुतसूत्रकम् ३८
श्रीसूक्तं पवमानञ्च पुरुषसूक्तं त्र्यम्बकम्
स्कन्दसूक्तन्नवर्गञ्च विष्णुसूक्तञ्च शान्तिकम् ३९
वेदपारायणं प्रोक्तं शान्तिहोमन्ततः परम्
मूर्तिहोमदशाहोमं पश्चात्कौतुकबन्धनम् ४०
अष्टगन्धञ्च सम्युक्तं लेपयेत् लिङ्गमस्तकान्
कौतुकं बन्धयेद्धीमान् पूर्वोक्तविधिना सह ४१
लिङ्गे च रुद्रभागे च पीठे च नाळमध्यमे
बिल्वैश्च पङ्कजैश्चैव अशोकं पाटली तथा ४२
नन्द्यावर्तपलाशञ्च द्रोणं पुन्नागमल्लिकैः
रक्तपद्मञ्च कल्हार नीलोत्पलदळान्तकम् ४३
श्वेतार्कञ्चैव धूद्धूरश्वेतमन्दारमेव च
पीठलिङ्गावसानञ्च पूरये लिङ्गमस्तकान् ४४
लिङ्गात्पीठावसानञ्च नववस्त्रेण वेष्टयेत्

मराडपस्यार्चनञ्चैव पूर्वोक्तविधिमाचरेत् ४५
ततोपालग्रहं गत्वा स्नपनैरभिषेचयेत्
नैवेद्यन्दापयित्वा तु धूपदीपं समाचरेत् ४६
यात्राहोमं समायुक्तं पूर्वोक्तविधिमाचरेत्
लिङ्गाग्रे स्थरिडलं कल्प्य पद्ममष्टदळं लिखेत् ४७
स्थरिडले विन्यसेत्कुम्भवर्द्धनीन्तस्य वामके
सकूर्चोपल्लवोपौन नवरत्नसमन्वितम् ४८
वस्त्रेरौव ++ कुम्भमध्ये तु वेष्टनम्
उदकेन समायुक्तं नाळीकेरसमन्वितम्
लिङ्गाद्देवं समावाह्य कुम्भमध्ये तु विन्यसेत् ४९
पीठात् देवी समावाह्य तत्तद्बीजसमन्वितम्
जीर्णोद्धारक्रमञ्चैव ++ अथवाग्निदग्धकम् ५०
सर्वालङ्कारसंयुक्तं क्षाळनञ्च समन्वितम्
वेदिकोपरि संस्थाप्यां ईशानेन तु मन्त्रतः ५१
तस्य वामे तु वर्द्धन्यां स्थापयेद्धृदयेन तु
परिवारघटाश्चैव तत्तस्थाने तु विन्यसेत् ५२
गन्धपुष्पादिभिश्चैव अर्चयेत्तु विचक्षणः
ऋग्वेदं पूर्वदिग्भागे यजुर्वेदन्तु याम्यके
पश्चिमे सामवेदन्तु अथर्वञ्चोत्तरे तथा ५३
एतत्स्थानमभावे तु पश्चिमेश्चैव विन्यसेत्
कुम्भं प्रतिविशेषेण चत्वारो वेदपारगान् ५४
तत्तन्मन्त्रजपित्वा तु कुम्भसंस्पशतत्ततः
पञ्चदानसिमञ्चैव ब्रह्मा प्रीतिकरं भवेत्
मुहूर्तन्निरीक्ष्य देवगुरवे सन्निवेशयेत् ५५
आचार्यस्सुप्रसन्नात्मलिङ्गस्य दक्षिणे स्मितः
कुम्भान् बीजं समादाय स्नापयेत्परमेश्वरम् ५६

वर्द्धन्याञ्च मनोन्मन्यां बीजमादाय पूर्ववत्
विद्येशान् बीजमादाय इन्द्रादीशान्तकः क्रमात् ५७
कुम्भस्थैश्च जलश्चैव तत्तस्थानाभिषेचयेत्
वेदकुम्भानभिषेकञ्च मन्त्रान्नञ्च निवेदयेत् ५८
प्रायश्चित्तार्थमेवञ्च स्नपनैरभिषेचयेत्
मन्त्रपुष्पन्ततो दद्यात् मन्त्रान्नञ्च निवेदयेत् ५९
वस्त्रैराभरणैर्माल्यैरलङ्कृत्यविशेषतः
महाहविर्निवेद्यञ्च नित्याग्निं कारयेत्ततः ६०
नित्योत्सवादिकं कृत्वा पूर्ववत्सर्वमाचरेत्
मोक्षार्थी लभते मोक्षः पुत्रार्थी लभतेत्सुतम् ६१
ग्रर्थार्थी ग्रर्थमाप्नोति जयार्थी जयमाप्नुयात्
इति लोके सुखं प्राप्य सोन्ते सायुज्यमाप्नुयात् ६२
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्
इत्यंशुमान् तन्त्रे संप्रोक्षणविधिपटलः

## ब्रह्मकूर्चम्

ब्रह्मकूर्चमहं वक्ष्ये श्रूयतां रविसत्तम
रोगनाशकरञ्चैव ग्रपमृत्युविनाशनम् १
पुत्रपौत्रं समृध्यर्थं भोगमोक्षफलप्रदम्
सर्वाभीष्टप्रदञ्चैव शत्रुपीडाविनाशनम् २
ग्रहदोषविनाशार्थं ब्रह्मकूर्चाभिषेचनम्
तस्मात्सर्वप्रयत्नेन ब्रह्मकूर्चं समाचरेत् ३
पञ्चभावः समुत्पन्नाः पञ्चब्रह्मैरधिष्ठितम्
पञ्चमन्त्रससमायुक्तं पञ्चाक्षरकलामयम् ४
तस्मात्पञ्चविभेदेन ब्रह्मकूर्चमिति स्मृतम्
श्वेतायां क्षीरमित्युक्तं धूम्रा या दधिरुच्यते ५

गोमयञ्चैव कृष्णायां गोमूत्रं कपिला तथा
रक्तायाञ्च घृतञ्चैव पञ्चगव्यं सङ्ग्रहेत् ६
अभावे सर्ववर्णानां गव्यं सङ्गृह्य बुद्धिमान्
पयसा शत्रुनाशस्यात् दधिपुत्रविवर्द्धनम् ७
गोमयं रोगनाशं स्यात् गोमूत्रं श्रीप्रदायकम्
घृतं पूज्यन्तु मोक्षं स्यात् पञ्चगव्यप्रकीर्तिताः ८
घृतं वै प्रस्थमेकञ्च दधिद्विप्रस्थमेव च
त्रिप्रस्थञ्चैव गोक्षीरं चतुः प्रस्थन्तु गोमयम् ९
षट्प्रस्थञ्चैव गोमूत्रं उत्तमञ्च प्रकीर्तितम्
तदर्धमध्यमं प्रोक्तं तदर्धमधमं भवेत् १०
गोमूत्रं गोमयञ्चैव जलेनैव तु पूरयेत्
तज्जले गोमूत्रसम्बन्धात् पूर्वमानेन सङ्ग्रहेत् ११
शताष्टकलशेनैव स्थापयेत्पञ्चगव्यकम्
कोष्ठं प्रतिविशेषेण उपकुम्भञ्च विन्यसेत् १२
मण्डपं कारयेद्धीमान् पूर्वोक्तविधिना सह
शालिभिस्थण्डिलं कृत्वा स्नापनोक्तविधानतः १३
शालिस्थण्डिलपूर्वे तु स्थण्डिलं कारयेद्बुधः
नवकोष्ठञ्च सङ्गृह्य पञ्चगव्यविधानवत् १४
कूर्चं वै पञ्चकाशैस्तु कलशानां पृथक्पृथक्
अष्टोत्तरशतैः काशैः कूर्चं ब्रह्मघटस्य तु १५
पञ्चगव्यञ्च सङ्ग्राह्य ब्रह्मकुम्भञ्च पूरयेत्
परिवारघटान् सर्वान् गव्येनापूर्वदेशिकः १६
पञ्चब्रह्मसमुच्चार्य घटं प्रति समापयेत्
शक्त्यादि शक्तिपर्यन्तं आसनं संप्रपूजयेत् १७
पञ्चब्रह्ममयं देवं ध्यायेत्कुम्भस्य मध्यमे
मन्त्रं पदञ्च वर्णञ्च तत्वञ्च भुवनं कला १८

अर्चयेत्तु षडध्वानं मूलमन्त्रैस्समर्चयेत्
धूपदीपादिकं दत्वा वामादीन् परितो यजेत् १९
कलशान् शतसंख्या च शतरुद्रैस्समर्चयेत्
शान्तिहोमं ततः कृत्वा पश्चात् लिङ्गान्तिकं व्रजेत् २०
लिङ्गशुद्धिं ततः कृत्वा नीराञ्जनमथाचरेत्
ब्रह्मकुम्भं समादाय व्योमव्यापि समुच्चरन् २१
ब्रह्मकूर्चं समादाय विन्यसेल्लिङ्गमूर्धनि
गव्येन स्नापयेश्शुद्धं पञ्चब्रह्ममनुस्मरन् २२
ब्रह्मकूर्चं विधिप्रोक्तं शताभिषेक शृणु
इत्यंशुमान् तन्त्रे ब्रह्मकूर्चविधिपटलः

## राजरक्षा

राजरक्षाविधिं वक्ष्ये श्रूयतां रविसत्तम
विप्रतं सम्प्रदञ्चैव द्विविधन्तत्प्रकीर्तितम् १
विप्रतं भस्मसम्युक्तं सम्प्रता रोचनादिकम्
मासर्क्षे जन्मनक्षत्रे षडशीति मुखेऽपि च २
अयने चन्द्रसूर्यस्य ग्रहणे कुहुकालके
षष्टाष्टद्वादशे मासे शूलनक्षत्रमेव च ३
यद्धारम्भाय साने च दूतरोगस्य सम्भवे
पूजयेन्नृपरक्षार्थमनेन विधिना बुधः ४
कर्मारम्भदिनात् सर्वे नवमे सप्तमेऽपि वा
शिवमाराध्य विधिवत् अर्चयेत् कृष्णवर्णताम् ५
गोमयं सद्यमन्त्रेण भूमावपति सङ्ग्रहेत्
सहदेवीं शिवा बन्धून् पञ्चाङ्गेन समन्वितम् ६
वामदेवेन मन्त्रेण पिण्डकृत्वविचक्षणः
शोषणं बहुरूपेण पुरुषेणैव वाचनीम् ७

ईशेन ग्राहयेद्धीमान् कलामन्त्राभिमन्त्रतः
मृत्पात्रे वाब्जुपात्रे वा निक्षिपेद्धृदयेन तु ८
मुखवस्त्रेण संवेष्ट्य गन्धपुष्प समन्वितम्
ग्रामप्रदक्षिणं कुर्यात् सर्वालङ्कारसम्युतम् ९
शिवाग्रे स्थापयेद्विद्वारधिवासनपूर्वकम्
पूजयेद्गन्धपुष्पाद्यै मूलेनैव तु विचक्षणः १०
ततो मण्डपमासाद्यर्वितानाद्यैर्विचित्रितम्
विस्मृतं नवधा भज्य मध्ये व्योमपदग्रहेत् ११
पदैकेन चतुर्दिक्षु दिशि भद्रसमन्वितम्
मुक्तिमात्रसमुत्सेधन्दर्पणोदरसन्निभम् १२
दिशि भद्रोन्नतं विद्धि चतुर्भागविहीनकम्
सोपवेदि प्रकर्तव्यं तच्च भागार्हभागधा १३
नवाग्निर्व्याथ पञ्चाग्निनेकाग्निर्वाथ कल्पयेत्
कुण्डानि कारयेत्तत्र पूर्वोक्तविधिना बुधः १४
मेवं लेपनं कृत्वा शाल्यादिभिविचित्रयेत्
पुण्याहं वाचयेद्विद्वान् पञ्चगव्यसमन्वितम् १५
प्रोक्षयेत्पुरुषेणैव पावमानमुदीरयन्
शालिभिश्च सुभिद्रोणै स्थण्डिलं कारयेत्ततः १६
तदर्धैस्थण्डिलै भूष्य तदर्धैश्च तिलैरपि
लाजैः पुष्पैः परिस्तीर्य पञ्चवर्णेन पूरयेत् १७
वस्त्रैरावेष्ट्य तद्वेदिनानलङ्कारसम्युतम्
तन्मध्येब्जं प्रकर्तव्यं दळाष्टकसमन्वितम् १८
नवकुम्भान् समादाय क्षाळयेदस्त्रमन्त्रतः
तन्तु मन्त्रेण नावेष्टद्विद्वान् गन्धाक्षसदृशान्तरम् १९
मण्डपस्यैशदिग्भागे स्थापयेच्च त्वधोमुखान्
तोरणं कलशानस्त्रान् दिक्पालादिदिशक्रमात् २०

पूजयेत् गन्धपुष्पाद्यै तत्तन्मन्त्रेण देशिकः
ततस्सम्पूज्य गन्धाद्यै वेदिकोर्ध्वे शिवासमम् २१
भृङ्गे सत्येन्तरिक्षे वा समय्यकपदेऽपि वा
द्वादशाङ्गुलमानेन मण्डलं स्वातिकान्वितम् २२
सितरत्नयुतं वाथ पीतरत्नं युतन्तु वा
युगलिङ्गं समायुक्तं स्वस्तिका संप्रकल्पयेत् २३
स्थालिकां विन्यसेत्तत्र शालिपिष्टैर्विचक्षणः
द्वादशाङ्गुलमानेन वृषतं शयनान्वितम् २४
सर्वावयवसम्युक्तं कल्पयेत् कल्पवित्तमः
पञ्चवर्णैरलङ्कृत्य सर्वाभरणभूषितम् २५
खरशृङ्गस्य क++ वृषणञ्चातिरत्नकम्
शृङ्गाग्रबालपादन्नं पीतवर्णेन भूषितम् २६
भ्रूवातमानरेखाणां कृष्णवर्णमिति स्मृतम्
श्यामै शिवासनं कल्प्य शेषाङ्गं शुक्लवर्णकम् २७
सर्वकृष्णैरलङ्कृत्य धूपदीपसमन्वितम्
पूजयेत् गन्धपुष्पाद्यैस्तेन गायत्रिय बुधः २८
जीवन्यासं ततः कृत्वा तद्बीजेन समन्वितम्
दत्वा पाद्यानिकादीनि तन्मूलेन विचक्षणः २९
ताराणादाय वृषभं शङ्खध्वनि समन्वितम्
पूर्वस्य उत्तरास्यं वा स्थापयेद्वेदिमध्यमे ३०
पूर्वाग्रमष्टसाहस्त्र धवळाक्षतसम्युतम्
शृङ्गान्तरे समभ्यर्च्य पापभक्षणमन्त्रतः ३१
हविर्निवेदयित्वा तु मुद्गभिन्नसमन्वितम्
पानीयाचमनं दत्वा धूपदीपं ददेत् बुधः ३२
ततो देवालयं गत्वा गीतवाद्यसमन्वितम्
भस्मकुम्भे समादाय वस्त्रन्तद्विन्यसेद्बुधः ३३

नवकं दक्षिणे भद्रेत् स्नापयेत् पूर्ववर्त्मना
पञ्चमे दश पुष्पैश्च नीराञ्जनमथोत्तरे ३४
विन्यसेत् गन्धपुष्पाद्यै हृदयेन विचक्षणः
जप्त्वा रक्षोघ्नकं मन्त्र शृणुष्वादि जलं क्रमात् ३५
धूपदीपै समभ्यर्च्य शुद्धान्नञ्च निवेदयेत्
कुण्डान्तिकं ततो गत्वा ततस्संस्कारमारभेत् ३६
आदानादि विवाहान्तं कल्पयेत् पूर्वमार्गतः
तन्मध्ये देवदेवेशं पञ्चवक्त्रसमन्वितम् ३७
डाडिमी पुष्पसङ्काश दशदोर्भिस्समन्वितम्
पीतवस्त्रपरीधानं पीतमाल्यानुलेपनम् ३८
वज्रासि टंकमालाञ्च अभयन्दक्षिणे विभुः
घण्टावरदपाशान्या नागमङ्कुशवामके ३९
मनोन्मन्या समायुक्तं पञ्चावरणसम्युतम्
पूजयेत् गन्धपुष्पाद्यैस्तन्मन्त्रेणैव देशिकः ४०
इन्धनामाज्य समिधा धूपन्दधि यवम्मधु
तिलमाषगुळमुद्गं सक्तुसिद्धार्थकं फलम् ४१
सितपूपञ्च पूर्वाग्रं होमद्रव्यन्दशाष्टधा
मृत्युञ्जयार्थं मन्त्रेण सर्वद्रव्यं क्रमाद्धुनेत् ४२
प्रत्येकं शतमर्धं वा तदर्धं वा हुतञ्चरेत्
द्रव्यान्ते व्याहृतिं हुत्वा भस्मकुम्भं स्पृशेत्ततः ४३
गन्धपुष्पैस्समभ्यर्च्य धूपदीपन्ददेत् गुरुः
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत् ४४
विधिना वह्निमभ्यर्च्य सर्वद्रव्यं हुतञ्चरेत्
ततस्विष्टाहुतिं कृत्वा पूर्णाहुतिमथाचरेत् ४५
गन्धैः पुष्पै समभ्यर्च्य विसृजेदग्निदैवतम्
भस्मकुम्भं समादाय सकळीकरणं कुरु ४६

अङ्गाक्षरकलान्यासं श्रीकण्ठादिन्यसेत् बुधः
जप्त्वा चाष्टोत्तरशतं पापभक्षणमन्त्रतः ४७
रुद्रशान्तिमनुज्ञात्वा साध्यनाम पुरस्सरम्
वेदध्वनिसमायुक्तं स्तोत्रध्वनिसमायुतम् ४८
गीतवाद्यसमायुक्तं कृत्वा धामप्रदक्षिणम्
शिवाग्रे स्थण्डिलं कृत्वा सर्वालङ्कारसम्युतम् ४९
सकळं मध्यमे स्थाप्य भस्मपूर्वे तु विन्यसेत्
नवकन्दक्षिणे स्थाप्य नीराञ्जनमथोत्तरे ५०
पश्चिमे शङ्खपुष्पाणि विन्यसेद्देशिकोत्तमः
गणेशं पूजयेत्पश्चात् द्वारदेशं समर्चयेत् ५१
लिङ्गशुद्धिन्ततः कृत्वा पञ्चगव्यामृतैरपि
अर्चयेद्दीपदानान्तं मन्त्रेण तु विचक्षणः ५२
नवकैस्नापयेद्देवं मूलमन्त्रमनुस्मरन्
मन्त्रपुष्पन्ददेद्विद्वान् मन्त्रान्नञ्च निवेदयेत् ५३
वस्त्राभरणगन्धाद्यैरर्चयेत्परमेश्वरम्
कुम्भान् भस्मं समादाय लिङ्गमूर्ध्नि दापयेत् ५४
धूपदीपसमभ्यर्च्य वृषमूलेन देशिकः
स्तोत्रसङ्गीत नृत्ताद्यै दोषयेत् वृषभेश्वरम् ५५
ततस्सायाह्नसमये धूपदीपावसानके
नीराञ्जनं समादाय शिवाग्रे स्थापयेत् बुधः ५६
निवृत्यादिकलामन्त्रैरर्चयेर्मुक्तपुष्पकैः
पद्मञ्च शूलमुद्राञ्च दर्शयेद्दीपसन्निधौ ५७
सगुत्गुलु घृतैर्युक्तन्धूपामोदसमन्वितम्
देवाग्रे दर्शयेद्विद्वान् लिङ्गमूर्ध्ना परिस्त्रिया ५८
भ्रामयेत्जलमन्त्रेण अवतीर्य शनैश्शनैः
एकं वा द्वद्विवाहं वा त्रिवारं वा विचक्षणः ५९

पूर्ववद्भ्रमणं कुर्यात् प्रणवेन विवर्जयेत्
ब्राह्मणैर्वाधनारिभि वाहयित्वा विचक्षणः ६०
प्रदक्षिणं ततः कृत्वा वाद्यध्वनि समन्वितम्
पीठाग्रे वा वृष्टाग्रे वा त्रिपादे वा चतुष्पथे ६१
नीराञ्जनं परित्यज्य बहुरूपमनुस्मरन्
परितस्सेचनं कुर्यात् सामान्यार्घ्य जलेन तु ६२
पादप्रक्षालनं कृत्वा प्रविशेदालयं कुरु
दशपुष्पश्शिवं यष्ट्वा दशबीजेन देशिकः ६३
पुष्पाञ्जलि त्रयन्दत्वा अभीष्टं प्रार्थयेत् गुरुः
सन्ध्यान्तरे पदन्याज्य वृषभाञ्जलि मध्यमे ६४
भस्मं विसृज्य धार्येण शुद्धपात्रे विनिक्षिपेत्
कवचेन तु संरक्ष्य मुखं वस्त्रेण वेष्टयेत् ६५
ततस्साध्यं समादिय्य कल्पये रुचिरासनम्
अनाग्रह शिवं ध्यात्वा प्राङ्मुखोदङ्मुखस्स्वयम् ६६
मूलेन साधमालोक्य चूडादि चरणान्तकम्
विन्यसे दक्षिणे पार्श्वे भस्मकुम्भं विचक्षणः ६७
निष्कमात्रं समादाय साध्यस्य शिरसोपरिः
प्रणवेन समुद्धृत्य त्रिवारं देशिकोत्तमः ६८
चूडादिपादपर्यन्तं पदाचुडवसानकम्
त्रिवारं व्यापकं कुर्यात् पापभक्षणमन्त्रतः ६९
षडङ्गादिन्यसेद्भक्ष्या मृत्युञ्जयमनुञ्जपेत्
प्राणायामक्रमेणैव साध्यात्मानञ्च रक्षयेत् ७०
साध्यस्मि शिरसंस्पृष्य मूलमन्त्रशतं जपेत्
शिवाङ्गै ब्रह्ममन्त्रैश्च व्योमव्यापि जपेत् बुधः ७१
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्
राजरक्षाविधिं प्रोक्तं मृत्युञ्जयविधिं श्रुणु ७२

इत्यंशुमान्तन्त्रे राजरक्षाविधिपटलः

## जपलक्षणम्

जपस्य लक्षणं वक्ष्ये श्रूयतां रविसत्तम
सर्वरोगविनाशार्थं सर्वपापहरं ततः १
जपञ्चतुर्विधञ्चैव सर्वेषां जपकांक्षिणाम्
मानसञ्चैव कर्णोष्ठमुपांशुद्युक्तमेव च २
व्यक्ताद्दशगुणोपेतांशु तस्मात्कर्णोष्ठमं शतम्
सहस्त्रं मानसन्तस्मादङ्गुल्यादि जपं श्रुणु ३
अङ्गुल्या जपसंख्या तु एकमेक फलं भवेत्
रेखादष्टगुणं प्रोक्तं पुत्रदीपफलैर्दशः ४
शतं वै शङ्खमणिभिः प्रवाळैश्च सहस्त्रकम्
स्फटिकं शत साहस्त्रं मौक्तिकं लक्षमुच्यते ५
पद्माक्षं दशलक्षं स्य स्वर्णाक्षं कोटिरुच्यते
तुळसी सितपद्माक्षं जपकोटि फलं भवेत् ६
कुशाग्रदशकोटिं स्या रुद्राक्षं चेत्यनन्तकम्
शिवमन्त्रं जपेत्पश्चात् शक्तिमन्त्रं विशेषतः ७
उत्तमञ्चिन्तया चैव मध्यमं जिह्वया तथा
अधमन्दन्तमोष्ठस्यामित्येते जपलक्षणम् ८
गेहस्य पूर्वदिग्भागे जपेदायुष्य वर्द्धनम्
अग्नौ तु कलहं विद्यात् दक्षिणे ज्ञानसिद्धिदम् ९
नैर्ऋतौ मारणं कुर्यात् प्रतीच्यामोक्षमाधकम्
आकर्षणन्तु वायव्यां सौम्यदेशे श्रियावहम् १०
उच्चाटनं त्वीशदेशे मध्यमे चार्थसिद्धिदम्
शिवाग्रे सर्वसिध्यर्थमित्येते जपलक्षणम् ११
पूर्वास्याभिमुखं वश्य दक्षिणे त्वाभिचारकम्

पश्चिमे धनदं विद्यात् उत्तरे शान्तिकारणम् १२
आग्नेर्या कर्षणञ्चैव नैर्ऋतेर्मारणं तथा
उच्चाटणञ्च वायव्ये मैशान्ये मुक्तिदायकम् १३
ग्रहे जपं समं विद्यात् गोष्ठे शतगुणं विदुः
पुण्यारम्ये तथारम्ये सहस्रमधुनोच्यते १४
अयुतं पर्वते पुण्ये नद्यां लक्षमुदाहृदम्
वटवृक्षसहस्रञ्च अयुतं बोधवृक्षके १५
आरश्वधैव बिल्वे च दिव्य वृक्षे च लक्षकम्
नदीतटाकतीरे च वने चैव सहस्रकम् १६
सूर्यस्यान्दक्षिणोरिद्गो दीपस्य च जलस्य च
विप्राणाञ्च गवाञ्चैव सन्निधौ जपलक्षणम् १७
कोटिदेवालये प्राहुरनन्तं शिवसन्निधौ
वंशासनेन दरिद्रं स्यात् पाषाणे स्यान्ते फणे १८
तृणासने यशोहानि पल्लवे चित्तविभ्रमम्
धरण्डा दुःखसम्भूतं सौभाग्यं दारुकासने १९
वस्त्रासने व्याधिनाशं कम्बले दुःखमोचनम्
कृष्णाजिने ज्ञानवृद्धिः मोक्षश्रीव्याघ्रचर्मणी २०
पञ्चविंशति रुद्राक्षं मोक्षार्थीनां जपस्मृतः
सप्तविंशति मुख्यार्थ पुष्यार्थञ्चाष्टविंशतिः २१
त्रिंशत् जयार्थमेवोक्तं दशपञ्चाभिचारकम्
एवमेव समाख्यातं जपसंख्या तत श्रुणु २२
सहस्रं वा तदर्धं वा तदर्धं वा शताष्टकम्
अथवान्य प्रकारेण अष्टाविंशति संख्यया २३
जपनित्यं समायोगं सर्वपापविनाशनम्
जपलक्षणमाख्यातं प्रदक्षिणविधिं श्रुणु २४

इत्यंशुमान् तन्त्रे जपलक्षणविधि पटलः

## प्रदक्षिणविधिः

प्रदक्षिणक्रमं वक्ष्ये श्रूयतां रविसत्तम
सर्वपापहरञ्चैव सर्वदानफलप्रदम् १
सर्वरोगविनाशार्थं प्रदक्षिणमथाचरेत्
प्राच्छिर्नत्ति भयान् सर्वान् दकारं मोक्षसिद्धिदम् २
क्षिकारं क्षीयते रोगात् णकारं श्रीप्रदायकम्
प्रदक्षिणान्यसंयोगात् प्रदक्षिणमिति स्मृतम् ३
तृतीयादि समारभ्य एकाधिकशतं क्रमात्
एकाधिकञ्च पञ्चाशत् क्रमं शम्भो प्रदक्षिणम् ४
तृतीय पञ्चसप्तापि आयुश्रीकीर्तिवर्द्धनम्
नवएकदशञ्चैव धनधान्यसमृद्धिदम् ५
त्रयोदशञ्च सौभाग्यं जयं पञ्चादशं ततः
संख्या सप्तदशञ्चैव वश्यार्थञ्चैव कारयेत् ६
एकोनविंश संख्या च रिपुनाशकरं ततः
एकविंशत् त्रयोविंशदारोग्य व्याधिनाशनम् ७
पञ्चविंशतिसम्युक्तं विद्यार्थी चैव कारयेत्
सप्तविंशति संख्या च मोक्षार्थञ्चैव कारयेत् ८
भोगार्थमेकोनत्रिंशत्संख्यया कारयेद्बुधः
एकत्रिंशत् त्रयत्रिंशत् पुत्रपौत्रविवर्द्धनम् ९
पञ्चत्रिंशच्च सम्युक्तं सर्वकामफलप्रदम्
सप्तत्रिंशत्समायुक्तमिष्टकाम्यफलप्रदम् १०
एकोनचत्वारिंशच्च गोदानस्य फलप्रदम्
तदेकचत्वारिंशच्च स्वर्णदानफलप्रदम् ११
गोकोटिदानपुण्यात् त्रिचत्वारिंशच्च देव च
पञ्चचत्वारिसंयुक्तभूमिदानफलप्रदम् १२
सप्तचत्वारिंश संख्या च अपस्मारस्य नाशनम्

संख्या चैकोन पञ्चाशत् सर्वसिद्धिकरं ततः १३
एकाधिकञ्च पञ्चाशत् कन्यादानफलप्रदम् १४
त्रयाधिकञ्च पञ्चाशत् विष्णुलोके महीयते
पञ्चाधिकञ्च पञ्चाशत् सर्वकार्यलभेत्ततः १५
समपादस्थितञ्चैव हृदयाञ्जलिसम्युतम्
पादौ पादौ हरञ्चेद्दराडवत् पतितो भवेत् १६
इन्द्रादि चैन्द्रपर्यन्तं एवमेवं प्रदक्षिणम्
पादन्तरमिति प्रोक्तं सिंहप्रदक्षिणं श्रुणु १७
शिवाग्रे तु स्थितञ्चैव गळे चैवोन्नतन्ततः
पादौ चोत्थान पतितौ पदं प्रति पदं प्रति १८
सिंहप्रदक्षिणं ख्यातं शृङ्खलञ्च तत श्रुणु
प्रसादं परितः कृत्वा अष्टदिक्षु च दिक्षु च १९
कटिदेशेऽञ्जलिं कृत्वा शृङ्खलाभ्रमणं कुरु
त्रयस्थानादि संयुक्तं शृङ्खलाकालवत्कुरु २०
एवं शृङ्खलमाख्यातं चक्रप्रदक्षिणं श्रुणु
स्थित्वा देवाग्रदेशे तु शिरोर्ध्वे वाञ्जलिन्यसेत् २१
भृङ्गवत्प्रदक्षिणं कृत्वा पदं प्रति पदं प्रति
चक्रप्रदक्षिणं ख्यातं अङ्गप्रदक्षिणं श्रुणु २२
देवाग्रे दराडवत्भूमौ अष्टाङ्गञ्च प्रणामतः
हस्तौ पुष्पाञ्जलिं कृत्वा पादौ स्वस्तिकमेव च २३
नेमिवत् भ्रमणं कृत्वा पूर्वस्थानान्तरं श्रुणु
अङ्गप्रदक्षिणं ख्यातं शक्तिप्रदक्षिणं श्रुणु २४
द्वितीयादि समारम्य द्विसंख्याधिकं क्रमात्
प्रदक्षिणं शतं कुर्यात् पञ्चाशत्संख्ययावधि २५
प्रदक्षिणक्रमं प्रोक्तं प्रणामपञ्चैव संख्यया
द्विचतुश्चाष्टकञ्चैव शक्तीनाञ्च प्रमाणतः २६

शम्भो प्रदक्षिणं यतत् यावत्संख्या फलं भवेत्
शक्तिप्रदक्षिणं प्रोक्तं सामान्यस्य विधिं श्रुणु २७
एकं विनायकं कुर्यात् तृतीयं शंकरस्य च
तुरीयं प्रदक्षिणं प्रोक्तं शक्तीनाञ्च समाचरेत् २८
विष्णुञ्चैव तु चत्वारो भद्रकाळ्यष्टमेव च
सप्ताधिकञ्च पञ्चाशत्सूर्यलोके महीयते २९
एकोनषष्टिसंख्या च चन्द्रलोके महीयते
त्रिषष्टिसंख्या चैव गोपहन्तु विनाशनम् ३०
पञ्चाषु समायुक्तं ब्रह्महत्तिविनाशनम्
एकोनसप्ततिश्चैव वीरहत्तिविनाशनम् ३१
एकसप्ततिसंख्या च सर्वपापहरन्ततः
त्रिसप्ततिसमायुक्तं सर्वलोके महीयते ३२
पञ्चसप्ततिसंख्या च गजदानफलप्रदम्
सप्तसप्तत्रिसंख्या च तिलदानफलप्रदम् ३३
एकोनाशीति सम्युक्तं ग्रश्वदानफलं भवेत्
त्रयाशीति समायुक्तं राजसूयफलप्रदम् ३४
पञ्चाशीति समायुक्तं सर्वयज्ञफलप्रदम्
सप्ताशीति समायुक्तं सर्वसम्पत्करन्ततः ३५
एकोननवतञ्चैव सर्वदानफलप्रदम्
एकसम्युक्तनवति स्वर्गलोके महीयते ३६
नवतीत्रयसम्युक्तं इन्द्रलोके महीयते
कुरुते पञ्चनवति सालोक्यञ्चैव कारयेत् ३७
संख्या च सप्तनवती सामीप्यञ्चैव कारयेत्
एकोनशतसंख्या च सारूप्यञ्च समाचरेत् ३८
एकाधिकशतं कृत्वा शिवसायुज्यमाप्नुयात्
यानि यानि च पापानि जन्मान्तरकृतानि च ३९

तानि तानि विनश्यन्ति प्रदक्षिणपदे पदे
एकदडानमस्कारमेकञ्चापि प्रदक्षिणम्  ४०
एकहस्तनमस्कारं हन्ति पुण्यं पुरातनम्
यत्र प्रदक्षिणं तत्र बलिपीठवृषेन चेत्  ४१
तद्बाह्यस्थौ समावृत्य कृतीं कुर्यात्प्रदक्षिणम्
देवो वृषयोर्वापि बलिपीठेशयोजयेत्  ४२
सिवानन्तरागमनं कुर्यात्तदावरणे सुधीः
प्रासादस्य तु विस्तारत्तन्मानं सोमसूत्रकम्  ४३
लिङ्गं पीठस्य पार्श्वे तु योजयेत्सौम्यदेशके
यावत्सूत्रान्तमेवं स्यात् वर्जयेत्तु प्रदक्षिणम्  ४४
भूमादिवानस्थूपि पर्यन्तं तन्मानसोममेव वा
न लङ्घयेत्ततच्छायां बाह्यदोषो न विद्यते  ४५
उत्सवे बलिकाले च अर्चनाचार्ययानके
सोमसूत्रञ्च निर्माल्य च्छायादोषो न विद्यते  ४६
पूर्वाह्ने चैव मध्याह्ने सायाह्ने पूर्वरात्रिके
चतुष्कालमिदं प्रोक्तं विशेषमधुना श्रुणु  ४७
उदयाद्ध्युदयान्तञ्च स्तमान्तञ्च उदयाद्युदयान्तकम्
प्रथमं सव्यमेवञ्चापसव्यन्द्वितीयकम्  ४८
सव्यापसव्यन्तृतीयं नागयानञ्चतुर्थकम्
पञ्चमं पद्ममेवञ्च पदान्तरञ्च षष्ठकम्  ४९
सप्तमं सिंहमेवञ्चाष्टमं शृङ्गलान्तथा
नवमञ्चत्रमेवञ्च दशमञ्चाङ्गमेव च  ५०
सव्यञ्च ब्रह्मचार्यरी स्यात् यतीनामपसव्यकम्
सव्यापसव्यमेवञ्च वानप्रस्थगृहस्थयोः  ५१
एवमेव प्रकारेण लक्षणं श्रुणु सुव्रत
शिवाग्रे दण्डवद्भूमौ हृदयाञ्जलिमुद्रया  ५२

इन्द्रादि चैन्द्रमेव पर्यन्तं सव्य प्रदक्षिणं कुरु
सव्य प्रदक्षिणं प्रोक्तं अपसव्यविधिं श्रुणु ५३
यथासव्य प्रकारेण अपसव्यं समाचरेत्
अपसव्यविधिं प्रोक्तं सव्यापसव्यं श्रुणु ५४
वृषभाच्चण्डदेशन्तु पुनर्वृषन्तथैव च
सर्वान्तं सोमसूत्रान्तं अपसव्या वृषन्तथा ५५
चण्डञ्च सोमसूत्रान्तं पुनश्चण्डं वृषन्तथा
सव्यापसव्यमेवोक्तं नागप्रदक्षिणं श्रुणु ५६
नागगतिरिव नागाकारं प्रासादात् परितः क्रमात्
नागप्रदक्षिणं प्रोक्तं पद्मप्रदक्षिणं श्रुणु ५७
हृदये पद्म मुद्राञ्च प्रासादं परितः क्रमात्
अष्टदिग्भ्रमणं कृत्वा तत्तत्स्थाने प्रमाणतः ५८
पद्मप्रदक्षिणं पादान्तरतरं श्रुणु
षट्संख्याषण्मुखञ्चैव द्वयं सौरप्रदक्षिणम् ५९
शास्तुश्च पञ्च संख्या च क्षेत्रपालस्तथैव च
दुर्गामाश्चाष्टसंख्या च कुर्यात् शक्तिपीठस्तथैव च ६०
आरश्वथे च बिल्वे च पञ्चसंख्यास्तथैव च
सप्ताश्वत्थ संख्या च तुळसी च तथैव च ६१
पञ्च प्रदक्षिणञ्चैव दिव्यवृक्षं समाचरेत्
सामान्यस्य विधिः प्रोक्तः स्थाननिर्णयमुच्यते ६२
प्रथमावरणादीनि सप्तमावरणान्तकम्
सव्यापसव्यमेवोक्तं प्रथमावरणेन तु ६३
सव्याद्दशगुणं प्रोक्तं अपसव्य प्रदक्षिणम्
तस्माच्छतगुणं प्रोक्तं सव्यापसव्यमेव च ६४
नागयानत्रयं कृत्वा स्वर्गलोके महीयते
पद्माञ्च पञ्च संख्या च ब्रह्मलोके महीयते ६५

पदान्तरत्रिधाकृत्वा इन्द्रलोके महीयते
सिंह प्रदक्षिणस्यैकं सामीप्यञ्च समाचरेत् ६६
शृङ्खला तत्समं कृत्वा सालोक्यञ्च प्रवेशयेत्
तत्समञ्चक्रमेवञ्च सारूप्यं शाश्वतं परम् ६७
अङ्गप्रदक्षिणस्यैकं शिवसायुज्यमाप्नुयात्
यावत्प्रदक्षिणं प्रोक्तं प्रथमावरणेन तु ६८
तत्फलञ्च दशाधिक्ये द्वितीयावरणेन तु
तस्माच्छतगुणं प्रोक्तं तृतीयावरणं भवेत् ६९
चतुर्था वरणञ्चैव फले चैव सहस्रकम्
पञ्चमावरणञ्चैव दशसाहस्रकं फलम् ७०
षष्टमावरणञ्चैव एकलक्षं प्रकीर्तितम्
सप्तमावरणं कृत्वा शतकोटिफलं भवेत् ७१
एवं यः कुरुते मर्त्य स पुण्यां गतिमाप्नुयात्
इत्यंशुमान् तन्त्रे प्रदक्षिणविधिपटलः

## आत्मार्थपूजै

आत्मार्थ यजनं वक्ष्ये श्रूयतां रविसत्तमः
महापातकदोषघ्नं सर्वपापनिकृन्तनम् १
आयुश्रीकीर्तिविजयं भोगमोक्षफलप्रदम्
सर्वयज्ञतपोदान तीर्थदेशेषु यत्फलम् २
तत्फलं कोटिगुणितं शिवलिङ्गार्चनात्फलम्
शिवविप्रेण कर्तव्यमात्मार्थञ्च परार्थकम् ३
विप्रक्षत्रियवैश्याश्च शूद्राश्चैव तु दीक्षिताः
आत्मार्थमर्चनं कुर्यात् न कुर्याश्च परार्थकम् ४
चातुर्वर्णोद्भवस्त्रीणां अर्चनञ्च विशेषतः
अर्चनं त्रिविधं प्रोक्तमुत्तमामध्यमाधमा ५

केवलं शिवमन्त्रैस्तु यजनञ्चोत्तमं भवेत्
वैदिकैश्शिवमन्त्रैस्तु यजनं मध्यमं भवेत् ६
केवलं वैदिकैर्मन्त्रैर्यजनञ्चाधमाधमं भवेत्
केवलं शैविकैर्मन्त्रैर्यजेदात्मार्थमुत्तमम्
आत्मार्थं षड्विधं प्रोक्तं चललिङ्गादि भेदतः ७
चलञ्च क्षणिकं चित्रं मण्डलं स्थण्डिलन्तथा
कौतुकञ्चैव विधिना गुरुमार्गेण कल्पयेत् ८
तेषां वै चोत्तमं ज्ञेयं शैलजं चललिङ्गकम्
शैलजात् बाणलिङ्गन्तु श्रेष्ठमित्युच्यते बुधैः ९
बाणञ्चलमिति प्रोक्तं तस्मिनुद्धारणन्तु तान्
बाणलिङ्ग इति ख्याता लिङ्गाश्च त्रिविधा भवेत् १०
यल्लिङ्गफलकावृत्तमुत्तमन्त्विति कीर्तितम्
यल्लिङ्गं सव्यमौन्नत्यं मध्यमं लिङ्गमुच्यते ११
यल्लिङ्गं वाममौन्नत्यं सधमं लिङ्गमुच्यते
श्रेष्ठं मध्यमलिङ्गेऽस्मिन्यजे श्रीभोगदायकम् १२
अधमं लिङ्गमभ्यर्च्य केवलं मोक्षदायकम्
बाणलिङ्गं यजेत् श्रेष्ठं मध्यमं रजतं तथा १३
अधमं स्वर्णलिङ्गन्तु तेषां भेदमिहोच्यते
उत्तमं स्वस्वयोनि स्यात् मध्यमं स्वर्णपीठकाः १४
अधमं रौप्यपीठस्यात्तदभावे तु ताम्रजम्
तेषामभावे शैलं स्यात् रत्नलिङ्गादि पीठकम् १५
चललिङ्गमिति प्रोक्तं क्षणिकलिङ्गविधिं श्रुणु
सिकतं मुक्तिदं प्रोक्तं मण्डलं भुक्तिदायकम् १६
नदी मृत्स्नात् शुद्धिं स्यान्नमायुष्यवर्द्धनम्
गोमयं रोगनाशार्थं नवनीतं सुखप्रदम् १७
रुद्राक्षं रुद्ररूपत्वं पिष्टं पुष्टिप्रदायकम्

गन्धं दीप्तकरञ्चैव कूर्चं सौभाग्यमेव च १८
पुष्पं भोगार्थमेवन्तु जलं सायुज्यमेव च
सर्वपापहरं भस्मं गुळं प्रीतिप्रदं भवेत् १९
फलञ्च भीष्टसिध्यर्थं पल्लवं सद्गुणप्रदम्
क्षणिकानान्तु लिङ्गानां फलमेवं प्रकीर्तितम् २०
क्षणिकलिङ्गमिति प्रोक्तं चित्रलिङ्गफलं श्रुणु
चित्रञ्चैवार्थचित्रञ्च पटचित्रं क्रमेण तु २१
सौधजञ्चित्रबेरं स्यादर्धचित्रन्तु भित्तिकम्
पटे तु पटचित्रं स्याद्विविधं लिङ्गमुच्यते २२
सौधजं सुखमाप्नोति सौन्दर्यं भित्तिचित्रकम्
पटचित्रे श्रियञ्चैव चित्रलिङ्गार्चनात्फलम् २३
मण्डलद्विविधं प्रोक्तं पद्मवालिङ्गमेव च
पद्मे तु श्रियमाप्नोति लिङ्गे वा सर्वकामदम् २४
स्थण्डिले भूप्रदं प्रोक्तं कौतुके त्विष्टकामदम्
क्षणिकलिङ्गादिभेदनां फलमेवं प्रकीर्तितम् २५
तेषु भेदेषु लिङ्गेषु चललिङ्गे विशेष्यते
मानसान्मण्डलं श्रेष्ठं मण्डलात् क्षणिकं भवेत् २६
क्षणिकात्फलमुत्कृष्टं पटञ्चैव ततः परम्
पटादाभासमुत्कृष्टं मानसात् बिम्बमुच्यते २७
बिम्बाद्यै लिङ्गमुत्कृष्टं लिङ्गाद्यै निष्फलं परम्
केवलं सहजामिश्रं यजनं त्रिविधं भवेत् २८
केवलं लिङ्गमेवं स्यात् सहजं पञ्चबेरकम्
महेश्वरादिबेराणां सहितं मिश्रमुच्यते २९
गणेशं स्कन्दबेरञ्च शक्तिञ्चावृषभं तता
लिङ्गेनैव समायुक्तं महेशं नृत्तमूर्त्तिनम् ३०
काम्यार्थयानि बेराणि सहित मिश्र उच्यते

क्षणिकं सिकतादिश्च पूजयेत्तु विधानतः ३१
स्नपनावाहनादी च सर्वं मानसकल्पनम्
अर्चनान्ते विसृज्याथ प्रमाणञ्च चस्थिरम् ३२
रुद्राक्षं क्षाळनाश्शुद्धिरन्येषां परिवर्जयेत्
क्षणिकार्चनमेवं स्यात् गुरुमार्गेण दृश्ययेत् ३३
एवं क्रमेण विधिवत् मरणान्तं यजेत्ततः
इति ज्ञात्वा तु यत्नेन पूजनीय सदाशिवः ३४
सूतके प्रेतकाशौ च आत्मार्थञ्च विशेषतः
पूजालोपेन कर्तव्याः सूतके प्रेतकेपि च ३५
शिवमन्त्रेण कर्तव्यं स्नानमात्रेण शुध्यति
आशौचन्नभवेत्तत्र पद्मपत्रमिवाम्भसि ३६
पूजान्ते प्रविशेच्चेदवाशौचे तु विशेषतः
शिवलिङ्गार्चनं कुर्यात् काम्यानुष्ठानहीनकम् ३७
आशौचान्ते च कर्तव्यं नित्यं काम्यमनुष्टकम्
काम्यानुष्ठानहीने तु तद्दिनद्विगुणं यजेत् ३८
एवं वै शुद्धशैवानां विप्रादीनान्तु कथ्यते
विप्रक्षत्रियवैश्याञ्च शूद्राश्चैव तथैव च ३९
चातुर्वर्णाभवस्त्रीणामर्चनञ्च विशेषतः
सूतके प्रेतके कुर्यात् न स्वयं किङ्गपूजनम् ४०
स्वकर्मानुष्ठितञ्चैव जलहीनन्तु भस्मकम्
मानसञ्च यजेद्धीमान् सर्वं मानसकल्पनम् ४१
तल्लिङ्गमर्चयित्वा तु गुरुणा वा स्वजातिनाम्
अन्येनैवार्चनं कुर्यात् अन्ते पुष्पाञ्जलि त्रयम् ४२
आशौचान्ते व कर्तव्यं पूर्वमार्गे यजेत्ततः
यथा पुष्पवतीनारी अर्चनञ्च विशेषतः ४३
अन्तर्यागं प्रकर्तव्यं तथा पूर्वदिनत्रये

चतुर्थदिवसे स्नानं गव्यं प्राश्य यजेत्ततः ४४
जनिते चिन्तसन्तापे व्याधिभिन्निहिते सति
कार्यदिपातसंरोधे व्यात्यध्युपद्रवणादिषु ४५
स्नानं हीनं तथा चैव पादप्रक्षाळनं ततः
भस्मोद्धूळनं कृत्वा अर्चयेत्तु विशेषतः ४६
अर्चनायामशक्तश्चेत् स्पर्शनं चापि कारयेत्
पुष्पन्तु मस्तके न्यस्य मभवमन्त्रमनुस्मरन् ४७
स्पर्शने वाप्यशक्तश्चेत् लिङ्गदर्शनमेव च
चोरैर्लिङ्गं गृहीतञ्च मनसा तु यजेत्ततः ४८
चत्वारिंशद्दिनञ्चैव उपवासं तथैव च
नाळिकेरोदकेनैव क्षीरेणैव फलादिना ४९
आत्मानं रक्षयेद्धीमान् शिवध्यानपरायणः
तस्मात्सर्वप्रयत्नेन मरणान्तं यजेत्ततः ५०
यथा सम्भवकाले तु यथा सम्भवनाडिकाः
कालादिक्रमणञ्चैव प्रायश्चित्तन्नकारयेत् ५१
त्रिकालं वा द्विकालं वा एककालमथापि वा
आत्मार्थं पूजयेद्विद्वान् यथाशक्त्यनुपूर्वकम् ५२
द्वारादि चण्डपर्यन्तं यजनञ्चोत्तमं भवेत्
द्वारादि च निवेद्यान्तं यजनं मध्यमं भवेत् ५३
स्नानञ्चैव निवेद्यञ्च यजनञ्चाधमं भवेत्
सर्वोपचारं कर्तव्यं किञ्चिदस्त्रिभिः ५४
नित्योत्सवञ्च भोगाङ्गं सायरक्षाविधानकम्
उपसन्धिद्विना कुर्यादात्मार्थयजनं क्रमात् ५५
पूजाविधानमेवोक्तं क्रिया संख्या क्रमं श्रुणु
प्रातः काले समुत्थाय शिवं सञ्चिन्तयेत्क्रमात् ५६
आवाह्य करणञ्चैव शौचमाचमनन्तथा

स्नानक्रमविधानञ्च सन्धिद्वयविधिक्रमम् ५७
पूजाकालप्रवेशञ्च स्नानशुद्धिक्रमन्ततः
प्रासादकल्पनञ्चैव द्रव्यसङ्ग्रहणं ततः ५८
सौरपूजाविधानञ्च पादप्रक्षाळनं ततः
स्वासनेन समाकीर्णं भस्मन्यासक्रमन्ततः ५९
करशुद्धिक्रमञ्चैव प्रणवाग्रन्तथैव च
भूतशुद्धिं ततः कृत्वा न्यासक्रमविधानतः ६०
अन्तर्यागक्रमञ्चैव सामान्यार्घ्यं विधानतः
पाद्यादि क्रममेवञ्च विशेषार्घ्यमतः परम् ६१
केटकालं कृतञ्चैव द्वारार्चनमतः परम्
बेराणामासनञ्चैव बेरविन्याधमेव च ६२
लिङ्गस्नानार्थमादाय स्नानवेद्युपरि न्यसेत्
क्रवन्यासार्घ्यमेवञ्च निर्माल्यञ्च विसर्जयेत् ६३
चण्डेशार्थ प्रकल्प्याथ अभ्यङ्गादि विशेषतः
शोधनं लिङ्गपीठस्य आसनार्चनमेव च ६४
विद्यादेहञ्च सङ्कल्प्य स्नानमार्गक्रमन्ततः
पश्चान्निवेद्य तं लिङ्गं पद्मासनं ततोपरि ६५
पश्चात्स्थिरासनं कल्प्य पञ्चासनक्रमं ततः
आवाहनाद्युपचारञ्च मानसं स्नानमेव च ६६
मन्त्रपुष्पञ्च मन्त्रान्नं गन्धपुष्पसृगादिकम्
भोगाङ्गार्चनमेवञ्चावरणार्चनमेव च ६७
धूपदीपं ततः पश्चात् नैवेद्यं बलिरेव च
नित्यपवित्रमेवञ्च धूपदीपमतः परम् ६८
आरात्रिया भासितं चैव ताम्बूलं तर्पणं ततः
चित्रञ्च चामरञ्चैव व्यजनं तालवृत्तकम् ६९
वेदैः पुराणमेवञ्च पञ्चाङ्गश्रवणान्ततः

स्तोत्र नृत्तगीतञ्च वाद्यध्वनि समायुतम् ७०
अक्षमाला जपञ्चैव तत् जपन्तु समर्पयेत्
लयाङ्गं पूजयेत्पश्चात् शिवैक्यं भावयेत्ततः ७१
चुळुकोदं प्रमाणञ्च पश्चात् पूजाविशेषतः
शिवतत्वे परे सूक्ष्मे कुर्यात्तल्लय भावनम् ७२
स्तोत्रपाठन्तु तत्पश्चात् चण्डेशार्चनमेव च
गुरोराधनं पश्चात् विद्यापीठार्चनन्ततः ७३
परार्थालयं प्रविश्याथ लिङ्गदर्शनमेव च
प्रदक्षिणनमस्कारं यथा सौख्या विधामतः ७४
लिङ्गस्य दर्शनं पश्चात् स्वग्रहं सम्प्रवेशयेत्
अतिथिं पूजयेत्पश्चात् स्वयं भुक्त्वा विधानतः ७५
भोजनान्ते प्रकर्तव्यं आत्मानं चुळुकोदकम्
धर्मसङ्कीर्तनं पश्चात् पुराणश्रवणन्ततः ७६
एवं नित्यक्रियाकाण्डं यथा शास्त्रोक्तमार्गतः
एवं नित्य प्रकर्तव्यं पूजकस्सर्वमाचरेत् ७७
क्रिया संख्या क्रमं प्रोक्तं यजनं क्रममुच्यते
आत्मार्थयजनार्थन्तु प्रासादं पूर्ववत् बुधः ७८
ग्रहे शिवालये वापि इष्टदेशे मनोरमे
प्रासादे मनसाकल्प्य वेदिका मानमेव वा ७९
गर्भं वै मेकतालञ्च तत्समं चार्धमण्टपम्
तत्समं विसृतं चैव पञ्चाङ्गुलोन्नतन्ततः ८०
पञ्चतालायताश्रञ्च तुर्यतालञ्च विस्तृतम्
विद्याङ्गुलोन्नतञ्चैव निम्नोन्नत विवर्जितम् ८१
सेरमण्टपमाख्यातमधिवासतलन्ततः
गोमयालेपनं कृत्वा वामदेवेन मन्त्रवित् ८२
गर्भार्धमण्डपञ्चैव द्वितालञ्चैव संख्यया

तत्समं विस्तृतञ्चैव चतुरश्रसमन्वितम्  ८३
पञ्चतालं यताश्रञ्च विद्यातालञ्च विस्तृतम्
बेरमण्टपसंख्यातं तन्मध्ये तु दळं क्षिपेत्  ८४
स्थण्डिलं पद्महीनञ्चेदसुराणां प्रवेशनम्
अस्त्रमन्त्रसमुच्चार्य पत्रतन्तेव विन्यसेत्  ८५
स्वर्णं रजतताम्रैर्वा दारुणाञ्चैव निर्मितम्
चतुरश्रायताश्रञ्च खेटकाकृतिमेव च  ८६
अथवा वृत्तमेवञ्च गर्भगेहे तु विन्यसेत्
बेरमण्टपमध्ये तु गर्भ + विकञ्चैव विन्यसेत्  ८७
द्विहस्तमायतं पीठमेकहस्तप्रविस्तरम्
द्वादशाङ्गुलमुत्सेधं विद्याहस्तोन्नदन्दृढम्  ८८
नानावर्णसमायुक्तं मध्ये कमलभूषितम्
तस्योर्ध्वे चैव तन्मानं चित्रवस्त्राद्यलङ्कृतम्  ८९
खेटके पश्चिमे देशे पद्मपीठञ्च विन्यसेत्
प्रभामण्डलसम्युक्तं दामसारञ्च विन्यसेत्  ९०
प्रभामण्डलपार्श्वे तु चित्रवस्त्रैरलङ्कृतम्
यजनार्थ द्रव्यमेवन्तु सङ्गृह्य परिचारकैः  ९१
वामभागे तु संस्थाप्य दक्षिणे जलपात्रकम्
पूजास्थलं प्रविश्याथ भृङ्गारकजलैर्युतम्  ९२
पादप्रक्षाळनं कृत्वा तत्सेषं वर्जयेत् जलम्
पुनर्जलं समादाय आचम्य विधिना बुधः  ९३
मण्डपान्ते प्रविश्याथ सौरपूजां समारभेत्
आदित्यञ्च शिवं विद्यात् शिवमादित्य रूपिणम्  ९४
उभयोरन्तरन्नास्ति आदित्यस्य शिवस्य च
देहस्तं सकळं विद्यात् निष्कळादेह वर्जितः  ९५
सकळं सूर्यरूपन्तु निष्कलं शिवमेव च

देहस्तं पूर्वमाराध्य पश्चादेवं यजेत्ततः ९६
तस्मात्सौरं पुरोऽभ्यर्च्य सूर्यांगैस्सकळीकृतम्
इन्द्रं पूर्वं समाराध्या तेजोवत्यां हुताशनम् ९७
तयोर्मध्ये जगत्साक्षिभानुमध्यदिवाकरः
तस्मादिन्द्राग्नियोर्मध्ये शिवसूर्यं समर्चयेत् ९८
सौरं प्रतिमबेरे चक्रे वापि समर्चयेत्
स्थण्डिले पद्ममालिख्य यथा पूर्वोक्तमार्गतः ९९
पादप्रक्षाळनं वापि पादाभ्युक्षणमेव च
तत्वत्रयं समाचम्य श्रोत्राचम्यमथापि वा १००
खेटका दक्षभागे तु सासीनो देशिकोत्तमः
युक्ताकारायताश्रञ्च सौभाग्यं दारुकासनम् १०१
वस्त्रासने व्याधिनाशं कम्बळे दुःखमोचनम्
कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्री व्याघ्रचर्मणि १०२
सम्पुटीकृत्य जान्वन्तं पादाग्रं दक्षिणं परम्
अधस्थाप्यं प्रकुर्वीत रुचिरासनसंज्ञतम् १०३
रुचिरासनमाख्यातं आसीमञ्चासनोपरि
उग्रभूता पिशाचा ये रात्रि सा भूमिपारकाः १०४
एतेषामविरोधेन शिवकर्मसमाचरेत्
न प्राच्यामग्रतश्शम्भो न्नोत्तरे योषिदाश्रये १०५
न प्रतीच्यायतः प्रष्ठ दक्षिणेऽभीष्टमर्चयेत्
भिमन्त्रदुशीतञ्च पद्मनिर्दहते यथा १०६
तथाघोरप्रशान्तोऽपि पावनिर्दभकारकः
महानपि यथा दन्ती यन्तारमनुवर्तते १०७
तस्मादघोरहृदयं तद्गतं सकलेन्द्रियम्
तस्मादाप्तेन वचसा उत्तराभिमुखो यजेत् १०८
भस्मन्यासक्रमं चैव करशुद्धिक्रमन्ततः

प्रणवार्घ्यविधानञ्च भूतशुद्धिक्रमन्ततः १०९
न्यासक्रमविधानञ्च अन्तर्यागक्रमन्ततः
खेटके पश्चिमे देशे द्वारसम्पूज्य देशिकः ११०
खेटपश्चिमद्वारे तु विशेषा द्वारपाल समर्चयेत्
पूर्वद्वारग्रहस्तस्य भोगमोक्षफलप्रदम् १११
केवलं पश्चिमद्वारं यदि ना मोक्षकामिनाम्
तत्पुरुषामुखं यत्नद्वारन्तत्पूर्वमिष्यते ११२
लिङ्गस्य वक्त्रनिर्माणं यथाद्वारस्य निर्गमम्
मुखद्वारं प्रसारस्यात् लिङ्गस्यार्चनवित् बुधः ११३
लिङ्गार्चनानि कार्याणि मुखं प्राचीं प्रशंशयेत्
द्वारमस्त्रेण सम्प्रोक्ष्य द्वारपालान् समर्चयेत् ११४
द्वारस्योदुम्बरोर्ध्वे तु दक्षिणं गणपं यजेत्
वामे सरस्वतीं पूज्य महालक्ष्मीञ्च मध्यमे ११५
द्वारस्य दक्षिणे पार्श्वे नन्दिगङ्गां समर्चयेत्
महाकाळञ्च यमुनां वामपार्श्वे समर्चयेत् ११६
उत्करन्तु पदानञ्च स्तम्भद्वयसमर्चयेत्
पतङ्गञ्च भुवङ्गञ्च ऊर्ध्वाधस्संप्रपूजयेत् ११७
तदग्रे वृषभं पूज्य तत्तद्ध्यानपुरस्सरम्
तस्य मन्त्रैस्समभ्यर्च्य गन्धपुष्पसमन्वितम् ११८
अभावे द्वारपालानां एकत्रैव तु मध्यमे
सर्वेभ्यो द्वारपालेभ्यो नम इत्यर्चयेद्बुधः ११९
विघ्नत्रयन्तु निस्सार्य पार्ष्णीघातत्रयेण च
ताळत्रयन्तु सन्ताड्य ऊर्ध्वे पुष्पं विसर्जयेत् १२०
देहळीमर्चयेद्धीमान् प्रविशेदर्द्धमण्डपम्
तन्मण्डपे तु नैर्ऋत्यां वास्तोष्पति समर्चयेत् १२१
गर्भगेहं प्रविश्याथ विधानोत्घाटनं ततः

गर्भाग्रे भीमरूपञ्च स्तितञ्चैव समन्वितम् १२२
चतुर्भुजन्त्रिणेत्रञ्च वरदाभय सम्युतम्
पिच्छीचामरसम्युक्तं भीमरुद्रं समर्चयेत् १२३
निशाचरान्तक्रद्देवदेवेशयजनार्थकम्
शुद्धद्वारस्य सव्ये तु गच्छत्वं हि प्रसीद मे १२४
एवं क्रमेण विधिवत् सर्वं मानसकल्पनम्
तत्स्थानानिगमञ्चैव बेरमण्डपमाविशेत् १२५
खेटके नैर्ऋते देशे गणेशस्यासनान्ततः
सर्वबेरासनञ्चैव तत्तत्स्थाने समर्चयेत् १२६
ऐशान्ये गुरुपङ्क्तिञ्च स्वस्वमन्त्रैस्समर्चयेत्
खेटकात् सर्वबेराणां प्रथग्राह्य विचक्षणैः १२७
आश्चाद्य वस्त्रगळितं प्रोक्षयेदस्त्रवारिणा
निर्माल्यन्तु विसृज्याथ मानसं स्नानमाचरेत् १२८
गणेशं नैर्ऋते न्यस्य स्कन्दं वै वायुदेशके
महेशं दक्षिणे देशे पूर्वाभिमुखमेव च १२९
नृत्तमूर्त्यादिबेराणामुत्तरे दक्षिणाननम्
चक्रन्तु दक्षिणे न्यस्य भस्मधाराक्षमालिकाः १३०
भस्मधारे तु मायाख्यं भसिते लकुळीश्वरम्
वासुकीञ्चैव सूत्रे तु गन्धपुष्पैस्समर्चयेत् १३१
लिङ्गाग्रे वृषभं न्यस्य पश्चिमाननमेव च
पीठस्य वामभागे तु भोगशक्तीञ्च विन्यसेत् १३२
मूर्तिमावाहयेद्धीमान् तत्तन्मन्त्रमनुस्मरन्
पाद्यमाचमनञ्चार्घ्यं अस्त्रमन्त्रेण दापयेत् १३३
वस्त्रगन्धञ्च माल्यञ्च पुष्पमूर्ध्नि च विन्यसेत्
बेरमर्चनक्रमञ्चैव गर्भगेहं प्रवेशयेत् १३४
ओन्नमो देवदेवेश सर्वलोकैकनायक

उत्तिष्ठस्नानकर्मार्थ ग्रात्मरक्षार्थमेव च १३५
कांसञ्च दारुजञ्चैव वृत्ताकारमनान्तकम्
नाळञ्च पादसहितं तन्मध्ये चोन्नतन्ततः १३६
स्नानार्थं लिङ्गमादाय स्नानवेद्युपरिन्यसेत्
लिङ्गं सङ्ग्राह्य मतिमानस्त्रेणैव विसर्जयेत् १३७
ईशनादीनि सद्यान्तं वक्त्रन्यासक्रमन्ततः
तर्जनादि त्र्यङ्गुल्यन्तलमध्ये तु पक्रतः १३८
कनिष्ठाकुञ्चितञ्चैव ग्रङ्गुष्ठाप्रसृतान्ततः
ग्रङ्गुष्ठाधोमुखञ्चैव ईशवक्त्रे च विन्यसेत् १३९
मध्यमानामिकाञ्चैव कनिष्ठाप्रसृतान्ततः
ग्रङ्गुष्ठतर्जनीभ्यान्तु पुरुषास्ये तु विन्यसेत् १४०
तर्जनीनामिका चैव ग्रङ्गुष्ठप्रसृतान्ततः
ग्रङ्गुष्ठमध्यमाङ्गुल्यं ग्रघोरास्येव विन्यसेत् १४१
तर्जन्यमध्यमाङ्गुल्यं कनिष्ठा प्रसृताय च
ग्रनामिकाङ्गुष्ठसंयुक्तं वामवक्त्रे च विन्यसेत् १४२
तर्जन्यादि त्र्यङ्गुल्यं संसृष्टा प्रसृता ततः
ग्रङ्गुष्ठकनिष्ठिकायुक्तं सद्यवक्त्रे च विन्यसेत् १४३
वक्त्रन्यासक्रमञ्चैव ग्रर्घ्यपञ्चसु मूर्धसु
मध्यमानामिकाङ्गुल्यमङ्गुष्टाग्रेण योजयेत् १४४
ईशानादीनि सद्यान्तमर्घ्यं चैव तु दापयेत्
कनिष्ठानामिका मध्ये नवपुष्पञ्च विन्यसेत् १४५
ग्रङ्गुष्ठतर्जनीयुक्तं पर्युषितञ्च विसर्जयेत्
विसर्जने तु तत्काले पुष्पं मूर्ध्नि विन्यसेत्
निर्माल्यन्तु विसृज्याथ खेटकेशानदेशके १४६
जलद्रोण्या जलं ग्राह्य कुण्डकेनाभिषेचयेत्
क्षाळयेत् लिङ्गमस्त्रेण पीठं पाशुपतेन तु १४७

चूळिका मन्त्रमुच्चार्य गण्डुकेनैव शोधयेत्
चण्डेशायेति निक्षिप्य पश्चात्तस्मैव दापयेत् १४८
अभ्यङ्गेद्वर्तनञ्चैव शिरोमन्त्रमनुस्मरन्
शालितण्डुलचूर्णेन मुद्गचूर्णेन शोधयेत् १४९
शतमष्टोत्तरं देयं गण्डुकानां क्रमेण तु
वामहस्ते तले कृत्वा गण्डूकं लिङ्गमस्तकान् १५०
जलदेयं लिङ्गमूर्ध्नि पश्चाद्वेद्याविनिक्षिपेत्
शुद्धतोयाभिषेकञ्च पुष्पमूर्ध्नि विन्यसेत् १५१
अनन्तमासनं कल्प्य पूर्ववद्देशिकोत्तमः
विद्यादेवासनञ्चैव विद्यादेवं मनोरमम् १५२
विदज्ञानमिति ज्ञेयं विद्यादेवं प्रकल्पयेत्
विद्यादेहं समावाह्य गन्धपुष्पैस्समर्चयेत् १५३
पञ्चगव्यामृतैस्नाप्य जलेनैवाभिषेचयेत्
अस्त्रमन्त्रं समुच्चार्य पुष्पं मूर्ध्नि विन्यसेत् १५४
स्नानद्रव्यं विशेषेण तत्तन्मन्त्रजलैर्युतम्
क्षीरं दधि घृतञ्चैव क्षौद्रञ्चैवान्नमेव च १५५
नाळिकेरोदकञ्चैव इक्षुसारफलं तथा
गन्धोदकेन संस्नाप्य शङ्खतोयाभिषेचनम् १५६
अर्घ्योदकेन संस्नाप्य पुष्पं मूर्ध्नि विन्यसेत्
गन्धञ्च लेपनञ्चैव हिमतोयाभिषेचयेत् १५७
पञ्चब्रह्मषडङ्गैश्च बीजमुख्येन मन्त्रभिः
शिवगायत्रिमन्त्रेण सहस्रधाराभिषेचनम् १५८
स्नानद्रव्येप्यलब्धे तु शुद्धतोयाभिषेचनम्
अस्त्रमन्त्रं समुच्चार्य पुष्पं मूर्ध्नि विन्यसेत् १५९
खण्डवस्त्रेण सम्मार्ज्य पुष्पं मूर्ध्नि विन्यसेत्
शिवमन्त्रमनुस्मृत्य पद्मापीठोपरिन्यसेत् १६०

शक्त्यादि शक्तिपर्यन्तमासनस्थं शिवं यजेत्
ऋासनं शिवमूर्तिञ्च विद्यादेह शिवन्ततः १६१
विद्यादेहे शिवं ध्यात्वा हेमकुम्भे यथामृतम्
विद्यादेहघटं विद्यात् पुष्करं शिवमेव च १६२
ऋावाहनस्थापनञ्च सान्निध्यं सन्निरोधनम्
ऋावाहनन्नकारेण स्थापनञ्च मकारकम् १६३
शिकारेण तु सान्निध्यं वकारेण निरोधनम्
निरोधार्घ्यं यकारेण शिवं परमकारणम् १६४
स्वामिन् सर्वजगन्नाथ यावत् पूजावसानकम्
तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन् सन्निधिर्भव १६५
ऋावाहने तु तन्मूर्त्ति द्रव्यति द्रवहेमवत्
तस्मादावाहनो काले ऋर्घ्यन्दत्वा विचक्षणः १६६
गन्धपुष्पाक्षतं मन्त्रं मुद्रध्यानं तथैव च
पाद्यमाचमनञ्चार्घ्यमावाहनस्य तत्क्रिया १६७
दिग्बन्धनावकुण्डञ्च लिङ्गमुद्रां प्रदर्शयेत्
मुद्रादाने ततश्शम्भो हृद्देशे तानि दर्शयेत् १६८
ऋधो मुखन्न बध्नीयात् मुद्रासनस्य सन्निधि
व्यापकञ्चैव सङ्कल्प्य दण्डभङ्गी न्यसेत्ततः १६९
हृदयादस्त्रपर्यन्त तत्तस्थाने तु विन्यसेत्
चलस्थिरासनञ्चैव स्नानद्विविधमेव च १७०
चलासने तु स्नानं स्यादभ्यङ्गादि विशेषतः
स्थिरासने समावाह्यमासनं स्नानमाचरेत् १७१
स्नानं विज्ञापयेत् द्धीमान् पाद्यमाचमनं ततः
पाद्यं पादद्वयं चैव क्षाळयेत् सर्वमन्त्रतः १७२
द्विसंख्या पाद्यमेवञ्च ऋाचमनत्रिसंख्यया
शिवगायत्रिमन्त्रेण जलेन स्थापयेत्ततः १७३

तत्पीठं वामहस्तेन स्पर्शयेदस्त्रमन्त्रतः
नवपुष्पन्तु सङ्गाह्य तत्पुष्पन्तु विसर्जयेत् १७४
तत्पुष्पार्चितपुष्पञ्च शमनार्थाय वै द्वयम्
मन्त्रं रहस्यमित्युक्तमदनादन्नमुच्यते १७५
रहस्योदनञ्चैव मन्त्रान्नमिति कथ्यते
शिवमन्त्रमनुस्मृत्य गन्धपुष्पान्न्यसेत्ततः १७६
गोळगायतिरिञ्च मकुटं चैव योजयेत्
सर्वाभरणसंयुक्तं दामप्रत्याद्यलङ्कृतम् १७७
दामदारसमायुक्तं चित्रदामैरलङ्कृतम्
शिवमन्त्रमनुस्मृत्य पुष्पमूर्ध्नि विन्यसेत् १७८
भोगाङ्गपूजां विज्ञाय ब्रह्माङ्गैः शिवमर्चयेत्
शिवस्य देहादाकृष्य स्वस्वस्थानात्स्वमन्त्रकैः १७९
वक्ररूपन्तु तद्ध्यात्वा अर्चयेत्तु विचक्षणः
देहपञ्चकसम्युक्तं चरणद्वयसम्युतम् १८०
स्फटिकप्रभन्तदीशानं करौ कटकसम्युतम्
ऊर्ध्ववक्त्रसमायुक्तं दिव्याभरणभूषितम् १८१
ईशानदेहन्तध्यात्वा तत्पुरुषञ्च तदुच्यते
तस्य पूर्वमुखं सौम्यं कपोलतलशोभितम् १८२
जाम्बूनदप्रतीकाशं कल्पयेत्तु भुजद्वयम्
दक्षहस्ते क्षसूत्रन्तु वामं वै बीजपूरकम् १८३
पूर्वास्याचान मे योक्त्र दक्षिणाननमेव च
दक्षमञ्जन सङ्काशं भीषणवृषताड्यकम् १८४
व्याळबन्धजटाचूडं कपोलदळमण्डितम्
तुंश्मश्रसमायुक्तं शूलघण्टाकरद्वयम् १८५
एवं दक्षाननं प्रोक्तमुत्तराननमेव च
उत्तरं वामवक्त्रञ्च डाडिमी कुसुमप्रभम् १८६

भक्षणं प्रचुरं वक्त्रं योषिताश्रितभागकम्
भुजद्वयसमायुक्तं प्रसार्यैकरकान्वितम्  १८७
पद्महस्तधरञ्चैव वामदेव समन्वितम्
एवं ध्यात्वा विशेषेण पश्चिमं रजित प्रभम्  १८८
बालवेषसमायुक्तं पुण्डरीकनिभेक्षणम्
वरदाभयहस्तञ्च ध्यानासन्तिमिवस्थितम्  १८९
कुर्यात् सदाशिवं देवं वक्त्ररूपमिहोच्यते
हृदयं चाग्निदेशे तु गोक्षीरधवळप्रभम्  १९०
शिरः पीतं युवाकारं यजेदीशानदेशके
शिखां सिन्दूरवर्णाभां कुचभारनतां शुभाम्  १९१
यजनैर्ऋतदेशे तु नानारत्नविभूषितम्
दंष्ट्राकराळवदनं हीनभ्रमरभासुराम्  १९२
यजेद्वायव्य देशे तु तत्तत्स्थाने समर्चयेत्
नेत्रं चैव समभ्यर्च्य सोमेशाने तु मध्यमे  १९३
पूर्वादीनि चतुर्दिक्षु मस्त्रं चैव समर्चयेत्
अङ्गान्येतानि सर्वाणि दिव्याभ्रतशतानि च  १९४
गन्धपुष्पैस्समभ्यर्च्य भोगाङ्गश्च यजेत्ततः
ईशानमूर्तिरूपादि स्वरूपेण समर्चयेत्  १९५
अथवान्य प्रकारेण एकावरणमर्चयेत्
पाद्यमाचमनञ्चार्घ्यं गन्धपुष्पैस्समर्चयेत्  १९६
नैवेद्यक्रममेवञ्च उत्तमादिविशेषतः
उत्तमद्व्याढकं प्रोक्तं षट्प्रस्थं मध्यमं भवेत्  १९७
अधमञ्चाढकञ्चैव नैवेद्यं त्रिविधं भवेत्
अथवान्य प्रकारेण आठकञ्चोत्तमं भवेत्  १९८
उत्तमादित्रयञ्चैव कुडुपान्तन्तदुच्यते
प्रस्थस्यार्धफलञ्चैव कुडुपार्धघृतन्तथा  १९९

तदर्धार्धघृतञ्चैव पुष्पेणैव तु योजयेत्
ग्राज्यहीनन्तु नैवेद्यमसुराणान्निवेद्यकम् २००
तस्मात्सर्वप्रयत्नेन ग्राज्यशक्तन्निवेदयेत्
काम्यार्थन्तण्डुलञ्चैव नैवेद्यं स्वेच्छया ततः २०१
क्षणिकादि निवेद्यञ्च प्रस्थकं गुळमुद्गकम्
फलादि चैव नैवेद्यं एवमेव क्रमेण तु २०२
धूपदीपन्ततः कृत्वा नेत्रमन्त्रमनुस्मरन्
गोमयात् लेपनं कृत्वा चतुरश्रसमन्वितम् २०३
पात्रातारन्न्यसेन्मध्ये प्रोक्षयेदस्त्रमन्त्रतः
नैवेद्यञ्चोपदंशश्च स्थलिकान्मध्यमे न्यसेत् २०४
प्रत्येकं पात्रविन्यासं ग्रोदनेनैव पूरयेत्
तस्योर्ध्वे विन्यसेत्पात्रं प्रोक्षयेद्धृदयेन तु २०५
ताळत्रयन्ततः कृत्वा दिग्बन्धावकुण्डनम्
धेनुमुद्रां प्रदर्श्याथ पूर्वपात्रं विसर्जयेत् २०६
परिषिच्यास्त्रमन्त्रेणापोशनं हृदयेन तु
मध्यमानामिका चैव ग्रङ्गुष्ठाग्रेण योजयेत् २०७
पुष्पहस्तो हविर्दद्यात् मूलमन्त्रमनुस्मरन्
तत्पुष्पन्तु समारभ्य नैवेद्यं दापयेत्ततः २०८
तन्मन्त्रेण समुच्चार्य गणेशस्य निवेदयेत्
तत्पुष्पन्तु विसृज्याथ हस्तप्रक्षाळनं कुरु २०९
तत्परं लिङ्गनैवेद्यं पञ्चवारं त्रिवारकम्
ग्रथवा एकवारञ्च नैवेद्यं दापयेत्ततः २१०
पानीय दापयेद्धीमान् हस्तप्रक्षाळनं कुरु
महेश्वरादिबेराणां नैवेद्यं हृदयेन तु
तन्मन्त्रेणैव तु नैवेद्यमेकवारन्निवेदयेत् २११
प्रत्येकन्तु विशेषेण हस्तप्रक्षाळनं कुरु

गणेश्वरादि बेराणां लिङ्गेनैव तु योजयेत् २१२
अथवा एकपात्रञ्च ओदनेनैव पूरयेत्
नैवेद्यं दापयेत् शम्भो हृदयेन मन्त्रतः २१३
निर्माल्यन्तु विसृज्याथ स्थलशुद्धिञ्च कारयेत् २१४
तदग्रे बलिदानञ्च मण्डलञ्चतुरश्रकम्
पाद्यमाचमनञ्चार्घ्यं गन्धपुष्पैस्समर्चयेत् २१५
रुद्रेभ्यो पूर्वतो दद्यात् मातृभ्यो दक्षिणे तथा
गणेभ्यः पश्चिमे भागे रक्षेभ्यश्चोत्तरे बलिम् २१६
गृहेभ्यश्च सुरेभ्यश्च राक्षसेभ्यस्तथैव च
नागेभ्यश्च बलिं दद्यात् आग्नेयादि विचक्षणः २१७
मण्डलस्याय मध्ये तु क्षेत्रबालबलिं ददेत्
अदित् विदित् क्षेत्रपालश्च त्रिवारञ्च बलिं ददेत् २१८
सर्वमन्त्रं समूह्याथ एकवारं बलिं ददेत्
बलिदानं वसाने तु अग्निकार्यं समाचरेत् २१९
कुण्डे वा स्थण्डिले वापि अग्निकार्यं समाचरेत्
पञ्च संस्कारमेवन्तु कुण्डशोधनमेव च २२०
क्षाळनं शोषणञ्चैव पाचनं प्रोक्षणं तथा
सद्यादीशानपर्यन्तं मन्त्रमेवं समाचरेत् २२१
कुण्डसंस्कारमेवोक्तं स्थण्डिलञ्च विशेषतः
गोमयालेपनं कृत्वा चतुरश्रसमन्वितम् २२२
द्विदर्भैश्चैव सङ्गृह्य आमूलाग्रसमन्वितम्
निकुट्टनं पञ्च संख्यान्यस्त्रमन्त्रसमन्वितम् २२३
तद्दर्भं वर्जयित्वा कुजलोपस्पर्शनन्ततः
सिकदै स्थण्डिलं कृत्वा चतुरश्रसमन्वितम् २२४
हृदयाद्यस्त्रपर्यन्तं उल्लेखनक्रमन्ततः
शरावेणाग्निमादाय क्रव्यादंशं परित्यजेत् २२५

सम्प्रोक्ष्यघोरमन्त्रेण हृदा पुष्पं समर्चयेत्
वर्मणा चावकुण्ठञ्च इन्धनन्निक्षिपेत्ततः  २२६
स्थण्डिले कूर्चविन्यासं वागीवागीश्वरन्न्यसेत्
गन्धपुष्पैस्समर्च्याय तन्मन्त्रेण समर्चयेत्  २२७
एकवारं भ्रमन्नाग्निमग्निबीजं न्यसेत् बुधः
सदर्भैरिन्धनं कृत्वा शिरोमन्त्रेण देशिकः  २२८
गन्धपुष्पाक्षतञ्चैव अर्चये हृदयेन तु
पूर्वे वा दक्षिणे चैव पश्चिमे चोत्तरे तथा  २२९
शिखयाद्यस्त्रपर्यन्तं दर्भेणैव परिस्तरेत्
आज्यपात्रं समादाय मध्ये कूर्चन्तु विन्यसेत्  २३०
घृतेनापूर्य चास्त्रेण त्रिरूपावन्नताः
ग्रन्थिं विसृज्य चास्त्रेण जलोपस्पर्शनन्ततः  २३१
अग्नौ विनिक्षिपेद्दर्भमस्त्रमन्त्रं समुच्चरन्
ईशानादिनिवामान्तं परिषेचनमाचयेत्  २३२
अग्निमध्ये तु तन्ध्यात्वा अग्निरूपञ्च भावयेत्
अग्निन्ध्यात्वाग्निबीजञ्च गन्धपुष्पैस्समर्चयेत्  २३३
अग्निं हृदयमध्ये तु वृद्धाग्निध्यानमेव च
पाद्यमाचमनञ्चार्घ्यं गन्धपुष्पैस्समर्चयेत्  २३४
अनन्तादिशिखण्ड्यन्तान् तत्तत्स्थानेनमाचरेत्
ईशानाद्यस्त्रपर्यन्तं आज्येनैव हुनेत्क्रमात्  २३५
घृतेन मिश्रचरुणा मन्त्रेणैव तु होमयेत्
पञ्च संख्यास्त्रमन्त्रेण प्रायश्चित्तं हुनेत्क्रमात्  २३६
परिषेचनं ततः कृत्वा तन्मन्त्रेणैव देशिकः
परिस्तरणमादाय अग्निमध्ये विनिक्षिपेत्  २३७
तद्भस्म च ललाटे तु नेत्रमन्त्रेण विन्यसेत्
तद्देवन्तु समाग्राह्य लिङ्गेनैव समर्चयेत्  २३८

अथवान्य प्रकारेण जपमेव समाचरेत्
होमोपकरणवैकल्यादशक्तो वा तदन्यथा २३९
होमसंख्यानि मन्त्राणि जप्त्वा दशगुणं यथा
तज्जपं वरहस्ते तु तत्पुरुषन्तु समर्चयेत् २४०
अर्घ्यं दत्वा विशेषेण शिवमन्त्रमनुस्मरन्
दत्वा नित्यपवित्रञ्च दूर्वाक्षतसमन्वितम् २४१
तत्वत्रयं समुच्चार्य लिङ्गमूर्ध्नि विन्यसेत्
धूपदीपन्ततः कृत्वा आरात्रिकञ्च दापयेत् २४२
महेशप्रतिमादीनां तत्प्रदीपं विसर्जयेत्
भस्मावैकृतताम्बूलं हृदयञ्चास्त्रमन्त्रतः २४३
जलोपस्पर्शनं कृत्वा दर्पणं दर्शयेत्ततः
दर्पणं चामरञ्चैव छत्रं व्यजनं ताळवृन्तकम् २४४
पञ्च ब्रह्ममनुस्मृत्य योजयेत्तु क्रमेण तु
वेदैः पुराणमेवञ्च पञ्चाङ्गश्रवणान्ततः २४५
स्तोत्रनृत्तञ्च गीतञ्च वाद्यध्वनिसमायुतम्
नृत्तञ्चावसाने तु जपमेवं समाचरेत् २४६
अक्षमालासमादाय वामहस्तेन विन्यसेत्
निरीक्ष्य हृदयेनैव प्रोक्षणमीशमन्त्रतः २४७
दिग्बन्धञ्चावकुण्ठञ्च कवचेनावकुण्ठयेत्
कलामन्त्राभिमन्त्रेण पञ्चसंस्कारमेव च २४८
मध्यमादि अङ्गुळ्यं कुञ्चितञ्चैवमेव च
तर्जनी कुञ्चितञ्चैव अङ्गुष्ठप्रसृतान्ततः २४९
मोक्षार्थं मध्यमाङ्गुल्यं अङ्गुष्ठं मध्यमे न्यसेत्
कनिष्ठानामिकया मूले पुष्पं सङ्गृह्यदेशिकः २५०
उत्तानवामहस्तन्तु वामजानु परिन्यसेत्
अक्षमालाजपञ्चैव परदृष्टिन्न दर्शयेत् २५१

आच्छाद्य वाससास्तत्रो हृदये च स्थितिर्भवेत्
प्रणवादि नमो मन्त्रं शिवायेति नमस्ततः २५२
ओष्ठस्पन्दनमात्रेण उपांशुश्च जपेत्ततः
पुल्लिङ्गाङ्गुष्ठबन्धञ्च शक्त्याङ्गुलतर्जनी २५३
उभयोरङ्गुलीयुक्तं रुद्राक्षचलनन्ततः
अष्टोत्तरशतञ्चैव पञ्चाश्छाष्टविंशति २५४
गुह्यादिगुह्यगोप्तात्वं गृहाणास्मत्कृतं जपम्
सिद्धिर्भवतु देवत्वत्प्रसादात्वदीश्वरं २५५
यत्किञ्चित्कर्म हे देवं सदा सुकृतदुष्कृतम्
तन्मे शिवपदस्तस्य प्रणवामशिवशङ्करम् २५६
तत्पुष्पं वामहस्ते तु तन्मन्त्रन्तु समर्पयेत्
लयाङ्गयजनं कृत्वा पराङ्मुखं ददेत् बुधः २५७
सद्यादीशानपर्यन्तं क्रमेणैव तु योजयेत्
सद्यवाममघोरञ्च पुरुषेशानस्त्रं क्रमात् २५८
अस्त्रादि हृदयान्तञ्च अङ्गारंभे तु योजयेत्
चतुर्दिक्षु मस्त्रमभ्यर्च्य सोम इन्द्रान्तमेव च २५९
नेत्रं सौम्ये समभ्यर्च्य कवचं वायु देशके
नैर्ऋते तु शिखाञ्चैव शिरस्त्वीशानदेशके २६०
आग्नेयां हृदयञ्चैव अर्चयेत्तु लयाङ्गकम्
मध्यमानामिकाङ्गुष्ठमधोमुखार्घ्यं ददेत् बुधः २६१
पूजासमाप्तिविज्ञाप्य क्षमस्वेति प्रणम्य च
सर्वञ्च दक्षिणं हस्तं कुञ्चितञ्चतुरङ्गुलम् २६२
पुष्पं वारि गृहीत्वा तु शिवाग्रे देशिकोत्तमः
तज्जलं भूगता दत्वा कनिष्ठां स्नावयेत्ततः २६३
तत्पुष्पमस्त्रमन्त्रेण सव्यपादे समर्पयेत्
चुळुकोदतमाख्यातं पूजान्ते तु प्रदापयेत् २६४

आसनार्च्य मन्त्राणि पीठान्नैव तु योजयेत्
आवरणार्चनान्देवानां लिङ्गेनैव तु योजयेत् २६५
गणेश्वरादि बेराणां लिङ्गेनैव तु योजयेत्
आचार्यहृदयेनैव शिवमावाहयेत्ततः २६६
सौरं सञ्चिन्तयेद्धीमान् पूजयेत्तु समर्पयेत्
दक्षिणे मणिबन्धञ्च वामहस्ते तदूर्ध्वतः २६७
मध्यमादि त्र्यङ्गुल्यं तलमध्ये तु योजयेत्
अङ्गुष्ठतर्जनीयुक्तं पुष्पत्रयं विसर्जयेत् २६८
तत्पुष्पं वर्जयित्वा तु निरोधेन तु मुद्रया
एवं विसर्जन्ति मुद्रा शिरस्यञ्जलिमाचरेत् २६९
हस्तप्रक्षाळनं कृत्वा अस्त्रमन्त्रमनुस्मरन्
प्रत्येकं सवस्त्रमादाय पुष्पेणैव तु योजयेत् २७०
गणेश्वरादि बेराणां वस्त्रेणैव विधिक्रम
पेटकस्येव पार्श्वे तु विन्यसेदस्त्रमन्त्रतः २७१
शिवमन्त्रमनुस्मृत्य लिङ्गं सङ्गृह्य देशिकौ
चित्रवस्त्रेण संवेष्ट्य पेटकामध्यमान्यसेत् २७२
अपिधानन्तु सम्योज्य भीमरुद्रं स्मरेत्ततः
पूजां समाप्य देवेश नमस्कारस्य मुद्रया २७३
ऐशान्यां गोमये लिप्य टङ्काभञ्चार्धचन्द्रकम्
मण्डले चण्डमावाह्य तद्रूपं भावयेत्तता २७४
द्विनेत्रञ्चतुर्भुजञ्चैव शुक्लपक्षसमन्वितम्
जटामकुटसम्युक्तं चन्द्रार्धकृतशेखरम् २७५
लम्बितं दक्षिणं पादं शयतं वामपादकम्
जानुर्द्धे वामहस्तन्तु सव्यहस्तन्तु टङ्कधृत् २७६
अथवाञ्जलिहस्तञ्च एवं रूपन्तु भावयेत्
ध्वनिचण्डेश्वरायेति हुंफडन्तेस्त्रमन्त्रवित् २७७

पाद्यमाचमनञ्चार्घ्यं गन्धपुष्पैस्समर्चयेत्
लेह्यशोष्यान्नपानादि ताम्बूलं सृग्विलेपनम् २७८
निर्माल्यं भोजने तुभ्यं प्रदत्तन्तु शिवाज्ञया
सर्वमेतत्क्रिया काराडं माया चराडतवाज्ञया २७९
न्यूनाधिकं कृतं मोहात् परिपूर्णन्तदस्तु मे
इति विज्ञाप्य देवेशन्दत्वार्घ्यन्तस्य शम्बरात् २८०
तत् षडङ्गैस्समभ्यर्च्य चुळुकोदक प्रदापयेत्
पराङ्मुखार्घ्यं दत्वाथ चराडमुद्वासयेद्धृदि २८१
एवमात्मार्थयजनं क्रियाकाराडं समाचरेत्
स्वगुरुं पूजयेत्पश्चात् अर्चयेत्तु विशेषतः २८२
विद्यापीठार्चनञ्चैव पूर्ववद्देशिकोत्तम
स्थूललिङ्गनमस्कारमालयन्तु प्रवेशयेत् २८३
शिवाग्रे पुरतस्स्थित्वा महापीठाग्रदेशके
प्रणम्य दराडवद्भूमौ नमस्कारक्रमन्ततः २८४
अष्टाङ्गञ्चैव पञ्चाङ्ग त्रियङ्गञ्चेत्तथैव च
सप्तपञ्चत्रिंशत्संख्या गुरुमार्गेण कारयेत् २८५
प्रदक्षिणक्रमञ्चैव नवपञ्चत्रिसंख्यया
प्रदक्षिणवसानञ्च नमस्तुत्वा तदीश्वरम् २८६
मराटपान्ते प्रविश्याथ शिवाग्रे तु विशेषतः
वृषभञ्चराडमूर्तिञ्च प्रणम्यानुज्ञया तथा २८७
देवदेव नमस्तुत्वा स्तोत्रञ्चैव समुच्चरन्
मस्तके हृदये चैव अञ्जलिञ्चैव विन्यसेत् २८८
देशिकेनैव कर्तव्यं गर्भगेहं प्रवेशनम्
पुष्पेणैव समभ्यर्च्य शिवमन्त्रमनुस्मरन् २८९
विप्राणाञ्च प्रवेशञ्च अर्धमराटपमाविशेत्
क्षत्रियस्य विशेषेण पुष्पाञ्जलिक्रमेण तु २९०

मण्डपन्तु प्रविश्याथ मुखद्वारे स्तितिर्भवेत्
आत्मतत्वत्रयञ्चैव अर्चयेत्तु विशेषतः २९१
वैश्यानाञ्चैव शूद्राणां वृषाग्रे वृषपृष्टके
गोमयालेपनं कृत्वा चतुरश्रसमन्वितम् २९२
अर्चयेन्मूलमन्त्रेण गुरुमार्गेण कारयेत्
ततः कृत्वा नमस्कारं तत्पुष्पं बन्धयेत्ततः २९३
आलयान्निर्गमं कृत्वा स्वग्रहं प्रवेशेत्ततः
पादप्रक्षाळनं कृत्वा चतुरश्रसमन्वितम् २९४
आसनञ्चैव विन्यस्य सावधानं सदीपकम्
पूर्वस्याभिमुखं वापि पश्चिमाभिमुखन्ततः २९५
सौवर्णं रजतं कांस्यं शिला वा कदळी दळम्
पात्रप्रक्षाळनं कृत्वा तन्मध्ये स्नुवयेत् घृतम् २९६
शुद्धान्नं पूरयित्वा तु घृतं द्विरभिघार्यवा
व्यञ्जनेन समायुक्तं तदन्नं परिषिच्य च २९७
आत्मानस्सव्य भागे तु गोमयोलिप्तमण्डलम्
भूमौ ग्रासार्द्धकृत्वमात्रन्तु नागादिभ्यो बलिं क्षिपेत् २९८
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः
उपप्रण इमे प्रोक्तं मध्यादिभ्यो बलिं क्षिपेत्
चुळुकोदकं स्नवेद्धीमान् नागादिभ्यो निवेदयेत् २९९
परशेषनन्ततः कृत्वा अन्नं प्राणेन संस्पृशेत् ३००
अमृतरतोपस्तरणन्तथा चैव एवमापोशनन्ततः
तर्जनी मध्यमाङ्गुष्ठे प्राणस्यैवाहुतिर्भवेत् ३०१
मध्यमानामिकाङ्गुष्ठे व्यानस्य तदनन्तरम्
कनिष्ठतर्जन्यङ्गुष्ठैः उदानेचाहुतिं क्षिपेत् ३०२
सर्वैस्समानं उद्धृत्य सत्वाचैवाहुतिर्भवेत्
आस्य कुण्डान्तरज्वाला मध्ये प्राणाख्यत्स्मृतः ३०३

एकैनाहुतिभिर्दन्तान् न स्पृशन्नर्पयेदिमान्
घृतं व्यञ्जनं संमिश्रं शेषमीशाय भोजयेत् ३०४
प्राणाग्निहोत्रमित्युक्तं अग्निहोत्रशताधिकम्
पात्रञ्च वामहस्तेन स्पर्शयेत्तु विशेषतः ३०५
अनुस्मृत्य वसानन्तु यावत् भुजित वाग्यतः
आपोशनाभिधानञ्च तच्छेषं भूगतस्पृशेत् ३०६
आस्यञ्च जलपात्रञ्च भृङ्गारकजलैर्युतम्
हस्त प्रक्षाळनं कृत्वा आस्यमार्जनमेव च ३०७
कुलस्थ चूर्णं संक्षिप्यथवा उत्चूर्णकम्
पादप्रक्षाळनं कृत्वा तच्छेषं वर्जयेज्जलम् ३०८
पुनर्जलञ्च सङ्गृह्य आचम्य विधिना बुधः
यावत् दन्नाति पिण्डानि तावत्पापेन लिप्यते ३०९
अल्पमेव ततोग्नियात् प्राणरक्षणमात्रकम्
तपोपस्य विशुध्यर्थं दक्षपादनवाग्रके ३१०
कालाग्निरुद्रं हृन्मन्त्री सव्याङ्गुष्ठेन सेचयेत्
आरोप्य वामहस्तस्य कनिष्ठां नाभिमण्डले ३११
तामेव दक्षहस्तस्य वामाङ्गुष्ठेन योजयेत्
विततौ च करकौ कृत्वा दक्षाङ्गुष्ठे न्यसेन्मुखे ३१२
परिखेयं समाख्याता दुष्टाहारविनाशिनि
चुळुकोदकमेवं स्यात् स्वात्मानः पादमूलतः ३१३
प्राणाग्नि होत्रमित्येवन्नित्यमेवमुदाहृतम्
शिवमन्त्रमनुस्मृत्य नाभिं वामेन संस्पृशेत् ३१४
धर्मसंकीर्तनञ्चैव पुराणश्रवणन्ततः
नित्यार्चनं समाख्यातं यावज्जीवान्तमाचरेत् ३१५
इत्यंशुमान् तन्त्रे आत्मार्थपूजाविधिपटलः

## प्रदोषपूजै

प्रदोषस्य विधिं वक्ष्ये श्रूयतां रविसत्तम
सर्वपापहरं पुण्यं सर्वदोषनिवारणम् १
प्रदोषकाले कर्तव्यं यजनञ्च विशेषतः
त्रयोदशि दिने सायं क्षीराब्धिमथनोद्भवम् २
कबळीकृतवान् रुद्रः कालाग्निसदृशं विषम्
देवानाञ्च हितार्थाय वृषमारुह्य सत्वरम् ३
तस्मिन् काले मयार्पितं गरळं लोकरक्षया
कनिरादिवस्तुमत्पूजां सर्वपापैः प्रमुच्यते ४
तस्मात्सर्वप्रयत्नेन शिवपूजां समारभेत्
त्रयोदशि युतं सायं सर्वदोषावहं स्मृतम् ५
सितासिते त्रयोदश्यां यजनं वृषपूर्वकम्
उदयाद्युदयान्तञ्च त्रयोदश्युत्तमं भवेत् ६
भास्करोदय समारभ्य यावदस्तमनान्तकम्
तद्दिने यजनं कुर्यात् मध्यमञ्चेति कीर्तितम् ७
सप्तविंशतिनाप्यस्तु यजनञ्चाधमं भवेत्
दिवसाः परतः प्रातः काले ह्येकामयामा त्रयोदशि ८
तद्दिनस्यावसाने तु प्रदोष इति निश्चितः
तस्मादह्नोष्ट भागे तु आद्ये मद्ये तदन्तके ९
दृश्यते त्र त्रयोदश्यां शिवं सम्पूजयेद्बुधः
माघेशुक्लत्रयोदश्यां उत्तमोत्तममिष्यते १०
तद्दिने यजनं कुर्यात् सर्वमासफलं भवेत्
आचार्यश्शिष्यसंयुक्तो पूर्ववत्स्नानमाचरेत् ११
शुक्लवस्त्रेण संवेष्ट्य आर्द्रवस्त्रं परित्यजेत्
ततो देवालयं गत्वा प्रदक्षिणं समाचरेत् १२
पादप्रक्षाळनं कृत्वा मण्डपान्ते प्रवेशयेत्

रुचिरासनन्ततः कृत्वा उत्तराभिमुखो भवेत् १३
भस्मन्यासादिकं कुर्यात् देहन्यासादिकं तथा
गोमयालेपितां भूमिं चतुरश्रसमन्वितम् १४
शालिभिस्थण्डिलं कृत्वा नवकोष्ठं समालिखेत्
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः १५
पूर्वोक्तेन प्रकारेण कलशस्थापनन्ततः
पञ्चगव्यन्तु संस्थाप्य पञ्चामृतन्तदन्तरे १६
स्नानद्रव्यसमाहृत्या प्रोक्षये शुद्धवारिणा
विघ्नेश्वरं समभ्यर्च्य द्वारदेवान् समर्चयेत् १७
प्रश्छिन्नपटमावेष्ट्य गर्भगेहं प्रवेश्य च
धूपन्ढत्वा विशेषेण निर्माल्यन्तु विवर्जयेत् १८
तैलाभ्यङ्गन्ततः कृत्वा लिङ्गपीठञ्च मर्दयेत्
यावत् तण्डुलचूर्णेन मुद्गचूर्णेन लेपयेत् १९
लिङ्गशुद्धिं ततः कृत्वा पीठशुद्धिन्ततः परम्
पञ्चगव्याभिषेकञ्च शुद्धतोयाभिषेचयेत् २०
चमकं पुरुषसूक्तञ्च स्कन्दसूक्तन्तथैव च
अर्पयित्वान्यमस्त्राणि शुद्धतोयाभिषेचयेत् २१
घृतेन स्नापयेद्धीमान् स्नानद्रव्यन्तदन्तके
सुपुष्पं मूर्ध्नि विन्यस्य वस्त्रेणैव तु वेष्टयेत् २२
ततः कुर्यात्समादाय शिवाग्रे स्थापयेत्क्रमात्
मन्त्रन्यासादिकं कृत्वा धूपदीपादिकं ददेत् २३
कुम्भात् बीजं समादाय लिङ्गमूर्ध्नि च विन्यसेत्
वर्द्धनी कलशान्श्चैव तत्तत्स्थानेऽभिषेचयेत् २४
मन्त्रपुष्पन्तदो दत्वा मन्त्रान्त तु निवेदयेत्
खण्डवस्त्रेण सम्माज्य लिङ्गपीठं विशेषतः २५
वस्त्रेण वेष्टयेल्लिङ्गं चित्रवस्त्रेण सम्युतम्

गन्धमाल्यैरलङ्कृत्या भूषयेत् भूषणादिभिः २६
पाद्यमाचमनञ्चार्घ्यं धूपदीपं ददेत्ततः
नैवेद्यन्दापयेत्पश्चात् हृदयेन तु मन्त्रतः २७
पानीयमुपयित्वा तु मुखवासन्तदन्तके
अग्निकार्यक्रमं कृत्वा बलिदानं समाचरेत् २८
मूलबेरं विशेषेण धूपदीपादिकन्ततः
आरात्रिकन्ततः पश्चात् ताम्बूलन्तु निवेदयेत् २९
भसितन्दर्पणञ्छत्र चामरन्तु प्रदापयेत्
वेदस्तोत्रैश्च नृत्तैश्च सन्तोष्य परमेश्वरम् ३०
पूजान्ते च विशेषेण वृषभं पूजयेत्ततः
धूपदीपं समभ्यर्च्य ताम्बूलं दापयेत्ततः ३१
चणकन्तण्डुलञ्चैव नाळिकेरं गुळन्तथा
मुद्गभिन्नं तिलञ्चैव मिश्रञ्चैव निवेदयेत् ३२
ताम्बूलञ्चैव नैवेद्यं धूपदीपादिरात्रिकम्
नृत्तगीतञ्च वाद्यञ्च सद्यदेवान् समर्चयेत् ३३
वृषणस्य वृषणं स्पृष्ट्वा ईश्वरावलोकयेत्
शृङ्गमध्ये शिवं दृष्ट्वा पुनर्जन्मन्नविद्यते ३४
एवमभ्यर्च्य विधिवत् पूजा सौम्यक् समाचरेत्
स्तूप्यादि वृषपर्यन्तं तत्र पादं विधीयते ३५
वृषादिस्तानपर्यन्तं तत्र पादं विधीयते
त्रयोदशि प्रदोषस्य सप्तनाड्यार्धमेव च ३६
सायाह्ने देवसेवार्थं शिवलोकं स गच्छति
शिशुमात्रपितृणाश्च विप्राणामश्वगर्भिणि ३७
स्तीणां गवां वयञ्चैव सर्वपापं विनाशनम्
यस्य त्रयोदशि याम्ये ++++++ ३८
स्थिरवारप्रदोषस्य सर्वपापहरं भवेत्

एवं यः कुरुते मर्त्यस्सपुरयां गतिमाप्नुयात् ३६
इत्यंशुमान् तन्त्रे प्रदोषविधिपटलः

## प्रदोषपूजाकालविधिः
### कालनिर्णयम्

मन्दवारप्रदोषायमल्लिङ्गसर्वदेहिनाम्
तत्रापि दुर्लभतमं कृष्णपक्षं समागतो १
त्रयोदशी प्रदोषस्तु शिवप्रीतिकरं स्मृतम्
सकुम्मन्देन सम्युक्ता सर्वकामफलप्रदा २
व्रतानि स्नानपर्यन्तं घटिकैकविधीयते
नैवेद्याद्युत्सवान्तञ्च पञ्चनाडी प्रकीर्तिताः ३
धूपादि वृषपर्यन्तं त्रिपादेन त्रिनाडिका
प्रदोष यजनान्तेषु सायरक्षा समाचरेत् ४
एवं यः कुरुते मर्त्य सपुरयां गतिमाप्नुयात्

### प्रदोषपूजाव्रतम्

अथातस्संप्रवक्ष्यामि प्रदोषस्य विधिक्रमम्
पुरा मृगराडुमित्येको महऋषि भार्यया सह १
पश्चचारू पुत्रार्था मनीनामपि द्रष्करम्
ततस्तत् तपसा प्रीतो देवदेवो घृणानिधि २
आहिरासीत्तदग्रे तु साम्बो वृषभवाहनम्
तदूर्ध्वा सहसा हृष्टो दम्पति प्रणिपवचा ३
तुष्टावन्तुष्टा वतदेवो दतवानभिलाषितम्
वेदवेदाह तत्वज्ञो भक्त्या शैलादि सन्निभम् ४
तनधषोडशाब्दायुः मत्प्रसादात् भविष्यति
इत्यर्गतं शम्भो स्तौच स्वाश्रम्मपातुक्रमात् ५

सर्वलक्षणसम्युक्तं शिवभक्तम्महागुणम्
तत्पत्नि सुषुवे पुत्रं तिसृसृष्टः पिताप्यभूत् ६
अथोपनीताश्चाप्यस्तददेवो श्रुतवैभवम्
न स्वायुरब्दावसाने तु पित्रा ज्ञात्वा महातपाः
कालमृत्युन्तदा जेतुं लिङ्गार्चनरतो भवेत् ७
षोडशाब्दावसाने तु कालकालाग्निसन्निभाः
शूलपाशधरं कृत्वा सर्वलोक भयङ्करम् ८
तत्सङ्काशमहत्सोपि लिङ्गालिङ्ग्यसमाद्यगात्
स्वेतिञ्चक्रे स्वभावेन लिङ्गेन सह वालकम् ९
आकृष्टदस्ततो लिङ्गापि भूतो महेश्वरम्
वामपादन्तत्प्रहारेण संहृत्य प्रियतत्करात् १०
नित्यत्वं दत्तवान् तस्मै भक्ताय भगनेत्रकम्
प्रकृष्टदेवन्तत्काले प्राणिनो मलगौरवात् ११
निद्रां वृषति यत्तस्मात् प्रदोषमिति कथ्यते
तत्काले कालकालान्तं ब्रह्मविष्णु ऋषादयः १२
स्वस्वदोष विनाशार्थं पूजयाती विधानतः
सायं संहारकालत्वात् सर्वदोषापनुत्तये १३
विश्वरक्षात्मकं धर्मं वृषभं प्रथमं यजेत्
स्नात्वा सायन्तनिं सन्ध्य कृत्वाचार्य प्रसन्नधि १४
शिवयामप्रविश्याथ भूतशुध्यादि पूर्ववत्
कृत्वा शिवाग्रतः पश्चात् आयस्थण्डिलकल्पनम् १५
पुण्याहं वाचकं कृत्वा स्नपनन्नवकन्तथा
संस्थाप्य पञ्चगव्यञ्च पश्चाद्घृतमनन्तरम् १६
घृतं क्रमेण सम्पूज्य या यत्र वृषभं स्मृतम्
यजेत् धूपं दत्वाय निर्माल्य विसृज्य वृषभन्ततः १७
अभिषिच्या समूर्तिमूलमन्त्रञ्च विन्यसेत्

षडङ्गानि च विन्यस्य दिग्बन्धमवकुराठनम्  १८
गोविषाणाह्वयामुद्रां कृत्वा पाद्यादिकं ददेत्
तैलाभ्यङ्गं ततः पश्चात् गव्यस्नानं विधाय च  १९
शुद्धोदकेन संस्नाप्य गन्धपुष्पादिभिर्यजेत्
कृसरान्नं समर्प्याथ ताम्बूलं तदनन्तरम्  २०
धूपदीपन्ततो दत्वा जपकृत्वां समर्पयेत्
तराडुलं मुद्गभिन्नञ्च कृसरं फलमेव च  २१
नाळिकेरफलञ्चित्वा नदीनान्तु निवेदयेत्
पृथिव्या यानि तीर्थानि सागरान्तानि तानि तु  २२
अराडमाश्रित्य निष्ठन्ति प्रदोषे वृषभस्य तु
तस्मात्तद्वृषणं स्पृष्ट्वा पश्ये शृङ्गान्तरे शिवम्  २३
ऋणरोगादिदारिद्र्या पापक्षुद्रापमृत्यवः
भयक्रोधमनखेदं नश्यन्तु मम सर्वदा  २४
इति त्रिवारं विज्ञाप्य मुच्यते सर्वपापकैः
अशुष्के तालपत्रे तु विलिख्या शिवसन्निधौ  २५
विज्ञाप्य दहनं कुर्यात् जलतीरे विनिक्षिपेत्
इति त्रिवारं विज्ञाप्य तस्या नास्ति मरणादिकम्  २६
द्वारदेवान् समभ्यर्च्य लिङ्गशुद्धिं समाचरेत्
प्रदोषपूजा प्रकारेण सर्वकर्म समाचरेत्  २७
इति अंशुमान् तन्त्रे प्रदोषपूजाविधिपटलः

## अग्निकार्यविधि

अग्निकार्य विधिं वक्ष्ये श्रूयतां रविसत्तम
सर्वलोक हितार्थाय सर्वयज्ञफलप्रदम्  १
सर्वशत्रुक्षयकरं सर्वपापविनाशनम्
कल्पञ्चैवा तु कल्पञ्च तथा कल्पानकल्पकम्  २

वैदिकं कल्पमेवञ्च मिश्रञ्चैवानुकल्पकम्
शैवं कल्पानुकल्पञ्च अग्निकार्यं त्रिविधा भवेत् ३
कैवलैर्वैदिकं कृत्वा वैदिको मन्त्र उच्यते
मन्त्रैर्वैदिकशैवस्तु तिहितो मिश्र उच्यते ४
केवलं शिवमन्त्रैस्तु कुर्याञ्चैव तदुच्यते
त्रिभिः परिधि संयुक्तं अधोर्ध्व समिधौ तथा ५
वैदिकञ्चैवमेवोक्तं मिश्रञ्चैव ततश्रुणु
चतुष्पनिधिभिञ्चैव तथा प्यश्रर्ध्वसमत्युतः ६
मिश्राग्निरेव कर्तव्यं केवलाग्निं ततश्रुणु
केवलं शैव मन्त्रैस्तु परिधिं कल्पयेत्ततः ७
गार्हपत्याहवनीयं दक्षिणाग्निं तथैव च
बालाग्निं गार्हपत्यञ्च आहवनीयञ्च यौवनम् ८
दक्षिणाग्निञ्च वृद्धिञ्च अग्नित्रयमिहोच्यते
स्थापने गार्हपत्यग्नि आहवनीयन्तथोद्भवम् ९
दक्षिणाग्निञ्च नित्यञ्च रूपमिहोच्यते
वैदिके च शुभे कार्यो गर्हपत्यं शुभप्रदम् १०
देवकार्येषु सर्वेषु आहवनीयन्तथोच्यते
पितृयुक्तेषु कर्मेषु दक्षिणाग्निन्तु कल्पयेत् ११
कुण्डे वा स्थण्डिले वापि यजन द्विविधा स्मृतः
सप्तसंस्कारमार्गेण कुण्डञ्चेत् पूर्ववत्गुरु १२
कुण्डसंस्कारमेवोक्तं स्थण्डिलञ्च ततश्शृणु
स्थण्डिलं सर्वकामार्थं सर्वकर्मेषयोग्यकम् १३
मार्जनप्रोक्षणञ्चैव सत्यमन्त्रेण सम्युतम्
गोमयालेपनं कृत्वा वामदेवेन मन्त्रतः १४
चतुस्तालन्ततः कृत्वा चतुरश्रसमन्वितम्
द्विदर्भेणैव सम्मार्ज्य चूळिकामन्त्रमुच्चरन् १५

सदर्भै सौम्य देशे तु वर्जयेद्देशिकोत्तमः
शुद्धैरुद्धेति मन्त्रेण प्रोक्षये हृदयेन तु १६
द्विदर्भांश्चैव सङ्ग्राह्य मूलाग्रञ्चैव योजयेत्
शजलेन सम्युक्तं अस्त्रमन्त्रं समुच्चरन् १७
पश्चिमे मध्यमे चैव पूर्वे चैव त्रितासनम्
दक्षिणे मध्यमे चैव ताडनञ्च क्रमेण तु १८
गृहीत्वा तन्निञ्चैवमेवोक्तं सौम्यदेशे विवर्जयेत्
तद्देश प्रोक्षयमेवञ्च हृदयेन तु मन्त्रतः १९
स्वर्णरजतताम्रेण खननास्त्रेण संक्तुतः
खननञ्चास्त्रमन्त्रेण उद्धारं स्घोरमेव च २०
पूरणं वामदेवेन त्रिभिसंस्कार उच्यते
तद्देशे तु विशेषेण क्रिमिकीट विवर्जयेत् २१
तालमात्रं खनित्वा तु ताम्रदं वर्त्मयेत्ततः
नाद्योस्तु सिकतैश्चैव सङ्ग्रयेत् शुद्धपात्रतः २२
भस्मकेश कपालञ्च सतुषं शर्करातृणम्
सपीलिकास्थिसम्युक्तमार्द्रकं सिकतं जयेत् २३
यजमानक्षयं भस्म केशपुत्र विनाशनम्
पुत्रघ्नञ्च तुषञ्चैव कपालमर्थनाशनम् २४
शर्करै सर्वनाशाञ्च तृणां क्षेत्रभयं भवेत्
पिपीलिकै राष्ट्रनाशञ्च रस्थिभि ग्रामनाशनम् २५
आद्राकै सिकतैश्चैव व्याधिश्शोकभयानि च
तस्मात्सर्वप्रयत्नेन नाद्रैर्वालुकं ग्रहेत् २६
तत्खातं पूरणञ्चैव खातमन्त्रं समन्ततः
व्योमपक्षाङ्गुलोत्सेधं निम्नोन्नतविवर्ज्जितः २७
तत्पार्श्वं विस्मृतञ्चैव पञ्चाङ्गुलन्तथैव च
तस्योरुभय पार्श्वे तु वालुकैश्चैव विन्यसेत् २८

मोक्षाङ्गुलसमोत्सेध लोककेशाङ्गुल विस्मृतम्
ब्रह्मस्थानदिनन्युक्तं दिनन्युक्तं मध्ये तु नळिनं लिखेत्  २९
चन्द्राङ्गुलसमोत्सेधं कर्माङ्गुल सुषस्मृतम्
प्रणीतास्थानमेवोक्तं वामभागे तु कल्पयेत्  ३०
भूमिर्भूम्नेति चास्त्रेण स्थण्डिलप्रोक्षयेत्ततः
स्थण्डिलं भूमिदेवत्यामर्चयेद्गन्धपुष्पकैः  ३१
द्विदर्भैश्चैव सम्युक्तद्वादशाङ्गुलमायतम्
मूलाग्रञ्चैव सम्योज्य स्थण्डिलेनैव लेखयेत्  ३२
प्राग्ग्रन्तिसृरेखाश्च उदगग्रन्तथैव च
उल्लेखनादि मन्त्रेण कवं सौम्यदेशके  ३३
यो रुद्रो इति मन्त्रेण ईशानं चैव मध्यमे
तन्मन्त्रं रुद्रमन्त्रञ्च पुष्करञ्च विवर्जितः  ३४
इदं विष्णुश्च मन्त्रेण पश्चिमास्त्रेण लेखयेत्
इन्द्रं विश्वा च मन्त्रेण शिखायां पूर्वलेखयेत्  ३५
तत्तदर्भै मध्यमेन्तस्य पूर्वास्त्रश्चैवमेव च
तत्पदं पेचकञ्चैव प्रोक्ष्य ईशान मन्त्रतः  ३६
उल्लेखनञ्च दर्भैश्च सौम्यदेशे विवर्जयेत्
अस्त्रमन्त्रं समुच्चार्य जलस्पर्शनमेव च  ३७
यतापिवस्वतस्सोमं मध्ये दक्षिणसौम्ययोः
रुद्रो विष्णुश्च शक्रश्च मध्ये पश्चिमपूर्वके  ३८
अधिदेवास्समाख्यातो गन्धपुष्पैस्समर्चयेत्
वागीशीत्यासनं कृत्वा पश्चिमाग्रं कुशन्यसेत्  ३९
उत्तमं सूर्यकान्तञ्च अरण्युद्भवमध्यमम्  ४०
श्रोत्रियागोरजो वह्नि अधमञ्चेति कीर्तितम्
मृत्पात्रे ताम्रपात्रे वा कांस्ये वा नलमानयेत्  ४१
होतुरग्रे तु विन्यस्यात् अथवा दक्षभागतः

ममाग्नि इति मन्त्रेण कुर्यादग्निनिरीक्षणम् ४२
अस्त्रमन्त्रं समुच्चार्य दर्भाग्रेऽग्निं सुयोजयेत्
तदग्निं शकलञ्चैव द्वात्रिंशद्विभजेत्ततः ४३
क्रव्यादांशां तदेकञ्च नैर्ऋते तु परित्यजेत्
यद्धस्तेनैवमेवञ्च जलस्पर्शनकन्ततः ४४
प्रोक्षयेत् घोरमन्त्रेण गन्धपुष्पै हृदार्चयेत्
दिग्बन्धञ्चास्त्रमन्त्रेण वर्मणा चावकुण्ठनम् ४५
प्रक्षिप्येन्धनमग्नौ तु प्रज्वाल्याग्निं विधानतः
कृत्वा चाभिमुखञ्चैव स्थण्डले मध्यमे न्यसेत् ४६
वागीश्वरी वागीश्वञ्चैव बिन्दुनादमिति स्मृतम्
बिन्दुवागीश्वरमिति प्रोक्तं नादं वागीश्वरीन्तथा ४७
पञ्चवक्त्रन्त्रिणेत्रञ्च चतुर्हस्तन्त्रिपादकम्
श्वेतवर्णमिति ज्ञेयमभयं वरदन्तथा ४८
अक्षमालाञ्च वामे तु दक्षहस्तेन कूर्चकम्
वागीशन्ध्यानमेवोक्तं हेतुश्चैव तु भावयेत् ४९
श्यामवर्णान्त्रिणेत्राञ्च षट्भुजाञ्च सुयौवनम्
सर्वाभरणसम्युक्तं सौभाग्यञ्च द्विपादकम् ५०
डाडिमी फलपद्वाञ्च वामे सर्वे च धारिणीम्
अक्षमालाञ्च पाशञ्च अभयं वरदन्तथा ५१
ऋतुस्नातां ततो ध्यात्वा कूर्चेनैव तु विन्यसेत्
निष्ठुरमुद्रया चैव पुष्पसङ्गृह्य देशिकः ५२
अग्निं सङ्गृह्य पास्त्रेण नीत्वा तं वामनासिके
ललाटाग्नौ तु सम्योज्य उदराग्नौ सुयोजयेत् ५३
नीत्वा तु दक्षिणास्येव अग्निमग्निस्तु योजयेत्
पात्रेण च हृदो कृत्वा मुण्डकासनसम्युतः ५४
भ्रामयित्वा त्रिधाकुण्डं ललाटान्तं समुद्धृतम्

कुण्डकाससम्युक्तो योनिमार्गेण निक्षिपेत् ५५
वागीश्वरञ्च पितरं वागीशिमनिमातरम्
वागीशी च भवेद्गौरी वागीशस्य महेश्वरम् ५६
अहं गर्भमिति मन्त्रेण हृदा तु योनि निक्षिपेत्
सदाशिवस्य +++++++ ५७
मम देवाग्नि बीजञ्च कूर्चमध्ये प्रतिष्ठितम्
अभिधानं तत्र कुर्यात् भावयेत्तदनन्तरम् ५८
ममाग्नेत्येति मन्त्रेण सदर्भैरिन्धनं क्षिपेत्
अधिदेवेति मन्त्रेण इति ग्रन्थान्तरे पाठः
गर्भधानमिति प्रोक्तं हृदयेनार्घ्य दातमेव च ५९
अस्मै देवास्त्रमन्त्रेण पुंसवानञ्चर्घ्यमेव च
बहुरूपेति मन्त्रेण सीमन्तस्यन्तदर्घ्यकम् ६०
अग्निं प्रज्वाल्य चास्त्रेण व्यञ्जनेन समन्वितम्
गन्धपुष्पसमभ्यर्च्य हृदयेन तु मन्त्रतः ६१
अग्निन्तु जननार्थाय सप्तहोमन्तु तण्डुलैः
शिरसो वाह्य दानेन जातकर्मन्तथैव च ६२
सद्यस्सूकृतकनाशाय प्रोक्षयेदस्त्रमन्त्रतः
वागीशीं स्थापयेद्विद्वान् धीमान् शुद्धेरुद्धेरिति मन्त्रतः ६३
कूर्चाग्रेनैव सम्युक्तं प्रोक्षयेदस्त्रवारिणा
विश्वदानीति चास्त्रेण प्रोक्षयेदिन्धनन्ततः ६४
रात्रिं रात्रेति मन्त्रेण चूळिकामन्त्रसम्युतम्
तद्देवं विश्वदानीञ्च अन्नेनैव तु योजयेत् ६५
द्विमुखन्तत्त्रिपादञ्च नासिकाद्वय सम्युतम्
त्रिमेखलसम्युक्तं षण्णेत्रं पिङ्गळप्रभम् ६६
सव्यवक्त्रे चतुर्जिह्वा वामवक्त्रे त्रयन्तथा
सव्यभागे चतुर्हस्तं त्रिहस्तं वामसव्यके ६७

स्रुक्स्रुवेन चाक्षमाला च शक्तिशक्षिणके करे
तोमरव्यजनञ्चैव घृतपात्रन्तु वामके ६८
हिरण्यकनका रक्ता कृष्णोणाञ्च तु सुप्रभा
अतिरक्तं बहुरूपा सप्तजिह्वा प्रकीर्तितः ६९
हिरण्यादि चतस्रस्तु जिह्वादक्षिणवक्त्रके
सुप्रभादीनि तिस्रस्तु जिह्वा वै वामवक्त्रके ७०
हिरण्या वारुणा जिह्वा कनका मध्यमे स्थितः
रक्ताचोत्तर जिह्वा स्यात् कृष्णा याम्य दिशि स्थितः ७१
सुप्रभा पूर्वजिह्वा स्यादिति रक्तानले स्थितः
बहुरूपैशजिह्वा स्यात् जिह्वास्थानप्रकीर्तितम् ७२
हिरण्या शातकुम्भा कनका राजपुष्पवत्
रक्तसिन्दूरसदृशा कृष्णा कृष्णा भ्रसन्निभा ७३
सुप्रभा श्वेतवर्णा च अतिरक्तेन्द्रकोपवत्
बहुरूपा चित्रवर्णास्तु जिह्वावर्णमिहोच्यते ७४
बहुरूपा त्रिविधाज्ञेया सुषुम्ना पिङ्गळा इडा
एतानि मुखजिह्वा च नवभेदमुदाहृतम् ७५
काळी चैव कराळी च मनोरमा च सुलोहिता
सधूमूत्रायन्यै पुल्लिङ्गि विश्वरूपि विलोहितः ७६
देवि लाणो लानयना इति शक्ति प्रकीर्तितः
हिरण्यादि इडानान्तं वर्मशक्तिषु योजयेत् ७७
ऊर्ध्वास्त्रिक्त्रस्थिततास्तिस्त्रा शैष प्रागादिकस्तथा
चतुशृङ्गं वृषारूढं पदापीठोपरिस्थितम् ७८
शैवाग्निद्धानदृष्टिमत्रिघोग्नि प्रकीर्तितः
एवं ध्यात्वामभ्यर्च्य हृदयेन तु मन्त्रतः ७९
अग्निमध्ये तु तन्ध्यात्वा स्वासीनं पश्चिमाननम्
प्रोक्षयेदिशमन्त्रेण पुष्पार्घ्यञ्चैव मिश्रकम् ८०

नामकरणमेवोक्तं पञ्चसंस्कारमुच्यते
अग्निं विभज्य तत्काले चरुं सिपाचयेत्ततः ८१
स्थालिपाकक्रमं कृत्वा पूर्वोक्तविधिमाचरेत्
अथवा नः पाचयित्वा तु चरुं गृह्य देशिकः ८२
निधाय रान्मन्त्रदर्भैक्ष संरक्ष्याय चावकुराठयेत्
द्विदर्भेणेन्धनं ग्राह्य अञ्जलीहस्तसम्युतम् ८३
वास्तोष्पतेतिमन्त्रेण दशाक्षरञ्चैव मन्त्रतः
अग्निञ्च समारोप्य दर्भाभ्यामिन्धनेन च ८४
अग्निं प्रज्वाल्य कुराडस्थन्तत्र संयोजयेत्क्रमात्
अग्नि सान्निध्यायमेवञ्च दर्भे चेन्धनं हुनेत् ८५
उपस्तानन्तः कृत्वा परिस्तरञ्चैवमेव च
पूर्वाग्रकाञ्चतस्थाने परिस्तरणञ्चैव विन्यसेत् ८६
परिस्तरणञ्च परिधिञ्च विष्टरं कूर्चमेव च
चत्वारिंशच्च संख्या च प्रतिदिक्चैवमेव च ८७
प्राक् दर्भाश्चाथ संख्या च ग्रन्थिं पक्षाङ्गुलं भवेत्
वेदाङ्गुलं भवेदग्रं चतुर्विंशात् गुलायुतम् ८८
कनिष्ठाङ्गुलपरिणाहं मायातं हस्तमानकम्
शताष्टविंशत्संख्या च चतुर्दिक् विष्टरन्तथा ८९
ग्रन्थिरेकाङ्गुलञ्चैव त्रिविभज्यैक सम्युतम्
विष्टरञ्चैवमेवोक्तं कूर्चानां लक्षणं श्रुणु ९०
षट्त्रिंशत् दर्भसंख्या च चतुर्विंशाङ्गुलन्ततः
व्योमाङ्गुलकं ग्रन्थिं वेदाङ्गुलन्तदग्रकम् ९१
तद्दर्भैर्वेष्टिकाञ्चैव कूर्चेनैव परिस्तरेत्
उत्तरादक्षिणाञ्चैव अथवा चोत्तरा तथा ९२
प्रागाग्रा चोत्तराग्रा च प्रागादिषु च विन्यसेत्
पञ्चाशत् पक्षसंख्या च चतुर्दिक् प्रस्तरन्यसेत् ९३

रक्षार्थञ्चैवमेवोक्तं ब्रह्मस्थानञ्च बाह्यके
देवस्यत्वेति मन्त्रेण पुरुषञ्चैव विन्यसेत् ९४
भूर्भुवस्वेति मन्त्रेण अघोरन्दक्षिणान्यसेत्
उद्वयञ्चेति मन्त्रेण सद्योजातञ्च पश्चिमे ९५
अग्न आयाहि मन्त्रेण वामदेवन्तथोत्तरे
दक्षिणे पश्चिमे सौम्ये ब्रह्माविष्णुश्च पात्रके ९६
तदेवमासनञ्चैव पक्षकाशैः परिस्तरेत्
प्रोक्षणीञ्च प्रणीताञ्च आज्यस्थालिन्तथैव च ९७
स्रुक्स्रुवं व्यञ्जनञ्चैव दूर्वाञ्च चरुपात्रकम्
कमण्डलुञ्चैवमेवञ्च सम्पाताहुति पात्रकम् ९८
समिधो मेक्षणञ्चैव दर्भैश्च कूर्चसम्युतम्
एतैश्च पात्रयङ्ग्राह्य द्वद्वरूपाणि सङ्ग्रहेत् ९९
संविशतेति मन्त्रेण पात्राणयस्त्रेण संस्पृशेत्
अधोमुखानि पात्राणि वामे काशोपरि न्यसेत्
होमयोग्यानि द्रव्याणि तत्तत्स्थाने च विन्यसेत् १००
कमण्डलुं समादाय पुष्करास्त्रेण पूरयेत्
प्रोक्षणी पात्रमादाय होतु रग्रे तु विन्यसेत् १०१
पुष्करस्याधिदेवञ्च अव्यक्तञ्चैव पात्रकम्
वितस्तीर्यातकाशञ्चा तन्मध्ये ग्रन्थिसम्युतम् १०२
पात्रमध्ये न्यसेत्कूर्चचूळिकामन्त्रमुच्चरन्
आपोप इति मन्त्रेण प्रोक्षणञ्च त्रिभिस्तथा १०३
अङ्गुष्ठानामिकाभ्यान्तु हस्तयोरुभयोरपि
उत्तानाङ्गुलि सम्युक्तं गच्छद्य विसृजेत्ततः १०४
शन्नो देवीति मन्त्रेण त्रिभिरुप्लवनन्ततः
सूत्र संख्या कुशेनैव कूर्चयेत्तु त्रिभिस्तथा १०५
एतानि सर्वद्रव्याणि सर्वपात्राणि दक्षिणे

अधोमुखानि पात्राणि दक्षकाशे तथैव च १०६
शन्नो देवेति वर्माभ्यां पात्राणां साधनं कुरु
पात्राण्युद्ध्वाननान्येव समिद्बन्धं विसृज्य च १०७
आयुष्यञ्चात्र मन्त्रेण प्रोक्षणञ्च त्रिभिस्तथा
ब्रह्मन् ब्रह्मासि मन्त्रेण चूळिकामन्त्रमुच्चरन् १०८
स्थण्डिले पद्ममध्ये च तद्देशे चैव विन्यसेत्
गन्धपुष्पैस्समभ्यर्च्य शिखामन्त्रसमुच्चरन् १०९
प्रणीतापात्रमादाय वरुणस्याधिदैवतम्
अग्रतं पात्रमभ्यर्च्य होतुरग्रे तु विन्यसेत् ११०
मध्यग्रन्थिञ्च कूर्चेन प्रादेशमात्रसम्युतम्
पात्रमध्ये न्यसेत्कूर्चं चूळिकामन्त्रमुच्चरन् १११
गोवा ग्राह्णाति मन्त्रेण पुष्करास्त्रेण पूरयेत्
जलं जलेन संस्राव्य तत् जलं शुद्धिमेव च ११२
शुद्धैरूर्धेति मन्त्रेण तज्जलं स्रावयेत्ततः
अप्लवनन्ततः कुर्यात् प्रणवेनैव निक्षिपेत् ११३
गन्धपुष्पैस्समभ्यर्च्य कवचेनाभिमन्त्रयेत्
पाणिभ्यां पात्रमादाय ऊर्ध्वाधो दर्भसम्युतम् ११४
नासिकास्यावसानञ्च पात्रस्योत्र्थनमेव च
वारुणोस्थेति मन्त्रेण पुरुषञ्चैव सम्युतम् ११५
पद्मकुर्याश्रमिति वा स्थण्डिले न्यस्य गन्धपुष्पैस्समर्चयेत्
तदेदिरस्य मन्त्रेन कवचञ्चैव सम्युतम् ११६
आज्यपात्रं समादाय कालाग्नित्यधिदेवता
तेजोवत्पात्रमभ्यर्च्य स्थण्डिलान्ते तथैव च ११७
पश्चिमे पापकन्नीत्वा वाचत्वायेति मन्त्रतः
नेत्रमन्त्रं समुच्चार्य तस्योर्ध्वे पात्रकं न्यसेत् ११८
मध्यग्रन्थि कुशेनैव प्रादेशमात्रमेव च

पात्रमध्ये न्यसेत्कूर्चं चूळिकामन्त्रमुच्चरान् ११९
महीनामिति चैवमन्त्रेण बहुरूपेण चैव हि
घृतेन पात्रमापूर्य द्विकुशाग्रञ्च विन्यसेत् १२०
दर्भाग्रेश्छेदनं कृत्वा जलसंस्पर्शनन्ततः
++ मन्त्रेण आज्येनैवाभिमन्त्रयेत् १२१
असुरांशन्तु दर्भाग्रं नेर्ऋते तु विवर्जयेत्
अस्त्रेणैव तु मन्त्रेण जलसंस्पर्शनन्ततः १२२
घृतं मिमिक्षमिति मन्त्रेण आज्यन्तत्राभिमन्त्रयेत्
गृहीत्वा तु द्विदर्भे तदग्रं ज्वलमन्यसेत् १२३
आननेनास्त्रमन्त्रेण पर्यग्निकरणन्ततः
आज्यमेकं परिभ्राम्य दीपेन द्योत्य सर्वतः १२४
दर्भाग्रे चे तु विन्यस्य ग्र घृतमध्ये विशेषतः
गृहीत्वा पूर्ववद्दर्भौ नेत्रमन्त्रेण बुद्धिमान् १२५
पश्चात् पूर्वात्रमेवञ्च स्थण्डिलान्ते च विन्यसेत्
जलं स्पर्शनं कृत्वा तु अस्त्रमन्त्रसमुच्चरन् १२६
आज्यस्थालिञ्च सङ्गृह्य होतुरग्रे तु विन्यसेत्
अग्निमग्निन्तु सम्योज्य अग्निबीजमनुस्मरन् १२७
अङ्गुष्ठानामिकाभ्यान्तु हस्तयोरुभयोरपि
उत्तानाङ्गुलि सम्युक्तन्तत्कूर्चे सङ्गृहेत् बुधः १२८
नैन्तधेणेव संयोज्य चाग्निबीजमनुस्मरन्
पूर्वादि पश्चिमान्तञ्च पश्चात् पूर्वान्तमेव च १२९
देवस्सविता सद्येन आज्येनोत्सप्लवनं त्रिधा
तद्ग्रन्धिं विसृज्यमेवञ्च जलसंस्पृशनन्ततः १३०
अस्त्रमन्त्रं समुच्चार्य वह्निमध्ये विनिक्षिपेत्
अभिमुखञ्च तत्काले अग्निमन्त्रं शतं जपेत् १३१
नीराञ्जनं कुशाग्रेण दिवि तेनाथ वह्निना

अन्तरिक्षस्य मन्त्रेण नेत्रमन्त्रेण सम्युतम्  १३२
अग्निमेकं परिभ्राम्य अग्निमध्ये तु योजयेत्
जलस्पर्शनकृत्वा तु अस्त्रमन्त्रं समुच्चरन्  १३३
त्रिधा आज्यं परिभ्राम्य अग्निस्योर्ध्वे प्रदक्षिणम्
कवचमन्त्रमुच्चार्य होतुरग्रे तु विन्यसेत्  १३४
प्रादेशाकूर्च्चसङ्ग्राह्य घृतमध्ये तु योजयेत्
इडापिङ्गळाञ्चैव सुषुम्नाञ्च विभज्य च  १३५
पूर्वपक्षे च पूर्वे च पश्चादपरपक्षके
पूर्वस्याभिमुखञ्चैव दक्षिणेनैव सौम्यके  १३६
स्रुक्स्रुवौ दक्षिणे हस्ते ऊर्ध्वे चानेन सम्मुखप्रशेत्
त्रिदर्भेणैव सम्युक्तं वामहस्तेन सङ्ग्रहेत्  १३७
प्रत्युद्रञ्चेति मन्त्रेण पुरुषेणैव सम्युतम्
वह्न्यूर्ध्वेऽधोस्त्वमुखं भ्राम्य परस्परमुखौस्तथा  १३८
दक्षहस्तस्थ दर्भैश्च तलमध्ये तु वेष्टयेत्
प्रदक्षिण क्रमेणैव कवचेन स्पृशे ततः  १३९
कृशपृष्ठेन सम्मार्ज्य अग्रमग्रेण शोधयेत्
मूलं मूलैश्च संशोध्या मध्यं मध्ये च संस्पृशेत्  १४०
आत्मतत्वादि मन्त्रेण तत्वत्रयसमुच्चरन्
उभयोः पार्श्वमन्त्रेण तलं पृष्ठेन शुध्यति  १४१
जलसंस्पर्शनं कृत्वा त्रिदूर्ध्वे दर्भमस्तकान्
तद्दर्भैराग्निसम्योज्य जलस्पर्शनमेव च  १४२
सृक् ऊर्ध्वाननञ्चैव स्रवस्यधोमुखन्न्यसेत्
सव्यदेशे तु विन्यस्य अर्चये हृदयेन तु  १४३
शक्तिं स्रुचि स्रुवे शम्भुं भावयेद्देशिकोत्तमः
अथवनस्रुक्स्रुवञ्चैव कपाला शक्तिक किंशुकन्तथा  १४४
चूतपत्रैश्च सङ्ग्राह्य उत्तमादित्रयन्तथा

तत्पत्रैश्च सङ्ग्राह्य उत्तमादि विभेदतः १४५
पूर्वसंस्कारमेवञ्च गजोष्ठसदृशन्तथा
सौम्यञ्च पूर्व देशे तु पूर्वञ्च दक्षिणन्तथा १४६
दक्षिणं पश्चिमञ्चैव पश्चिमञ्चोत्तरन्तथा
चतुष्परिधिभिस्तत्र निधायोरूर्ध्वमित् द्वये १४७
पूर्वादिषु च तद्दिक्षु परिधिञ्चैव विन्यसेत्
ज्योक्च सूर्यमन्त्रेण कवचं पूर्वविन्यसेत् १४८
इन्द्रस्येति च मन्त्रेण दक्षिणे दत्रमन्त्रत
मैत्रावारुणमन्त्रेण वर्मेणा पश्चिमे न्यसेत् १४९
समिधस्येति मन्त्रेण शिरसा चैव विन्यसेत्
गन्धर्व इति मन्त्रेण अस्त्रेणैवोत्तरे न्यसेत् १५०
अधोर्ध्वसमिधौ चैव अग्निरीशानदेशके
वितिहोत्रञ्च मन्त्रेण हृदयञ्चैव विन्यसेत् १५१
समिधस्येति मन्त्रेण शिरसाञ्चैव विन्यसेत्
अनुराधासमित्तं प्रणितोर्ध्वे स्त्रविन्यसेत् १५२
पूर्वादिषु चतुर्दिक्षु विष्टरञ्चैव विन्यसेत्
ब्रह्माणं शङ्करं विष्णुं अनन्तञ्च समुच्चयेत् १५३
पूर्वादि कूर्चविन्यस्य निवृत्यादि चतुर्थकम्
प्रस्तरेषु चतुर्दिक्षु दिक्देवान् सम्यगर्चयेत् १५४
सोमादि वरुणपर्यन्तं अर्चयेत्तु विचक्षणः
अग्निसम्पूज्य विधिवत् परिवारं समर्चयेत् १५५
वायव्ये पूर्वे तु पावकं विद्यात् आग्नेयान्तु हुताशनम्
दक्षिणे हव्यवाहञ्च ह्यनलन्धे नैर्ऋते तथा १५६
वारुणे ज्वलनन्देवं वायव्ये सप्तजिह्वकम्
सौम्ये मस्वासनं पूज्य अग्निमीशानगोचरे १५७
परिषेचकन्ततः कुर्यात् आदिदेवादिमन्त्रतः

प्राच्यान्तु दक्षिणे कुर्यात् अदितेन्वादिमन्त्रकैः १५८
उदीच्यां पश्चिमे देशे अनुमतेनत्वदाहृतेः
पूर्वसौम्यान्तमिति वा दिक्भागे सरस्वते नु तथा शिखा
१५९
देवसवित्रनैत्रेण चतुर्थन्तु समन्ततः
ऐशान्यां श्रावयेद्धीमान् समन्तं परिषेचनम् १६०
नेत्राभिघारतन्त्रैव नेत्रमन्त्रेण बुद्धिमान्
अस्याभिघारन्तत्रैव क्षुरिकामन्त्रमुच्चरन् १६१
द्विदर्भेणाग्निमध्ये च ताडनं अष्टसंख्यया
तद्दर्भमग्नौ सम्योज्य जलस्पर्शनकन्ततः १६२
समिधो दश पञ्चैव प्रान्ते मूल घृतरप्लुतः
आज्यं रेतस्समाख्याता समिदाज्येन सम्युतम् १६३
प्रासादं मूलमुच्चार्य सकृदे तु होमयेत्
ततश्चापो उपस्पृश्य अग्निरेवं समन्ततः १६४
सन्निधानमुद्रया चैव हृदयेनैव मन्त्रतः
समिधः प होतव्या आसनस्य विशुद्धये १६५
जलसंस्पर्शनं कृत्वा अस्त्रमन्त्रं समुच्चरन्
संसृवसद्यमन्त्रेण वायव्याग्नस्तथैव च १६६
नैर्ऋृत्यीशानदेशे तु स्रावयेत् हृदयेन तु
शिखाशमन्त्रं तथैन्द्रे तु बहुरूपन्तु याम्यके १६७
सौम्ये तत्पुरुषं हुत्वा नेत्रमन्त्रन्तु पश्चिमे
ईशानं मध्यमे चैव जिह्वायां होममाचरेत् १६८
सोमसूर्याग्निमन्त्रञ्च नेत्रं कवचमन्त्रकम्
अन्नप्राशनमेवञ्च चौळोपनयनत्व्रम् १६९
समावर्तनवैवाह्य तत्तत्कर्मन्तु हुनेत्क्रमात्
सावित्री चैव मन्त्रेण अग्निबीजं हुनेत्क्रमात् १७०

ये किशि नेत्र मन्त्रेण शिखायां चौळमुच्यते
आर्द्रायेति मन्त्रेण उपवीतमदाहुनेत् १७१
सावित्री चैव मन्त्रेण वृतञ्चास्त्रेण होमयेत्
इमं स्तोमेति मन्त्रेण शिखामन्त्रेति होमयेत् १७२
समावर्तनमेवञ्च सप्तसंख्या पृथक्पृथक्
आचार्यहृदयेनैव वागीशञ्च सुयोजयेत् १७३
द्विनेत्रा द्विभुजाञ्चैव वरदाभय सम्युतम्
शुक्लवस्त्रपरिधानं श्वेतवर्णमिति स्मृतम् १७४
स्वाहा देव्या च संयुक्तं अग्निर्वामे तु चिन्तयेत्
प्रजापति स्त्रिया मन्त्रै प्रोक्षये हृदयेन तु १७५
ध्यात्वा वैवाह्यमेवन्तु गन्धपुष्पैस्समर्चयेत्
अग्ने शद्धेति मन्त्रेण नेत्रेणैव तु होमयेत् १७६
तत्संख्या सप्तसंख्या च विवाहान्तं क्रमेण तु
आधानादि विवाहान्तं शिवाग्निजनतोद्भवम् १७७
तमग्निद्भूतमध्ये तु कल्पयेदासनं क्रमात्
तत्तत्तन्त्रोक्तदेवे तु परिवारसमन्वितम् १७८
आवाहयेत्ततोदेवं गन्धपुष्पैस्समर्चयेत्
क्षीरे पुष्करसम्युक्तं भावेयेत्तविचक्षणः १७९
अग्ने चत्वा च मन्त्रेण चरुञ्चैवास्त्रमन्त्रतः
चरुदर्विञ्च सङ्ग्राह्य तत्पात्रे दक्षिणे न्यसेत् १८०
सम्पाताहुतिं सङ्ग्राह्य होतुरग्रे तु विन्यसेत्
सर्वद्रव्यहुतञ्चैव हुतशेषन्तु सङ्ग्रहेत् १८१
आज्यादि द्रव्यसंख्यान्ते हुतशेषन्तु निक्षिपेत्
सम्पाताहुतितम्मूलं स्वाहान्तं जिह्वके हुनेत् १८२
समिदाज्य चरुञ्चैव लाजन्तु सर्षपं यवम्
तिलमुद्गञ्च माषञ्च फलं सौतुकमेव वा १८३

गुळञ्च नाळिकेरञ्च अपूपञ्च चतुर्दश
समिधाज्यमपूपान्तं हिरण्याद्यासु हुनेत्क्रमात् १८४
जिह्वायां प्रतिसङ्ग्राह्य पक्षद्रव्यं हुनेत्क्रमात्
तत्तद्द्रव्यञ्च हुत्वान्ते व्याहृतिभिश्च हूयते १८५
कषार्धं गोघृतेनैव हुनेदेकाहुतिन्ततः
चरुञ्च तिलमुद्गञ्च माषञ्च यवसर्षपम् १८६
मध्यमानामिकाङ्गुष्ठैर्होमयेत्तु विचक्षणः
आर्द्रामलकमात्रं स्यात् चरुञ्चैव तु होमयेत् १८७
सत्तुलाजं प्रथुकं मुष्टिमात्रेण होमयेत्
अपूपं स्वप्रमाणञ्च फलानाञ्चन्तथैव च १८८
शर्करन्नाळिकेरञ्च तत्संख्या चैव होमयेत्
वयं सोमेति मन्त्रेण सद्येन समिधं हुनेत् १८९
घृतं मिक्षुमन्त्रेण तन्मूलेनाज्यञ्च होमयेत्
देवस्सवितमन्त्रेण अघोरेण चरुं हुनेत् १९०
एषामीशेति मन्त्रेण लाजन्तत्पुरुषेण तु
सिद्धार्थं कवचं हुत्वा आपोराजेति मन्त्रतः १९१
तत्वायामीति मन्त्रेण यवञ्च शिरसाहुनेत्
अस्त्रेणैव तिलं हुत्वा सोमधेनुश्चमन्त्रतः १९२
एषते रुद्रमन्त्रेण माषञ्च शिखया हुनेत्
द्रानियति मन्त्रेण माषं नेत्रेण होमयेत् १९३
यासान्देवेति मन्त्रेण दशाक्षरीञ्च फलं हुनेत्
शन्नो देवेति मन्त्रेण इदं विश्वा च मन्त्रतः १९४
नाकेस्ववर्णमन्त्रेण आपपं बीजत्रयं हुनेत्
यत्रैवलितोर्ध्वे तु श्रावयेच्चतुरङ्गुलम् १९५
यत्र काष्ठन्तु तत् छेत्रं यत्र भस्मन्तु तच्छिरः
यत्रापज्वालिं नेत्रं यत्र धूमन्तु नासिका १९६

अग्निकण्ठे हुतं कुर्यात् व्याधिपीडनमेव च
नासिकायां मनोदुःखं चक्षुषि गोन्नाशनं भवेत् १९७
केशं दारिद्र्यदं प्रोक्तं जिह्वाया होममाचरेत्
महाज्वालितमस्यास्यां वह्ने होमं प्रकल्पयेत् १९८
शताष्टसंख्याया चैव पञ्चाशत्संख्यया तथा
पञ्चविंशति संख्या च षोडशाहुतिमाचरेत् १९९
समिदारोग्यमेवञ्च आज्येन रोगनाशनम्
चरुन्धाह्य विविद्धि सौभाग्यं लाजमेव च २००
सर्षपं व्याधिनाशञ्च राजवश्य यवं तथा
तिलेन मुक्तिमाप्नोति मुद्रञ्चायुष्यवर्द्धनम् २०१
गवां वृद्धञ्च माषञ्च फलेन सुखमेव वा
रिपुनाशकरं सत्तु श्रीप्रदन्तु गुळमेव च २०२
नाळिकेरञ्च सिद्धिञ्च अपूपं पुत्रवर्द्धनम्
एवं क्रमेण विधिवत् हुत्वा वै देशिकोत्तमः २०३
सम्पात पात्र द्रव्येन स्विष्टकृद्धोममाचरेत्
मेक्षणेन तु संयुक्तं द्रव्यैकीकरणं तथा २०४
द्रव्यञ्च बहुरूपेण हव्यवाहन होमयेत्
अनुयाजाख्य समिं होमयेदस्त्रमन्त्रतः २०५
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात्
रुद्रं तत्द्रनाममन्त्रेण पुष्करञ्चैव संस्पृशेत् २०६
मिन्दाहुतिञ्च जिह्वयात् व्याहृतिश्च होमयेत्
यदस्येति च मन्त्रेण व्याहृत्यान्तञ्च भूयते २०७
अग्निधूध्वाच मेवञ्च तु हुवेनाहुता भवेत्
पूर्वोक्तस्यापितञ्चैव शोधयेत्तु विचक्षणः २०८
पूर्वादिचतुर्दिक्षु परिस्तरञ्च सङ्गृहेत्
ग्रन्थिं विसृज्य पूर्वाग्रमाज्येनैव स्पृशेत्ततः २०९

अग्रं मध्यञ्च मूलञ्च घृतं मध्ये त्रिभिस्तथा
तदेत् दर्भं सङ्गृह्य क्रमादग्रान्दहेत्ततः   २१०
जलं संस्पर्शनं कृत्वा तदगुरुः दर्भा दहेत्ततः
चतुर्दिक् परिधिञ्चैव अधोर्ध्व समिधौ दहेत्  २११
अत्र याजास्समिधं गृह्य अग्निमध्ये तु योजयेत्
+++ विसर्जपरिषेचञ्च तन्मन्त्रेणैव देशिकः   २१२
कूर्चञ्च विष्टरञ्चैव ग्रन्थिं विसृज्य वर्जयेत्
सृक्स्रुवञ्चैव सङ्ग्राह्य हस्ताभ्यान्तु विशेषतः   २१३
आप्यायचास्त्रमन्त्रेण सृच आज्येन पूरयेत्
सृचं दक्षिण हस्तेन सृवस्यधोमुखन्न्यसेत्  २१४
ततोऽप्युत्थानमेवञ्च आसनोत्सस्तले स्थितः
वसुभ्यो इति मन्त्रेण वक्त्रैकीकरणान्ततः   २१५
एवं मन्त्रं समुच्चार्य श्रावयेदग्निमध्यमे
स्वासीनः पूर्वमेवञ्च प्रणीतापात्रसङ्ग्रहेत्  २१६
होतुरग्रे तु विन्यस्य कूर्चञ्चैव तु विन्यसेत्
चतुर्दिक् सृवानाञ्च तञ्जलमग्रतन्ततः   २१७
तत्पात्रमधोमुखन्तु प्रोक्षयेत्पवमानके
ततो यैः कुम्भसम्प्रोक्ष्य अथवाचार्यमेव च  २१८
ब्रह्मणे द्वासनञ्चैव कूर्चग्रन्थि विसृज्य चा
उदकेन समायुक्तं दक्षिणाञ्चैव दापयेत्  २१९
घृतशेषं समादाय सृवायोन्नति देशके
चतुर्दिक् प्रस्तरञ्चैव वर्जयेत्तदनन्तरम्  २२०
तद्भस्मञ्चैव सङ्ग्राह्य ललाटे तिलकं न्यसेत्
यदमभ्येति सद्येन पावकन्तु विसर्जयेत्  २२१
तद्देवन्तु समावाह्य कुम्भमध्ये तु योजयेत्
अध्वन्यासासक्रमे पूर्ववद्यजनन्ततः   २२२

नैवेद्यन्दापयेद्धीमान् धूपदीपं समाचरेत्
आद्यादि द्रव्यशेषञ्च देशिकाय प्रदापयेत् २२३
मिश्राग्निञ्चैवमेवोक्तं शिवाग्निञ्च ततः शृणु
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् २२४
इत्यंशुमान् तन्त्रे मिश्राग्निकार्यविधिपटलः

## मासपूजाविधिः

अतः परं प्रवक्ष्यामि मासपूजा विधिं श्रुणु
क्षौद्राद्यभिषेकमित्युक्तं सूर्यप्रीतिकरं भवेत् १
माघमासे तु कर्तव्यं घृतकम्बळमेव च
एतत्कम्बळमित्युक्तं विष्णुप्रीतिकरं भवेत् २
फाल्गुने दधिसम्पूज्य धनपुत्रविवर्द्धनम्
दधिसम्पूज्यमेवं हि पुरुहूतप्रियं भवेत् ३
चैत्रे दमनकं प्रोक्तं ऋषीणां प्रीतिरुच्यते
वैशाखे गन्धसम्पूज्य मदन प्रीतिरुच्यते ४
ज्येष्ठमासे तु कर्तव्यं फलपूजा विशेषतः
आषाढे क्षीरसम्पूज्य रुद्रप्रीतिकरं भवेत् ५
क्षीराभिषेकमित्युक्तं वत्सतो वर्द्धना भवेत्
श्रावणे शर्करा पूज्य चन्द्रमा प्रीतिरुच्यते ६
प्रोष्ठेपूपसम्पूज्य स्कन्दप्रीतिकरं भवेत्
आस्वीजे अन्नपूजाश्च ब्रह्मप्रीतिरुच्यते ७
कृत्तिका मासमेवोक्त दीपपूजनमेव च
लाजोपचारमेवोक्तं कृत्तिकादिनमेव च ८
घृतस्नानं भवेत्तस्मात् मार्गमासे तु कथ्यते
घृतस्नानमिदं प्रोक्तं सर्वपापनिकृन्तनम् ९
पुष्यमासादि पूजायां मार्गमासान्तमेव च

मेषे दमनकं पूज्य वृषभे पुष्पपूजनम् १०
मिथुने फलपूजायां कर्कटे च पवित्रकम्
सिंहे च मिथुना चैव कन्यायां जातिपुष्पकम् ११
तुलायामन्नपूजाश्च दीपारोहणवृश्चिके
घृते धनुषार्द्रायां मकरे इक्षुसारकम् १२
कुम्भकम्बळकञ्चैव मीने च तिलपूजनम्
चैत्रे दमनकं प्रोक्तं वैशाखे गन्धपूजनम् १३
ज्येष्ठेषु फलपूजायां पायसन्तथा
श्रावणे शत्करं पूजा पूपं भाद्रपदन्तथा १४
अश्विन्यां अन्नपूजायां कृत्तिका दीपमेव च
घृतेषु मार्गशीर्षायां पुष्यायां क्षौद्रपूजनम् १५
घृतकम्बळमाघे फाल्गुन्यान्दधिपूजनम्
मासपूजाफलञ्चैव सर्वकामफलप्रदम् १६
पुष्यमासादि पुष्यान्तं माघमासे मघान्तकम्
उत्तरान्तन्तु फाल्गुन्यां चित्रान्तं चैत्रमासके १७
वैशाखे तु विशाखान्तं ज्येष्ठके ++ मूलन्तकम्
उत्तराषाढमासे तु श्रावणे श्रवणान्तकम् १८
पूर्वाषाढस्य मासे तु चाश्वयुग्मादि चाश्वयोः
कृत्तिक्यान्तु कार्तिक्या मार्गान्तं मार्गशीर्षके
प्रातस्सन्ध्यावसाने तु उपसन्ध्यावसानने १९
अन्नपूजान्ततः कृत्वा विधिवत् देशिकोत्तमः
मध्याह्न यजने काले व्यन्नलिङ्गं विसृज्ययेत् २०
तत्सर्वमुपदंशञ्चान्नलिङ्गजले क्षिपेत्
अश्विने चान्न पूजाश्चान्नमन्नादि कामदम् २१
अश्नीयात्कामते यस्तु रौरवं नरकं व्रजेत्
अपूपन्नञ्चैवान्नपुष्पफलन्तथा २२

सद्योधिवासनं कुर्यात् अन्येषां पूर्वरात्रके
युद्धारम्भावसानेषु अयने विषुवे तथा २३
कर्तुजम्मानुकूलक्षेमसन्धक्षेथवा पुनः
पुण्यकालविशेषेण मासपूजां प्रकल्पयेत् २४
भुक्तिमुक्तिप्रदञ्चैव सर्वकामफलप्रदम्
विप्राणाञ्च तपोवृद्धिं तथा विद्याप्रदं शुभम् २५
क्षत्रियाणां बलञ्चैव परसेनापलायिनम्
लोके दुर्भिक्षनाशञ्च महामारिञ्च मोचनम् २६
वैश्यानां धनसम्पूज्य शूद्राणां कृषिलाभकम्
प्रार्थयेद्वाञ्छितान् सर्वान् कर्तुलभ्यश्च धेन्नरः २७
महालोके सुखं प्राप्य सान्ते सायुज्यमाप्नुयात् २८
इत्यंशुमान् मासपूजाविधिपटलः

आषाढपूरकर्मम्
वक्ष्यमाषाढनक्षत्रे व्रतकर्म श्रुणुष्वथ
आयुश्रीकीर्तिविजयं पुत्रपौत्रविवर्द्धनम् १
आषाढे पूरनक्षत्रे व्रतकर्म समाचरेत्
तद्रक्षान् पूर्वरात्रौ तु अधिवासं समाचरेत् २
स्नपनं कारयेच्छम्भो हविष्यन्तं समाचरेत्
देवाग्रे स्थण्डिलं कल्प्य पुण्याहं वाचयेत्ततः ३
यात्रा होमन्ततः कृत्वा पूर्वोक्तविधिना सह
देवदेवन्नमस्तुत्वा विज्ञाप्य व्रतमुत्तमम् ४
भोगशक्तिं समभ्यच्य स्नापयेत्स्नपनादिकम्
वस्त्रैराभरणैर्माल्यैरलङ्कृत्य विशेषतः ५
नैवेद्यञ्चैव ताम्बूलम्मुखवासं प्रदापयेत्
मण्टपं वा प्रपां वापि कारये स्विष्टदेशके ६

स्थरिडलं कारयेद्विद्वानष्टद्रोणैश्च शालिना
तरडुलैस्तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत् ७
गर्भगेहं प्रविश्याथ गौरीमभ्यर्च्य देशिकः
आनीय शिबिकोर्ध्वे तु प्रदक्षिणमथाचरेत् ८
सर्वालङ्कारसम्युक्तं विशत्कौतुकमरटपे
तस्योर्ध्वे मस्त्रमास्तीर्य सङ्कल्प्य स्थरिडलोपरि ९
भोगशक्ति प्रतिष्ठाप्य पाद्यमाचमनन्ददेत्
स्थलिका स्थरिडले भूष्य पूगवल्लिदळैर्युतम् १०
सौवर्णं रजतं वाथ क्षौमैः कार्पासजैस्तु वा
रक्षासूत्रन्तु सङ्ग्राह्य भस्म पात्रे विनिक्षिपेत् ११
परिचारकमाहूय सोष्णीषस्सोत्तरीयकम्
शिरसा वाहयित्वा तु सर्वालङ्कारसम्युतम् १२
हर्म्यं प्रदक्षिणं कुर्याद्देव्याग्रे तु निघाय च
विघ्नेशं पूजयेत्तत्र पुरयाहं वाचयेत्ततः १३
रक्षासूत्रमनुं जप्त्वा भोगशक्तिं समर्चयेत्
नववस्त्रेण संवेष्ट्य युवं वस्त्रेति मन्त्रतः १४
वामादि परतश्चाष्टौ शक्ति सम्यक् समर्चयेत्
देव्याश्च सव्यहस्तेन तरडुलञ्च प्रदापयेत् १५
त्र्यम्बकेन मन्त्रेण रक्षासूत्रं प्रबन्धयेत्
भसितन्दापयेद्देव्यां बृहत्सामेति मन्त्रतः १६
पूर्वाक्षतेन विप्राणां आशिषो वाचयेत्ततः
धूपदीपन्ददेत् देव्यां वेदाद्यादीनि दोषयेत् १७
मुर्गं प्रक्षाळ्य चास्त्रेण हृदयेन पिधाय च
तीर्थाधिवासनं कुर्यान्नित्योत्सवमथाचरेत् १८
ततो जनेभ्यस्ताम्बूलं दापयित्वा विशेषतः
नानाविनोदनृत्ताद्यै रात्रिशेषं व्यपोह्य च १९

ततः प्रभातसमये नित्यपूजां समाचरेत्
देवीं संस्नाप्य विधिवदलङ्कृत्य विशेषतः २०
अलङ्कृत्य विशेषेण गृहद्वारं प्रति प्रति
मर्दळश्चैव झल्यैश्च ++ फणवादिकः २१
दक्कान्तचमोन्तैश्च एतैरन्यैश्च वाद्यकैः
धूपन्दत्वा विशेषेण कदळीफलसम्युतम् २२
ददादेवीं समभ्यर्च्य रथे वा शिबिकोर्ध्वतः
वीथीं सम्मार्जनं कृत्वा सेचयेश्शुद्धवारिणा २३
साङ्कुरैश्चित्रकुम्भैश्च दीपैरन्योपचारकैः
नानाभक्तजनैस्सार्धन्नानास्त्री परिसेवितम् २४
ग्रामप्रदक्षिणं कृत्वा तीर्थतीरं समाश्रयेत्
चूर्णोत्सवन्ततः कुर्यात् पूर्वोक्तविधिना सह २५
सुगन्धरजनीचूर्णं हृन्मन्त्रेणैव देशिकः
सतैलं रजनीं दत्वा विनोदार्थं पदो जनाः २६
दृक् शुक्कादि वंशाद्यैर्जलक्रीडां समाचरेत्
अकृतन्दुष्कृतं पापं सहस्नानं विनश्यति २७
स्नपनं कारयेद्देव्यामलङ्कृत्य विशेषतः
मण्डपं वा प्रपां वापि निश्छिद्रं कारयेत्सुधीः २८
वितानैश्च ध्वजश्चैव तरङ्गैर्गात्रवेष्टनैः
क्रमुकैर्नाळिकेरैश्च फलैर्नानाविधाय च २९
मङ्गळाङ्कुरशोभाढ्यान्तस्य मण्डपमध्यमे
स्थण्डिलं शालिभिः कुर्यात्तन्मध्ये लवणं क्षिपेत् ३०
तदूर्ध्वे वस्त्रमास्तीर्य पञ्चचूर्णैरलङ्कृतः
भोगशक्तिं समादाय स्थापयेत्स्थण्डिलोपरि ३१
देव्याग्रे स्थण्डिलं कल्प्य रम्भापत्रैः परिस्तरेत्
तस्योर्ध्वे लवणं क्षिप्त्वा मुद्गमङ्कुरसम्युतम् ३२

पायसापूपसंयुक्तं स्थण्डिलं प्रस्थशालिना
शिवं सञ्चूर्णब्रह्मी च शकुचूर्णतिलन्तथा ३३
यवञ्च शिवपूर्णञ्च लवणन्तन्त्रिणीफलम्
भस्मदूर्वाक्षतन्यस्त्वा देव्याग्रेणैव देशिकः ३४
कोणेषु स्थण्डिलं कल्प्य अश्मानं शिशिविन्यसेत्
देव्याग्रे स्थण्डिलेऽभ्यर्च्य देवेशमन्त्रमुच्चरन् ३५
उत्तरीयन्यसेद्देव्यां पाद्यमाचमनन्ददेत्
पुण्याहं वाचयेद्धीमान् द्रव्याणि प्रोक्ष्यवर्मणा ३६
गन्धपुष्पादिनाभ्यच्य धूपदीपादिकन्ददेत्
पुष्पं विनिक्षिपेदर्घ्यं देव्याहस्ते समाहितः ३७
देवीगायत्रिमन्त्रेण पानीयन्त्रिः प्रदक्षिणम्
देव्याग्रेणैव सन्तर्प्य नमस्तुत्वाथदीश्वरम् ३८
अभ्यर्च्य रक्तपुष्पैश्च अश्मानं हृदयेन तु
पादा च जानुनाभिश्च हृद्गळञ्चार्घ्यमेव च ३९
ललाटे मूर्ध्निदेशे च शकुचूर्णादिकन्ददेत्
ईशानादि शिरोन्तञ्च सप्तद्रव्यञ्च विन्यसेत् ४०
नैवेद्यन्दापयेद्धीमान् पानीयाचमनन्ददेत्
धूपदीपादिकन्दत्वा ताम्बूलञ्च निवेदयेत् ४१
भस्मञ्च दर्पणच्छत्रञ्चामरञ्च प्रदापयेत्
वेदैस्तोत्रैश्च नृत्ताद्यैस्सन्तोष्य परमेश्वरीम् ४२
देवोत्सवविधानञ्च देव्याञ्चापि समाचरेत्
रथैवा शिबिकोर्ध्वे वा खेटके यानमाचरेत् ४३
वीधीं सम्मार्जनं कृत्वा सेचयेश्शुद्धवारिणा
साङ्कुरैश्चित्रकुम्भैश्च दीपैरन्यैद्यवाद्यकैः ४४
अलङ्कृत्य विशेषेण गृहद्वारं प्रति प्रति
नानाचाद्य समायुक्तन्नानाश्छत्र समाकुलम् ४५

नानाध्वजसमायुक्तन्नानास्त्री परिवेष्टितम्
नानाश्छत्रविधानञ्च नानास्तोत्रसमन्वितम् ४६
ग्रामप्रदक्षिणं कृत्वा प्रविश्यास्थानमण्टपम्
यात्रार्थस्नपनं पश्चात् सन्ध्याशेषं समाचरेत् ४७
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुळीयकैः
भक्तानां परिचाराणां यथावित्तानुदक्षिणा ४८
ब्राह्मणेभ्यो यथाशक्तिं दक्षिणां च प्रदापयेत्
यागवीनष्टयन्द्रव्यमाचार्याय प्रदापयेत् ४९
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ५०
इत्यंशुमान् भेदे आषाढपूरविधिपटलः

## मासपूजाविधिः

मार्गे गोघृतपूजनन्तु मधुना तैष्ये तपः कम्बलम्
दध्ना फाल्गुनिके सदादमनकं चैत्रह्नि तर्चन्दनम् ।
ज्येष्ठमासिफलत्रयं सनुपय शुक्रे सिता श्रावणे
भाद्रे पूपमिषे वरन्न यजनं दीपार्चनं कृत्तिके १
मासपूजाविधिं वक्ष्ये श्रूयतां रविसत्तम
तत्तन्मासर्षके कुर्यात् नृपाणां जन्मऋक्षके २
कर्तुजन्मदिने वापि आर्द्रायां सर्वमासके
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ३
पर्वद्वये च सङ्क्रान्तौ व्यतीपाते दिवाकर
अयनाद्युक्तकालेषु तन्मासद्रस्यकैर्यजेत् ४
एकमासे द्विनक्षत्रे द्वयोरपि च पूजयेत्
एवं कालविधिः प्रोक्तो यागशाला विधिं श्रुणु ५
यागशाला विधानेन मण्टपं कारयेद्बुधः
दर्भमालासमायुक्तं वितानाद्युपशोभितम् ६

कदळीपूगदण्डौ च डाडिमी फलमेव च
ताम्बूलै लिकुचैश्चैव कमलोत्पलपुष्पकैः ७
चामरैर्दर्पणैश्चैव क्रमुकैर्नाळिकेरकैः
अलङ्कृत्य समन्तात्तु पूगपुष्पणालम्बितम् ८
अधिवासनरात्रौ तु तद्दिनात्पूर्वरात्रिके
अङ्कुरार्पणकं कृत्वा विधिवद्देशिकोत्तमः ९
निर्दिष्टदिवसात् रात्रौ दीपावसानके
सकळीकरणं कृत्वा विघ्नेशं पूजयेत् बुधः १०
पुण्याहं वाचयेत्तत्र पञ्चगव्यञ्च साधयेत्
सौरादि गुरुपर्यन्तं तत्तत्स्थानेषु सम्यजेत् ११
मार्गशीर्ष घृतं प्रोक्तं पुष्ये क्षौद्रं प्रशस्यते
सघृतं कम्बळं कुम्भे तपस्ये दधिकीर्तितम् १२
मधुमासे दमनकं माधवे गन्धपूजनम्
फलपूजा शुक्रमासे क्षीरेणाषाढपूजनम् १३
नभोमासे शत्करं स्यात् नभसेपूपभोजनम्
अन्नपूजान्तुलामासे कार्तिके दीपदानकम् १४
द्रव्यक्रममिति प्रोक्तं तत्संख्या च ततशृणु
सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा १५
अपूपं पिष्टकञ्चैव अतिरसं मोदकन्तथा
मुद्गापूपन्तिलापूप माषापूपन्तथैव च १६
एवं सप्तविधं प्रोक्तं प्रत्येकं लक्षणं श्रुणु १७
इत्यंशुमान्तन्त्रे मासपूजाविधि पटलः

## स्वप्नाध्यायविधिः

स्वप्नाधायविधिं वक्ष्ये श्रूयतां रविसत्तम
अभूतमपि यत्कर्म पूर्वदृष्टं दृढात्मनः १

भविष्यति भ+++ स्वप्नश्चेति प्रकीर्तितः
राज्याधिपो वा राजे वा शुभाधिकफलं भवेत् २
स्वप्नस्य चाशुभाधिक्यं भवेत्सत्यं न संशयः
अन्यस्वप्नफलं यावन्तावत् दृष्ट्वा परो भवेत् ३
चापषाढे माघमासे स्वप्नदोषन्न विद्यते
अन्यमासेषु सर्वेषु स्वप्नस्य फलमाप्नुयात् ४
गुरुवारे भवेत्स्वप्नन्दुष्कर्षशीघ्रमाप्नुयात्
दुस्वप्नं गुरुवारे वा यावद्दीर्घफलं भवेत् ५
नित्यनैमित्तिके काम्ये प्रतिष्ठाचोत्सवेषु च
अन्यमङ्गळकार्ये च लक्षयेत्स्वप्नमुत्तमम् ६
रात्रौ वाथ दिवा वाथ स्वप्नो यदि भविष्यति
लक्षयेदात्मनः काले फलं प्राप्नोति मानवः ७
सुस्वप्न दृष्टमात्रेण निद्रायान्तु विवर्जयेत्
शिवमन्त्रं शतं जप्त्वा स्तोत्रं कुरु यथेप्सितम् ८
दुस्वप्नदृष्टमात्रेण पादाशौचं समाचरेत्
अघोरास्त्रं सकृज्जप्त्वा स्वप्नदोषन्नविद्यते ९
अतिक्रूरफलन्दृष्ट्वा सचेलस्नानमाचरेत्
रुद्रशान्तिमनुं जप्त्वा अष्टोत्तरशतं बुधः १०
स्वप्नं महत्फलन्दृष्ट्वा शीघ्रमुक्तिषु तो नरः
राज्याधिपो वा राजा वा वर्ज्यते क्रमशस्तथा ११
स्वप्नं ग्रहामि ते नेति मन्त्रञ्जप्त्वा सकृन्नरः
अतिक्रूरफलं दृष्ट्वा पूर्ववद्वक्ष्यते क्रमात् १२
इति श्रुत्वा वचस्तस्य स्वप्नेशेति मन्त्रतः
दुस्वप्नन्नाशयेदस्य सर्वशास्त्रेषु भाषितम् १३
राज्याधिपो वा राजा वा स्वप्नं दृष्टयते यदि
दुस्वप्नाधिपतिम्मन्त्रं जपेद्भक्तिपुरस्सरम् १४

दुस्वप्नन्दृष्टमात्रेण पादप्रक्षाळनं कुरु
दुस्वप्नन्नाशनं मन्त्रं जपेदष्टोत्तरं शतम् १५
दुस्वप्नं महतांश्चेत्तु पादाशौचं समाचरेत्
यद्वा देवेति मन्त्रेण प्रोक्षयेच्छुद्धवारिणा १६
रुद्रशान्तिमनुं जप्त्वा स्वप्ननाशेति मन्त्रतः
जप्त्वा चाष्टोत्तरशतं स्वप्नशान्तिकरं भवेत् १७
पूर्वयामे विशेषेण स्वप्नो यति भविष्यति
संवत्सरे तु सन्धिं स्यात् द्वितीये यामके सति
षाण्मासे नैव सन्धिं स्यात्तृतीये यामके सति १८
यदि मासे न सन्धिं स्याच्चतुर्थे यामके सति
स्वप्नं दृष्ट्वा ततश्शीघ्रं लभेत्सत्यन्न संशयः १९
चन्द्राक्षितारं सङ्ग्राह्यं स्वयमंहो विलेपनम्
भूषणं धारणं तेषां राज्यं सम्प्राप्नुयान्नृपः २०
श्वेतपुष्पं जपे माला धवळानाञ्च पक्षिणाम्
सौवर्णमनायाञ्च दर्शनं लभते प्रियम् २१
गन्धर्वनगरं ++ देवगन्धर्वयोषिताम्
दर्शनात् प्रापणात्स्वप्ने विपुलां श्रियमाप्नुयात् २२
श्वेतरूपमयञ्चित्रं श्वेतमालाविभूषणम्
+++ पुष्पविनिक्षाणां सर्वसालानाञ्च दर्शनम् २३
तेषामारोहणं शस्तं शैलहर्म्यञ्च हिंसिनाम्
गोसिंह वृषभानान्तु ++++ २४
भाषणाद्रोहणानीके +++++
सिंहासनञ्च शिबिकारोहणञ्च शुभप्रदम् २५
दधिक्षीरप्रदं क्षौद्रन्धरित्रि ++ लभक्तिनम्
बृहस्पति पद्ममास्नानां पिष्टगभयभक्षणम् २६
एतेषां द्रव्यलाभञ्च प्रशस्तं रविसत्तम २७

सुधारमद्यानां पानां मत्स्य भक्षरणम्
एतेषां वीक्षणां वापि स्नानं वा रुधिरेणवत् २८
अभ्भस्त्वभिणकन्तु गवां शृङ्गे सूज्य सम्पादं
प्राप्याभिषेकं भवेन्नृप ++++
पशुसिंहगजानाञ्च लोकयुद्धो भवेज्जयम्
श्छागस्य फल ++ नस्याथ जयस्य च २९
सरोजस्या तपत्रस्य मणिना दर्पणस्य च
दीपस्य चामरस्यापि खड्गन्दृष्ट्वा नृपस्सु ++
++सप्रतिमं दृष्ट्वा श्वेताञ्च गामपि ।
सागतं सरिते वापि तोययुक्तिधनं भवेत्
एतेषामपि वानेन राज्यं सम्प्राप्य ++
शङ्खमाभरणं श्वेतं वस्त्रं पुष्पमेव च ३०
रूपयौवनसम्पन्नां स्त्रियं वा तादृशी मता
उत्तमं श्रियमाप्नोति स्वप्ने दृष्ट्वा तु मानवः ३१
कुमारमुक्षाणां सर्वन्दृष्ट्वा पाने सुतं लभेत्
भूम्यं वैरिग्रह सं शत्रूणाञ्च वधक्रिया ३२
जयं विवादधूतादौ सङ्ग्रामे विजयनृपः
शङ्खपद्मनिधिवाहसुखस्वप्नोथ उरीतः ३३
सूर्यचन्द्रमसौ तारपतनञ्च शुभप्रदम्
आलिङ्गनं कुमारीणां पुरुषाणाञ्च मैथुनम् ३४
हानिश्चैव तु शूद्राणां विकरेत् भवनक्रिया
दक्षिणाशाभिगमनं व्याविभीतं भवेन्नरः ३५
पिधापिशाच कार्यादैर्वानैश्च नैररपि
पारादिभिभवेच्चैव तस्माच्चेत् व्यसनो भवेत् ३६
भग्नध्वजादिकच्छत्रं दृष्ट्वा नु मरणं भवेत्
स्वप्नाध्याय विधिः प्रोक्तः राजाभिषेचनं श्रुणु ३७

## इत्यंशुमान् तन्त्रे स्वप्नाध्याय विधि पटलः

### दिक्मूर्तिस्थापनम्

दिक्मूर्तिस्थापनं वक्ष्ये श्रूयतां रविसत्तमः
सञ्चिता सञ्चितञ्चैव द्विविधं गोपुरद्वयम्  १
सञ्चितञ्चैव भूम्यादि बाणभूम्यावसानकम्
उपपीठ अधिष्ठानवशात् कुरु  २
गोपुरमेकभूम्यादि सप्तदशतलावधि
द्वारस्तम्भोदयार्धञ्च उपपीठं प्रकल्पयेत्  ३
असञ्चितमिति ख्यातं सञ्चितञ्च विशेषतः
उपपीठं गळे द्वारेणञ्चरेत्  ४
पूर्वे यद्वारपालौ तु नन्दिकाळौ तु विन्यसेत्
देवता प्रतिमां कृत्वा गन्धर्वाप्सरसस्तथा  ५
सिंहैश्च मकरैर्व्याळैर्न्नादिकादैरलङ्कृतम्
पङ्क्तिमूर्तिन्यंपरितो देवतान् क्रमात्  ६
अधिष्ठाने परिष्टात्तु भान्वादि चनपात् ग्रहात्
अथचाव्य प्रकारेण दिक्मूर्तिस्थापनं श्रुणु  ७
द्वारस्योभय पार्श्वे तु द्वारपालौ तु विन्यसेत्
उमास्कन्दादि देवानां कूटनीडे च मध्यमे  ८
स्थापयेत्तु विशेषेण युक्त्या युक्तञ्च बुद्धिमान्
एवं सञ्चितमाख्यातं +++++  ९
++++ देशे तु स्थापयेद्देवान् क्रमात्
नन्दोशं पुरुहूतञ्च विघ्नराजेन्दुशेखरः  १०
सुखासनमुमार्धेन अग्निं पूर्वे तु विन्यसेत्
कूटस्य दक्षिणे भागे स्थाप्य चाङ्गविघ्ननृत्तमूर्तिञ्च बुधमेव च  ११

ज्ञानमूर्तिं वृषारूढं कोणपन्दक्षिणे स्थितौ
कूटस्य दक्षिणे भागे स्थापयेत्तु बृहस्पतिम् १२
उमार्धे शमि ++++ ध सह
वारुणश्चोग्ररूपश्चतुरश्शक्रश्च एव च १३
कल्याण सुन्दरश्चैव हरार्द्ध त्रिपुरान्तकः
भिक्षाटनश्च वायुश्च पश्चिमे स्थापयेत्बुधः १४
कूटस्योत्तरदेशे तु विन्यसेद्राहुकेतुकौ
गङ्गाधरश्च कङ्काळ कुबेरश्चेन्द्रमेव च १५
चण्डेशानुग्रहश्चैव अर्धासनमथापि वा
ईशाने विन्यसेद्धीमान् चोत्तरे तु व्यवस्थितः १६
कूटस्य पूर्वदेशे तु स्थापयेत्तु शनैश्चरम्
किरातमूर्ति चण्डेश +++ स्कन्दमेव च १७
भास्करञ्च महालक्ष्मी पूर्वदेशे तु विन्यसेत्
अथवानरभित्ते तु स्थापयेन्नन्दिकेश्वरम् १८
देवेन्द्रं षण्मुखञ्चैव श्रियञ्च गरुडासनम्
अगस्त्यमथवह्निञ्च कुजमश्विनिदेवतौ १९
यमञ्च अमृतेशञ्च वरुणञ्च जयन्तकः
विजयञ्चैव शुक्रञ्च कलादुर्गाधाद्धरम् २०
चण्डेशजान् हवीञ्चैव क्षेत्रेशं मारुतेश्वरम्
शनैश्चरं त्रिधाञ्चैव अन्तरिक्षध्वनेश्वरौ २१
मुरारि राहुकेतुश्च ईशदुर्गाञ्च विन्यसेत्
विश्वकर्मा विधा धारं वाक् देवीं स्कन्दमेव च २२
भास्करञ्च महाकाळं परितस्थापयेत्क्रमात्
अथवान्यप्रकारेण दिक्मूर्तिस्थापनं श्रुणु २३
नन्दि गणेशं चन्द्रञ्च ++ त्रि+ पुरेश्वरीम्
अमृतेश्वरीमग्निञ्च कुजञ्च घोरमेव च २४

आपदुद्धारणञ्चैव यमञ्चैव बृहस्पतिम्
संहारभैरवञ्चैव गेयमूर्ति ++++ २५
बुधं वै ++ सिंहाश्च वाराहीचोदनेश्वरी
शरभं वरुणञ्चैव जयञ्च विजयन्तथा २६
शुक्रञ्च शुक्रपादञ्च तथापाहरदप्रदम्
लिङ्गोद्भवञ्च वीरेशं वायु चैव शनैश्चरम् २७
गजवक्त्रेश्वरञ्चैव तद्वशक्तिसमन्वितम्
भैरवविधानञ्च राहुकेन्द्रच संस्थितौ २८
अश्वारूढञ्च मार्गञ्च ईशं भैरवमेव च
क्षेत्रेशं कालरुद्रञ्च धर्मे मारिस्कन्दमेव च २९
भास्करञ्च महाकाळं स्थापयेत्परितः क्रमात्
उपपीठाङ्घ्रिदेशे तु स्वाधिष्ठानाङ्घ्रि देशके ३०
यद्देशं भद्रमुक्तञ्च तद्देशेषु तदेवता
संस्थाप्य बुद्धिमान् शेषाणिञ्च विवर्जयेत् ३१
सभद्रं वा विभद्रं वा स्थापयेत्पूर्ववत्क्रमात्
गोपुरञ्चैकभूम्यादि रुद्रभूम्यावसानकम् ३२
दिक् मूर्तिस्थापनं प्रोक्तं विशेषं किञ्चिदस्ति हि
द्विपमानक्रमेणैव जारत्वमधिकं भवेत् ३३
भूतैस्सिंहैश्च संस्थाप्य एकयुक्तं प्रकल्पयेत्
गोपुरं पञ्च भूम्यादि त्रयोदश तलावधि ३४
द्विपङ्क्तिदेवतान् ग्राह्य शेषदेवान् विवर्जयेत्
एतेषां पूर्वदेवानां पूर्ववत्स्थापयेत्क्रमात् ३५
इन्द्रादिलोकपालानां भान्वादिग्रहदेवतान्
चतुर्द्वारपालाञ्च क्रमेणैव विवर्जयेत् ३६
कूटशे च निसैश्च हारामध्ये च भक्तिके
संस्थाप्य पूर्वपूर्वोक्तविधिना सह ३७

यथा पङ्क्तिधिकञ्चेत्तु स्थापयेत्तन्निराचरान्
गोपुरमनुर्द्ध ++++ वधि ३८
श्रीपङ्क्तिदेवतान् ग्राह्य चत्वार्यंशं विवर्जयेत्
पञ्जरे तुट कोष्ठे च भारामध्ये +++++ ३९
इन्द्रादिदेवतान्यस्त्वा विशेषं किञ्चिदस्ति हि
शर्वादि चाष्टमूर्तीनां कूटस्योभय पार्श्वयोः ४०
हारामध्ये ++ विन्यस्य शेषान् स्थाप्य पूर्ववत्
विस्तृतायाममानेन पङ्क्तिमानाधिके सति ४१
दिग्गजैश्चैव संस्थाप्य +++ सामीप्य पञ्जरे
एवं क्रमेण संस्थाप्य विशेषं किञ्चिदस्ति हि ४२
अधिष्ठानाङ्घ्रिदेशे तु स्थापयेत् +++ लकौ
सम्प्रोक्षणमतः कुर्यात् नित्यपूजां समाचरेत् ४३
एवमादि तले स्थाप्य तलं प्रति विशेषतः
षो ++++++++ दिकम् ४४
पितामहादि देवानां सिद्धगन्धर्वराक्षसाम्
मूर्त्तीनां देववन्नित्या भूतांश्चैव पिशाचकान् ४५
पौराणिकान् बिम्बानि कल्पयेत्तु तलं प्रति
ग्रव्ये चैव चतुर्दिक्षु दिशामूर्तिञ्च विन्यसेत् ४६
स्कन्दं वै दक्षिणामूर्तिं विष्णुञ्चैव विरिञ्चकम्
स्वशक्तिसहितोपेतं कोणेषु वृषभान्यसेत् ४७
भूतकोणे वृषं न्यस्त्वा तलं प्रति तलं प्रति
ग्रीवं संस्थाप्यमेदेवा विमानस्थापनं कुरु ४८
एवं संस्थाप्य विधिवत् सर्वसम्पत्समृद्धिदम् ४९
इत्यंशुमान् तन्त्रे दिक्मूर्तिस्थापनविधिपटलः

## पञ्चगोचरप्रतिष्ठै

पञ्चगोचरमूर्तेस्तु चार्चनं वक्ष्यतेऽधुना
आयुः प्रदञ्च पुष्टिञ्च श्रीकरञ्च यशस्करम् १
महेशमक्षो कामार्थं धनार्थं विष्णुपूजनम्
दुर्गाशास्त्रजयार्थञ्च विघ्नेशं पुत्रकामदम् २
शान्तिकं स्कन्दपूजाञ्च पञ्चमूर्तिं सहार्चयेत्
एतेषां पञ्चबेराणां प्रधानन्तु महेश्वरम् ३
स्वतन्त्रं परतन्त्रञ्च द्विविधञ्चेति कीर्तितम्
ग्रामे वा नगरे वापि पत्तने राजधानिके ४
कपर्वणे कुब्जके चैव पर्वते च मनोरमे
आपणे वाथ नद्यायां वनमध्ये चतुष्पथे ५
स्थापयेत्पञ्चमूर्तिञ्च सर्वप्राणिहितावहम्
पौराणयायतने चैव पञ्चमूर्ति प्रतिष्ठितम् ६
एवं प्रतिष्ठितं कुर्यात् सर्वकामफलप्रदम्
स्वतन्त्रमिति विख्यातं परतन्त्रं ग्रहार्चनम् ७
परतन्त्रे विशेषेण विष्णुमूर्तिन्तथार्चयेत्
पूर्वास्यौमा महेशौ च तस्याग्रे स्नानबेरकम्
पश्चिमास्यो महाविष्णुस्सव्ये माकर्णयस्तथा ८
विष्णुर्वामे तु भूशक्तिरञ्जलीकरसंस्थिताः
तस्याग्रे स्नानबेरञ्च शास्त्रोक्तविधिना बुधः ९
परिवाराष्टकञ्चैव द्वारदेवान् प्रपूजयेत्
उभयार्चनस्वेन चादिशैवाः प्रपूजयेत् १०
दुर्गायाञ्चोत्तराग्रं स्यात् अर्चयेत् विधिना बुधः
देवीञ्च पार्श्वे सनकः वामे सनत्कुमारकौ ११
चित्रबेरं विशेषेण तस्याग्रे स्नानबेरकम्
महिष्याणां शिरो भीत्वा अथवा सिंहरोहणः १२
यावत्तन्त्रेषु युक्तानां यावत् शास्त्रोक्तमार्गतः

दुर्गास्थाने द्विपार्श्वे तु श्रीभूतं विन्यसेद्बुधः १३
देव्या स्थानञ्च सव्येण स्थापनं स्कन्दमूर्तिनाम्
स्कन्दकल्याणमूर्तेस्तु स्थापयेत् विधिना बुधः १४
देवीनामञ्जलीकारं कुक्कुटासनमाचरेत्
देवीनां पश्चिमे भागे ब्रह्मस्थानं प्रकल्पयेत् १५
सुब्रह्मण्यस्य वामे तु नारदञ्च प्रकल्पयेत्
सर्वदेवादि देवानां सिद्धकिन्नरसेविताम् १६
पूजाया विधिना प्रोक्तं विघ्नेशं पूजयेत्ततः
स्वदेशप्रधानमूर्तिञ्च अर्चयेत् विधिना बुधः १७
देवाग्रे मण्डपं कल्प्य द्वारपालादि देवतान्
यद्बिम्बं विधिवत्प्रोक्तं केवलं सहजं स्मृतम् १८
केवलत्वेकबेरं वा सहजं बहुबेरकम्
यावत् शास्त्रविधिं मार्गं सामान्यमर्चयेत् बुधः १९
पञ्चावरणसम्युक्तं अर्चयेत्तु सदाशिवम्
विष्णुं सम्पूजयेद्विद्वान् गर्भावरणसम्युतम् २०
अच्युतानन्दमूर्तिस्त्वचक्रपाणिर्जनार्दनः
पूषो पुष्तिदश्चैव गोविन्दो विघ्ननायकः २१
यावत्सामान्य तन्त्रेषु आदिशैवार्चनं बुधः
दुर्गानामर्चयेद्धीमान् पूजयेत्तु क्रमेण तु २२
अणिमा महिमा चैव गरिमा लघिमा तथा
ईशित्वञ्च वशित्वञ्च प्राप्तिप्राकाम्यमेव च २३
देवीं दक्षिणा दक्ष्वण्ये स्कन्दो वा सनत्कुमारकौ
चित्रबेरं विशेषञ्च तस्याग्रे स्नानबेरकम् २४
दीपानामहिषो स्थित्वा अथवा सहि रोहिणी
यावश्छा ++ स्त्रोक्त युक्तञ्च अर्चयेत् विधिना बुधः २५
दुर्गास्थानञ्च सव्ये तु स्कन्दस्थानं सहार्चनम्

स्कन्दकल्याणमूर्तेस्तु स्थापनञ्च क्रमेण तु २६
स्कन्दानां वामभागे तु देवीनां स्थापयेत्ततः
तद्देवी मञ्जलीहस्तं कुक्कुटासनसंस्थितम् २७
देवी पश्चिमभागे तु ब्रह्मस्थानं सहार्चनम्
स्कन्दस्य दक्षिणे भागे नारदञ्च सुसंस्थितम् २८
आदित्यसोमदेवाश्च सिद्धकिन्नरसेविताः
यावश्छास्त्रोक्तमार्गेण भूमिपूजां समाचरेत् २९
षण्मुखश्शक्तिपाणिश्च कार्तिकेयो गुहस्तथा
स्कन्दो मयूरवाही स्यात् सेनापतिविशाखकः ३०
पूर्वादिपरितस्थाप्य परिवाराष्टकं क्रमात्
दुर्गालयानां वामे तु विघ्नेशं पूजयेत् बुधः ३१
गणनाथार्चनं कृत्वा +++ आवरणसम्युतम्
अमुखत्वेकदन्तञ्च कपिलो गजकर्णिकः ३२
लम्बोदरश्च विकटो विघ्नराजो विनायकः
विघ्नेशं पूजयित्वा तु परिवाराष्टकं यजेत् ३३
सर्वभूता वृतञ्चैव मुनिगन्धर्वसेवितः
दित्यसोमदेवाश्च पुरुषाकिन्नरसेविताः ३४
विघ्नपूजां समाप्नोति सदेशं पूजयेद्बुधः
महामर्यादि सव्ये च महालक्ष्मी च मातृका ३५
पण्डपस्येव वामे तु भुवनेशीं ग्रहार्चयेत्
देवीनां परितः कुर्यात् देवानाञ्च समूहतः ३६
अनङ्गानां गमानाद्यरङ्गमेखलाय च
भुवङ्गमेखला चैव भुवङ्गः पालिनी तथा ३७
सर्वशिखादैनतरानङ्गपटस्तथा
भुवनेशी समूहानां परिवाराष्टकं यजेत् ३८
आदित्य सोमदेवञ्च ऋषीणां मुनिसेवितम्

दक्षञ्च वीरभद्रञ्च पौराग्यायन्तथैव च ३९
देवाग्रे मण्डपं कल्प्य द्वारपालादि पूजनम्
यद्बिम्बं द्विदिधं प्रोक्तं केवलं सहजं स्मृतम् ४०
केवलत्वेक बेरं स्यात् सहजं बहुबेरकम्
पञ्चावरणसम्युक्तमर्चयेत्तु सदाशिवम् ४१
पूर्वोक्त परतकृत्वा कल्पञ्च पूजयेत् बुधः
एकदश्चास्त्रविधं प्रोक्तं तावश्चास्त्रविधं बुधः ४२
एतद्बाह्ये च पश्चिमे कामकोष्ठस्यमेव च
यावश्छास्त्रविधिप्रोक्तं पूजनञ्च क्रमाद्बुधः ४३
प्रथमावरणे बाह्ये द्वारभूतो हि पार्श्वकौ
अग्डरावरणमाया द्वारे भूतस्थितानि वै ४४
चतुप्रस्थतण्डुलं पिष्टं मोदकं पिष्टमाचरेत्
भूतानां सव्य पार्श्वे तु ज्वरदेवन्तु पूजनम् ४५
तद्देवदक्षिणे भागे ज्येष्ठास्थानं प्रकीर्तितम्
ज्येष्ठायां सव्य पार्श्वे तु मालिका व्रतमाचरेत् ४६
एवमभ्यर्च्य विधिवत् प्रधानन्तु सदाशिवम्
शिवार्चनविधानेन नित्योत्सवबलिक्रमम् ४७
आलयस्यैव देवाग्रे वृषभस्थानदेशिकः
वृषस्थानोत्तरदेशे ध्वजदण्डं विधीयते ४८
दण्डस्योत्तरदेशे तु भूतपीठं प्रतिष्ठितम्
स्थानसङ्कटयानेन किञ्चिद्भेदं शिवार्चनम् ४९
यत्रदेशे विशालं स्यात्तत्र देशे प्रतिष्ठितम्
मालिकानन्तरं कृत्वा कल्पयेत् लोकपालकान् ५०
मध्ये वृषञ्च पीठञ्च कल्पयेद्विधिना बुधः
गर्भग्रहस्य द्वारे वा दण्डिमुण्डिबलिन्ददेत् ५१
मध्यद्वारस्य देशे तु नन्दिकाळबलिन्ददेत्

अन्तर्द्वारस्य द्वारे तु द्विपार्श्वे भूतबलिन्ददेत् ५२
वृषभादि बलिन्दद्यार्लोकपालबलिं क्रमात्
मालिकायास्तु परितः इन्द्रादि बलिरुच्यते ५३
महापीठे बलिं कृत्वा आमोदादीन् क्रमाद्बुधः
महापीठस्य बाह्ये तु तृतीयभ्रमणं कुरु ५४
नृत्तगीतादि यत्सर्वं आलयन्तु प्रवेशयेत्
बलिबेरञ्च मूर्तीनां राजनन्तु क्रमाद्बुधः ५५
नित्योत्सवन्तथा कुर्यान्नैमित्तिकन्ततः श्रुणु ५६
इत्यंशुमान् तन्त्रे पञ्चगोचरप्रतिष्ठाविधिपटलः

## विष्णुप्रतिष्ठै

अथातस्संप्रवक्ष्यामि विष्णुस्थापनमुत्तमम्
प्राश्यादस्यन्द्रतो विद्वान् कुर्यात् स्थापनमण्टपम् १
मण्टपस्य चतुर्द्वारि चतुर्वेदीं प्रकल्पयेत्
अचलप्रतिष्ठितो यत्र देवस्तत्र न वेदिकम् २
तस्यास्समीपे तत्स्थाने कलशस्नानमुत्तमम्
विषुवायनसङ्क्रान्तौ चन्द्रसूर्यग्रहे तथा ३
अर्चनायां विशेषोऽस्ति कदाचित्षु भयस्तथा
उपघातेपिचान्यस्मिन् दुस्वप्ने तु भयङ्करे ४
आशौच द्वयसम्प्राप्ते आलयन्तु प्रवेशने
विष्ठाचोत्गारमूत्रञ्च श्वानकुक्कुटमेव च ५
सुरामांसञ्च रुधिरं शूद्रादि स्पर्शनेपि च
अन्य पुण्यादिने चैव नित्यनैमित्तिकेऽपि च ६
उपसर्गेपसंसर्गे प्रधानपुरुषक्षये
प्रायश्चित्तैश्च बन्धे तु निर्गमे च प्रवेशने ७
युद्धारम्भे वा नृपजन्मर्क्षकेऽपि वा

एवमादिषु कालेषु स्नपनं देशिकोत्तमः ८
आचार्यशिष्यसम्युक्तः स्नानं कृत्वा समाहितम्
शुक्लवस्त्रेण संवेष्ट्य शुक्लयज्ञोपवीतकम् ९
ततस्सन्ध्यामुपवीत वैष्णवं सन्धिमाचरेत्
पश्चान्मण्टपमावेश्य भूमिशोधनमाचरेत् १०
आलेपनञ्च कर्तव्यं द्रव्यसङ्ग्रहमेव च
तद्वेदिपश्चिमे भागे प्राङ्मुखो देशिकस्थितिः ११
अथवा दक्षिणे भागे उत्तराभिमुखस्थितिः
++ वायादि मन्त्रेण भस्मोद्धारणं कुरु १२
अष्टाक्षरशतं जप्त्वा विघ्नेशयजनं परम्
अपूपं फलभक्ष्यञ्च नाळिकेरन्निवेदयेत् १३
अस्मत्कर्मावसानान्तं अविघ्नं प्रार्थयेद्गुरुः
पुण्याहं वाचयित्वा तु सर्वेषां प्रोक्षणान्ततः १४
तदग्रे कोणमालिख्य भूमिभून्नेति मन्त्रतः
शङ्खाधरन्न्यसेन्मध्ये त्रिमूर्तिपादयो न्यसेत् १५
वलयत्वग्नि +++ ध्ये तत्कलान्न्यसेत्
शङ्खमस्ते गृहीत्वा अस्त्रेण क्षाळयेत्ततः १६
त्रिपादिं मध्यमे न्यस्य तन्मध्येत्वक्ष ++
तन्मध्ये कूर्चसंयुक्तं गन्धपुष्पसमन्वितम् १७
तत्पृष्ठे ब्रह्मदैवत्यं तन्मध्ये विष्णुदैवतम्
तदग्रे रुद्रदैवत्यं शङ्खमध्ये दिवाकरम् १८
तन्मध्ये तत्कलाञ्चैव मातृका शम्बरं भवेत्
आपो वा इति मन्त्रेण शङ्खपूर्णजलेन तु १९
तन्मध्ये चन्द्रदैवत्यं तन्मध्ये तु कलान्यसेत्
वर्गां षडङ्गञ्च त्रिः करणे विमोचनम् २०
गन्धं पुष्पञ्च धूपञ्च दीपञ्चैव प्रदापयेत्

मूलमन्त्रेण संस्पृश्याष्टादशमुदीरितम्  २१
वर्द्धनी जलमापूर्य शङ्खतोयेन सेचयेत्
शङ्खपृष्ठे वसे ज्येष्ठा तत्पृष्ठमशुचिर्भवेत्  २२
जलस्पृष्ठे तु पूर्वं स्यात् तज्जलं मूत्रतुल्यकम्
गुरूपदेशमार्गेण पश्चादात्मनि पूजयेत्  २३
शोषणदहनञ्चैव प्लावनञ्च यथाक्रमम्
नाम्ना द्वादशमन्त्रैस्तु तत्तत्स्थाने तु विन्यसेत्  २४
अष्टाक्षरं न्यसेद्धीमान् शिरो मूर्ध्नि च नासिके
चक्षुश्रोत्रञ्च आस्यञ्च अष्टस्थानं प्रकीर्तितम्  २५
गन्धपुष्पञ्च धूपञ्च दीपमुद्राणि दर्शयेत्
तत्स्थारस्याग्निदेशे तु +++ तथा  २६
दीपाधारन्यसेत् विद्वान् तदूर्ध्वे दीपयोजयेत्
तद्दीपस्यार्घ्यपाद्यञ्च गन्धपुष्पन्तथैव च   २७
अष्टदिक्परिवाराणां सप्तमन्त्रन्तथैव च
ऐशान्ये लक्ष्मिसम्युक्तं पूर्वाद्यैशान्तमेव च  २८
तत्तत्स्थानमन्त्रेण तत्तत्स्थाने समर्चयेत्
तद्दीपस्य च तन्मध्ये महालक्ष्मीं प्रपूजयेत्  २९
अर्घ्यगन्धञ्च पुष्पञ्च नैवेद्यन्दापयेत्क्रमात्
आचार्यन्दक्षिणे पञ्चगव्याथ सूत्रकम्  ३०
प्रागग्रञ्चतुः सूत्रञ्च उदगग्रस्तथैव च
अष्टौ परिवाराणां सप्तमन्त्रन्तथैव च  ३१
सूत्रात् सूत्रान्तरन्तालन्तन्मध्ये स्थण्डिलं कुरु
उत्तमञ्चाढकञ्चैव मध्यमञ्च तदर्द्धकम्  ३२
तदर्द्धमधमञ्चैव प्रत्येकं स्थण्डिलं क्रमात्
तदर्धन्तण्डुलञ्चैव तदर्द्धञ्च तिलैरपि  ३३
तदर्द्धं लाजमेवञ्च तदर्द्धं पिष्टचूर्णकम्

तदर्द्धं रजनी चूर्णं स्थण्डिलन्तु प्रशस्यते ३४
दर्भै पुष्पै परिस्तीर्य अलङ्कृत्य विशेषतः
वासुदेवो द्ध्रुवञ्चैव नन्दश्चैव मरुस्तथा ३५
जयञ्च विजयञ्चैव कोष्ठषट्केषु पूजयेत्
कोष्ठं प्रति च सर्वत्र गन्धं पुष्पञ्च धूपकम् ३६
पश्चात्पात्रं प्रतिष्ठाप्य दधिपूर्वे तु योजयेत्
शुक्रमसीति मन्त्रेण आज्यदक्षे तु विन्यसेत् ३७
गोमयं पश्चिमे चैव कोष्ठषट्केसु योजयेत्
कोष्ठञ्चैव तु सर्वत्र गन्धं पुष्पञ्च धूपकम् ३८
पश्चात्पात्रं प्रतिष्ठाप्य दधिपूर्वे तु योजयेत्
शुक्रमसीति मन्त्रेण आज्यदक्षे तु विन्यसेत् ३९
गोमयं पश्चिमे चैव गन्धचारन्तथैव च
गोमूत्रं उत्तरे चैव गायत्र्या चैव विन्यसेत् ४०
कुशोदकञ्च ऐशान्ये देवस्यत्वेति मन्त्रतः
गव्यं प्रति विशेषेण गन्धपुष्पञ्च धूपकम् ४१
तद्विष्णोः परमिति मध्वात्र स्पर्शयेत्ततः
वयं सोमेति मन्त्रेण मध्यपात्रन्दधिन्न्यसेत् ४२
इरावति मन्त्रेण आज्यं मध्ये तु योजयेत्
गायत्र्या चैव मन्त्रेण गोमूत्रञ्चैव योजयेत् ४३
विष्णुगायत्रि मन्त्रेण समाप्लवनन्ददेत्
मूलमन्त्रेण संस्पृश्य अष्टवारञ्जपेत्ततः ४४
आग्नेय्याञ्चास्त्रमेवञ्च गन्धं नैर्ऋृति विन्यसेत्
वायव्यां पुष्पमालाञ्च तानि स्थापयेत्क्रमात् ४५
गन्धं पुष्पञ्च धूपञ्च दीपनैवेद्यमेव च
दर्भेणाच्छादयेत् गव्यं पञ्चगव्यविधिक्रमम् ४६
पूर्ववत् वेदिकोत्सेधः तदूर्ध्वे सूत्रपातनम्

प्रागग्रञ्चतुसूत्रं स्यात् उदगग्रन्तथैव च  ४७
सूत्रात्सूत्रान्तरन्तालं मध्ये नवपदं ग्रहेत्
स्वस्तिकं सर्वतो भद्रं पदं प्रति विशेषतः  ४८
पदं प्रति विशेषेण स्थण्डिलन्तु पृथक्पृथक्
उत्तमं द्रोणमेवोक्तं मध्यमन्तु तदर्द्धकम्  ४९
तदर्धमधमञ्चैव स्थण्डिलन्तु विधीयते
मध्यमे विष्णुकुम्भन्तु ++ णत्रयमथापि वा  ५०
तदर्द्धमध्यमञ्चैव तदर्द्धमधमं भवेत्
तदर्द्धै स्थण्डुलैश्चैव तदर्धैश्च तिलैरपि  ५१
तदर्द्धलाजसम्युक्तं तदर्द्धं पिष्टचूर्णकम्
तदर्द्धरजनीचूर्णं पदं प्रति विशेषतः  ५२
दर्भैश्चैव परिस्तीर्य पुष्पैश्च विचित्रितम्
तत्तत्स्वनाम मन्त्रेण आसनन्तु पदं प्रति  ५३
पाद्यमाचमनीयार्घ्यं गन्धं पुष्पञ्च धूपकम्
कलशान् क्षाळयित्वा तु दर्भोपरि अधोमुखान्
सूत्रेण वेष्टयेत्सर्वान् गवाक्षसदृशान्तरम्  ५४
धूपितान् कलशान् सर्वान् स्थण्डिलोर्ध्वे अधोमुखान्
कूर्च्च पल्लवसंयुक्तं तत्पृष्ठे तु योजयेत्
शङ्खतोयेन सर्वत्र प्रोक्षयेदस्त्रमन्त्रतः  ५५
घटपृष्ठे सूर्यतत्वं तन्मध्ये तत्कलान्यसेत्
पूर्वादीनि चतुर्दिक्षु तत्कूर्चं गृह्यदेशिकः  ५६
कलशानूर्ध्वमुखांश्चैव अक्षतन्तिलसम्युतम्
तद्द्रव्यं कूर्चसम्युक्तं निक्षिपेत्कलशं प्रति  ५७
अन्यादिषु च कोणेषु तत्सर्वं समाचरेत्
श्री देवी चन्दनं दूर्वा तुळसी बिल्वपत्रकम्  ५८
उशीरं हरिबेरञ्च हिमतोयेन चाष्टसु

गन्धतोयेन सम्पूर्य पल्लवं विन्यसेत्क्रमात् ५६
मध्ये प्रधानकुम्भस्य कूर्चं पल्लवसङ्ग्रहेत्
कुम्भमूर्ध्वमुखश्चैव कूर्चाक्षतवयं युतम् ६०
रत्नञ्च निक्षिपेत्कुम्भे आपो वा इति पूरयेत्
पूरयित्वे तु तत्काले पल्लवं विन्यसेत् बुधः ६१
शङ्खतोयेन तु पश्चात् पूरयेत्कलशं प्रति
प्रधानकुम्भमध्ये तु पञ्चगव्यन्तु पूरयेत् ६२
तच्छेषं पञ्चगव्यन्तु पूर्वस्थाने प्रतिष्ठितम्
मध्यप्रधानकुम्भस्य चन्द्रतत्वन्तु विन्यसेत् ६३
तन्मध्ये तत्कलाश्चैव अर्चयेत्तु विशेषतः
शरावे न्निवभिः पश्चात् स्वस्वमन्त्रेण पूरयेत् ६४
कुमुदं कुमुदाक्षञ्च पुण्डरीकञ्च वामनम्
शङ्कुकर्णन्तथा शर्वस्सुमुखस्सुप्रतिष्ठितः ६५
पूर्वादीशानपर्यन्तं स्वस्वनाम्नान्मयोजयेत्
अर्घ्यं गन्धञ्च पुष्पञ्च धूपदीपं ददेद्बुधः ६६
मध्ये प्रधानकुम्भन्तु मूलमन्त्रेण योजयेत्
कलशान् वेष्टयेत्सर्वान् वस्त्रं प्रत्येकमेव च ६७
सप्तव्याहृतिभिर्मन्त्रैरावाहयदि दैवतम्
प्राणप्रकृतियोगेन स्थितिन्न्यासमाचरेत् ६८
अस्थिरत्नं सिरातन्तु मांस मृत्तोय मेदसा
शोणितं रक्तमृद्भिस्तु चर्मवस्त्रन्तथैव च ६९
सप्तधातु मयं कूर्चं नाळिकेरं शिरस्तथा
इत्येते घटदेवानां केशस्या चूतपल्लवम् ७०
इत्येवं ध्यानमेवं स्यात् कुम्भान् सर्वान् विशेषतः
पाद्यमाचमनञ्चार्घ्यं गन्धपुष्पञ्च धूपकम् ७१
मुखमुद्रां सुरभिमुद्रां व्यपकत्वन्नमार्गतम्

मातृकान् विन्यसेद्धीमान् तत्तस्थाने यथाक्रमम्
केशवादिन्यसेत्सर्वान् विन्यसेत्तु विशेषतः ७२
षट्त्रिंशद्दर्भसम्युक्तं मूलमध्यन्तदग्रकम्
एकैकदर्भसम्युक्तं बन्धयेद्दृढवत्कुरु ७३
तदग्रकुम्भमूर्ध्नि स्यात्तन्मूलं गृह्यदेशिकः
पुरुषसूक्तञ्जपेद्धीमान् मूलकुम्भं स्पृशेत्ततः ७४
मूलमन्त्रं विशेषेण अष्टोत्तरशतं जपेत्
वैष्णवं सूक्तमापोहि हिरण्येति च सप्तकम् ७५
पावमानानुवाक्श्चैव सर्वे धारणा स्मृताः
अनुक्तमन्त्रं यत्किञ्चित् ग्राहयेत्तु ततो बुधः ७६
केशवायेति मन्त्रेण तर्पयेत्स्वस्वनामभिः
गन्धाक्षतञ्च पुष्पञ्च भूषणन्दाममेव च ७७
धूपदीपन्ददेत्पश्चात् नीराञ्जनमथाचरेत्
पायसान्नं ददेत्कुम्भं सर्वं वस्त्रेण वेष्टयेत् ७८
प्रविश्य गर्भगेहन्तु पर्युषितं विसर्जयेत्
तैलाभिषेचनं कृत्वा पञ्चगव्याभिषेचनम् ७९
शुद्धतोयाभिषेकञ्च पुष्पमूर्ध्नि निदापयेत्
वस्त्रेणाच्छादयेद्बिम्बं गन्धसृक् योजयेत्ततः ८०
धूपदीपन्ददेत्पश्चात् नीराञ्जनमतः परम्
स्थापयेत्तु क्रमेणैव कुम्भस्थान्नभिषेचनम् ८१
अनेकविधिवत्कृत्वा स्नपनं पुरुषस्य तु
दत्वा पायसमन्नन्तु शेषं परिसमाचरेत् ८२
नित्यदेवार्चनेय स्यात् कलशस्नापनन्तु वै
स्नापनश्च त्रयञ्चोक्त ब्रह्मयज्ञानमन्त्रतः ८३
वामदेव्यमतत्कृत्वा पवित्रं यजुषभव्य यत्
पावमानश्च दित्यश्चादेतत्सर्वं समापयेत् ८४

अयने चोत्सवं कुर्यात् मुच्यतै सर्वपावकैः
इहलोक परत्रावि सुखमेवास्य वर्द्धते ८५
पश्चात् विष्णोश्च साम्राज्यमेतित्यत्र न संशयः
जगद्धिदाय कृष्णाय स्नपनं कृतवान्नियः ८६
इत्यंशुमान् तन्त्रे विष्णुप्रतिष्ठाविधिपटलः

## चूर्णोत्सवम्

चूर्णोत्सवविधिं वक्ष्ये श्रूयतां रविसत्तम
उत्सवान्ते मृतान्ते च चूर्णोत्सव द्विधाभवेत् १
मृतान्ते ताडयेद्धीमान् उत्सवान्ते विवर्जयेत्
देवाग्रे च सभास्थाने तीर्थतीरे मनोरमे २
गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत्
स्थण्डिलं कल्पयेत्कोणे मध्ये पूर्वे च पश्चिमे ३
दक्षिणे कल्पयेद्विद्वान् चाष्टपत्रं सकर्णिकम्
मध्यमे लूखलन्यस्त्वा वस्त्रेणैव तु वेष्टयेत् ४
विघ्नेश्वरं समभ्यर्च्य नाळीकेरन्निवेदयेत्
दक्षिणे स्थण्डिले मध्ये चास्त्रमूर्तिं समर्चयेत् ५
जीवाशक्त्यग्निदेशे तु विघ्नेश्वरीं यजेन्नृतौ
स्वाहाशक्ती च वनिलौ वामाङ्गस्त्वीशगोचरे ६
स्वनाम मन्त्रैरभ्यर्च्य धूपन्दत्वा समाचरेत्
भेरीं वस्त्रेण संवेष्ट्याभ्यर्च्य पूर्वमण्डले ७
धूपदीपादिकं दत्वा भेरीं सन्ताडयेत्क्रिया
वस्त्रेण वेष्ट्यमुसलं गन्धपुष्पादिनार्चयेत् ८
मुसलं रुद्रदैवत्यं लूखलं विष्णुदैवतम्
शूर्पं वै ब्रह्मदैवत्यं अर्चयेत्स्वस्वनामतः ९
घृतशिरोर्पणं कुर्यात् पूर्वोक्तविधिना सह

सुशुषां रजनीं क्षिप्त्वा अर्चयेत् मूलमन्त्रतः  १०
आचार्यो अस्त्रमन्त्रेण कुट्टयेत् मुसलेन तु
पश्चादाय गणिका भक्त्यादि स्तोत्र पाठकैः  ११
तच्चूर्णन्तु समुद्धृत्य न्तृदिना देशिकोत्तमः
चूर्णं सतैलमिश्रञ्च दूर्वाङ्कुरसमन्वितम्  १२
पञ्चभागन्तु सङ्कल्प्य लिङ्गार्थं प्रतिमार्थकम्
उत्सव प्रतिमार्थञ्च त्रिशूलार्थं विशेषतः  १३
परिवारार्थमेकञ्च तत्तन्मन्त्रेण दापयेत्
धूपदीपादिकं दत्वा +++ भये जनः  १४
चूर्णोत्सव विधि प्रोक्तः शुकाभिषेचनं श्रुणु
इत्यंशुमान् तन्त्रे चूर्णोत्सवविधिपटलः

## शुकाभिषेचनम्

शुकाभिषेचनं वक्ष्ये श्रूयतां रविसत्तम
अङ्कुराद्यादि कर्मान्ते अवभृतस्नानपूर्वके  १
उत्सवान्ते विशेषेण ++ शुकालाघवम्
नानाचित्रसमायुक्तं नानारत्नविभूषितम्  २
अथवा वेणुखण्डञ्च प्रस्तं प्रस्तार्धमानतः
शुकाद्यष्टौ च सङ्ग्राह्य अणिमाद्यष्टशक्तिकम्  ३
शिवाग्रे स्थण्डिलं कृत्वा पुण्याहं वाचयेत्ततः
शालिभिस्थण्डिलं कृत्वा नवकोष्ठं समालिखेत्  ४
पात्राघारन्यसेन्मध्ये स्वर्णपात्रञ्च निक्षिपेत्
शुकाष्ठकन्तु सङ्ग्राह्य क्षाळयेदस्त्रमन्त्रतः  ५
इत्यादीशानपर्यन्तं शुकन्तत्रैव निक्षिपेत्
पठकाष्ठकञ्च सङ्ग्राह्य सुगन्धकुसुमैर्युतम्  ६
जलञ्चन्दनकच्चोलं लवङ्गोशिरकुङ्कुमम्

अगरुञ्चन्द्रसम्युक्तं पठकाष्टकमिहोच्यते ७
हिमतोयेन सम्युक्तमग्रे निपोषयेत्ततः
गौरीमिमाय मन्त्रेण मध्ये मृगमदन्न्यसेत् ८
शन्नोदेवेति मन्त्रेण जलञ्चैव तु विन्यसेत्
गन्धद्वारेति मन्त्रेण चन्दनञ्चैव सम्युतम् ९
एषामीशेति मन्त्रेण कच्चोलञ्चैवमेव च
यद्वादायेति मन्त्रेण कर्पूरं विन्यसेत्ततः १०
हिमतोयञ्च सङ्ग्राह्य पूरयेच्छुकमष्टकौ
पठकाष्टकं यजेद्धीमान् नवशक्तिञ्च सम्युतम् ११
स्नानं विज्ञाप्य विधिवत् स्नानकर्म समाचरेत्
शुद्धोदकैश्च संस्नाप्य गन्धञ्चैव तु लेपयेत् १२
सुगन्धदाम एवञ्च धारामृगमदेन तु
हिमतोयाभिषेकञ्च धूपदीपादिकं ददेत् १३
तन्मन्त्रमनुस्मृत्य स्नापयेच्छकमष्टकम्
ततो भक्तजनास्सर्वे शुकलीलां समाचरेत् १४
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्
शुकाभिषेचनं प्रोक्तं शुद्धोत्सवविधिं श्रुणु १५
इत्यंशुमान् तन्त्रे शुकाभिषेक विधिपटलः

## प्रतिष्ठातन्त्रकम्

प्रतिष्ठातन्त्रकं वक्ष्ये श्रूयतां रविसत्तम
दैविकं मानुषञ्चैव द्विविधं तत्प्रकीर्तितम् १
मानुषं गुणभेदं स्यात् दैविकं द्विधा भवेत्
साम्यं विशेषनिर्वाणं मानुषं त्रिविधं विदुः २
प्रतिष्ठास्थापने चैव स्थितस्थापनमेव च
उत्थानमास्थापनं पञ्चधा दैविकं त्विदम् ३

प्रतिष्ठास्थापनान्तेषु चाष्टाङ्गेन विधीयते
मेदिनीं सङ्ग्रहं बालस्थापनं प्रथमेष्टका ४
गर्भमूर्धेष्टकायामं लिङ्गसंस्थापनं यथा
सम्प्रोक्षणक्रमेणैव चाष्टाङ्गमिति कीर्तितम् ५
तेषां ग्रहणं बालस्थापनं प्रथमेष्टका
कर्म त्रयक्रमेणैव कारयेत्तु पृथक्पृथक् ६
लिङ्गस्थापनञ्चैव गर्भसंस्थापनं सह
एककाले प्रकर्तव्यमेकाचार्येण कारयेत् ७
स्थूपिकील प्रतिष्ठा च विमानस्थापनञ्च यत्
शिवसम्प्रोक्षणञ्चैव समतन्त्रेण कारयेत् ८
पृथक्तन्त्रेण वा कार्यं अष्टांशं देशिकोत्तमः
प्रथमस्थापनञ्चैव स्थूपिकीलञ्च वास्तुकम् ९
शिवसम्प्रोक्षणञ्चैव समकाले समाचरेत्
प्रासादन्देहमित्युक्तं देहीलिङ्गमिति स्मृतम् १०
देहहीनकृतं कर्म तत्सर्वं निष्फलं भवेत्
तस्मात्सर्वप्रयत्नेन विमानस्थापनन्त्विदम् ११
अङ्कुरं वास्तु यागञ्च पर्यग्निकरणन्ततः
मण्डपस्यार्चनञ्चैव समित्परिधिविष्टरम् १२
प्रणिता प्रोक्षणीपात्रमाघारपरिषेचनम्
परिस्तरणमिन्द्रान्तमेकमेव समाचरेत् १३
एकाचार्येण कर्तव्यं मूर्तिहोमादिकं विना
प्रासादपूर्वदिग्भागे मण्डपञ्चतुरश्रकम् १४
सप्ताष्टकरमारभ्य द्विद्विहस्तविवर्द्धनात्
पञ्चविंशति षड्विंशद्धस्तान्तं संप्रकल्पयेत् १५
अयुग्मं वाथयुग्मं वा पञ्चत्रयः परिकीर्तिताः
आस्थानमण्डपे विद्वान् मध्ये कूटं समाचरेत् १६

शालाकारप्रपां वाथ परितः कल्पयेत्क्रमात्
चतुर्दिक् द्वारसम्युक्तञ्चतुस्तोरणभूषितम् १७
तालमानन्तलोत्सेधमथवाथ षडङ्गुलम्
तन्मध्ये वेदिकां कुर्यात् तिथिभागैकभागतः १८
शिववेदीति सा प्रोक्ता तत् विस्तारसमोन्नता
तत्पूर्वादिचतुर्दिक्षु ब्रह्मवेदीं प्रकल्पयेत् १९
आग्नेय्यादिषु कोणेषु धर्माख्या चतुर्वेदिकम्
नवग्रहस्य मध्ये तु तत्पूर्वादि चतुष्वपि २०
धर्माख्या पूर्वदिक् वेदी ज्ञानाख्या दक्षिणे दिशि
वैराग्या पश्चिमे वेदी चोत्तरे श्चर्याख्यकम् २१
सुधया चेष्टया कुर्यात् मृण्मये वाथवा बुधः
तत्समांशो भागेन पादार्धपदमानतत् २२
क्रमेण चोन्नतं कार्यं शिवब्रह्मादिवेदिका
वह्नेरायतनं कार्यं मानुषे तु पदे स्थितम् २३
स्नपनं कारयेद्विद्वान् पदे पैशाचके क्रमात्
अल्पपक्षो विधानज्ञो धर्मैकं वेदिकत्रये २४
आग्नेयादिषु कोणेषु कल्पयेत् पूर्वपञ्चना
अथवा नन्दनन्दांशैर्मध्ये नवपदं ग्रहेत् २५
लग्नाङ्गुलोन्नतेनैव वेदिकां कारयेत् बुधः
तदूर्ध्वे वेदिकां कुर्यात् महादिक्षु च मध्यमे २६
पदमानोन्नतं वाथ तदर्द्धार्द्धमथापि वा
शरवेदांशहीनं वा वेदिकोदधमाचरेत् २७
उपवेदिं ततः कृत्वा मेखला त्रिंशकाङ्गुलैः
परितः कल्पयेद्धीमान् उत्सेधं समनिर्गमम् २८
दर्पणोदरसङ्काशं निम्नोन्नतविवर्जितम्
कुण्डानि कारयेद्विद्वान् चतुर्दिक्ष्वीशकोणके २९

षट्कोणं पूर्वदिग्भागे चतुरश्रं तु दक्षिणे
पश्चिमे वसुकोणं स्यात् सौम्ये चाब्जप्रकल्पयेत् ३०
प्रधानमीशदिग्भागे चतुरश्रं वा वृत्तमेव च
एवं मण्डपमावेद्य वितानाद्यैरलङ्कृतम् ३१
गोमयालेपनं कृत्वा शिल्पिनं विसृजेत्ततः
प्रणम्य देवदेवेशं पुष्पञ्जलसमन्वितम् ३२
देवदेव महादेव जगदातिविनाशन
त्वामुद्दिश्य तन्त्राणि त्वत्प्रसादात्करोम्यहम् ३३
इत्युक्त्वा प्रार्थयेन्मन्त्री प्रणम्यानुज्ञया सह
आश्रयेदङ्कुरस्थानं प्रोक्षयेदस्त्रमन्त्रतः ३४
शालिभिस्थण्डिलं कृत्वा नन्दनन्दपदं लिखेत्
मध्ये नवपदं ग्राह्य लोपयेत् परितं पदम् ३५
पूर्वादीनि चतुर्दिक्षु त्रीणि त्रीणि पदं त्यजेत्
द्वारार्थकं महादिक्षु पदमेकं परित्यजेत् ३६
भानुमार्गसमायुक्तं मध्ये पद्मं प्रकल्पयेत्
कोणेषु घटिकाष्टौ च +++ महादिशि ३७
अन्या च शरावाणि विन्यसेत्तु प्रदक्षिणम्
तन्मध्ये कलशं स्थाप्य कूर्चपल्लवतोययुक् ३८
सप्तबीजानि संक्षाळ्य क्षीरमध्येधिवासयेत् ३९
क्षणिकैर्वाथ लोहैर्वा शिवास्त्रं परिकल्पयेत्
सम्माज्याभ्युक्ष्यतोयेन गोमयेन तु लेपयेत् ४०
मण्डलत्रितयं कल्प्य शालिपिष्टाद्रलेखया
पश्चिमे स्थापयेदश्रमध्यमे बलिमाचरेत् ४१
तदग्रे मण्डलभूमिदेवीं संस्थापयेत्ततः
गणेशं पूजयेत्तत्र पुण्याहं वाचयेत्ततः ४२
शालिभिस्थण्डिलं कुर्यात् नवकोष्ठं समालिखेत्

मध्ये ब्रह्माणमभ्यर्च्य अनन्तं पूर्वकोष्ठके ४३
विनतमग्निदिग्भागे भद्रं याम्ये समर्चयेत्
जयन्तन्दरुते देशे भ्रमणी वारुणे भ्रमा ४४
वायवे प्रस्तुता सोमे जम्भ्रितत्वीशकोणके
स्वनामैव तु सम्पूज्य दत्वा दध्योदनं बलि ४५
धूपदीपन्ततो दत्वा देवतोद्वासनन्नयेत्
भूमिमस्त्रेण संसिच्य कुन्दाळीं क्षाळयेत्ततः ४६
तेन भूमिं समाकृष्य शुद्धपात्रे न्यसेत्ततः
गन्धपुष्पादिनाभ्यर्च्य वस्त्रेणाच्छादयेत्ततः ४७
शिरसावाहयित्वा तु शूलास्त्रेण समन्वितम्
सर्वालङ्कारसंयुक्तं ब्रह्मघोषसमन्वितम् ४८
प्रदेशं मङ्कुरस्थानं कुमुदेशं समर्चयेत्
मृदमीशेन सङ्ग्राह्य घटिकादिषु विन्यसेत् ४९
पुण्याहं वाचयेत्तत्र प्रोक्षयेद्धृदयेन तु
तत् जलं विसृजेत्पात्रे चन्द्रमनुस्मरन् ५०
या जाता इति सञ्जप्त्वा धेनुमुद्रां प्रदर्शयेत्
वापयेच्छिवमन्त्रेण घटिकादिषु यथाक्रमम् ५१
घटिकापालिका चैव शरावञ्च यथाक्रमम्
सम्पूज्य गन्धपुष्पाद्यैर्नैवेद्यन्दापयेत् गुरुः ५२
प्रोक्षयेत् घटिकादीनि सोमकुम्भजलेन तु
वस्त्रेणा च्छादनं कृत्वा तदन्ते बलिमाचरेत् ५३
ततः प्रभातसमये स्नानं कृत्वा सुदेशिकः
चन्द्रं संपूजयेद्विद्वान् समान्यार्घ्यजलेन तु ५४
पालिकादीनि बिम्बानि सेचयेन्मूलमन्त्रतः
विधाय शुद्धवस्त्रेण बलिमग्रे नयेत्ततः ५५
शिल्पिकार्मावसाने तु सदनं सम्प्रविश्य च

अन्तर्बहिश्च सम्मार्ज्य कुशाग्रेणैव बुद्धिमान् ५६
प्रोक्षयेत्पञ्चगव्येन क्षाळयेत् शुद्धवारिणा
तिलतैलेन चालिप्य प्रोक्षयेत्तु शिवाम्भसा ५७
उशीरं मेघसिद्धार्थञ्चन्द्रं मृगमदद्वयम्
कृष्णगन्धसमायुक्तं हिमतोयेन मर्दयेत् ५८
अन्तर्बहिश्च सर्वत्र लेपयेज्जलसम्युतम्
धूमामोदसमायुक्तं दत्वादीपं प्ररोपयेत् ५९
ततस्सम्प्रोक्ष्य गव्येन प्रकारेण यथाक्रमम्
मार्जनं प्रोक्षणं कृत्वा पुनरभ्युक्षणन्नयेत् ६०
ततो विमानदेवानां अक्षिमोक्षणमाचरेत्
प्रासादपूर्वदिग्भागे गोमयेनानुलेपयेत् ६१
स्थण्डिलं शालिभिः कुर्यात् पञ्चतालप्रमाणतः
नन्दनन्दपदं कृत्वा मध्ये नवपदं ग्रहेत् ६२
विदिक्षु नवकं स्थाप्य शेषाश्च परिवर्जयेत्
अनले नैरुते कोणे वायुदेशे त्वधेशके ६३
मध्यमे नवकं स्थाप्य गन्धपुष्पादिनार्चयेत्
मध्यमे शिवकुम्भन्तु शक्रकुम्भं तथानले ६४
श्रीकण्ठन्नैरुते कुम्भे माधवं वायुकोणके
ईशकोणे विधातारं लोकेशान् परितो यजेत् ६५
आचार्यो मूर्तिपैस्सार्धं पुण्याहं वाचयेद्बुधः
ततो विमानमारुह्य मूर्तिपैस्सह देशिकः ६६
बिम्बमस्त्रेण सम्प्रोक्ष्य पटेनाच्छादयेद्धृदा
नेत्रपटं समादाय भूरेखां प्रथमं लिखेत् ६७
द्वितीयपक्षरेखाञ्च तृतीयं श्वेतमण्डलम्
चतुर्थं मण्डलं कृष्णं पञ्चमज्योतिमण्डलम् ६८
देशिकस्य नियोगेन लेखयेत् मूर्तिपान् क्रमात्

रथशिल्पिनमाहूय नेत्रं सुव्यक्तवाचयेत् ६९
शिखरे बिन्दुवृत्तञ्च लेखयेदतिसुन्दरम्
प्रासादाम्बकवेयेति विद्यते तद्दिवाकर ७०
ततश्शिल्पिनमुद्वास्य मध्वाज्याभ्यान्तु तर्पयेत्
प्रच्छिन्नपटमावर्ज्य धान्यराशिं प्रदर्शयेत् ७१
प्रोक्षयेत्कलशाम्भोभिर्दर्पणे चाभिषेचयेत्
प्रासादस्य चतुर्दिक्षु गोमयेनानुलेपयेत् ७२
धाराभिषेचनं कुर्यात् दर्पणोपरिदेशिकः
यामं वा चार्धयामं वा घटिकाद्वयमेव वा ७३
स्नानमात्रमथावापि जलाधिवासनन्नयेत्
पुण्याहं वाचयेद्धीमान् लिङ्गशुद्धिं समाचरेत् ७४
पञ्चमृत् पञ्चगव्यैश्च बिल्वपत्रैश्च घर्षयेत्
इष्टकास्थूपिकीलञ्च क्षाळयेदस्त्रवारिणा ७५
प्रोक्षयेच्छिवमन्त्रेण भवनं देशिकोत्तमः
ब्राह्मणान् भोजयेत्तत्र गोमयेनानुलेपयेत् ७६
पुण्याह प्रोक्षणं कृत्वा प्रासादमुखमण्डपे
स्थण्डिलं शालिभिः कृत्वा सप्तविंशाङ्गुलान्तरम् ७७
अङ्गुलत्रय विस्तारन्नन्दनन्दपदं लिखेत्
ब्रह्माधिदैवता पूज्या वास्तुकुम्भपुरस्सरम् ७८
दध्योदन बलिं दत्वा ताम्बूलन्दापयेत्पृथक्
धूपदीपैस्समाभ्यर्च्य शिवाग्निं संप्रकल्पयेत् ७९
ब्रह्मादीनाञ्च देवानां अग्निमध्ये समर्पयेत्
समिदाज्यचरूणाञ्च हुत्वा प्रत्येकमाहुतिम् ८०
तिलतण्डुलमिश्रेण हुत्वा तच्च स्वनामतः
हव्यवाहेति मन्त्रेण भोजयेत्तदनन्तरम् ८१
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात्

पूर्णाहुतिन्ततो हुत्वा पर्यग्निकरणन्नयेत् ८२
अन्तर्बहिश्च सर्वत्र प्राकारं मण्डपादिकम्
पञ्चगव्येन सम्प्रोक्ष्य वास्तुकुम्भजलेन तु ८३
कृणुष्वपाजेति मन्त्रेण सम्प्रोक्ष्य हृदयेन तु
उल्कान्त्यक्त्वाथ तद्बाह्ये देशिकस्नानमाचरेत् ८४
ततो गण्डपमासाद्य भूतशुद्धिं समाचरेत्
मण्डपस्योत्तरे देशे स्थूपिकीलेष्टकान्यसेत् ८५
भस्मगैरिकया वापि शालिपिष्टेन वा बुधः
विलिखेदक्षरन्यासं शङ्खघोषपुरस्सरम् ८६
लक्ष्मीश द्वादशादित्य शक्तिरूपं शिवात्मिकम्
प्राग्याम्य पश्चिमे सोमे विलिखेदष्टकोपरि ८७
स्थण्डिलोर्ध्वे न्यसेद्विद्वान् रक्षाबन्धनमाचरेत्
स्थूपिकीलेष्टकान्यासं देवतानञ्च देशिकः ८८
सदाशिवस्यापि लिङ्गस्य रक्षासूत्रञ्च बन्धयेत्
मुक्तापुष्पैस्समभ्यर्च्य लिङ्गस्या पूरणं यथा ८९
विधायनववस्त्रेण शिवलिङ्गञ्च सत्मकम्
पादप्रक्षाळनं कृत्वा मण्डपं विधिनार्चयेत् ९०
ततो बालगृहं गत्वा यात्राहोमं समाचरेत्
शिवाग्रे स्थण्डिलं कृत्वा शुद्धदेशोर्थसैकतैः ९१
अन्याधानादिकं सर्वं पूर्वोक्तविधिना नयेत्
समिदाज्येन चरुणा प्रत्येकं षोडशं हुनेत् ९२
शिवाङ्गैश्चैव विद्याङ्गै व्योमव्यापिपदैरपि
प्रासादबीजमुख्यैश्च स्पर्शाहुतिमथाचरेत् ९३
शिवाग्रे स्थण्डिलं न्यस्त्वा कुम्भपूर्णञ्च वर्द्धनीम्
घटमध्ये समावाह्य लिङ्गादैवं समूलतः ९४
आवाह्य वर्द्धनीमध्ये पीठोद्देवीं मनोन्मनीम्

पूर्वाद्यैशानपर्यन्तमष्टविद्येश्वरान् क्रमात् ९५
सम्पूज्य गन्धपुष्पाद्यैर्नैवेद्यन्दापयेत् बुधः
पूर्णाहुतिन्ततो हुत्वा शिवकुम्भादिकान् ग्रहेत् ९६
बाललिङ्गं परित्याज्य शिवशास्त्रेणैव देशिकः
परिवारघटोपेतं शिवकुम्भञ्च वर्द्धनीम् ९७
विन्यसेच्छिववेद्यूर्ध्वे वृषभासनसम्युते
अधर्मवेदिकद्वारीष्टिकाया न्यसेत्क्रमात् ९८
राक्षसेस्त्र पिकीलञ्च शयनोपरि विन्यसेत्
योगस्थापनकुम्भञ्च वायुद्युपरि न्यसेत् ९९
प्रासादकलशस्त्वीशे पूर्वे चैन्द्रघटन्यसेत्
दक्षिणे दक्षिणे कुम्भं विष्णुकुम्भञ्च पश्चिमे १००
उत्तरे ब्रह्मकुम्भञ्च विन्यसेत्तु यथाक्रमम्
परिवार घटान् स्थाप्य तत्तत्कुम्भप्रदक्षिणम् १०१
सम्पूज्य पूर्वमार्गेण प्रासादकलशाधिपान्
स्त्वीशत्कुण्डे शिवाग्निं ++ संप्रकल्पयेत् १०२
शुद्धपात्रे समानीय पावकं लौकिकं यथा
++ च्छिवमन्त्रेण हृदा पञ्चधा भवेत् १०३
एकांशमन्त्रहोमार्थमेक ब्रह्म ++ हुनाहकम्
एकांशन्तु प्रधानन्तु ++ कुण्डे प्रदापयेत् १०४
कृत्वा तु कुण्ड संस्कारं मध्ये वागीश्वरं यजेत्
अग्निमन्त्रेण सम्प्रोक्ष्य भावयेदनलं तथा १०५
गन्धपुष्पादिभि पूज्य चमृतीकरणं कुरु
कुण्डे मध्ये न्यसेन्मन्त्रो पावकन्तस्य बीजतः १०६
आधानादिविवाहान्तमग्निकार्योक्तमाचरेत्
वेदकस्य नियोगेन मूर्तिपास्तदनन्तरम् १०७
तत्तद्वेद्यग्रहे कुण्डे होमकर्म समाचरेत्

समिदाज्य चरूंल्लाजम्माषशालि तिलं क्रमात् १०८
सद्यादिशिरपर्यन्तं हुत्वा तद्बीजसम्युतम्
शतमर्ध तदर्द्धं वा षोडशं वा हुतन्नयेत् १०९
स्थूपि कीलेष्टकायां लिङ्गपीठादिदैवतम्
हुत्वा स्पृष्टा तु जुहुयात् द्रव्यं प्रति विशेषतः ११०
अथवा चोपले कुम्भे स्पर्शाहुतिं हुत्वा हव्यवाचरेत्
ततो जागरणं रात्रौ प्रभाते स्नानमाचरेत् १११

इति अंशुमान्तन्त्रे मृत्सङ्ग्रहणविधिपटलः

प्रतिष्ठातन्त्र विधि

## कौतुकबन्धनम्

महेशाग्रे विशेषेण स्थण्डिलं शालिना कुरु
पुण्याहं वाचयेत्तत्र कौतुकं प्रोक्षयेत्ततः १
स्थलिकान्तण्डुलैः पूर्य दर्भैः पुष्पैस्समन्वितम्
क्रमुकी फलसम्युक्तं नागवल्ली दळैर्युतम् २
भस्मधारन्न्यसेन्मध्ये कौतुकं भस्मसम्युतम्
सौवर्णं रजतं वापि क्षौमं कार्पासकन्तु वा ३
नवाम्बरसमायुक्तं पुष्पमालासमायुतम्
स्थलिकोर्ध्वे च विन्यस्य रक्षासूक्तञ्जपेद्बुधः ४
पश्चात् कौतुकमुद्धृत्य महेशाग्रे तु विन्यसेत्
पश्चात्संस्थाप्य यागेशं शुद्धतोयेन देशिकः ५
अभ्यर्च्य गन्धपुष्पाद्यै धूपदीपादिकन्ददेत्
यवं वस्त्रेण मन्त्रेण वस्त्रेणाच्छादयेत्प्रभुम् ६
त्र्यम्बकेन मन्त्रेण सूक्तं संसिच्य भस्मना
तण्डुलन्दापयेद्धस्ते ओन्नमो ब्रह्मणेन तु ७
देवस्य दक्षिणे हस्ते देव्या वामकरे बुधः

बृहत्सामेति मन्त्रेण कौतुकं बन्धयेद्गुदा ८
यो ब्रह्मेत्यादि मन्त्रेण त्वादौ भस्म ददेत् बुधः
दूर्वाक्षतेन विप्राणां मिषो वाचमब्रुवन् ९
देशिकस्य करे दत्वा गृहीत्वा मूलमन्त्रतः
यत्ते अग्नेति मन्त्रेण बिम्बमूर्ध्नि विनिक्षिपेत् १०
उत्सवोद्देशि देवानां कौतुकं बन्धयेद्बुधः
शूलस्य मध्य पत्रे तु कौतुकं बन्धयेद्गुदा ११
कौतुकस्य क्रमं प्रोक्तं मण्डपाराधनं श्रुणु
इत्यंशुमान् तन्त्रे कौतुक बन्धनविधि पटलः

मण्डपपूजै

हर्म्यस्य पूर्वदिग्भागे ऐशान्ये पावकेऽथवा
पूर्वोक्तलक्षणोपेतं मण्डपं कारयेद्बुधः १
गोमयालेपनं कृत्वा पिष्टचूर्णैरलङ्कृतम्
यागशालां प्रविश्याथ सकळीकृतविग्रहः २
पुण्याहं वाचयेत्तत्र प्रोक्षयेद्यागमण्डपम्
सौरादि गुरुपर्यन्तम्मण्डपं सम्प्रपूजयेत् ३
वेद्यूर्ध्वे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः
तण्डुलैस्तिललाजैश्चेद्दर्भैः पुष्पैः परिस्तरेत् ४
ससूत्रां सापिधानांश्च सवस्त्रां वारि पूरितान्
सकूर्चान् पल्लवोपेतान् सरत्नान् फलसम्युतान् ५
वेद्यूर्ध्वे स्थापितान् कुम्भान् मध्ये कुम्भे सदाशिवम्
अभ्यर्च्य गन्धपुष्पाद्यैस्तस्य वामे मनोन्मनीम् ६
परितश्चाष्टकुम्भाश्च विद्येशान् सम्प्रपूजयेत्
महेशञ्चास्त्रमूर्तिञ्च बलिमूर्तिन्दशायुधम् ७
आनीय यागशालायामिष्टदेशे मनोरमे

प्रतिमां स्थापयेद्विद्वान् पूजयेत्तु यथाविधि ८
ततः कुण्डान्तिकं गत्वा होमकर्म समाचरेत्
अन्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत् ९
समिधाज्य चरून् लाजान् जगत् शालियवांस्तथा
सद्यादीशानपर्यन्तं प्रत्येकं षोडशं हुनेत् १०
मूलेन जुहुयादाज्यमष्टोत्तरशतं सुधीः
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ११
पूर्णाहुतिञ्च शिरसा होमान्ते पूजयेद्धटम्
ततस्तु देशिको वापि ध्वजं सम्पूजयेत्क्रमात् १२
नन्दिमन्त्रमनुस्मृत्य भेरीं सम्पूज्य देशिकः
अस्त्रयागमिदं प्रोक्तं बलिदानविधिं श्रुणु १३
इत्यंशुमान् तन्त्रे मण्डपपूजाविधि पटलः

बलिदानविधिः

होमान्ते तु बलिन्दद्यात् सायं प्रातः क्रमेण तु
कटाहं स्थलिकां वापि अथवा लब्धपात्रके १
बल्यन्नन्तु विनिक्षिप्य दधिमत् घृतसम्युतम्
पाचयेदन्नलिङ्गार्थं तण्डुलं पात्रसंख्यया २
स्थलिकाभ्यन्तरे क्षिप्त्वा कदली दळसम्युतम्
द्वादशाङ्गुलमायामं तन्नाहद्विगुणं भवेत् ३
अग्रमग्न्यङ्गुलं प्रोक्तमामूलाग्रं क्रमात् कुशम्
लिङ्गं कृत्वा तु तच्छेषमन्नं पूर्यविनिक्षिपेत् ४
तल्लिङ्गस्य तु मध्ये तु रौद्रं पाशुपदं यजेत्
पर्यष्टिकं समाहूय सोष्णीषं सोत्तरीयकम् ५
शिरसा वह इत्युक्त्वा वस्त्रेणैव पिधाय च
मूर्ध्नोपरि स्थितान्देवां सोष्णीषञ्चोत्तरीयकम् ६

गळे परिस्थितान्देवान् सोष्णीषादिविवर्जितः
पादुकञ्चान्नलिङ्गञ्च बलिपात्रसमन्वितम् ७
अस्त्रेशं बलिमूर्तिञ्च गृहेयु परिवारकाम्
आचार्यस्सकळी कृत्य सोष्णीषस्सोत्तरीयकम् ८
अस्त्रेणार्घ्यं गृहीत्वा तु मण्डपान्ते प्रविश्य च
बलिं विज्ञाप्य देवेश द्वारपाल बलिं क्षिपेत् ९
वृषादि परिवाराणां बलिन्दद्यात्तु पूर्ववत्
द्वारपालबलिन्दद्यात् बलिबेर समायुतम् १०
ध्वजप्रदक्षिणीकृत्य एकं वापि त्रयन्तु वा
दिव्यन्तरिक्षभूमिष्ठदेवता तृप्तिकारणम् ११
इन्द्रादिपद्मपर्यन्तन्नित्यवत् बलिमाचरेत्
प्रासादान्निर्गमद्वारदेशे द्वारबलिन्ददेत् १२
प्रवेशस्योत्तरे भागे कुर्यात् कुम्भोदनं बलिम्
तस्य दक्षिणभागे तु बलिन्दत्वा महोदरम् १३
तयोर्मध्ये महादेवी बलिन्दद्याद्विशेषतः
पश्चात् ग्रामबलिं दद्यात् ग्रामशान्तिकरं भवेत् १४
नानालङ्कारसम्युक्तं नानाच्छत्रं समन्वितम्
पिञ्छचामरसम्युक्तं नानादीपसमन्वितम् १५
नानाभक्तजनैस्सार्ध बलिन्दद्याद्विशेषतः
ब्रह्मास्थानादि देवापि इन्द्रस्थानादितः क्रमात् १६
इष्टकां वा मृदं वापि कारयेत् बलिपीठके
गोमयालेपनं कृत्वा प्रोक्षयेत् पञ्चगव्यकैः १७
ज्वालाजिह्वा ज्वलत्केशो महाक्रोधो महाबलः
मर्त्यशनश्चण्डवेगो वास्तुबालो बलिप्रियः १८
महाभूतश्च विज्ञेया नवस्थानाधिपां न्यसेत्
पूर्वन्दत्वाधिदेवांश्च इन्द्रस्थानादितो बलिम् १९

एवं भूतबलिन्दद्यात् ग्रामशान्तिकरं भवेत्
गणेशभूतगन्धर्व ऋषिसौम्य हुताशनः २०
विष्णुश्चैन्द्रपिशाचैश्च पार्वती च दिवाकरम्
नागराजपितृ ब्रह्मराक्षसाश्चैवमेव च २१
रुद्रश्चैव महेशश्च ईशः कादिस्तथैव च
स्कन्दज्येष्ठा च दुर्गा च शास्ताभैरवमेव च २२
मुण्डिनी क्षेत्रपाला च चण्डेश्वरस्तथैव च
दिनदेव बलिन्दद्याद्दिनं प्रति बलिद्वयम् २३
दिनदेवांश्च देवानामीशोस्त्राय बलिन्ददेत्
पाद्यमाचमनञ्चार्घ्यं गन्धपुष्पञ्च धूपकम् २४
दीपं बलि प्रदानञ्च बलिमुद्रा प्रदर्शनम्
अर्घ्यं दानन्नमस्कारं स्तोत्रं वै भेरिघोषणम् २५
नृत्तं सङ्गीत वाद्यञ्च षोडशैवोच चारकम्
मेघरागायवर्त्तन्तु ब्रह्मताळसमन्वितम् २६
नागम्मल्लरि संयुक्तं ब्रह्मदेशे प्रियार्थकम्
गान्धारं स्वरसंयुक्तं जमालिस्तु जम्भटा २७
विराट् स्त्विन्द्रदेशे तु देवता प्रीतिकारणम्
कोल्लिस्वरसम्युक्तं प्रत्यालीडञ्च मट्टयम् २८
भूपाळिगिरिगानञ्च अग्निदेशे प्रियार्थकम्
नदृभाषा भुजङ्गञ्च ताळञ्चर्चपुटन्तथा २९
वसन्तगानसम्युक्तं याम्यदेशप्रियार्थकम्
कौशिकं मङ्गळावर्त्तमेकताळसमन्वितम् ३०
गानन्देशिगिरियुक्तन्नैर्ऋत्यन्तु समाचरेत्
श्रीकामरस्वधावर्तन्नाळञ्चाच पुटन्तथा ३१
गानं सोमगिरिर्युक्तं वारुण्यान्तु समाचरेत्
तक्केशी भुजगालीढं बलितालसमन्वितम् ३२

गानम्माळवसम्युक्तं वायुः प्रीतिकरं भवेत्
पञ्चमोत्घट्टितञ्चैव कुम्भताळसमन्वितम् ३३
शुद्धगौडसमायुक्तं सौम्यदेशिप्रियार्थकम्
ऐशान्याञ्चैन्दवं प्रोक्तं कुञ्चितं वामताळकम् ३४
छायागौढसमायुक्तं ईशदेश पिर्यार्थकम्
प्रविश्य भवनं पश्चात् पादप्रक्षाळनं कुरु ३५
भूतपीठे बलिन्दत्वा पश्चान्नित्यवदाचरेत्
इत्यंशुमान् तन्त्रे बलिदानविधिपटलः

क्षपणवादनविधिः

पञ्चमेऽहनि बल्यन्ते वैकल्यार्थं समारभेत्
पुष्पयानमलङ्कृत्य विन्यसेच्चन्द्रशेखरम् १
तच्छक्तिञ्चैवमेवोक्तं यानमेवन्तथैव च
शिबिकायां महेशञ्च गलबिक्वीरशक्तिकम् २
आरोप्येवं समायुक्त सर्वातोद्य समन्वितम्
ग्रामप्रदक्षिणं कृत्वा विधीमध्ये स्थितं भवेत् ३
वीध्यग्रे चैव देवस्य वीथ्यादौ च स्वशक्तिकम्
मध्यस्थाने स्थितञ्चैव महेशं वीरशक्तिकम् ४
देवं देवीं समालोक्य गौरीसंवामेव च
देवी पार्श्वे स्थिताश्चैव देवदास्यो विशेषतः ५
यौवनाकृति युक्ताश्च चित्रवस्त्रैरलङ्कताम्
केशबन्धसमायुक्तास्सर्वाभरणसम्युतम् ६
रम्भापत्रस्य मध्यञ्च दासी हस्ते च सङ्गृहेत्
ममशक्तिविवादस्य सन्धानं कल्पयेत्क्रमात् ७
कर्मी च समयी चैव स्तोत्र पाठकलेख्यकौ
चण्डेश्वरसमायुक्तं गतागन्तञ्च कारयेत् ८

वस्त्रमेवं समादाय वेष्टयेच्छिरसोपरि
देवाग्रे देशिकश्चैव शक्त्यग्रे देशिकस्ततः ९
देशिको वचनं ज्ञात्वा कर्मिणश्च सगृह्यताम्
गौर्याग्रे चैव देवाग्रे सन्धानं कल्पयेत्ततः १०
देव्यग्रे देशिकश्चैव देवी वचनमब्रवीत्
देवदासी प्रभारञ्च कर्मादीनाञ्च सिद्धयेत् ११
देव्यास्तु वचनं गृह्य कर्मिणाञ्च प्रदापयेत्
देशिकश्चैव विज्ञाप्य एवं विज्ञापयेत्ततः १२
सर्वद्रव्यं समादाय गौर्याश्चैव समर्पयेत्
सल्लापञ्चैवमेवोक्तदेवन्देवीञ्च सम्युतम् १३
ममदेवी विनोदञ्च भक्तानां हितमेव च
पाद्यमाचमनन्दद्यान्नाळिकेरफलन्ददेत् १४
ताम्बूलन्दापयेत्पश्चाद्धूपदीपादिकन्ददेत्
शेषं प्रदक्षिणञ्चैव कुर्यादास्थानमण्डपे १५
यात्रार्थस्नपनं पश्चात् भोगाङ्गयजनन्तथा
षड्दिने नित्यसन्ध्यान्ते यानमेवं समाचरेत् १६
क्षपणदेषिणो मूर्तिं शिबिकायां समाचरेत्
शक्त्यालये प्रविश्याथ क्षीरञ्चैव समर्पयेत् १७
स्तोत्र पाठकमाहूय द्राविडञ्चैवमाचरेत्
तत्क्षीरमेवमेवञ्च दापयेत् स्तोत्रपाठके १८
सर्वालङ्कारसम्युक्तं सर्वातोद्य समन्वितम्
ग्रामप्रदक्षिणे कुर्याम्महेशाग्रे विशेषतः १९
ज्ञानवैराग्य सन्तोषैर्भक्तैश्चैव समावृतम्
स्तोत्र पाठकमाहूय पुराणं श्रावयेत्ततः २०
भक्ताग्रे संस्थितञ्चैव वस्त्रगन्धञ्च दापयेत्
पुराणं श्रावयेत्पश्चात् द्राविडस्तोत्रपाठकः २१

स्तोत्रान्ते व कर्तव्यं क्षपणान्तु निग्रहम्
मद्भक्तानविशेषेण भस्मैव सम्प्रदापयेत् २२
महेशं प्रतिमादीनां शिवाग्रे च स्थितिर्भवे
भक्तबेरं शनैर्याथ भक्तैश्चापि समावृतम् २३
गीतवाद्य समायुक्तं पदं प्रति पदं प्रति
महेशाग्रे विशेषेण स्तोत्रनृत्तसमन्वितम् २४
धाम प्रदक्षिणं कुर्यात् स्वस्थाने चैव विन्यसेत्
फलादीनाञ्च दातव्यं दीपदीपादिकन्ददेत् २५
यात्रार्थस्नपनं पश्चात् सौख्यसन्धार्चनं क्रमात्
इत्यंशुमान् तन्त्रे क्षपणवादविधिपटलः

## नटेशोत्सवम्

तद्दिने निशिहोमान्ते नृत्तमूर्त्याथवासयेत्
नटेश्वरञ्च शक्तिञ्च कौतुकं बन्धयेद्बुधः १
भगन्धकोर्ध्वे समारोप्य कृत्वा धामप्रदक्षिणम्
पश्चिमे चोत्तरे वापि ऐशान्ये मण्डपं कुरु २
मण्डपं कारयेद्धीमानेकविंशकरायतम्
विस्तारं सप्तहस्तं स्यात्तद्व्यासं पञ्चपङ्क्तिकम् ३
क्रियात्ममिति संख्या च पङ्क्तिनामोच्यते प्यथ
व्यासे त्रिपङ्क्तिविस्तारमेकपङ्क्तिं प्रकल्पयेत् ४
परितः पङ्क्तिमानञ्च पालिकाकृतवत्कुरु
उद्वास्य शिल्पिनं पश्चात् गोमयेनोपलेपयेत् ५
दुकूलपट्टदेवाङ्गैस्तरङ्गैरष्टनैवके
नवकोष्ठं समालिख्य दर्भैश्चैव परिस्तरेत् ६
पृथक् पात्रे विशेषेण तण्डुलान् परिविन्यसेत्
वैश्यानाञ्च समाहूय कृष्णगन्धं समाहरेत् ७

मध्यपात्रे तु कर्तव्यं कृष्णागन्धं न्यसेत्ततः
कर्पूरं पूर्वतो न्यस्य कुम्भं दक्षिणे न्यसेत् ८
पश्चिमे मृगनाभिस्तु उत्तरे हिमतोयकम्
गन्धमाग्नेयदिग्भागे नैर्ऋत्यां रोचनान्यसेत् ९
कस्तूरीं वायुदेशे तु ऐशान्येवाष्टगन्धकम्
चन्दनागरुकर्पूर तमालजलकुङ्कुमम् १०
उशीरं कोष्ठसम्युक्तमेवं गन्धाष्टकं विदुः
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः ११
ईशादिकवचान्तञ्च द्रव्यमेतत्समर्चयेत्
वस्त्रमाच्छादनं कृत्वा तदूर्ध्वे दण्डसंस्थितम् १२
अधिवासनमेवन्तु पूर्ववद्देशिकोत्तमः
पाद्यमाचमनन्दद्यात् नैवेद्यन्दापयेत्ततः १३
ताम्बूलन्दापयेत् धूपदीपादिकन्ददेत्
प्रच्छन्नपटमावेष्ट्य सन्ध्याशेषं समाचरेत् १४
ततः प्रभातसमये नित्यसन्ध्यावसानके
पञ्चगव्यामृतैस्न्नाप्य स्नपनैरभिषेचयेत् १५
चित्रवस्त्रसमायुक्तञ्चित्रमाल्यैरलङ्कृतम्
आचकाञ्च प्रभां कृत्वा नानालङ्कारशोभितम् १६
आचार्यश्शिष्यसंयुक्तस्सोष्णीषं सोत्तरीयकम्
कृष्णागन्धं समादाय पूर्वादिद्रव्यमाहरेत् १७
धामप्रदक्षिणं कृत्वा नटेशाग्रे तु विन्यसेत्
नृत्तेशदक्षिणे भागे देशिकं ++ माचरेत् १८
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः
होमं कृत्वा विशेषेण कृष्णागन्धं न्यसेत्क्रमात् १९
मुहूर्तं निरीक्ष्य दैवज्ञं शङ्खघोषसमन्वितम्
दक्षिणे बाहुके चैव मूर्ध्नि चैव ललाटके २०

कराठे च हृदये चैव ग्रपस्मारन्तु पादयोः
कृष्णगन्धन्यसेद्धीमा हृदयाद्यस्त्रमन्त्रतः २१
पूर्वादि द्रव्यमादाय ईशानेन ग्तु दापयेत्
भक्तानामन्धकाराणां मोचनार्थं विशेषतः २२
तस्मात्सर्वप्रयत्नेन कृष्णगन्धन्तु दापयेत्
नाळिकेरफलादींश्च दापयेत्तु विचक्षणः २३
ताम्बूलन्दापयित्वा तु धूपदीपादिकन्ददेत्
भक्तांस्तु समाहूय कृष्णगन्धन्तु दापयेत् २४
रथे वा गल्लिके वापि यानमेवं समाचरेत्
नटेशं शक्तियुक्तञ्च गव्यकोर्ध्वे तु विन्यसेत् २५
ततो वलय सम्युक्तं बन्धयेद्दृढवत् बुधः
सामान्यार्घ्यन्तु सङ्कल्प्य सोष्णीष सोत्तरीयकम् २६
नृत्तेकन्दक्षिणे भागे स्वासीनन्देशिकोत्तमः
ग्राचार्यनृत्तमूर्त्योश्च नातरागमनं भवेत् २७
तस्मात्सर्वप्रयत्नेन एकासनसमन्वितम्
ग्रामप्रदक्षिणं कृत्वा सर्वालङ्कारसम्युतम् २८
गीतवाद्य समायुक्तनृत्तमराडपमाविशेत्
पाद्यमाचमनन्दत्वा फलादीनि निवेदयेत् २९
ताम्बूलन्दापयेत्पश्चाद्धूपदीपादिकन्ददेत्
वाद्यकर्तारमाहूय मृदङ्गमभिवादयेत् ३०
काहळैस्ताळशङ्खैश्च वीणावेणु रवैस्सह
भरतोक्तक्रमेणैव घोषयेत्पृष्ठभागतः ३१
नृत्तशिक्षित भावञ्च यौवनं पात्रमेव च
रुद्रकन्न्यं समाहूय नृत्तं कृत्वा सलक्षणम् ३२
ग्रानन्दताराडवञ्चैव पुष्पाञ्जलिक्रमेण तु
भरतोक्तक्रमेणैव ताराडवन्तु समाचरेत् ३३

वस्त्रमाभरणञ्चैव गन्धमाल्यापरोपयेत्
आचार्यश्शिष्यसम्युक्तं स्नानं कृत्वा समाचरेत् ३४
स्नानमण्डपमावेश्य स्नपनेनाभिषेचयेत्
नैवेद्यन्दापयेत्पश्चात् भोगाङ्गं पूजयेत्ततः ३५
ततः प्रभातसमये उषासन्ध्यावसानके
शुक्लवस्त्रेण संवेष्ट्य शुक्लमाल्येन शोभितम् ३६
चन्दनेन समालिप्य हिमतोयेन सम्युतम्
कर्पूर कलशेनैव लेपयेत्तु विशेषतः ३७
श्वेतार्कश्वेतपद्मञ्च नन्द्यावर्तञ्च धूत्तुरम्
बकपुष्पकृतञ्चैव राजतेन समन्वितम् ३८
मौक्तिकाभरणञ्चैव मौक्तियज्ञोपवीतकम्
वर्णेन पद्मपुष्पञ्च मध्ये माणिक्कसम्युतम् ३९
प्रभामण्डलमेवञ्च बन्धयेत्तु विचक्षणः
सर्वालङ्कारसम्युक्तं पाद्यमाचमनन्ददेत् ४०
पिष्टञ्च नाळिकेरञ्च कदळीफलमेव च
आज्येन प्राचयेद्धीमान् दापयेत्तु विचक्षणः ४१
ताम्बूलञ्च निवेद्याथ धूपदीपादिकन्ददेत्
नटेशं शक्तिसम्युक्तं गव्यकोपरि विन्यसेत् ४२
तन्तुना बन्धयेद्धीमान् पूर्ववत् परिचारकैः
हेमाङ्गुलीयकटकहारकुण्डलसम्युतम् ४३
हेमयज्ञोपवीतञ्च मुक्तायज्ञोपवीतकम्
अक्षमालासमायुक्तं सोष्णीषसोत्तरीयकम् ४४
सामान्यार्घ्यञ्च सङ्कल्प्य एकासनसमन्वितम्
नटेशं दक्षिणे भागे स्वासीनन्देशिकोत्तमः ४५
सर्वालङ्कारसम्युक्तं मन्दभावेन वाचयेत्
च तु प्रदक्षिणं कृत्वा मृदुगत्या विशेषतः ४६

वाद्यध्वनि समायुक्तं शुज्द्धनृत्तं समाचरेत्
नानावाद्य समायुक्तं नानाध्वजसमन्वितम्  ४७
नानाछत्रसमायुक्तं नानाभक्तजनैर्युतम्
ग्रामप्रदक्षिणं कृत्वा वीथ्यग्रे वाथ मध्यमे  ४८
सन्यासी च जटाधारी मठद्वारे विशेषतः
नृपवेशग्रहे वापि आचार्यग्रहमेव च  ४९
गृहद्वारे विशेषेण धिष्णयं कृत्वा विचक्षणः
तद्वहिस्तैलसम्मिश्रं कर्पूरेण समन्वितम्  ५०
वस्त्रगन्धञ्च माल्यञ्च हिमतोयेन सम्युतम्
नाळिकेरफलादींश्च धिष्णय मध्ये तु विन्यसेत्  ५१
गृहकर्ता विशेषेण पाद्यन्दत्वाग्निवाग्रके
नमस्तुत्वा तु विधिवद्धस्तप्रक्षाळनं कुरु  ५२
सर्वद्रव्यसमादाय गव्यकोर्ध्वे तु विन्यसेत्
वस्त्रगन्धमाल्यश्च अलङ्कृत्य विचक्षणः  ५३
पाद्यमाचमनन्दद्यात् फलादीं स्पर्शयेत्ततः
धूपदीपादिकन्दत्वा ताम्बूलञ्च निवेदयेत्  ५४
स्तोत्रञ्च गीतवाद्यञ्च नृत्तञ्चैव विशेषतः
एवं क्रमेण विधिवत् तत्तत्स्थानसमाचरेत्  ५५
मद्भक्ताश्च विशेषेण कृताञ्जलि समन्वितम्
एवं प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति  ५६
आस्थान मण्डपे चैव स्वस्थाने चैव विन्यसेत्
पाद्यमाचमनन्दत्वा नाळिकेरन्निवेदयेत्  ५७
ताम्बूलन्दापयेत्पश्चात् धूपदीपादिकन्ददेत्
भस्मानि दापयेत्पश्चात् भक्तानाञ्च विशेषतः  ५८
वस्त्रमाभरणञ्चैव गन्धमाल्यं विसर्जयेत्
स्नपनं कारयेद्धीमान्नैवेद्यन्दापयेत्ततः  ५९

एवं कृत्वा विशेषेण सन्ध्या शेषं समाचरेत्
इत्यंशुमान् तन्त्रे नटेशोत्सवविधि पटलः

## मृगयात्राविधिः

बल्यन्ते यानमेवं स्यात् मृगयात्रां समाचरेत्
तुरगन्तु समाहूय सोमास्कन्दन्ततोपरि १
महेशं शिबिकारूढं व्याधवेषसमन्वितम्
केचित्ककुन्धराश्चैव केचित् पाशधरास्तथा २
केचित् खड्गधराश्चैव केचिद्दण्डधरास्तथा
केचित् बाणधराश्चैव केचित् छूलधरास्तथा ३
सर्वालङ्कारसम्युक्तसर्वाभरणभूषितम्
वीथ्यग्रे वीथि बाह्ये वा युद्धोपत्रमरूपिणे ४
शिष्टानां पालनञ्चैव दुष्टानां निग्रहस्तथा
नानाविनोदसम्युक्तं नानाश्चर्य समन्वितम् ५
तुरङ्गवनमध्ये च वेडुपैश्चैव सङ्गृहेत्
महेशाग्रे विशेषेण सोमास्कन्देश्वरस्तथा ६
द्राविडैस्तोत्रपाठश्च भक्ताश्चैव विशेषतः
पेटैश्चानुग्रहश्चैव वस्त्रश्चैव तु दापयेत् ७
वराहं व्याघ्रमेवञ्च मृगं कृष्णमृगन्तथा
मरञ्चैव शरञ्चैव महेशाग्रे तु दापयेत् ८
परिक्रमं समाहूय मृगं शस्त्रेण सङ्गृहेत्
शीघ्रयानन्ततः कृत्वा पश्चाद्वास्तु प्रदापयेत् ९
वीरशक्तिं समादाय बह्निके यानमाचरेत्
शेषं प्रदक्षिणं कृत्वा कुर्यादास्थान मण्डपे १०
फलादीनाञ्च दातव्यधूपदीपादिकन्ददेत्
यात्रार्थ स्नपनं पश्चात् सन्ध्याशेषं समाचरेत् ११

ततः प्रभातसमये रात्रान्ताराधनान्तके
तुरगे बिम्बमारोप्य सर्वालङ्कारसम्युतम् १२
छत्रचामरसंयुक्तम्महावाद्यस्य घोषकम्
देशे तु मृगयात्राया शीघ्रं गत्वा समाविशेत् १३
तत्स्थानन्दर्शयेद्धीमान् पश्चाद्वास्तु प्रदक्षिणम्
आस्थानमण्डपे विश्य स्नपनं कारयेत्ततः १४
पाचयेन्दुर्गसारन्तु तस्योदकसमन्वितम्
गुळञ्च नाळिकेरञ्च कदळीफलसम्युतम् १५
निवेद्यमुद्गसारन्तु धूपदीपादिकन्ददेत्
स्वस्थाने बिम्बमारोप्य सन्ध्याशेषं समाचरेत् १६
इत्यंशुमान् तन्त्रे मृगयात्राविधिपटलः

## शक्तिगर्भविधि

शक्तिगर्भमहं वक्ष्ये श्रूयतां रविसत्तम
देहं प्रासादमित्युक्तं देवीगर्भमिति स्मृतम् १
प्रासादगर्भहीनञ्चेत् सस्यानान्तु विनाशनम्
तस्मात्सर्वप्रयत्नेन गर्भन्यासन्तु कारयेत् २
विप्राणां कुमुदोर्ध्वे तु गजमूर्ध्वे नृपस्य तु
ऊर्ध्वे तु वैश्यानां शूद्राणां भूतले न्यसेत् ३
यत्रे वाद्येष्टिकान्यासन्तत्र गर्भन्निदापयेत्
पूर्वोक्तविधिमार्गेण शुद्धपात्रन्तु सङ्ग्रहेत् ४
पञ्चविंशति कोष्ठानि कल्पयेत् गर्भभाजनम्
क्षाळनञ्चास्त्रमन्त्रेण सन्धृप्यं हृदयेन तु ५
चन्दनेन समालिप्य मध्ये शक्तित्रयं लिखेत्
यकारादि हकारान्तं विन्यसेत् वसुकोष्ठके ६
अकारादि विसर्गान्तं प्राकारादिषु च विन्यसेत्

माणिक्कमिन्द्रनीलञ्च मरकतञ्चैव मौक्तिकम् ७
गोमेदं पुष्यरागञ्च वज्रं वैडूर्यमेव च
प्रवाळञ्च सहैतनि मध्यादीशान्तकन्न्यसेत् ८
गजाश्वरथनागञ्च कूर्मं वै मत्स्ययुग्मकम्
निधिकुम्भं सहैमेन मध्यकोष्ठेषु विन्यसेत् ९
शङ्खं वैरजतेनैव कांस्येनैव तु दर्पणम्
पूर्णकुम्भं सुवर्णेन सिंहं वै हैममेव च १०
सिकतं पैत्तळेनैव पयोरं हिरण्मयैः
अष्टमङ्गळरूपाणि मध्यकोष्ठेषु विन्यसेत् ११
पाशं हिरण्मयेनैव अङ्कुरं रजतेन तु
इक्षुचापञ्च ताम्रेण हैमेनोत्पलमेव च १२
पत्राणां पद्मपुष्पञ्च कूटजं रजतेन च
सीसकेनाशोकपुष्पं कनकेन चूतपल्लवम् १३
पूर्वादीशानकोष्ठेषु यकारादिषु विन्यसेत्
अञ्जनाजातिलिङ्गञ्च हरितारं मनश्शिला १४
रोचना गैरिकञ्चैव चन्द्रचन्दनमेव च
रस्त्वं संलिख्यकोष्ठेषु पूर्वादीशान्तकन्न्यसेत् १५
विष्णुक्रान्तिसहदेवी श्रीपत्रञ्चतुङ्गला
दूर्वा च पद्मपुष्पञ्च जाती च शतपत्रकम् १६
दीर्घाक्षरसकोष्ठेषु विन्यसेत्तु विचक्षणः
श्याममाषं तिलं मुद्गं कुंकुवेणु यवस्तथा १७
एतानि सप्तबीजानि पूरयेद्गर्भभाजने
अस्त्रेण सापिधानञ्च सुस्निग्धं सुदृढं कुरु १८
चतुर्दिक् लाञ्छनं कुर्यात् तस्यावाहनमुद्रिका
प्रासादस्याग्रदेशे तु द्यपां कृत्वा तु पूर्ववत् १९
गोमयालेपनं कृत्वा पिष्टचूर्णैरलङ्कृतम्

वेद्यूर्ध्वे स्थण्डिलं कृत्वा पुण्याहं वाचयेत्ततः २०
पञ्चगव्यन्तु संस्थाप्य पेळापात्रन्तु सङ्ग्रहेत्
गव्यैर्गन्धोदकैः स्नाप्य चन्दनेनैव लेपयेत् २१
अभ्यर्च्य गन्धपुष्पाद्यैर्भुवनानि च विन्यसेत्
कौतुकं बन्धयेद्धीमान् नववस्त्रेण वेष्टयेत् २२
स्थण्डिलोर्ध्वे तु विन्यस्य शक्तित्रयमुदाहरन्
मध्यमे शक्तिकुम्भन्तु स्थापयेत् पूर्ववर्त्मना २३
वामादि शक्तयश्चाष्टौ परिवारघटान् यजेत्
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिना चरेत् २४
समिदाज्य चरुं लाजं तिलं मूलेन हूयते
सुमुहूर्ते सुनक्षत्रे स्थापयेत् गर्भभाजनम् २५
गजदन्ते च सत्क्षेत्रे वल्मीके कर्कटावटे
समुद्रे वृषशृङ्गे च नदीतीरे तथैव च २६
पूर्वेत्वं पूजकन्दं स्यात् दक्षिणे कुमुदकन्दकम्
पाशौचोत्पलकन्दञ्च सौगन्धिकमथोत्तरे २७
पूर्ववत्सप्तबीजानि स्थापयेत्तस्य मध्यमे
फेळिपात्रं समादाय सर्वालङ्कारसम्युतम् २८
याम प्रदक्षिणं कुर्यात् गर्भस्थानं समाविशेत्
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्पुरुषेण तु २९
प्रासादबीजमुच्चार्य गर्भश्वभ्रे निधापयेत्
गन्धपुष्पादिना पूज्य गन्धपुष्पेण देशिकः ३०
संस्थाप्य लिङ्ग +++ गर्भश्वभ्रे निधापयेत्
गन्धपुष्पादिनाभ्यर्च्य शिलया चेष्टका तथा
सुधया सुदृढं कुर्यात् अभीष्टं प्रार्थयेत्सुधीः ३१
आचार्यं पूजयेत्तत्र वस्त्रेण माङ्गुलीयकैः
शिल्पिनं पूजयेत्पश्चात् यथाविभवविस्तरम् ३२

भक्तानां परिचाराणां यथाशक्त्यादि दक्षिणा
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ३३
इत्यंशुमान् तन्त्रे शक्तिगर्भविधिपटलः

## अर्द्धनारीश्वरोत्सवम्

उमार्द्धोत्सवं वक्ष्ये श्रूयतां रविसत्तम
श्रीकरं विजयं पुण्यं सर्वप्राणिहितावहम् १
ग्रामऋद्धिकरं राष्ट्रवर्द्धनं रिपुनाशनम्
मासऋक्षावसानञ्च प्रतिष्ठा ऋक्षमेव वा २
सर्वमासेषु कर्तव्यमाब्रान्तं वा समाचरेत्
अन्यपुण्यदिनान्तेषु चोत्सवं संप्रकीर्तितम् ३
शैवं गौणञ्च भौतिञ्च भौवनन्दैविकन्तथा
शैवमेकाहमित्युक्तन्त्रियं गौणमेव च ४
पञ्चाहं भौतिकं प्रोक्तं सप्ताहं भौवनं स्मृतम्
नवाहं दैविकं प्रोक्तमुत्सवं पञ्चधा विदुः ५
एतेषान्तु क्रमं वक्ष्ये श्रूयतां रविसत्तम
विजयं पुष्कलं सौख्यं बलिसंख्या त्रिधामतम् ६
चन्द्रकोलकनागाश्च भानुषोडश संख्यया
विजयञ्चित्रविख्यातं पुष्कलञ्च तत श्रुणु ७
पक्षषड्दशमन्वंशं स्त्रिति संख्या प्रकीर्तितम्
पुष्कलद्विति विख्यातं सौख्यसंख्या क्रमं श्रुणु ८
वेदाद्रि भानुसंख्याश्च कलाविंशति संख्यया
सौख्य क्रममिदं प्रोक्तं बलिसंख्या दिवाकर ९
सायंकाले समारभ्य प्रातर्यवभृतं कुरु
उत्सवारम्भ काले तु ध्वजभेर्याङ्कुरादिकम् १०
शैवं गौणञ्च भौदिञ्च वर्जयेत् केतुरोहणम्

एवं क्रमेण विधिवत् क्रिया संख्या क्रमं श्रुणु ११
केतुवङ्कुरन्तु प्रथमद्वितीयं वृषयागकम्
केतु प्रदक्षिणं पश्चाच्चतुर्थन्दण्डशुद्धिकम् १२
क्रिमिकोटरवर्ज्याथ आयादिशुभसंयुतम्
एकविंशत् समारभ्य रुद्रहस्तावसानकम् १३
द्विहस्तक्षयमं कृत्वा रसमानमुदीरितम्
दण्डमानमिति प्रोक्तन्तस्य नाहमिहोच्यते १४
ऋक्षाङ्गुलपरीन्नाहञ्चतुर्विंशतिरेव वा
विंशदङ्गुलमानन्तु तस्यार्धन्दण्डमानकम् १५
दण्डनाहमिति प्रोक्तं यदि रायादिरुच्यते
प्लक्षमौदुम्बरञ्चैव न्यग्रोधाश्वर्यसानकम् १६
फलकाकृतिरित्युक्तं स्त्रीवृक्षञ्चाटकाकृतिः
चतुर्विंशाङ्गुलन्दीर्घयष्टिदीर्घमिहोच्यते १७
विंशदङ्गुलमानन्तु षोडशाङ्गुलमेव वा
पञ्चभागमिहैवन्तु षष्ठभागमथापि वा १८
त्रिचतुः पञ्चविस्तारं सुषिरं विविधं भवेत्
अधस्तात् सुषिरं सार्धं यष्टिनाहमुदीरितम् १९
महादण्डमिति प्रोक्तञ्चतुर्भागमुदीरितम्
पञ्चभागमिहैवन्तु षष्ठभागमथापि वा २०
एकभागोपदण्डन्तु तस्य दीर्घमिहोच्यते
त्रिचतुर्हस्तमेवोक्तमुपदण्डप्रमाणकम् २१
उपदण्डोर्ध्ववलयञ्चतुरङ्गुलविस्तृतम्
तस्यैवोत्तरभागे तु एकयन्त्रानिवेशयेत् २२
दण्डस्योर्ध्वे वृषन्न्यस्त्वा लोहन्दारुमयेन वा
प्रासादाभिमुखदण्डमयः पट्टेन बन्धयेत् २३
दण्डमानमिति प्रोक्तं स्थापनं पूर्ववत् बुधः

ध्वजारोहणपूर्वे तु वृषस्य मधिवासयेत् २४
त्रिखण्डं पूजयेत्कृत्वा वृषभं पूजयेत्ततः
तदग्रे स्थण्डिलं कृत्वा वृषकुम्भन्न्यसेत्ततः २५
पञ्चमं केतुरोहञ्च कलशस्नानषष्ठकम्
सप्तमन्दण्डपूजाञ्च अष्टमञ्चास्त्रपूजनम् २६
नवमं भेरिकाकर्मन्दशमन्देवताह्वयम्
एकादशं बलिन्दद्यात् द्वादशञ्चोत्सवांकुरम् २७
रक्षाबन्धन्ततः कृत्वा यागकर्मञ्चतुर्दश
हुतं पञ्चादशं विद्धि बलिकर्ममतः परम् २८
यानं सप्तादशं प्रोक्तन्दृत्तावलोकनन्ततः
यात्रार्थं स्नपनं पश्चाद्विशेषयजनं परम् २९
तीर्थाङ्कुरार्पणं पश्चात्तीर्थकौतुकमेव च
तीर्थाधिवासनञ्चैव चूर्णकर्ममतः परम् ३०
पश्चादवभृतञ्चैव पूर्णाहुतिमतः परम्
यागकुम्भाभिषेकञ्च दक्षिणादानतत्परम् ३१
ध्वजावरोहणं पश्चाद्वृषभोत्सर्ज्जनन्ततः
क्रियासमर्पणं पश्चाच्चोद्वाहनबलिं परम् ३२
एवद्वात्रिंशदङ्गेन चोत्सवं परिकीर्तितम्
क्रिया संख्या क्रमं प्रोक्तं ध्वजमानं प्रकल्पयेत् ३३
नववस्त्रसमाख्यातमुत्तमामध्यमाधमा
उत्तमं विश्वहस्तान्तम्मध्यमञ्चादशन्तथा ३४
अधमन्दशहस्तञ्च विस्तारन्त्रिद्विहस्तकम्
वेत्रद्वयं समायुक्तं त्रिभागं वृषमध्यमम् ३५
आयादिशुभसंयुक्तं स्थितं वा शयितन्तु वा
उक्तवर्णसमायुक्तं पटपार्श्वद्वये लिखेत् ३६
एवं वृषं समालिख्य चाष्टमंगलमालिखेत्

ध्वजमानमिति प्रोक्तध्वजदण्डं प्रकल्पयेत् ३७
चम्पकं बिल्वमेवञ्च क्रमुकं वेणुदण्डकम्
खादिरन्देवदारुञ्च चन्दनान्तालवृक्षकम् ३८
मण्डपं पूर्ववत्कृत्वा वेदिको कुण्डमाचरेत्
यागमण्डपयत्कार्यं पूर्ववत्कर्ममाचरेत् ३९
उत्सवे बलिकार्याणां बलिदानं समाचरेत्
ब्रह्मादीशानपर्यन्तमिन्द्रादीशान्तमेव वा ४०
वीथ्यग्रे वीथिपार्श्वे वा बलिपीठं प्रकल्पयेत्
वास्त्वोश्च लोकपालानां बलिन्दद्यात्क्रमेण तु ४१
पीठाग्रे गोपुराग्रे वा ऐशान्ये पीठवामतः
दिनदेव बलिन्दद्यात् दिनं प्रतिबलिद्वयम् ४२
बलिदानावसाने तु यानक्रममिहोच्यते
यद्रूपं मूलबिम्बञ्च तद्रूपं प्रतिमारभेत् ४३
एकाहादि नवाहान्तं वाहनं संप्रकीर्तितम्
प्रथमेर्मूषिकारूढं द्वितीयं पिञ्छवाहनम् ४४
तृतीयं भूतवाहञ्च चतुर्थं वृषवाहनम्
पञ्चमं शक्तिवैकल्यं षष्ठमं गजवाहनम् ४५
सप्तमं नृत्तयानञ्च अष्टमं मृगयात्रकम्
नवमं रथमारोप्य दशमं तीर्थकर्मकम् ४६
वस्त्रं गन्धञ्च माल्यञ्च भूषणाद्यैरलङ्कृतम्
वीधि सम्मार्जनं कृत्वा जलेनैव तु सेचयेत् ४७
तोरणैर्दर्भमालैश्च वीथिपार्श्वे विशेषतः
नानादीपसमायुक्तं नानावाद्यसमन्वितम् ४८
नानाच्छत्रस्समायुक्तनानाध्वजसमन्वितम्
नानाभक्तजनैर्युक्तनानास्त्री परिसेवितम् ४९
ग्रामप्रदक्षिणं पश्चात् प्रविश्यास्थानमण्डपम्

नीराञ्जनन्ततः कुर्यान्नृत्तवलोकनन्ततः ५०
देवज्ञं पूजयेत्तत्र दक्षिणां संप्रदापयेत्
सुमुहूर्ते च लग्ने च आचार्यस्य तु मूर्तिपान् ५१
देवाग्रमण्डपे चैव उमार्धेशं प्रपूजयेत्
विज्ञाप्य देवदेवेशं प्रणम्याभ्यर्च्य देशिकः ५२
रज्जुना बन्धयेत् पश्चाद्वृषगायत्रिमन्त्रतः
दर्भमूला समायुक्तं क्षुद्रसन्ध्या समन्वितम् ५३
अरोपयेत्ततश्शीघ्रं बहुरूपमनुस्मरन्
आदो स्पृष्ट्या स्वयञ्चान्य अप्रेरयेन्द्रोहणाय वा ५४
रज्जु प्रदक्षिणावर्त्तं कुशैर्मूलेन बन्धयेत्
प्रक्षाळ्य दण्डमूले तु पञ्चगव्याभिषेचयेत् ५५
वृषविघ्नेशकुम्भैश्च दण्डावृषदळेषु च
वरुणादि निर्ऋत्यन्तन्तत्तत्स्थाने भिषेचयेत् ५६
वस्त्रमाल्यैरलङ्कृत्य ध्वजं पूजां समाचरेत्
मुद्गान्नन्दापयेद्धीमान् पानीयाचमनन्ददेत् ५७
धूपदीपादिकन्दत्वा ताम्बूलन्दापयेत्ततः
वेदं पुराणसम्युक्तमाशिर्वाचण्डमब्रुवन् ५८
स्तोत्रसङ्गीतनृत्ताद्यैस्सन्तोष्य वृषभध्वजम्
सौख्य सन्ध्यावसाने तु वास्तुयागं समाचरेत् ५९
सायं काले विशेषेण भक्तानामुत्सवं कुरु
ध्वजारोह दिने रात्रौ भेरीताडनमारभेत् ६०
मण्डपे ध्वजमूले परदेवतार्भानमाचरेत्
पश्चिमे क्षुरिकास्त्रन्तु तत्पूर्वे भेरिकान्यसेत् ६१
देवतानां बलिं कृत्वा द्वारादि बलिमाचरेत्
उत्सवं कारयेद्धीमानृक्षबन्धन्तु कारयेत् ६२
नित्यार्चनेन पूजायां यागमण्डपवेशनम्

वृषाणीं वामपार्श्वे तु परिवाराष्टकान्दिशि ६३
पश्चिमे उक्षसम्युक्तं वायव्यां शृङ्गिणं भवेत्
सौम्यायान्नन्दिसम्युक्तमैशान्यां वेदपादकम् ६४
पूर्वे तु गोपतिञ्चैव आग्नेर्यामुग्रशृङ्गिणम्
वृषन्नाथन्तु याम्ये तु नैर्ऋृत्यान्तु वृषेश्वरम् ६५
परिवारान् समायुक्तौ स्वयमन्त्रेण चार्चयेत्
पटकुम्भद्वयोर्मध्ये सिकते स्थण्डिलं कुरु ६६
अग्न्याधानादिकं सर्वं विशेषत्वधुना श्रुणु
समिदाज्यान्नसम्युक्तं सर्षपं उक्तसम्युतम् ६७
हुनेदष्टशतं हुत्वा द्रव्यं प्रति विशेषतः
वृषबीजमनुस्मृत्य हुनेदष्टोत्तरं शतम् ६८
वृषाणीं बीजमुद्धृत्य हुने पञ्चादशाहुतिम्
परिवारमुद्धृत्य हुने एकाहुति क्रमात् ६९
अग्निकार्योक्तमार्गेण पूर्ववत्कर्ममाचरेत्
ग्रामप्रदक्षिणं कृत्वा वस्त्रेशमूर्तिनं कुरु ७०
पटस्य मुद्धृते धीमान् वृषकुम्भस्य वर्द्धनीम्
शिष्यात् शिरसयेद्धीमान् आचार्यं युक्तमाचरेत् ७१
ग्रामप्रदक्षिणं कृत्वा ध्वजस्थान समाविशेत्
पुण्याहं वाचयेत्तत्र प्रोक्षयेद्दण्डशुद्धिदम् ७२
पटं पुश्छस्य द्वयद्वापि दर्पणं पुश्च सम्युतम्
पञ्चगव्याभिषेकन्तु वृषकुम्भाभिषेचयेत् ७३
वर्द्धनीञ्चैव विन्यस्य वृषपीठे न्यसेत्क्रमात्
अर्चनोक्तं क्रमं कृत्वा अष्टपुष्पं समर्चयेत् ७४
पटन्निवेद्यमेवं स्यान्धूपदीपादिकन्ददेत्
ताम्बूलं भस्मवेदादीनृत्तगीतञ्च वाद्यकम् ७५
यात्रार्थं स्नपनं पश्चात्सन्ध्याशेषं समाचरेत्

तीर्थाङ्कुरन्ततः पश्चात् तीर्थकौतुकमाचरेत् ७६
तीर्थाधिवासनं पश्चात् चूर्णोत्सवमथाचरेत्
देवाग्रे च सभास्थाने तीर्थतीरे मनोरमे ७७
चूर्णोत्सवन्ततः कुर्याज्जलः क्रीडां समाचरेत्
पूर्णाहुतिन्ततः कृत्वा यागकुम्भाभिषेचनम् ७८
आचार्यं पूजयेत् पश्चान्दक्षिणान्दापयेत्ततः
केत्ववरोहणं पश्चाद्वृषभौ द्वाहनन्ततः ७९
क्रिया समर्पणं कुर्यात् बलिदेवान्विसर्जयेत्
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ८०
अर्धनारीश्वरोत्सवं प्रोक्तं विष्णोत्सवविधिं श्रुणु
इत्यंशुमान् तन्त्रे अर्धनारीश्वरोत्सवविधि

## नित्याचारक्रमम्

अथ वक्ष्ये विशेषेण नित्याचारविधिक्रमम्
सर्वदोषहरञ्चैव आशुद्धिकरणन्ततः १
शौचमाचमनं स्नानं सन्ध्योपस्थानमेव च
एवं क्रमेण विधिवत् रात्रान्ते वा विचक्षणः २
शयनोत्थानमेवञ्च प्राङ्मुखोदङ्मुखोऽपि वा
रुचिरासनमेवञ्च आषाढकुशमूलके ३
पञ्चमृत्स्नाञ्च सङ्ग्राह्य अस्त्रमन्त्रं समुच्चरन्
गोमूत्रेणैव सम्मिश्रं सद्यमन्त्रेण पिण्डकम् ४
स्नानयोगमृदं ग्राह्य कपित्थञ्चान्द्रमानकम्
प्लक्षादुम्बरनिम्बञ्च आद्यजम्बूकपित्थजम् ५
शेखरीकरजजम्बुश्च ततश्छङ्गश्च सङ्ग्रहेत्
कनिष्ठाग्रपरीणाहं आर्द्रशाखाञ्च सम्युतम् ६
अस्त्रमन्त्रेण सङ्ग्राह्य मस्त्रतो वक्रकोटदुवर्जयेत्

द्वादशाष्टाङ्गुलञ्चैव पञ्चाङ्गुलमथायतम् ७
तदेकन्दन्तशुध्यर्थ एवं सङ्ग्राह्य बुद्धिमान्
तिन्त्रिणी तालपत्रञ्च प्लुजासञ्च ++ गृह्यताम्
भान्वङ्गुलायतञ्चै यतञ्चैव जिह्वाशुध्यर्थमेव च ८
परीक्षाणान्त्रेणाचान्येक मृत्पिण्डन्त्रि सूत्रकम्
सितासितञ्च पाषाणं वर्जयेत् शर्करां ग्रहेत् ९
कर्मयोग्यञ्च वर्ज्यन्त्राणन्यासन्तु संग्रहेत्
शुकुच्छायग्रमूलञ्च शुद्धदेशे विशेषतः १०
पाषाणं स्वरमाणञ्च तृणवाष्टाङ्गुलन्तथा
यथा च तृणमूले च मृदं संग्राह्य देशिकः ११
पञ्चाङ्गुलायतञ्चैव मृत्पिण्डं गुदशुद्धिकम्
गोमयन्निशिचूर्णञ्च तिलमामलकं कुशम् १२
पाषाणं चूटकाचूर्णं मरीचि लवणञ्चतम्
तैलञ्च दर्पणञ्चैव उत्तशालाञ्च सङ्ग्हेत् १३
शुक्लवस्त्रद्वयञ्चैव कौपीनमखण्डवस्त्रकम्
भस्मधारञ्च सङ्ग्राह्य जलतीरे विनिक्षिपेत् १४
पाषाणत्रयपिण्डेन शल्यञ्चैवेन सङ्ग्हेत्
ग्रामस्य दक्षिणैशान्ये बहिभ्रमञ्च कल्पयेत् १५
देवालयसमीपे च क्षेत्रे चैव समीपके
श्मशाने जलवासे च नद्यास्तीरे चतुष्पथे १६
वल्मीके शैत्यवृक्षे च गोस्थाने च विसर्जयेत्
अन्यस्थान प्रवेशञ्च मार्जनञ्चैवमेव च १७
यज्ञोपवीतञ्च सव्ये च दक्षकर्णे प्रयोजयेत्
सौम्याननन्दिवा काले दक्षिणाभिमुखन्निशि १८
शिरसो वेष्टनं कुर्यात् तृणमायाय भूतयेत्
एकाकी चैवमेवञ्च पूजादर्शन्नकारयेत् १९

अङ्गुष्ठकुञ्चितञ्चैव क्रियातानामिकाङ्गुला
तर्जनी मध्यमा चैव द्वयञ्चैव तु बन्धयेत्  २०
आघ्राणञ्च विवर्ज्याथ मलसूत्रं विवर्जयेत्
हृत् मन्त्रेणैव विण्मूत्रम्मूलमन्त्रेन मन्त्रतः  २१
गुदसम्मार्जनं कृत्वा पाषाणतृणपिण्डकम्
वामहस्तेन सम्मार्ज्य तत्तत् द्रव्यत्रिवारकम्  २२
अथवा पिण्डमेकन्तु त्रिवारन्त्वेकवारकम्
तद्धस्तेनैव शेफञ्च तर्जन्याङ्गुष्ठसङ्ग्रहेत्  २३
दक्षहस्ते मृदं ग्राह्य तदन्ये शुद्धदेशके
तालमात्रं खनित्वा तु तमृदञ्च विवर्जयेत्  २४
अवटे तु दं ग्राह्य शिष्यमाहूय सङ्ग्रहेत्
अधो दृष्टिश्च मौनी च जलतीरे समीपके  २५
न स्पृशन् किमपि क्षिप्तं स्थानमासाद्य पूर्वकम्
भङ्गारके जलं ग्राह्य शौचमार्गविधीयते  २६
अथवा जलतीरे च कञ्चिस्थानं प्रवेशयेत्
शेफप्रक्षाळनं पूर्वं गुदप्रक्षाळनन्ततः  २७
स तु मृदा च शिश्नेन पञ्च संख्येन शुध्यति
सव्यहस्ते जलं ग्राह्य क्षाळयेत् वामहस्ततः  २८
गुदप्रक्षाळनेनैव मृदं द्वादश संख्यया
दशकृत्वा करं वामं कुर्यात् सप्तकरद्वयम्  २९
मणिबन्धद्वयं शुद्धि मृद्भिः करतलन्तथा
मनो बुद्धिक्रमञ्चैव शौचं पादप्रक्षाळनं कुरु  ३०
कञ्चित्स्थानं विसृज्याथ जलप्रायं प्रवेशयेत्
वामेतरं यज्ञसूत्रं शुद्धदेशे प्रवेशयेत्  ३१
पूर्वे चाननवेशञ्च सोमे चाननवर्जयेत्
कुक्कुटासनमेवञ्च दन्तशोधनमेव च  ३२

आस्यन्तालु च दन्तौ च श्रोत्रे नयननासिका
दन्तशाखाञ्च सङ्ग्राह्य दन्तशोधनमेव च ३३
आस्यञ्च तालुदन्तौ च श्रोत्रेण नयनासिका
प्रादुर्भावमुखञ्चैव क्षाळनं शोधनन्ततः ३४
शोधनी श्रोनाशौच षट्स्थानं क्षाळनन्ततः
दन्तशाखाञ्च सङ्ग्राह्य दन्तशोधनमेव च ३५
अस्त्रमन्त्रं समुच्चार्य तदेकं दन्तशोधनम्
दर्पणन्दर्शयेद्धीमान् तत् चूर्णञ्चैव गृह्यताम् ३६
मध्यादित्र्यङ्गुलं मध्ये ++ तु योजयेत्
मध्यमाङ्गुलप्रष्ठे च अङ्गुष्ठेनैव योजयेत् ३७
तर्जनी प्रसृता चैव चूळिकामन्त्रमुच्चरन्
उत्तरे दर्शने वामे दक्षिणे तदनन्तरम् ३८
अधरे दक्षिणे वामे दन्तशुद्धिक्रमन्ततः
निर्मलदर्शनं यावत् इत्येते दन्तधावनम् ३९
प्रतिपन्नवमीषष्ठी व्यतीपादादि पर्वसु
पौर्णमास्याम्मावास्यां सङ्क्रान्तौ ग्रहणेऽपि च ४०
कुजञ्च मन्दवारञ्च वर्जयेत्तु विशेषतः
अस्त्रमन्त्रं समुच्चार्य निम्बपत्रेण शुध्यति ४१
दन्तशुद्धि क्रमं कृत्वा तालुशोधनमेव च
उक्तशाखाञ्च संग्राह्य भिन्नाञ्चैव तु +++ ४२
सव्यापसव्यमेवञ्च पादौ हस्तौ तथैव च
आजानुपादौ प्रक्षाळ्य हस्तौ वा मणिबन्धनात् ४३
ललाटचिबुकान्तञ्च प्रक्षाळ्यमुखमेव च
वामपादञ्जले न्यस्त्वा स्थले दक्षिणपादकम् ४४
जानुमध्यकरो भूत्वा दक्षहस्ते विचक्षणः
पत्रपूर्वयुक्तेन शेषकर्म समाचरेत् ४५

अराळवत् करं कृत्वा माषमग्नजलं ग्रहेत्
तस्य न्यूनाधिकं पीत्वा सुरापानसमं भवेत् ४६
अप्रमाणमफेनञ्च बुद्बुदानिविवर्जितम्
मणिबन्धाग्रेण पीत्वा तु ब्रह्मतीर्थन्त्रिधा भवेत् ४७
सङ्गाह्याचमनं पश्चात् आत्मविद्या शिवाणुभिः
सूयते सलिलं पीत्वा हस्तप्रक्षाळनन्त्रिधा ४८
तर्जन्यादि कनिष्ठान्तं शिष्टमेक प्रसारितम्
अङ्गुष्ठप्रसरोर्ध्वञ्च आस्ये च दक्षपार्श्वके ४९
ओषौहि मार्जनास्तत्र अवठे चास्त्रमन्त्रतः
व्याङ्गुल्येन सङ्गाह्य ललाटे चुबुकान्ततम् ५०
तत्पुरुषेणाभिमन्त्रेण मुखसेकं शनै क्रमात्
पादौ च मूर्ध्नि देशञ्च प्रोक्षयेदस्त्रमन्त्रतः ५१
तजनी मध्यनाङ्गुल्यं कनिष्ठाङ्गुलिप्रसारितम्
अङ्गुष्ठानामिकाभ्यान्तु तदग्रेनैव योजयेत् ५२
हृन्मन्त्रेणाक्षि संस्पृश्य क्रमात्सव्यापसव्यतः
मध्यमादि त्र्यङ्गुल्यं प्रासादञ्चैव सम्युतम् ५३
नासिका द्विपुटौ चैव तर्जनीभ्याङ्गुष्ठकेन तु
नासिका द्विपुटौ स्पृष्ट्वा वामदेवेन मन्त्रतः ५४
तर्जन्यादि त्र्यङ्गुल्यन्तलमध्ये तु योजयेत्
कवचेनैव मन्त्रेण अङ्गुष्ठाग्रे हृदि न्यसेत् ५५
पञ्चाङ्गुलेन मूर्ध्नि स्यात् ईशानेन तु मन्त्रतः
जलसंस्पर्शनं कृत्वा तत्तत्स्थान्ते स्पृशेत्ततः ५६
एवं हुत्वा तु मन्त्रज्ञो न प्रत्यङ्गमुखस्पृशेत्
ऋग्यजुस्सामवेदादीन्तृप्तनात् तृप्तिरिष्यते ५७
ओष्ठद्विमार्जनन्तत्र अथर्वेदेति हासयोः
सतुर्मार्जन वक्त्रञ्च गणेशस्य प्रियं भवेत् ५८

प्राक्शिरोऽभ्युक्षणेनैव ऋषीणान्तु प्रियं भवेत्
नयनस्पर्शनेनैव प्रियं स्यात् सूर्यसोमकौ ५९
नासिकास्पर्शनेनैव अभ्यासन्तु प्रियं भवेत्
श्रोत्रसंस्पर्शनञ्चैव दिशां प्रीतिकरं भवेत् ६०
इन्द्राग्निब्रह्मविष्णुश्च बाहूनाभिहृदिस्तथा
शिरसि स्पर्शनञ्चैव शिवप्रीतिकरं भवेत् ६१
आचम्येवं विधानेन स्नानमार्गमिहोच्यते ६२
इत्यंशुमान् तन्त्रे नित्याचारक्रमपटलः

## दर्भलक्षणम्

दर्भाणां लक्षणं वक्ष्ये श्रूयतां रविसत्तम
सर्वकर्मसुयोज्यञ्च सर्वसिद्धिकरन्तथा १
कुशः काश उशिरञ्च दूर्वा वेणुयवस्तथा
विश्वामित्रञ्च मञ्जी च अष्टदर्भाः प्रकीर्तिताः २
तेषां मध्ये तु दर्भाणां विश्वामित्रं कुशं ग्रहेत्
उद्याने द्रिपार्श्वे च नद्यास्तीरे च सङ्ग्रहेत् ३
गवामग्रे तु दर्भाणां केवलं शुद्धिरिष्यते
कुशब्दो यस्तु शुद्धिस्यात् शशब्दमघशुद्धिदम् ४
++ योगात् कुशमित्युच्यते बुधैः
तद्दर्भाणां विशेषेण विश्वामित्रं विशिष्यते ५
श्यामदर्भांश्च सङ्ग्राह्य अथवा शुष्कदर्भकान्
स्त्रीपुन्नपुंसकोश्चैव विश्वामित्रन्त्रिधाभवेत् ६
मूलस्थूलं भवेन्नारी अग्रस्थूलन्नपुंसकम्
मूलादग्रसमञ्चैव पुमान् दर्भो तथैव च ७
ईषत्पक्षा समायुक्तपुमान् दर्भांश्च सङ्ग्रहेत्
मुग्धमुचं सङ्ग्राह्य शदर्भास्तथैव च ८

नपुंसकांस्तु सङ्गृह्य +++ स्थितः
सुच्छिन्नाग्राह्य ++ खण्डितस्थितः ९
वर्जयेत् दर्भसङ्ग्राह्य कर्मयोगं विशेषतः
शिवकर्मणि योग्यञ्च पुमान् दर्भांश्च सङ्ग्रहेत् १०
शक्तिदर्भांश्च जायायां ++ वैदिकस्य तु
कूर्चसंख्या च दर्भाणां तदा ++ सङ्ग्रहेत् ११
एकत्रिंशदर्भं स्यात् उत्तमोत्तममेव च
पञ्चविंशतिदर्भं स्यात् उत्तमे मध्यमन्ततः १२
एकविंशति दर्भं स्यात् उत्तमाधममेव च
एकोनविंशत् दर्भास्यु मध्यमोत्तममेव च १३
तिथि संख्याश्च दर्भास्यु मध्यमे द्धृतमन्त्रतः
नवसंख्याश्च दर्भास्यं मध्यमाधममेव च १४
त्रिदर्भादि समारभ्य एकैकस्य विवर्द्धनात्
दर्भाङ्गुलायतञ्चैव उत्तमादि त्रयन्ततः १५
सप्तविंशाङ्गुलञ्चैव पञ्चविंशाङ्गुलन्तथा
एकविंशाङ्गुलञ्चैव उत्तमादि त्रयन्तथा १६
एकोनविंशत्संख्याश्च दर्भ सप्त च संख्यया
तिथिसंख्यातिसंख्या च मध्यमादित्रयन्तथा १७
नवसप्तति संख्या च अधमादि त्रयन्तथा
ग्रन्ध्याद्धाङ्गुलमारभ्य +++++
व्योमाङ्गुल विधिर्यावत् ग्रन्धिमानमिहोच्यते १८
कूर्चसंख्या क्रमञ्चैव तत्कर्म सुयोग्यकम्
कोर्परं मध्यमाङ्गुल्यमेकहस्तन्तदुच्यते १९
तद्धस्तद्वादशाङ्गुल्याद्दर्भमानञ्च निश्चितम्
तुकारो भूमिशुद्धिं स्यात् चकारो रूपसिद्धिदम् २०
द्व्यक्षरं सोमयागाच्च कूर्च्चमित्युच्यते बुधैः

कूर्चहीने तु यत्कर्म तत्कर्म निष्फलं भवेत् २१
तस्मात्कूर्चसमायुक्तं देवताप्रीतिकारणम्
मूलाग्रे ग्रन्धियुक्तञ्च पूर्वाग्रशयितो भवेत् २२
तत्तत्कर्मसुयोग्यञ्च दर्भान् सङ्ग्राह्य देशिकः
शिवकर्मणि तन्मध्ये ++ अधोग्रं वैदिकस्य च २३
काम्यं कर्म तदूर्ध्वं स्यात् दर्भान् सङ्ग्राह्य देशिकः
एवं क्रमेण विधिवत् बन्धयेत्तु विचक्षणः २४
वामहस्तन्तदूर्ध्वे तु सव्यहस्तमधो भवेत्
दक्षिणावर्तनेनैव दर्भमूलेन बन्धयेत् २५
शिवकर्मणि कर्तव्यं वैदिकञ्च ततः परम्
दर्भाग्रदक्षहस्तञ्च दर्भमूले तु लम्बतः २६
दक्षिणावर्तकञ्चैव वैदिकस्यैव बन्धयेत्
मध्यग्रन्धिसमायुक्तं काम्यकर्म विशेषतः २७
पितृकर्मसु सर्वेषां वामावर्तञ्च बन्धयेत्
कूर्चमूले तु सविता कूर्चमध्ये तु वैष्णवम् २८
कूर्चाग्रे नवतीर्थानि इत्येते अधिदेवताः
पुष्करं कुम्भमध्ये तु कूर्चाग्रेणैव पूरयेत् २९
गङ्गा तुल्ये च कूर्चाग्रे भावयेत् देशिकोत्तमः
दर्भमूलेन पानीयं यजमानो विनश्यति ३०
तस्मान्मूलाग्रसम्युक्तं पुष्टतत्वन्तथैव च
स्नपने तत्प्रकारेण अन्यकर्माण्यधोग्रहम् ३१
अधोगं शान्तिदं प्रोक्तं सर्वकर्मेषु योग्यकम्
कूर्चलक्षणमेवोक्तं पवित्रस्य विधिं श्रुणु ३२

## पवित्रलक्षणम्

पकारं निर्मयं चैव विकारञ्च जयार्थकम्

त्रकारं राक्षसै हीनं पवित्रन्तदिहोच्यते १
पवित्र योग्य कर्मञ्च सर्वकर्महितं भवेत्
पवित्रहीनं यत्कर्म राक्षसप्रीतिमाचरेत् २
सव्यापसव्यकरयोः पवित्रं सम्यगाचरेत् ३
एतत्पवित्रमेवञ्च ब्रह्मास्त्रञ्च पवित्र
संख्या दर्भश्च उत्तमादित्रयन्ततः
रुद्रं दशाङ्गुलञ्चैव नवसंख्योत्तमत्रयम्
लोकेशाब्धिञ्च कर्मङ्गं मध्यादित्रयन्ततः ४
भूतवेदैश्च विद्याश्च अधमादि त्रयन्ततः
दर्भैश्च संख्यया चैवाग्रन्त्रिविधं भवेत् ५
षट्पञ्च चतुरङ्गुल्य अग्रञ्चैवोन्नतन्ततः
द्वेकार्द्धग्रन्धिमानञ्च अनामिका वृत्तनाहुतः ६
संख्याहीनं पवित्रञ्च भवेत्तत्कर्मनिष्फलम्
तत्तत्कर्म च योग्यञ्च पवित्रं सत्यगाचरेत् ७
शिवकर्म च कर्तव्यं वैदिकञ्च ततः परम्
पवित्रञ्च द्विदर्भैश्च केवलं वैदिकन्ततः ८
एकविंशाङ्गुलञ्चैव तिथ्यङ्गुलायतन्ततः
द्वाविंशाङ्गुलमानञ्च पवित्रञ्च विधीयते ९
मूलाग्रसममेवञ्च पुमान् दर्भैश्च सङ्ग्रहेत्
दर्भाग्रेवाथ तन्मध्ये तस्य मूलन्तु सर्वतः १०
द्विगुणीकृत्य रज्जुं स्यात् प्रदक्षिणवर्तकं शुभम् ११
शिवगायत्रिमन्त्रेण हस्तयोरुभयोरपि
अग्रं ब्रह्मादिदैवत्यं ग्रन्थिश्च विष्णुदैवतम् १२
ईश्वरं वलयं प्रोक्तं पवित्रस्याधिदैवता
अनामिका मूलपर्वयोर्ध्वपर्वस्य मध्यमे १३
अधो पर्वणि चायुष्यं ऊर्ध्वपर्वेतपक्षयम्

उभयोः पर्वमध्ये च पवित्रञ्च सुयोजयेत् १४
सव्यापसव्य हस्ते चानामिके च सुयोजयेत्
केवलं शिवकर्माणि वैदिके सव्यनामिके १५
अङ्गुष्ठे च भवेद्व्याधि तर्जनी च भ्यतीर्शवेत्
मध्यमे पुत्रनाशञ्च कनिष्ठे चार्थनाशनम् १६
तस्मादनामिकायान्तु योजयेत्तु पवित्रकम्
दर्भलक्षणमेवोक्तं सौवर्णं लक्षणं श्रुणु १७
सौवर्णपवित्रमेवञ्च कुञ्जेनार्कपर्णेन च
नाहो नामिकायान्तु द्व्त्तन्तथैव च
अनामिका प्रष्ठविस्तारं ग्रन्थिमानं तदुच्यते १८
अनामिका मूलसंयोज्य वामहस्तं विवर्जयेत्
दक्षिणानामिकायुक्तं दर्भञ्च स्वर्णसंयुतम् १९
सौवर्णनामिकामूले अग्रे दर्भपवित्रकम्
पवित्रयुक्तकरेणैव सर्वकर्मसमाचरेत् २०
पादप्रक्षाळनं कृत्वा पवित्रं कुशबाह्लकम्
पवित्रत्रयमेवञ्च दक्षकर्णे तु योजयेत् २१
आजानुपादौ प्रक्षाळ्य हस्तौ वा मणिबन्धनात्
सपवित्र करेणैव कुर्यादाचमनक्रिया २२
नोच्छिष्ठन्तत्पवित्रन्तु भुक्तोछिष्टन्तु वर्जयेत्
सौवर्णं क्षाळनञ्चैव सर्वकर्मं सुयोजयेत् २३
इन्द्रस्य च यथा वज्रं यथा शूलं हरस्य च
यथा चक्रं हरश्चैव ब्राह्मणस्य पवित्रकम् २४
दर्भाणां लक्षणं प्रोक्तं सङ्कल्पस्य विधिं श्रुणु २५
इत्यंशुमान् तन्त्रे दर्भलक्षणविधिपटलः

# पूरकर्मविधि

गौरीयागमथो वक्ष्ये श्रूयतां रविसत्तम
आयुश्रीकीर्तिजयदं पुत्रपौत्रविवर्द्धनम् १
सर्वाभीष्टसमृद्धिञ्च व्रतमेतत् समाचरेत्
योगं भोगञ्च वीरञ्च शक्तिरेव त्रिधा भवेत् २
योगं पीठसमायुक्तं भोगं वामे च संस्थितम्
वीरं स्वतन्त्रमित्युक्तं शक्तित्रयमिहोच्यते ३
कुम्भे शम्भुं समभ्यर्च्य वर्द्धन्यां योगशक्तिकम्
स्नपनं कारयेद्धीमान् अन्यो शक्ति प्रधानकम् ४
पूरमात्राव्रतं पुष्पयागं भोगेशि पूजनम्
उत्सवे स्थापने चैव दमनारोहणक्रिया ५
पवित्रारोहणं सम्यक् कृत्तिका दीपमेव च
गौरी व्रतविधानञ्च वसन्ताख्यान्तदुत्सवम् ६
मासोत्सवे तथामासे नव नैवेद्य कर्म च
भक्तोत्सवविधानञ्च मासपूजाविधि क्रमात् ७
पूरमार्द्रा व्रतञ्चैव उत्सवं कारयेत्ततः
उत्सवान्ते विशेषेण वीरशक्तिप्रधानकम् ८
उत्सवाद्यं विशेषेण वीरशक्तिं समाचरेत्
देवदेव नमस्तुत्वा विज्ञाप्य व्रतमुत्तमम् ९
अङ्कुरार्पणकार्यञ्च पूर्वोक्तविधिना सह
तद्रक्षपूर्वरात्रौ तु अधिवासनमाचरेत् १०
सायं काले यजेच्छम्भुन्नित्यवत् भोजनादिके
देव्यग्रे स्विष्टदेशे वा स्थण्डिलं शालिना कुरु ११
तस्योर्ध्वे वस्त्रमास्तीर्य प्रोक्षयेत्पुरुषेण तु
पश्चाद्देवीं समादाय स्थापयेत्स्थण्डिलोपरि १२
वस्त्रैराभरणैर्माल्यैरलङ्कृत्य विशेषतः

स्थलिकां तराडुलैः पूर्य नागवल्लिदळैर्युतम् १३
सौवर्णं रजतं वाथ क्षौमं कार्पासजन्तु वा
रक्षासूत्रञ्च संग्राह्य भस्मपात्रं विनिक्षिपेत् १४
देव्यग्रे विन्यसेद्धीमान् पुरयाहं वाचयेत्ततः
रक्षासूत्रमनुर्जप्त्वा वीरशक्तिं समर्चयेत् १५
देव्यपसव्यहस्ते तु तराडुलञ्च प्रदापयेत्
बृहत्सामेति मन्त्रेण रक्षासूत्रं प्रबन्धयेत् १६
भसितन्दापयेद्देव्या गन्धपुष्पादिनार्चयेत्
दूर्वाक्षतेन विप्राणामाशिषो वाचमब्रुवन् १७
मुद्गं प्रक्षाळ्य चास्त्रेण हृदयेनैव सेचयेत्
वस्त्रेण सापिधानञ्च स्थापयेत्तानधोमुखान् १८
रात्राधिवासनं कुर्यात् पूर्वोक्तविधिना बुधः
अपूपं पायसान्नन्तु देव्यग्रे तु प्रदापयेत् १९
धूपदीपादिकं कृत्वा ताम्बूलन्दापयेत्ततः
गीतनृत्तादि वाद्यैश्च सन्तोष्य परमेश्वरीम् २०
पश्चान्नित्याग्निकार्यञ्च सन्ध्याशेषं समाचरेत्
ततभूतसमये समभ्रो सन्ध्योपसानके २१
वीरशक्ति समादाय अलङ्कृत्य विशेषतः
कदळीफलसंयुक्तं क्षीरं देव्याश्च दापयेत् २२
त्रिशूलेन समायुक्तं सर्वालङ्कारसम्युतम्
मुद्गाङ्कुरेन संयुक्तं लवणञ्च प्रदापयेत् २३
कन्न्यकाभ्यः प्रदातव्यं गृहद्वारं प्रति प्रति
ग्रामप्रदक्षिणं कृत्वा तीर्थतीरं समाचरेत् २४
तीरे समतलं कृत्वा प्रपां कृत्वा सलक्षणाम्
तन्मध्ये विन्यसेद्देवीं स्थरिडलं कारयेद्बुधः २५
चूर्णोत्सवन्ततः कुर्यात् पूर्वोक्तविधिना सह

सुगन्धरजनी चूर्णं हृन्मन्त्रेणैव देशिकः २६
सतैलं रजनीं दत्वा देव्या दूर्वाग्र सम्युतम्
घृतशिरोर्पणं कुर्यात् पूर्वोक्तविधिना सह २७
पश्चात् भक्तजनेभ्यश्च दत्वा तैलं हरिद्रकम्
तीर्थाधिवासनं कलशै स्नापयेत् जलमध्यमे २८
देव्यास्नापनमप्रवीत जलक्रीडां समाचरेत्
स्नापनं कारयेत्पश्चात् अलंकृत्य विशेषतः २९
समर्थैः परिचारैश्च शीघ्रं गश्चन्निकेतने
देव्यग्रे स्विष्टदेशे वा स्थण्डिलं शालिना कुरु ३०
तस्योर्ध्वे स्वस्त्रमास्तीर्यस्थापयेत्परमेश्वरीम्
देव्यग्रे स्थण्डिलं कृत्वा रम्भापत्रैः परिस्तरेत् ३१
तस्योर्ध्वे लवणं कृत्वा मुद्गमङ्कुसम्युतम्
पायसापूपसंयुक्तं प्रस्तव्रीहि समन्वितम् ३२
शिवसम्पूर्णव्रीहिश्च शकुथचूर्णन्तिलन्तथा
यवर्तनीशि चूर्णञ्च लवणन्तिन्त्रिणी फलम् ३३
हस्तदूर्वाक्षतन्न्यस्त्वा देव्यग्रेणैव देशिकः
पूर्वाग्रे स्थण्डिलं कल्प्य वामाद्यं सम्यगर्चयेत् ३४
कोणेषु स्थण्डिलं कल्प्य भूमिस्वाहा स्वधा क्षमा
भूम्ये च स्थण्डिले मध्ये अश्मानो विन्यसेच्छिशुम् ३५
देव्यग्रे स्थण्डिलै ++ भ र्चरान्
उत्तरीय न्यसेत् देव्या पाद्यमाचमनन्ददेत् ३६
पुण्याहं वाचयेद्धीमान् द्रव्याणि प्रोक्ष्य वर्मणा
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकन्ददेत् ३७
पुष्पं विनिक्षिपेदर्घ्यो देव्या हस्ते समाहितः
देवि गायत्रि मन्त्रेण पानीयं त्रिः प्रदक्षिणम् ३८
देव्यग्रेणैव सन्तर्प्य पञ्चाङ्गे प्रणमेत्पुनः

द्रव्यं प्रदक्षिणी कृत्वा सत्रिवारन्तु देशिकः ३९
पाद्यार्घ्यरक्त +++ अश्मानं हृदयेन तु
पादौ च जानु नाभिश्च हृद्देशे तु गळेपि च ४०
ललाटे मूर्ध्नि देशे च शकुचूर्णादिकं ददेत्
ईशानादि शिरोन्तञ्च सप्तद्रव्यञ्च विन्यसेत् ४१
पुनः प्रदक्षिणे पश्चात् दूर्वापुष्पाक्षतन्यसेत्
प्रस्थव्रीहि समायुक्तं देवीहस्ते प्रदापयेत् ४२
नैवेद्यन्दापयेद्धीमान् पानीयाचमनन्ददेत्
धूपदीपादिकं दत्वा ताम्बूलन्तु निवेदयेत् ४३
भसितन्दर्पणं छत्रञ्चामरञ्च प्रदापयेत्
वेदैस्तोत्रैश्च न्रृत्ताद्यैस्सन्तोष्य परमेश्वरीम् ४४
देवोत्सव विधानञ्च देव्याश्चापि समाचरेत्
रङ्गे वा शिबिकोर्ध्वे वा गब्धिके यानमाचरेत् ४५
विधिसम्मार्जनं कृत्वा सेचयेश्शुद्धवारिणा
शाङ्कुरैश्च त्रदीपैश्च अथवान्योपचारकैः ४६
अलङ्कृत्य विशेषेण ग्रहद्वारं प्रति प्रति
नानावाद्य समायुक्त नानाच्छत्र समाकुलम् ४७
नानाध्वजसमायुक्तं नानास्त्री परिसेवितम्
नानायन्त्र विधानञ्च डोळामारोहयेत्ततः ४८
नानाभक्तजनैस्सार्द्ध नानास्तोत्र समाकुलम्
ग्रामप्रदक्षिणं कृत्वा प्रविश्यास्थानमण्डपम् ४९
यात्राधास्नपनं पश्चात् सन्ध्याशेषं समाचरेत्
आचार्यं पूजयेत्पश्चात् वस्त्रहेमाङ्गुलीयकैः ५०
भक्तानां परिचाराणां यथाशक्त्या तु दक्षिणा
अतिथिभ्यो यथाशक्ति दक्षिणाञ्च प्रदापयेत् ५१
यागावशिष्टं यद्द्रव्यं आचार्याय प्रदापयेत्

शिवसंपूर्णशालिञ्च वाद्यकानां प्रदापयेत् ५२
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्
इत्यंशुमान् तन्त्रे आषाढपूरकर्मविधिपटलः

## त्रिपुरसुन्दरीस्थापनम्

त्रिपुरस्थापन वक्ष्ये श्रूयतां रविसत्तम
ग्रामे वा नगरे वापि पुण्यक्षेत्रे विशेषतः १
महातीर्थं प्रदेशेषु पर्वते वापि नेपि वा
मध्यहारादिशालेषु महामर्यादिकादिषु २
स्थापये त्रिपुरा देवीं पूर्वे वा चोत्तराननां
चतुर्भुजान्त्रिणेत्राञ्च पाशाङ्कुशधरां पराम् ३
पुष्पबाणेक्षु चापञ्च नानालङ्कारसंयुताम्
कारयेत्तु विधानेन पश्चात्स्थापनमाचरेत् ४
उत्तरायणकाले तु माघमासविवर्जिते
अन्येषु सर्वमासेषु सुमुहूर्ते सुलग्नके ५
प्रासादाग्रे विशेषेण मण्डपं कारयेद्बुधः
कूटं वापि प्रपां वापि चतुद्वारसमन्वितम् ६
मध्ये नवपदं वेदी कुण्डं स्यात् परितः क्रमात्
नवपञ्चैककुण्डं स्यात् योनिं वा पद्ममवे च ७
प्रधानकुण्डमेवं स्यात् मण्डपोक्तेन कर्मणा
वर्णत्रयानुपूर्वं स्यात् तत्तत्कुम्भैर्व्युपूजयेत् ८
नयनोन्मीलनं कुर्यात् स्थपति स्थापकैस्सह
जलाधिवासनं कुर्यात् बेरशुद्धिं समाचरेत् ९
शयनं कारयेत्तत्र निद्राकुम्भ समन्वितम्
शक्तित्रयञ्चाष्टशक्तिं साङ्गावरणसम्युतम् १०
पूजयेत्तु विशेषेण अग्निकार्यमथाचरेत्

सर्वमम्बात्रिवर्णेन यथा +++ सं का पूर्वकम् ११
शिवास्त्रादिसमायुक्तं पूर्णान्तं सम्यगाचरेत्
त्रिखण्डं शोधयेत्तत्र इश्चादि मनुनापि च १२
रत्नन्यासादिकं कुर्यात् बन्धनन्तु ततः क्रमात्
कारयेच्छिल्पिना युक्तं पश्चात्स्नानं समाचरेत् १३
यथेष्टमभिषिच्याथ ततः कुम्भाभिषेचनम्
तदा गायत्रि मनुना कर्णमन्त्रं जपेत्सुधीः १४
गन्धादिना विसम्पूज्य नैवेद्यन्ततोपरि
नानापुष्पसमायुक्तं घृतक्षीरसमन्वितम् १५
पायसान्नादिभिः कुर्यात् दापयेत् परमेश्वरीम्
प्राशृतञ्च बलिं दत्वा माषान्तञ्च तिलैर्यवम् १६
निरोधार्घ्यं ततो दत्वा तत्कर्मपरिवृत्तये
एवं कुर्यात् क्रमेणैव सर्वसौख्यकरं भवेत् १७
यः कारयेन्नरो भक्त्या त्रिपुरा स्थापनं यदि
सर्वसम्पत्करं नृणां धर्मादिनपि सिध्यति १८
इत्यंशुमान् तन्त्रे त्रिपुरसुन्दरी स्थापनविधिपटलः

## उष्णोदकविधि

अथ वक्ष्ये विशेषेण उष्णोदकविधिक्रमम्
आयुश्री पुष्टिकीर्तिञ्च धनधान्यसमृद्धिदम् १
वृश्चिके वाश्वीम्मासे धनुर्मासे नु वै बुधः
क्रकरे कुम्भमासे तु उष्णोदैरभिषेचनम् २
जलधारान्तकैश्चैव स्नापयेदुष्णातोयकैः
शीतोदकैश्च पूर्वोक्तं स्नापयेत्परमेश्वरम् ३
पञ्चगव्याभिषेकन्तु पञ्चामृतन्तदन्तके
इक्षुसारन्तदन्ते तु तैलमुद्वर्तनं परम् ४

वृतधारा प्रदानेन उष्णोदकं समाचरेत्
मुद्गचूर्णानुलेपञ्च स्नापयेत् गन्धतोयकैः ५
तत्काले पूजनं कृत्वा सम्पत्सुखावहम्
सन्धिरष्टसु कर्तव्यं पूजयेत्परमेश्वरम् ६
यामं प्रति विशेषेण उष्णोदकं समाचरेत्
उपसन्धिषु कर्तव्यं उष्णोदकन्ततो बुधः ७
पञ्चभारजलेनैव मन्दोष्णं कारयेद्बुधः
चन्द्रचन्दनकाश्मीरमालोड्य लेपयेच्छिवम् ८
नानावस्त्रसमोपेतं नानापुष्पोपशोभितम्
उष्णोदकजले हीने तत्पूजा निष्फलं भवेत् ९
इत्यंशुमान् तन्त्रे उष्णोदकविधिपटलः

## कोटिकमलार्चनै

अथातस्संप्रवक्ष्यामि कोटिपद्मार्चनं रवे
अभ्यर्च्य शंकरं कोटिपद्मैर्भक्तिसमन्वितः १
अखण्डराज्यमाप्नोति राजलक्ष्मीसमन्वितः
दीर्घमायुरवाप्नोति अरोहापद्यहो भवेत् २
रूपलावण्यसौन्दर्यसमेतस्त्रीसमन्वितः
बहूंश्च लभते पुत्रानायुष्मादुपशालिभिः ३
कुबेरवर्द्धनपतिः बह्वश्वगजसम्युतः
कीर्तिञ्चाप्यतुलां लोके प्राप्नोत्याचन्द्रतारकम् ४
अच्छिद्रैः क्रिमिभिर्हीनैः पद्मैर्गन्धसमन्वितैः
सहस्रनामभिः कुर्यात् कोटिपद्मार्चनं रवे ५
चरलिङ्गार्चनात् श्रेष्ठं स्थिरलिङ्गे समर्चनम्
कोटिजन्मतपः पुण्यं पद्मै स्वायम्भुवार्चनम् ६
कोटिपद्मार्चनान्मर्त्यो देहान्ते मुक्तिमाप्नुयात्

सहस्रनामभिः कुर्यात्कोटिपद्मार्चनं बुधः ७
अर्चनान्ते प्रतिदिनं धूपदीपनिवेद्यकैः
सम्पूज्य प्रणमेद्भूमौ दण्डवत् भक्तिसम्युतः ८
चक्रं प्रापमहाविष्णुस्सहस्रकमलार्चनात्
नियमेन महालक्ष्मीरभ्यर्च्य कमलैश्शिवम् ९
महाविष्णु प्रतिं प्राप सर्वलोकैकनायकम्
सरस्वती समभ्यर्च्य देवदेवमुमापतिम् १०
पद्मैः पद्मासनं प्राप पतिं सर्वपितामहः
सहस्रपद्मैरभ्यर्च्य राजा भवति मानवः ११
पद्मायुतार्चनादेव सर्वदेशाधिपो भवेत्
लक्षपद्मार्चनादेव जम्बूद्वीपाधिपो भवेत् १२
दशलक्षैस्समभ्यर्च्य पद्मैरिन्द्रत्वमाप्नुयात्
कोटिपद्मार्चिनं यस्तु कुरुते श्रद्धयान्वितः १३
तस्य पुण्यफलं वर्तुं शेषेणापि न शक्यते
स्वायम्भुवे महालिङ्गे कोटिपद्मै समर्चनम् १४
सहस्रनामभिः कृत्वा सर्वरोगविवर्जितः
दीर्घमायुरवाप्नोति लभते पुत्र सम्पदम् १५
इहलोके महा भागात् भुक्त्वान्ते मोक्षमाप्नुयात्
पद्मार्चनं विधिं वक्ष्ये देवदेवस्य शूलिनः १६
संकल्प्य प्रथमं संध्यां यथालब्धैर्दिनेदिने
रक्तैस्सितैर्वा कमलैरखण्डै क्रिमिवर्जितैः १७
अभ्यर्चयेन्महालिङ्गं पञ्चाक्षरमनुर्जपन्
सहस्रनामभिर्वापि रुद्रगायत्रियापि वा १८
अकैकमर्चयेत्पुष्पन्नमोन्ते सावधानतः
सहस्रद्विसहस्रं वा त्रिसहस्रमथापि वा १९
ततोऽधिकं वा कुर्वीत क्रमात्संध्यां प्रपूरयेत्

पत्रजातिषु सर्वासु सुबिल्वपत्रं विशिष्यते २०
पुष्पेष्वपि च सर्वेषु पुण्डरीकं विशिष्यते
पद्मैः पर्युषितैर्वापि मुकुळैर्वा समर्चयेत् २१
मुकुळत्वादि दोषस्तु जपजेषु न विद्यते
अर्चनान्ते प्रतिदिनं धूपदीपनिवेदनैः २२
सन्तोषयेन्महादेवं नित्यमेवं समर्चयेत्
उद्यापनं प्रकुर्वीत कोटिपूजाफलाप्तये २३
पूजादावथवा मध्ये पूजान्ते वा तदिष्यते
कोटिपूजोक्तफलदा उद्यापनसमन्विता २४
उद्यापनविहीना तु फलमल्पं प्रयच्छति
तस्मादुद्यापनं कुर्यात् वित्तलोभविवर्जितः २५
पर्वताग्रे नदीतीरे बिल्वमूले शिवालये
जपो होमस्तथादानं कृतं कोटिगुणं भवेत् २६
तस्माच्छिवालये कुर्यात् शास्त्रोक्तेनैव वर्त्मना
विंशद्धस्तप्रमाणेन षोडशस्तम्भसम्युतम् २७
चतुर्द्वारसमायुक्तं तोरणैरभिशोभितम्
वितानध्वजसंयुक्तं कदळीस्तम्भसम्युतम् २८
मण्टपं रङ्गवल्यादि शोभितञ्च प्रकल्पयेत्
चतुरश्रस्य कुण्डस्य लक्षणं वक्ष्यते रवे २९
चतुर्विंशत्यङ्गुलानामायामोत्सेधसम्युतम्
खात्वावटन्तच्च कुर्यात् मेखलात्रयशोभितम् ३०
एकाङ्गुलं बहिर्देशे त्वटस्य तु मेखला
आद्या तु द्वादशोत्सेधा चतुरङ्गुलविस्तृता ३१
अष्टाङ्गुलसमुसेधा द्वितीया चतुरायता
आयामोत्सेधतश्चापि तृतीया चतुरङ्गुला ३२
कुण्डस्य पश्चिमे भागे मेखलात्रय मध्यतः

अश्वत्थपत्राकारेण योनिः कुर्यापनाळका ३३
कुण्डस्येशानदिग्भागे वेदिः कार्या संशोभिता
एकहस्तसमुत्सेधचतुरश्रसमन्विता ३४
चतुर्हस्तायता कार्या निम्नोन्नतविवर्जिता
कुण्डस्याग्नेयदिग्भागे एकहस्तसमुन्नता ३५
हस्तद्वित्वायता कार्या ग्रहाराधनवेदिका
शुभे मुहूर्ते सुदिने पत्निपुत्रसमन्वितः ३६
मण्डपं प्रविशेत्कर्ता कृतकृत्यस्तदाशुचिः
पुण्याहं वाचनं कृत्वा ततस्संकल्पमाचरेत् ३७
कोटिसूर्यप्रतीकाशं साम्बं चन्द्रार्धशेखरम्
कृत्वा हृदम्बुजे शम्भुं आचार्यं प्रणुयात्ततः ३८
शिवभक्तं जितक्रोधं भस्मरुद्राक्षधारिणम्
पुराणागमतत्वज्ञं देशिकं वेदपारगम् ३९
ऋद्धिजो व्रणुयादष्टापाचार्यसदृशान् गुणैः
ऋत्विक्समेत आचार्यस्ततः सङ्कल्पमाचरेत् ४०
स्थण्डिलं रङ्गवल्याद्यैरलङ्कृत्य समाहितम्
पुण्याहं वाचनं कृत्वा वेदघोषपुरस्सरम् ४१
प्रोक्षयेन्मण्डपं होमपूजा द्रव्यादिकांस्तथा
चतुद्रोणं शालिधान्यं निक्षिप्यस्थण्डिलोपरि ४२
तस्योपरि तदर्द्धींश्च तण्डुलान् शालिसम्भवान्
तस्योपरि तदर्द्धांश्च तिलान् कृष्णान्विनिक्षिपेत् ४३
तस्योपरि तदर्द्धांश्च लाजान् शुद्धान् विनिक्षिपेत्
सौवर्णान् रजतान् वापि ताम्रकुम्भानथापि वा ४४
तन्तिभिर्वेष्टितान् कृत्वा चन्दनागरुधूपितान्
प्रधानकुम्भमध्ये तु स्थापयित्वाष्टदिक्षु च ४५
अष्टकुम्भांश्च संस्थाप्य पूरयित्वा नदीजलैः

वस्त्रगन्धैरलङ्कृत्य नाळिकेराम्रपल्लवैः ४६
उमामहेश्वरप्रतिमां विंशन्निष्कविनिर्मिताः
अष्टदिक्ष्वष्टकुम्भेषु स्थापयित्वा समर्चयेत् ४७
आचार्यस्त्वाहते वस्त्रे कर्णभूषाङ्गुलीयकम्
धृत्वा विभूतिरुद्राक्षं भूतशुद्धिं समाचरेत् ४८
शोषणप्लावनादींश्च अष्टत्रिंशत्कलान्यसेत्
अन्तर्यागं प्रथमतः कृत्वा यागं बहिश्चरेत् ४९
पञ्चगव्यैश्शुद्धजलै प्रतिमामभिषिच्य च
उमामहेशं प्रासादमन्त्रेणावाहयेत् गुरुः ५०
मुद्राषट्कं प्रदर्श्याथाष्टत्रिंशत्कलान्यसेत्
षोडशैरुपचारैश्च पूजयेत्परमेश्वरम् ५१
अष्टदिष्वष्टकुम्भेषु भवाद्यैरष्टनामभिः
अष्टऋद्धित्विजः पूजयेयुः षोडशैरुपचारकैः ५२
ग्रहाराधनवेद्यान्तु निक्षिप्य शिवतण्डुलान्
ग्रहमण्डलमालिख्य ग्रहाराधनमाचरेत् ५३
नवग्रहाणां पूजार्थं देशिकन्तत्र कल्पयेत्
प्रासादमन्त्रमाचार्यो जपेदष्टोत्तरं शतम् ५४
ततस्समेतो ऋत्विग्भिः वेदादीन् शतरुद्रीयम्
व्योमव्यापि महामन्त्र त्र्यम्बकमतुन्तथा ५५
ब्रह्मसूक्तं विष्णुसूक्तं रुद्रसूक्तं तथैव च
वारुणं पौरुषं सूक्तमायुष्यं सूक्तमेव च ५६
मुञ्चामित्वेति सूक्तञ्च शिवसूक्तन्तथैव च
जपेदथर्वशिरसं शिखामण्डूक्यमेव च ५७
पञ्चशान्तिं जपेत्पश्चात् नमो ब्रह्मे त्रिचमन्त्रतः
तिलाक्षतैः प्रकुर्वीत दश दक्षञ्च तर्पणम् ५८
पञ्चाक्षरेण मन्त्रेण रुद्रगायत्र्यापि वा

सहस्त्रनामभिर्वापि कारयेत्तर्पणं गुरुः ५९
ततो होमं प्रकुर्वीत आचार्यास्सुसमाहितः
स्वगृह्योक्तविधानेन मुखान्तञ्जुहुयात्ततः ६०
अग्नावावाह्य देवेशं कोटिसूर्यसमप्रभम्
उमयासहितन्देवं सम्पूज्य हवनञ्चरेत् ६१
प्रासादेन समिद्धोमं अन्नन्त्र्यैम्बकेन च
रुद्रगायत्रिया चाज्यमष्टोत्तरशतं हुनेत् ६२
तिलाक्षतैर्वा दूर्वाभिः पद्मैर्वा घृतमिश्रितैः
पञ्चाक्षरेण मन्त्रेण रुद्रगायत्रियापि वा ६३
सहस्त्रनामभिर्वापि लक्षहोमं समाचरेत्
जयादिपरिषेकान्तं कृत्वा पूर्णाहुतिञ्चरेत् ६४
शिवसूक्तं कद्रसूक्तं प्रासादञ्च तथा जपेत्
ऋग्यजुस्सामवेदांश्च पठन् पूर्णाहुतिञ्चरेत् ६५
सहरित्विक्भिराचार्यपुनः पूजां समाचरेत्
पायसापूपसहितं महानैवेद्यमाचरेत् ६६
उद्यापनं ततः कुर्यात् कर्तारं स्नापयेज्जलैः
आचार्यं वस्त्रभूषाद्यैरलङ्कृत्य विशेषतः ६७
प्रतिमां वस्त्रसंयुक्तां दशनिष्कसमन्विताः
गोभूमिसहिता दद्यात् तस्मै श्रद्धासमन्वितः ६८
श्वेताश्वं ब्राह्मणे दद्यात् पञ्चनिष्कसमन्वितम्
ऋत्विग्भिः प्रतिमा दद्यात् निष्कैकैकसमन्विताः ६९
दशदानन्ततः कुर्यात् फलताम्बूलदानकम्
गोभूतिलहिरण्याज्य वासोधान्यगुळानि च ७०
रौप्यं लवणमित्याहु दशदानानि वै क्रमात्
सदस्सेभ्यश्च विप्रेभ्यः भूरिदानं समाचरेत् ७१
उद्यापनदिने शम्भोः महाविभवविस्तरम्

महाभिषेकं कुर्वीत महानैवेद्यमेव च ७२
कर्पूर कुङ्कुमोपेतं चन्दनं मलयोद्भवम्
सम्पाद्य तेन देवेशं समालिप्य सपीठकम् ७३
दिव्यवस्त्रैरलङ्कृत्य दिव्यभूषाभिरेव च
सहस्रपद्मैरभ्यर्च्य प्रार्थयित्वा मनोरथम् ७४
प्रदक्षिणनमस्कारस्तोत्रैस्सन्तोष्य शङ्करम्
अर्चकं कर्णभूषाभिः वस्त्रैरप्यङ्गुलीयकैः ७५
दक्षिणाभिः पुष्कलाभिः प्रीणयेत्फलसिद्धये
स्वयञ्च भोजनं कुर्यात् पुत्रबन्धुसमन्वितम् ७६
एवं यः कुरुते भक्त्या कोटिपद्मैस्समर्चनम्
उद्यापनेन सहितं सदीर्घायुर्भवेन्नरः ७७
महदैश्वर्यमाप्नोति पुत्रार्थी पुत्रमाप्नुयात्
आरोग्यं लभते रोगी धनार्थी धनमाप्नुयात् ७८
स्वर्गार्थी स्वर्गमाप्नोति मोक्षार्थी मोक्षमाप्नुयात्
सर्वक्रतुषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ७९
तत्फलं कोटिगुणितं कोटिपद्मार्चनाद्भवेत्
कोटिपद्मार्चनान्मर्त्यः सर्वभोगसमन्वितम् ८०
इत्यंशुमान् तन्त्रे कोटिपद्मार्चनविधिपटलः

## स्कन्दोत्सवविधि

सकन्दोत्सवविधिं वक्ष्ये श्रूयतां रविसत्तमः
शिवयागन्तु सम्युक्तं स्कन्दयागं विशेषतः १
कल्याणं स्कन्दमित्युक्तमुत्सवं कारयेत्क्रमात्
सर्वसिद्धिकरं पुण्यं सर्वलोकसुखप्रदम् २
भुक्तिमुक्तिप्रदं दिव्य सर्वशत्रुविनाशनम्
कल्याणं स्कन्दमित्युक्तं चोत्सवं कारयेत्क्रमात् ३

मासमासोत्सवं चैव स्कन्दयागं विशेषतः
चैत्राणां रेवतीं तस्य वैशाखे विशाखमेव च ४
ज्येष्ठानुधादिवसाद्दाषाढं पूर्वषाढके
श्रवणे श्रवणान्तञ्च स्वातीनाभाद्रमासके ५
मखनामाश्वि चे मासे कृत्तिकायान्तु कार्तिके
मार्गशीर्षे तु रोहिण्यां पुष्यान्तं पुष्यमासके ६
माखमासे श्रविष्ठाद्याद्युत्तराषाढफल्गुनी
यमुना भरणाहान्तं जगांर्तन्तु विशेषतः
पञ्चमी नवमी चैव षष्ठी चैव विधीयते ७
एकादशी च द्वादशी च उत्तमं विधिचोच्यते
अर्कचन्द्रभृगुवारि सौम्यवारे यथाक्रमम् ८
उत्सवं षड्विधं प्रोक्तं श्रूयतां रविसत्तमः
विजयं द्वादशं प्रोक्तं नवाहं पुष्कलं भवेत् ९
सप्ताहं सिद्धिकं कुर्यात् पञ्चाहं शान्तिकोत्सवम्
शुभानाञ्च त्रियाहन्तु एकाहं शैवमुच्यते १०
विजयं पुष्कलं सिद्धिं शान्तिकं शुभदं तथा ११
केतुरोहणपूर्वन्तु कारयेद्देशिकोत्तमः
ध्वजहीनन्तु शैवं स्यात् कारयेत्तु द्विजोत्तमः १२

## वसन्तोत्सवम्

अथ वक्ष्ये विशेषेण वसन्तोत्सवक्रमम्
मधु माधवमासे तु फाल्गुने वा विशेषतः १
वसन्तोत्सवक्रमं कुर्यात् सप्ताहञ्च त्रयाहकम्
एकाहे वा प्रकर्तव्यं तत्तंमासर्तकेऽपि वा २
आरामोद्यान मध्ये तु वसन्तं मण्डपं कुरु
यथेष्टवस्त्रतायामं सर्वालङ्कारसम्युतम् ३

तत्र पश्चिमभागे तु वेदिकां संप्रकल्पयेत्
विस्तारं पङ्क्तिमानं स्यादुत्सेधञ्च तदर्द्धकम् ४
परितः कल्पयेत्कुण्डं ऐन्द्रभागे विसर्जयेत्
पश्चिमे चोत्तरे याम्ये जालकञ्च प्रकल्पयेत् ५
एकत्रिपञ्चसप्तैर्वा जालकं स्यात्तदर्द्धतः
वितनैश्च ध्वजैश्चैव तरङ्गाद्यैरलङ्कृतम् ६
मुक्तासृक्दामविविधै सुगन्धकुसुमादिभिः
कदळीस्तम्भदीपैश्च मण्डपं भूषयेद्बुधः ७
गोमयालेपनं कृत्वा शुद्धेन सिकदेन वा
आस्तिर्य मण्डपाद्बाह्ये जलेनैव सेचयेत् ८
तस्य दक्षिणभागे तु कल्पयेत्स्नानमण्डपम्
नदी मध्ये प्रपां कृत्वा सर्वालङ्कारसम्युतम् ९
वस्त्रेणास्तीर्य परितोत्जलेनापूर्य यत्नतः
एवं सङ्कल्प्य मतिमान् पश्चात्कर्म समारभेत् १०
प्रपां सङ्कल्पयेदग्रे सर्वपुष्पसमृद्धिदम्
चतुद्वारसमायुक्तञ्चतुस्तोरणभूषितम् ११
मध्यतरस्य परितः स्थापयेत्पुष्पाञ्जलित्रयम्
वस्त्रेणास्तीर्य परितो जलेनापूर्य यत्नतः १२
एवं सङ्कल्प्य मतिमान् पश्चात्कर्मसमारभेत्
तद्दिनात्पूर्वदिवसे महेशं पूजयेत्ततः १३
कौतुकं बन्धयेद्रात्रौ धूपदीपादिकन्ददेत्
वसन्तयागं विज्ञाप्य देवदेवस्य सन्निधौ १४
तीर्थाधिवासनं कुर्यात् पूर्वोक्तविधिना कुरु
सुगन्धरजनीचूर्णं संस्थाप्य नवमृत् घटे १५
श्वेतलाजं गृहित्वा तु स्थापयेत् पूर्ववत् घटे
कुम्भाग्रेण विनिक्षिप्य वस्त्रेण साविधाय च १६

एवं रात्रौ प्रकर्तव्यं प्रभाते स्नानमाचरेत्
नित्यपूजावसाने तु सर्वालङ्कारसम्युतम् १७
शिबिकोर्ध्वे समारोप्य सर्वभक्तजनाव्रतम्
रजनीं लाजचूर्णञ्च सङ्गाह्याथ प्रदक्षिणम् १८
सुगन्धरजनी चूर्णं विनोदार्थं विसृज्य च
श्वेतलाजं गृहीत्वा तु यथेष्टञ्च विकीर्य च १९
सुगन्धरजनीतोयैरापूर्य नवमृद्घटे
वीथ्योरुभयपार्श्वे तु स्थापयेत्तु ग्रहं प्रति २०
सुगन्धरजनी तोयैस्सङ्गाह्य जलशेषु च
स्त्रियो वा पुरुषो वापि जलेनैव सेचयेत् २१
एवं विनोदयत् पूषान् शनै ग्रामप्रदक्षिणम्
स्नानमण्डपमाविश्य स्नानवेद्युपरि न्यसेत् २२
सर्वोपचारै संस्नाप्य हविर्धूपादिकं ददेत्
वसन्तरङ्गमाविश्यश्चन्दनै हिमतोयकैः २३
वेदिकायां समारोप्य तस्योर्ध्वे हरिलाजकम्
विन्यस्य तस्य मध्ये तु महेशं पूजयेत्ततः २४
वसन्तन्दक्षिणे भागे माधवञ्चोत्तरे दिशि
अभ्यर्च्य गन्धपुष्पाद्यैः पश्चिमे मन्दमारुतम् २५
महापटसमुद्वास्य देवाग्रे स्थण्डिलं कुरु
तस्योर्ध्वे स्थापयेत्कुम्भं जलेनापूर्य देशिकः २६
चन्द्रचन्दनकाश्मीरन्निशाचूर्णं हिमाम्बुना
सुगन्धकुसुमाद्यैश्च पूरयेत्तज्जलेन तु २७
वंशाष्टकन्तु सङ्गाह्य तज्जलेनैव पूरयेत्
शिवस्य लिङ्गं कुर्वीत देव्याश्च मुखमण्डले २८
स्त्रीणां हस्ते श्रुतिन्दद्याद्द्वंशं पुंसां करे ददौ
वसन्तं माधवञ्चैव सन्तोष्य परमेश्वरम् २९

सुगन्धरजनीमाद्रां विनोदार्थं प्रदापयेत्
पश्चात् भक्तजनास्सर्वे अतिलीलां समाचरेत्  ३०
शिबिकोर्ध्वे समारोप्य प्रपान्तरमथाविशेत्
पुष्पं वापिकया मध्ये तीर्थतोयेन सेचयेत्  ३१
लाजञ्च रात्रिचूर्णञ्च विसृजेत्तज्जलेन तु
सुगन्धतैलं रजनीं देवदेवाय दापयेत्  ३२
सुतैलं रजनीमत्र दापयेद्भिर्गोजनाम्
जले संस्नापयेच्छम्भुजलक्रीडां समाचरेत्  ३३
नैवेद्यन्दापयच्छम्भोर्द्धूपदीपादिकन्ददेत्
ग्रामप्रदक्षिणं कृत्वा पूर्वस्थानन्निवेशयेत्  ३४
वसन्तस्योत्सवं प्रोक्तसङ्कोचञ्च क्रम श्रुणु
इत्यंशुमान् तन्त्रे वसन्तोत्सवविधि पटलः

विमानजीर्णिते चैव उपानाद्याधिजीर्णकम्
पुराणानि च मानानि न्यूनाधिकन्नकारयेत्  १
पूर्वमानञ्च कर्तव्यं अन्यमानेन कारयेत्
यजमानेश्च या कुर्यात् कालापेक्षन्नकारयेत्  २
शिल्पिकर्मणसञ्जाते सन्धाने तद्विशेषतः
शिल्पिस्पर्शनमात्रेण नित्यपूजा विरोधकृत्  ३
पुण्याहं वाचयेत्तत्र पञ्चगव्याभिषेचयेत्
गन्धोदकेन संस्नाप्य पवमानमुदीरयन्  ४
शान्तिहोमन्ततः कृत्वा ब्राह्मणान् भोजयेत्क्रमात्
अर्चनोक्तं समभ्यर्च्य दिनं प्रदि दिनं प्रति  ५
जीर्णदोषं न दोषं स्याच्छिवयागं समाचरेत्
पूजान्ते शिल्पिभिः स्पृष्ट्वा विमानस्यावसानकम्  ६
पूजान्तवमेवोक्तं पुनस्संस्थानकं कुरु

अलक्षणञ्चैव धामञ्च बहुवर्णं सुशैलकम् ७
एकद्रव्येण निर्माणधामस्वायम्भुवादिषु
तस्यैव जीर्णते काले एवं वै बन्धयेत् दृढम् ८
अन्यद्रव्य कृतञ्चैव राजाराष्ट्रं विनश्यति
लिङ्गे च चलिते चैव स्फुटिते च प्रजापते ९
नृपस्य मरणं शीघ्रं दुर्भिक्षञ्जायते भुवि
जीर्णोद्धारोक्तमार्गेण उद्धृत्य शिल्पिभिस्सह १०
चोरैश्च चलिते लिङ्गे नदिश्रोते न वा पुनः
भूपतिस्त्वन्यथा चैव स्थापयेत् निर्वणी भवेत् ११
नदिश्रोतेन चलिते शतदण्डं व्यपोह्य च
तत्स्थानस्योत्तरे चैन्द्रे ईशाने वा विशेषतः १२
स्थाप्य लिङ्गशुचौ देशे भवनं कारयेत्ततः
पौराण्ये तु पुनः कृत्वा पुनः कृत्वा तु पूर्ववत् १३
अन्यरूपं न कर्तव्यं कर्ता भोक्ता विनश्यति १४
जीर्णोद्धारदशकम्
पुराकृतं वा सलक्षणीयां पुनः कृतं पूर्वदैव
कुर्याहीनाधिके तत्
विपरीत भागे रोगादि पीडामरणन्तु गच्छेत् १५
जीर्णञ्चेद्दिक् विगतप्रमाणमान भुवनन्तत्
देशदेशाधिपस्तानीयादिषु जन्तुतामभिहिता १६
रक्षामुपेतान्वितम् आदित्येरपि शिष्टशमिष्टमथवा जीर्णस्य वृद्धिस्सदा ।
शैवक्षेत्रभक्तपरमेश्वरार्चनादिपुण्यावलि
शुद्धान्तः किरणे नरस्य विभवं कृत्वा त्रिभागं
मना भागञ्चेकमथात्वजीवनकृते विन्यस्य
भागद्वयं तत्पुण्ये हरितांब्र पात्रनिहितं कृत्वा

शिवायार्पयेत् ।
जीर्णोद्धारस्त्रिधायं प्रथममभिहितः स्त्वालयादेस्तधाद्यो
लिङ्गादेस्तु द्वितीयस्तदनु शिवतनो बेरकादेस्तृतीयः

## महाशान्तिविधि

शिवाशिवासहस्रांशे महेशस्थितदुद्भवम्
तत् शिवो दक्षिणांशे तु ब्रह्माभूसृष्टिकारणम् १
तत् शिवो वामपार्श्वे तु विष्णुश्चासीत् तथैव च
आदित्यो दक्षिणे नेत्रे चन्द्रो वै वामलोचने २
जातवेदो ललाटे तु आस्ये वेद्या समुद्भवा
प्राणे वायु समुत्पन्नं श्रोत्रे तु युगादयम् ३
गळे गणे सम्भूतिहृदये षण्मुखस्तथा
नाभो वै द्वादशादित्ये सर्वलोके रिषिज्ञका ४
ऋषिश्चैव तु सर्वेषां पञ्चास्त्रक्षेत्रयालकम्
विद्याङ्गाश्चैव देवानां मूलाधारे समुद्भवा ५
कटिदेशे तु वसवो गुह्यदेशे भवोदकम्
उरुजा विश्वनौ जातौ जानुदेशे तु मङ्गळम् ६
धर्माय धर्मदि देवश्च जज्ञोत दशायुधा
क्षुरिका बीजमुख्याश्च पादयो पङ्कजस्तथा ७
आधिरक्षो गणासिद्ध नागाविद्याधरस्तथा
गन्धर्वापुरसश्चैव पदमूले समुद्भवा ८
अष्टाविंशतिकोट्यस्तु देवरोमेषु चोद्भवा
भूतेशश्च धरास्सर्वे रोमूले दिजोद्भवा ९
यत्स्थान्ते तु गणे तेषान्तत्स्थाने वालयं भवेत्
तत्वानामासनन्तत्र तत् शिवाकृतिरुच्यते १०
सशिवं प्रणवान्तस्तु प्रणवस्सर्वकारणम्

रुद्रामुद्भूमहादेवो ईश्वरस्थितशेखरम् ११
शिवात् सदाशिवो भूतं तस्माच्चैव महेश्वरम्
महेश्वरश्शिवो रुद्राद्रोविष्णुस्समुद्भवा १२
विष्णो ब्रह्मासमुद्भूतं कृत्यभेदैस्समुद्भवा
तस्माद्देवतादीनि श्रुणुष्व कनकजानम् १३
शिवस्य लक्षणं प्रोक्तं वक्ष्ये कल्याणकर्मञ्च
श्रुणुत्वत् प्रभञ्जन
सर्वलोकहितार्थ स्यात् सर्वकल्याणकारणम् १४
सर्वराष्ट्र विवर्धं स्यात् पुत्रदारसुखप्रदम्
सर्वदोषनिवृत्यर्थं सर्वपापहरं परम् १५
तस्मात्सर्वप्रयत्नेन मङ्गळं कारयेत् बुधः
प्रतिष्ठादिनमारभ्य चतुर्थे पञ्चमेपि वा १६
सप्तमे नवमे वापि दशमे तद्दिनेऽपि वा
शुभवारादिभिर्युक्ते शुभयोगसमन्विते १७
निश्चित्य दिवसात्पूर्वे अङ्कुरान्यर्पयेत् बुधः
तद्दिनस्य तु पूर्वाह्णे जलक्रीडां समाचरेत् १८
ततो मध्याह्नसमये पूर्वगानं विधीयते
एवं तत्वाल्यं शूलं वा पशाकुशाब्जञ्च अभयवरदन्तथा
१९
आयुधानामिति प्रोक्तं रक्तवस्त्राम्बरधारिणम्
भूषणञ्चैव नैवेद्यन्दधिसम्युतम् २०
इत्थं स्वतु वह्यास्यापि विशेषतम्
ओं हां ह्रीं रवये नमः
सर्वलोकप्रकाशवर्णन्तु ग्राजावर्त्त प्रसन्निभम् २१
दशहस्तं पञ्चवक्त्रद्विहस्तं क्रममेव तु २२
ललञ्च कुशदण्डञ्च जपमालाकमण्डलम्

शरञ्चापञ्च विमृत्रा दक्षे वामकरान्वितम्  २३
नीलवक्त्रञ्च सर्वाङ्गं नीलवस्त्रञ्च धारिणम्
गुळपायससम्युक्तं कदळीफलनिवेद्यकम्  २४
ओं ह्रां ह्रीं लोकसूर्याय नमः
लोकसाक्षिं प्रवक्ष्यामि एकवक्त्रद्विहस्तकम्
तत्करौ तु नमस्तुत्य श्वेतवर्णञ्च कारयेत्   २५
वस्त्रञ्चैव तु काषायं भस्मोद्धूळनभूषणम्
क्षीरन्निवेद्यमेवन्तु लोकसाक्षेति तत्क्रमात्  २६
ओं ह्रां ह्रीं सं लोकसाक्षिणे नमः  २७
व्यत्रिपित्रमस्वरूपन्तु द्विमुखन्तु चतुर्भुजम्
ऊर्ध्वोद्वयकराब्जं स्यात् नमस्कारमयं करौ  २८
व्यत्रिपित्रमस्वरूपन्तु द्विमुखन्तु चतुर्भुजम्
ऊर्ध्वोद्वयकराब्जं स्यान्नमस्कारमयं करौ  २९
श्यामरत्नेन भूषञ्च वस्त्रं श्यामञ्च वर्णकम्
मुद्गान्नन्तु निवेद्यं स्यात् त्रिविक्रमस्वरूपकम्  ३०
ओं ह्रां ह्रीं त्रिविक्रमसूर्याय नमः  ३१
आदित्यस्य स्वरूपन्तु एकवत्रं द्विहस्तकम्
नाळाब्जकरमुद्धेव डाडिमीकुसुमप्रभम्  ३२
रक्ताभरणमेवन्तु नैवेद्यन्तस्य पायसम्
आदित्येन इति प्रोक्तं ध्यानं सौभाग्यमेव च  ३३
ओं घृणि घृणि सूर्याय नमः  ३४
सूर्यस्यापि वर्णन्तु एकवर्णं भुजाष्टकम्
अब्जद्वयकराण्येव घण्टाधूपकमण्डलुम्  ३५
अभयावरदोपेतमक्षमालाञ्च धारयेत्
हेमवस्त्रञ्च सौम्यञ्च भूषणं पत्रमेव च  ३६
वेद्यन्नाळिकेरञ्च तिलचूर्णञ्च सम्युतम्

एवं ध्यात्वा विशेषेण सूर्यरूपन्तु कारयेत् ३७
ओं ह्रां ह्रीं घं शिवसूर्याय नमः ३८
अंशुमालेस्तु वर्णन्तु षड्वक्त्रं रक्तवस्त्रकम्
एवं द्वादशहस्तन्तु द्वयाब्जकरमेवन्तु तोमरञ्चास्य खड्गञ्च
खेटकं पाशमेव च ।
शक्तिस्तु वरदञ्चैव अभयाङ्कुशमेव च ३९
वेताळहस्तवरदमक्षोवामञ्च धारयेत्
निवेद्यं व्यञ्जनञ्चैव क्षीरन्दधि घृतन्तथा ४०
अंशुमालन्तथा प्रोक्तं मध्याह्नं रोगनाशनम्
ओं ह्रीं ह्रें शिवसूर्याय नमः ४१
चतुर्थांशं तत्समं फलमुच्यते
अष्टांशं घृतसम्युक्तं तत्समं सूर्यमुच्यते
क्षीरादिव सवस्त्राणि यथा लाभं प्रयोजयेत् ४२
ताम्बूलं मुखवासञ्च गन्धतैलञ्च सङ्ग्रहेत्
पिष्टामलकञ्चैव रजनीमुद्गचूर्णकम् ४३
अष्टगन्धं सुगन्धञ्च कर्पूरादि च सङ्ग्रहेत्
पूजोपकरणद्रव्यान् सर्वान् सम्पाद्यदेशिकम् ४४
लिङ्गसंख्या क्रमेनैव कलशं वापि कल्पयेत्
दिलोपलापिदि पुष्पञ्च लिङ्गसंख्या क्रमेण तु ४५
इतराण्यपि सर्वाणि सङ्ग्रहेत्तु विचक्षणः
कलशार्थमण्टपं कल्प्य पुश्रकुण्डं प्रकल्पयेत् ४६
निश्चित्य दिवसात्पूर्वे सायाह्ने समया बुधम्
स्नानं कृत्वा विधानेन यजमान ++ न्हितम् ४७
प्रभामण्डपमाविश्य भूतशुद्धिं समाचरेत्
सकळीकरणं कृत्वा प्रदक्षिणमथाचरेत् ४८
पश्चात् प्रतिसरं बध्वा लिङ्गनाहसमन्वितम्

आचार्यन्दक्षिणे हस्ते कौतुकं बन्धयेत्ततः ४९
यजमान करेद्धीमान् रक्षासूत्रन्तु बन्धयेत्
लिङ्गसंख्या जपेन्मूलं यजमानसमन्वितम् ५०
मण्डपस्योत्तरे देशे ययेत् सैकतोपरि
ब्राह्मे मुहूर्ते चोत्साधत्र्थाय पादप्रक्षाळनादिकम् ५१
भस्मना कं कृत्वा मूलमन्त्रमनुस्मरन्
यजमानसमोपेतं स्नानं कृत्वा यथा विधिम् ५२
सन्ध्यावन्दनं कृत्वा नित्यकर्मसमाप्य च
प्रभामण्डपमाविश्य शोधयेत् भूमिलेपयेत् ५३
सूत्रान्यासान्तकं कृत्वा स्थण्डिलञ्च पृथक्पृथक्
स्नपनोक्तक्रमेणैव तत्र देवान् प्रपूजयेत् ५४
शान्तिहोमन्ततः कृत्वा अभिषेकं समाचरेत्
पुरे वाच्य जलै प्रोक्ष्य गन्धतैलञ्च मर्दयेत् ५५
पिष्टामलकरजन्यादि मर्दयेत्तु पृथक्पृथक्
पञ्चगव्याभिषेकन्तु शुद्धतोयञ्चाभिषेचयेत् ५६
समृज्य शुद्धवस्त्रेण पञ्चामृताभिषेचयेत्
शुद्धतोयाभिषेकञ्च पयसाद्याभिषेचयेत् ५७
खण्डवस्त्रेण समृज्य शुद्धवस्त्रेण वेष्टयेत्
मार्जनं शुद्धवस्त्रेण स्थलमेवं प्रयत्नतम् ५८
कलद्वार विखण्ड्याथ निश्चिद्रं सुषिरं गुरुम्
लिङ्गं सङ्गमसम्पुष्पमेकपत्रन्तु मिश्रितम् ५९
तत्पुष्पन्धूपितं कार्यं संहितामभिमन्त्रयेत्
अष्टबन्धं समालिप्य लिङ्गपीठञ्च लेपयेत् ६०
शुद्धवस्त्रेण संवेष्ट्य अष्टपुष्पञ्च दापयेत्
धूपदीपं तदन्ते तु काम्यनीराञ्जनञ्चरेत् ६१
कर्ता देशिकसम्युक्त अर्चनाक्रममुच्यते

देशिकस्य जया चैव कर्ता पीठसमर्चयेत् ६२
देशिको मूर्ध्नि विन्यस्य सहस्रपुष्पं पृथक्पृथक्
लिङ्गस्य मूलमन्त्रेण सहस्रनामसमुच्चरन् ६३
भवादि मन्त्रवा कुर्यात् प्रणवादिनमोन्तकैः
एवमन्त्रं समुच्चार्य एककालसमर्चयेत् ६४
अर्चनान्तै समारभ्य हिमतोयाभिषेचयेत्
गन्धतोयाभिषेकञ्च पुष्पाद्यैरभिषेचनम् ६५
रत्नोदकन्ततः पश्चात् मन्त्रपुष्पं समाचरेत्
पायसान्नं निवेद्याथ नीराञ्जनञ्च दापयेत् ६६
आर्द्रवस्त्रमित्यर्ञ्चेत् पश्चात् शुद्धवस्त्रेण वेष्टयेत्
स्थापनस्य क्रमेणैव कुम्भतोयाभिषेचयेत् ६७
तत्तदावयणान्तानि नयवस्त्रेण वेष्टयेत्
गन्धपुष्पादिभिः पूज्य नैवेद्यं धूपदीपकम् ६८
एवमावरणञ्चैव अभिषेकं क्रमान्नयेत्
शनैद्वारञ्च सङ्घट्य यथा निर्वाणमाचरेत् ६९
नीलोत्पलैर्वकुलालै पद्मैर्वै श्वेतपङ्कजैः
अर्कौरारश्वयैर्वापि पद्मकैर्वा विचक्षणम् ७०
रकैर्वा कनकैर्वापि कर्पूरशकलेनव
मन्त्रपुष्पं समाख्यातं मन्त्रान्नञ्च निवेदयेत् ७१
कर्पूरदीपसमावर्त्या भुक्तिमुक्तिप्रदायकम्
कर्तुर्दक्षिणहस्तेन पीठं संस्पृश्य देशिकम् ७२
अवगाहन्नयेत्कार्यं यदिका पदमर्द्धकम्
जलद्वारं विसृज्याथ गोमुखात् ग्राह्य तीर्थकम् ७३
सर्वभक्ताय स्थातव्यं स्नानमेव विधीयते
द्वारबन्धं विसृज्याथ स्थलशुद्धिं प्रयत्नतः ७४
खराडवस्त्रेण सम्मृज्य लिङ्गपीठं स्थलं क्रमात्

आच्छाद्य पट्टवस्त्राद्यै गन्धपुष्पासृगादिभिः ७५
सर्ववाद्य समायुक्तं सर्वलीला समसंहितम्
ज्वलदीपसमायुक्तं वितानाद्यैश्च शोभितम् ७६
लिङ्गाग्रे तु विशेषेण गोमयालेपनं कुरु
पिष्टचूर्णैरलङ्कृत्य तदूर्ध्वे वस्त्रपादिते ७७
कदळीपत्रतपुष्पे च अन्नमापूर्य बुद्धिमान्
गङ्गं प्रत्यर्थकार्थेन नैवेद्यं परिकल्पयेत् ७८
मेखलत्रयणसम्युक्तं तन्मध्येखं कुरु
परितो व्यञ्जनै पूर्या पयशुष्कञ्च मध्यमे ७९
फलादीरसवभ्रनितम्मध्ये तु विनिक्षिपेत्
नैवेद्यं कारयेद्धीमान् लिङ्गं प्रति निवेदयेत् ८०
धूपदीपन्ततो दत्वा लिङ्गावरणमागतम्
नृत्तात्तान्तं पूजयेद्विद्वान् स्नानकाले विशेषतः ८१
सङ्कल्प्य लिङ्गपूजान्त शिवमन्त्रं शतं जपेत्
इष्टबन्धुं जनैस्सार्द्धं यजमानेन देशिकम् ८२
देवाग्रे विन्यसेद्धीमान् उत्तराभिमुखस्थितम्
प्रथमं प्रणवन्न्यासं शृङ्खलान्यासमेव च ८३
भस्मना तिलकं कृत्वा अभीष्टं प्राथ्र्य देशिकम्
सोपि पापै विनिर्मुक्त शिवसायुज्यमाप्नुयात् ८४
महाशान्ति व्रतन्दृष्ट्वा नत्वा लिङ्गसहस्त्रकम्
यं कुर्वन् शिवलोकेपि शिवेन सह मोदते ८५
आचार्यं पूजयेत्तत्र गोभूमिकाञ्च नादिभिः
तस्य व्रतोपकारीणा नव वस्त्रं प्रदापयेत् ८६
लिङ्गसंख्या क्रमेणैव दृवसंख्या क्रमेण तु
अयुतन्तं क्रमेणैव तदूर्धन्न प्रशस्यते ८७
एवमेव क्रमेणैव महाशान्तिसमाचरेत्

इत्यंशुमान् तन्त्रे महाशान्तिविधिपटलः

## भक्तोत्सवविधि

भक्तोत्सवविधिं वक्ष्ये श्रूयतां रविसत्तम
मङ्गलञ्चैव सौख्यञ्च सौभाग्यञ्च वनश्यकम् १
ध्वजहोमबलिं धानं युक्तमङ्गलमेव च
बलिहोमेन सम्युक्तं बेरयानं समाचरेत् २
सौख्यमेतत्प्रकर्तव्यं सौभाग्यञ्च तत श्रुणु
ध्वजयोमबलिं हित्वा बेरयानं समाचरेत् ३
हीनमध्येन चोत्कृष्टं मुक्तमन्त्रविधं भवेत्
देवोत्सवेन कर्तव्यं भक्तानादुत्सवं कुरु ४
यजमानेश्छया काले चोत्सवन्तु समाचरेत्
ध्वजहोम बलिं हित्वा बेरयानेक सन्धिषु ५
ग्राव्रादि वृश्चिकान्तञ्च मासनक्षत्रकन्निभि
देवोत्सवन्तु साध्यं स्यादन्यैश्चैव न कारयेत् ६
ग्राद्यमासे तु कर्तव्यं विघ्ननक्षत्रकादिषु
हशनक्षत्र मन्त्रैश्च भक्तोत्सवमथाचरेत् ७
ग्राषाढस्य तु मासे तु ज्योतिनक्षत्र मन्त्रषु
तीर्थमादौ तु निश्चित्य क्रिया पूर्णान्तमाचरेत् ८
नवाहे सप्तके वापि पञ्चाहे त्रियहेऽपि वा
एकगमेव सन्धिश्च चोत्सवन्तु समृचरेत् ९
तद्दिनात् पूर्वरात्रौ तु रक्षाबन्धनमाचरेत्
वास्तु शुद्धिन्ततः कृत्वा गव्येन प्रोक्ष्य भूतले १०
स्नानमराडपमलङ्कृत्य नानाचित्रविचित्रितम्
प्रोक्षयेत् पुरुषेगौव पुरायाहञ्च ततः कुरु ११
यानमूर्तिञ्च दाहेने वरिवरसनकस्थितम्

आसनं मूर्तिमावाह्य स्नान द्रव्यादि साधयेत् १२
अभ्यङ्गं पिष्टचूर्णञ्च तिन्त्रिणी गर्भभस्मकम्
पञ्चगव्याभिषेकन्तु नाळिकेरगळैर्युतम् १३
दधिक्षीरेक्षु मधुना कदळीफलमर्दयेत्
शुद्धतोयाभिषेकन्तु द्रव्यस्नानतरान्तरे १४
पञ्चकुम्भाभिषेकन्तु पायसान्नन्निवेदयेत्
वस्त्रखण्डेन सम्मार्ज्य चित्रवस्त्राम्बरैर्युतम् १५
सृक्लेपने च भूतित्वा सर्वाभरणभूषितम्
भद्रपूजावसाने तु भक्तानामुत्सवन्नयेत् १६
मध्याह्नपूजनान्ते तु तदन्ते यानमाचरेत्
रथे वा वाहने वापि गल्लिके शिबिकेपि वा १७
यानारम्भस्य काले तु दीपज्वालाभिरावृतम्
छत्रचामरपिञ्छाद्यैस्तोत्रमङ्गलवाचकैः १८
वेदध्वनिसमायुक्तं भक्तस्तोत्रपुराणकम्
सर्वादोद्यसमायुक्तं सर्वभक्तेन साध्यकम् १९
शनैः प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
यात्रार्थस्नपनं पश्चात् भूरिपान्नन्निवेदयेत् २०
भक्ष्यानि विविधाञ्चैव ताम्बूलन्तु निवेदयेत्
तीर्थनक्षत्रदिवसे चूर्णोत्सवं समाचरेत् २१
नदीतटाकतीरे वा तीर्थकर्मं समाचरेत्
आचार्यं पूजयेत्पूर्वं परिचारन्ततः परम् २२
यजमानेन कर्तव्यं दीर्घमायुश्रियं भवेत्
पुत्रपौत्रसमृध्यर्थमन्ते सायुज्यतत्परम् २३
इत्यंशुमान् तन्त्रे भक्तोत्सवविधिपटलः

# उत्सवविधिपटलक्षणम्

उत्सवस्य विधिं वक्ष्ये श्रूयतां रविसत्तम
किर्तितं विजयं पुण्यं मायुरारोग्यवर्द्धनम् १
भुक्तिमुक्तिप्रदातव्यं सर्वकामार्थदायकम्
प++ पावनं शान्तगुणैवमङ्गलञ्च चतुर्विधम् २
ध्वजारोहादि तीर्थान्तं पावाकठ्यञ्च प्रकीर्तितः ३
ध्वजमेकं विना कुर्याच्छेषं पूर्वदेव ++
+++ ख्यातिं शान्तिकञ्च ततश्शृणु ४
बलिहोमादिनं हुत्वा केवलं भ्रामणन्तु वा
सायाह्ने चोत्सवं कुर्याच्छान्तिकं त्विति विद्यते ५
यजमानाश्च या कुर्यात् विभत्काले शिवोत्सवम्
मङ्गलान्त्विति विख्यातं कालेन विधिना श्रुणु ६
पवनञ्चन्द्रनक्षत्रं सौरञ्चैव चतुर्विधम्
एतच्चतुर्विधे मासे चोत्सवं संप्रकल्पयेत् ७
सौरमासे विधेयं स्यात् साकल्यं पवनोत्सवम्
पावने चान्द्रनक्षत्रे मासे शान्तिकमङ्गळम् ८
उत्सवं कारयेद्धीमान् सर्वे सर्वोत्सवं कुरु
सासने चान्द्रनक्षत्रे साकल्यं पावनं विना ९
पुस्यमासे तु पुष्यान्तम्माघमासे मघान्तकम्
फाल्गुने चोत्तरान्तन्तु चैत्रे चित्रान्तमुच्यते १०
वैशाखे तु विशाखान्तमूलान्तं ज्येष्ठमासके
आषाढे चोत्तराषाढं श्रावणे श्रवणान्तकम् ११
पूर्वाषाढं हितं मासे इषे चाश्वयुजान्तकम्
कार्तिके कृत्तिकान्तं हि शिवान्तम्मार्गशीषके १२
पूर्णे चन्द्रेण युक्तं वा वियुक्तं वा समाचरेत्
चतुर्द्दश्यां ममावास्यां षष्टिष्टम्यान्तमुत्सवम् १३

राजाभिषेकजन्मर्क्षे यद्धारङ्गावसानके
अन्यत्पुण्यदिनान्तेषु चोत्सवं संप्रकीर्तितम् १४
एकमासे द्विनक्षत्रे सम्प्राप्ते तु परस्परम्
नेष्टं प्रथम ऋक्षण्यादन्तक्षेतीर्थमाचरेत् १५
शैवञ्च सात्विकञ्चैव पार्थिवं श्रीकरन्तथा
सौख्यञ्च पैतृकञ्चैव पार्थिवं श्रीकरन्तथा १६
मङ्गलं हवनञ्चैव शोभनञ्च होच्यते
शैवमेकाहमित्याहं सात्विकन्त्रियहन्तथा १७
पञ्चाहं पार्थिवञ्चैव सप्ताहं सौख्य एव च
सौख्यमेवन्तु संप्रोक्तद्वादशाहन्तु पैतृकम् १८
पञ्चादशन्तु कौमारं स्मृतिश्चैव सुभद्रकम्
मङ्गलञ्चेकविंशञ्च उत्सवः कथितो मया १९
शैवादिशोभनान्तञ्च दिनसंख्या क्रमेण तु
एताञ्च द्विद्विपित्रान्तं विद्यान्तं सत +++ २०
+++ धादि च विद्यान्तमन्त्यादि च विचक्षणम्
पित्रान्तं पञ्चधा चैव तुर्यान्तञ्च विवृद्धिदम् २१
सप्तविंशदिनान्तञ्च उत्सवोरत्र संख्यया
विजयं पुष्कलं सौख्यं बलिसंख्या त्रिनामतः २२
मोक्षाकालकलोकेश भानुर्विकरसंख्यया
द्वाविंशञ्चाष्टविंशञ्च चतुस्त्रिंशञ्च संख्यया २३
चत्वारिंशञ्च संख्या च षट्चत्वारिंशञ्च संख्यया
पक्षाधिकञ्च पञ्चाशचिन्मयस्य बलिक्रमम् २४
अश्विनी चैव कर्माङ्गं प्रादुर्भाभम्मनुस्तथा
दशाष्टद्वाशिंशत्संख्या च त्रिंशक षट्रिंशकसंख्यया २५
कोलकाधिकचत्वारि मूर्तिश्चत्वारि संख्यया
तुर्याधिकञ्च पञ्चाशत् पुष्करस्य बलिक्रमम् २६

कर्माधिकञ्च पञ्चाशत् पञ्चाशत्तुर्यसंख्यया
कोलकाधिक पञ्चाशद्विद्या च बलिसंख्यया २७
वेदात्रिभानु संख्या च कलविंशति संख्यया
षट्त्रिंशद्द्वात्रिंशत् संख्या चाष्टत्रिंशच्च संख्यया २८
चतुश्चत्वारि संख्या च पञ्चाशत् संख्यया तथा
कर्माहाधिकपञ्चाश सौख्यस्यैव बलिक्रमम् २९
उत्सवस्त्रिविधः प्रोक्ते ध्वजभेर्याङ्कुरादिकम्
आदौ तु ध्वजमारोप्य पश्चात् भेरीन्तु ताडयेत् ३०
अङ्कुराण्यर्पयेत् पश्चाध्वजरोहणपूर्वकम्
आदौ भेरीं समुत्ताड्य ध्वजमारोपयेत्ततः ३१
अङ्कुराण्यर्पयेत्पश्चात् भेरीताडनपूर्वकम्
ततोऽङ्कुरार्पणं पूर्वं भेरीघोषमतः परम् ३२
ध्वजमारोपयेत् पश्चाध्वजारोहणपूर्वकम्
+++ त्विं के शैव वर्जयेत् केतुरोहणम् ३३
एतेषु त्रितयेष्वेषु ध्वजान् पूर्वान्तु वक्ष्यते
केत्वङ्कुरन्तु प्रथ+ द्वितीय तृतीयं स्य चतुर्थ -
+++++++++++++++ दण्डशुद्धिदम् ३४
पञ्चमं केतुकर्मञ्च कलशस्नानन्तु षष्ठकम्
सप्तमं वास्तु पूजार्थञ्चाष्टमञ्चास्त्रपूजकम्
++ यागञ्च दशमं देवताह्वयम् ३५
एकादशं चिलन्दद्याद्द्वादशञ्चोत्सवाङ्कुरम्
त्रयोदशं कौतुकारम्भञ्चतुर्दशञ्चास्त्रगायकम् ३६
पञ्चादशं बलिनृत्तञ्च षोडशं यानमेव च
यात्रार्थस्नपनं पश्चात्तत्परं मृगयात्रकम् ३७
तीर्थार्थमंकुरं पश्चात्तत्परं तीर्थकौतुकम्
तीर्थाधिवासनं पश्चाद्द्वाविम्शच्चूर्णकर्मकम् ३८

तीर्थकर्मत्रयोविंशद्यागकुम्भाभिषेचनम्
आचार्यन्दक्षिणान्दानं पश्चात्केत्वावरोहणम्  ३९
पैशाचाय बलिं कुर्यात् प्रायश्चित्तार्थपूजनम्
अष्टाविंशति भेदेन चोत्सवं परिकीर्तितम्  ४०
तीर्थमादौ विनिश्चित्य तत्पूर्वे दिवसे पुनः
यावद्युत्सव संख्यार्थदिनं सङ्कल्प्य तत्परा  ४१
ध्वजारोहदिनात्पूर्वरात्रौ केत्वङ्कुशं कुरु
तद्दिने वृषयागं स्यात् ध्वजारोहणपूर्वके  ४२
निरदिष्टिदिवसात्रात्रि मासोत्सवमाचरेत्
निद्दिष्टदिवसात्पूर्वं पूर्वरात्रौ तु यत्कृतम्  ४३
सौख्यक्रममिदं प्रोक्तं विजयादि समाचरेत्
शुक्लन्तुष्कृतन्तथा सूक्ष्मन्चिन्नभिन्नादि वर्जितम्  ४४
रन्ध्राष्टसप्तहस्तन्तु तत्पटद्विगुणीकृतम्
तत्त्रिभागैकभागन्तु पटविस्तारमुच्यते  ४५
मध्यपत्रसमायुक्तं वलयद्वयसम्युतम्
तन्तुना बन्धयेद्धीमान् सुधया लिप्य सर्वतः  ४६
तत्पटं गुणधाभज्य मध्यभागे वृषं लिखेत्
वृषभं श्वेत वर्णाभं वृषलक्षणवर्त्मना  ४७
आस्य शुभौ तु कर्तौ तु तन्मध्ये रक्तपीद्यकम्
कर्णिकं पीतवर्णैस्तु तद्वर्णं केसराणि तु  ४८
आसनायत वृत्तन्तु परितश्चतुरश्रकम्
पञ्चवर्णेन संलिप्य पुष्पै रक्तै समन्वितम्  ४९
मृद्धिदं स्फिक् पित्रमुरपित्रपादाधारस्य पित्रकम्
पटाकारेण संलिप्य पञ्चवर्णेन बुद्धिमान्  ५०
घण्टाञ्च हेमवर्णाभां रज्जुरक्तनिभं भवेत्
पुष्पैरक्तैश्च सन्तिलिख्य गळभूषणसम्युतम्  ५१

एवं लक्षणसम्युक्तं विधत्वान्तु वृषभं लिखेत्
शेषं मलं रूपाणि लेखयेत्परितः क्रमात् ५२
अथो भागे बुजं लिख्य पीतवर्णेन सुव्रतम्
तर्पणं सितवर्णाभं तन्नाळं पीतवर्णकम् ५३
नाळाग्रे चोत्पलाकारं रक्तपीतदळान्तरम्
श्रीवत्समरुणाभञ्च स्वस्तिकं पिङ्गळं भवेत् ५४
शंखं वै पीतवर्णन्तु पुच्छाग्रे पीतसम्युतम्
दीपं वै काञ्चनाभास दीपाकारन्तथैव हि ५५
धूपं पिं शङ्खवर्णं यावत् वर्णरजतसन्निभम्
मध्यभागादधो भागे पूर्णकुम्भ समालिखेत् ५६
मध्यभागोर्ध्वभागे तु श्वेतश्छत्रं प्रकल्पयेत्
धूपघरटा गळोधस्ताद्दीपन्तत्कुम्भपार्श्वयोः ५७
वृषाग्रे दर्पणं पृष्ठे श्रीवत्सञ्चोत्तरांशके
शंखं पीठसमायुक्तं पादयोरन्तरं लिखेत् ५८
श्वेतच्छत्रस्य पार्श्वे तु चामरद्वय मालिखेत्
तयोरन्तरदेशे तु पद्ममष्ट दळं लिखेत् ५९
पटस्योभय पार्श्वे तु तत्तदङ्गं समालिखेत्
एव ध्वजक्रमं प्रोक्तन्तस्य यागविधिं श्रुणु ६०

इत्यंशुमान् तन्त्रे ध्वजपटलक्षणविधिपटलः

## ध्वजरोहणविधि

### ध्वजवृक्षवर्कै

क्रमुकं चन्दनं वापि खादिरं नाळिकेरकम्
मधुकमसनं शाखा तालञ्चम्पकमेव च १
त्वक्सारमन्तस्सारञ्च सङ्गृह्ये देशिकोत्तमः
अन्यशूलोक्तवृक्षाणां वक्रं निर्वृणं ऋजुम् २

प्रासादस्य समोत्सेध दुक्षस्थूल समन्तु वा
तद्व्यासद्विगुणोत्सेधं गोपुरोन्दर्पमानकम् ३
एवमुत्सेधमाख्याम्मानाङ्गुल्ये तु कारयेत्
षोडशाङ्गुलमारभ्य त्र्यङ्गुलविवर्द्धनात् ४
अष्टाविंशाङ्गुलं यावद्दराडमूलस्य नाहकम्
एकद्वित्र्यङ्गुलक्षीणमूलाग्रं क्रमात् भृशम् ५
तदग्रे योजये य रन्ध्रतालप्रमाणतः
षट्सप्तयवतालेन ध्वयष्टिस्तु दैविकम् ६
स्कन्धत्रयन्तु दराडाग्रे योजयित्वा विशेषतः
ध्वयष्टिं समाख्यातन्त्रिपादं वार्द्धदैर्घ्यकम् ७
एकद्वित्र्यङ्गुलन्तस्य घनमित्युच्यते बुधः
तदायामं त्रिधा कृत्वा एकांशञ्चतुरश्रकम्
समाश्रं कल्पयेद्धीमां नृत्तं वै चाग्रकान्नितम् ८
शेषं द्रव्याकृतिं कुर्यान्नानालङ्कारसम्युतम्
द्वयं सुषिरसम्युक्तं मध्यजिद्रमथैकशः ९
यष्टेर्दक्षिणभागे तु एकयन्त्रन्निवेशयेत्
तन्मध्ये रज्जुसम्बन्धद्विगुणं मूलमाश्रितः १०
दराडाग्रे वृषभन्यस्त्वा लोहन्दारुमयेन वा
प्रासादाभिमुखं स्कन्धमयं पट्टेन वेष्टयेत् ११
पीठगोपुरयोर्मध्ये वृषपीठाग्रकेऽपि वा
स्थापयेद्विधिवद्विद्वा तजले वेदिकां कुरु १२
गोमयालेपनं कृत्वा पिष्टचूर्णैरलङ्कृतम्
दराडशुद्धिन्ततः कृत्वा गन्धपुष्पादिनार्चयेत् १३
ततः प्रभातसमये सकळीकरणं कुरु
पश्चात् सम्पूज्य गन्धाद्यैः पटकुम्भं यथाक्रमम् १४
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्

पूर्णाहुतिं ततो भुक्त्वा सर्वमङ्गळसम्युतम् १५
परिचारकमाहूय सोष्णीषं सोत्तरीयकम्
घटं समुद्धरेद्धीमान् वृषकुम्भञ्च वर्द्धनीम् १६
अस्त्रेशमूर्तिनं कृत्वा आचार्यं युक्तमाचरेत्
छत्रचामरसम्युक्त सर्वातोद्य समायुतम् १७
ग्रामप्रदक्षिणं कृत्वा ध्वजस्थानं समाविशेत्
पुण्याहं वाचयेत्तत्र वृषकुम्भञ्च तत्पटम् १८
स्थापयेद्विधिना विद्वान् पूजयेत्तु विशेषतः
पटं प्रच्छस्य यद्वापि दर्पणोपरि विन्यसेत् १९
पञ्चगव्याभिषेकन्तु वृषकुम्भाभिषेचयेत्
वर्द्धनीञ्चैव विन्यस्य वृषपीठन्न्यसेत्क्रमात् २०
अर्चनोक्तसमं कृत्वा अष्टपुष्पमर्चयेत्
पटन्निवेद्यमेवं स्यात् धूपदीपादिकन्ददेत् २१
ताम्बूलं वेदसम्युक्तं स्तोत्रनृत्तञ्च गीतकम्
आस्थानमण्टपे चैव महेशं पूजयेत्क्रमात् २२
रज्जुना बन्धयेत्पश्चात् वृषगायत्रिमन्त्रतः
दर्भमाला समायुक्तं क्षुद्रघण्टासमन्वितम् २३
दण्डस्य दक्षिणे भागे आचार्यस्य स्थितिर्भवेत्
आरोपयेत्ततो मन्त्री बहुरूपमनुस्मरन् २४
पटस्य दर्भमाला च आचार्यो मूर्तिपैस्सह
ग्रन्थिं पश्चिम भागे तु शीघ्रं शिष्यावरोहकम् २५
दण्डे सव्य क्रमेणैव कुशैर्मूलेन बन्धयेत्
प्रक्षाळ्यन्दण्डमूलन्तु पञ्चगव्याभिषेचयेत् २६
वृषविद्येशकुम्भैश्च वेद्यूर्ध्वे चाभिषेचयेत्
वरुणादि निर्ऋृत्यन्तं पूजयेत्तु विशेषतः २७
गन्धपुष्पादिनाभ्यर्च्य मुद्रान्नन्दापयेत्ततः

पानीयाचमन्दत्वा धूपदीपादिकन्ददेत् २८
ताम्बूलं बसितन्दद्याद्दर्पणच्छत्रचामरम्
वेदस्तोत्रसमायुक्तं गीतनृत्तञ्च वाद्यकम् २९
आचार्योवाथ शिष्यो वा आशिषो वा स्तुतिं पठेत्
सर्वोपचारैस्सन्तोष्य प्रणिपत्य क्षमापयेत् ३०
महेशञ्चास्त्रमूर्तिञ्च स्वस्थानञ्चैव विन्यसेत्
एवं क्रमेण विधिवत् सन्ध्या शेषं समाचरेत् ३१
सौख्य सन्ध्यावसाने तु ममभक्तैरलङ्कृतम्
स्तोत्रपाठक्रमाहूय गन्धदामञ्च दापयेत् ३२
भुक्तिवैराग्य सन्तोषी तपस्वी मुण्डतस्ततः
कौपीनन्दण्डसम्युक्तमुत्तरीयकमण्डलम् ३३
शलितण्डुलपूर्णेन भिक्षापात्रेण सम्युतम्
तपस्वीनाञ्च दातव्य मम प्रीतिकरं भवेत् ३४
क्रीडाखनित्रं सङ्गृह्य वीथी शुद्धिञ्च कारयेत्
वीथीसम्मार्जनं कृत्वा वालुकेनैव पूरयेत् ३५
सर्वातोद्य समायुक्तं भक्तोत्सवमथाचरेत्
ग्रामप्रदक्षिणं कृत्वा स्वस्थाने चैव विन्यसेत् ३६
यात्रार्थस्नपनं पश्चाद्वास्तु होमन्तु कारयेत्
प्राकारे मण्डपे चैव ग्रामाभ्यन्तरविधिके
पर्यग्निकरणं कृत्वा सायरक्षां समाचरेत् ३७
इत्यंशुमान् तन्त्रे ध्वजारोहणविधिपटलः

## भेरीताडनम्

आचार्यश्शिष्य सम्युक्तो विधिनास्नानमाचरेत्
शुक्लवस्त्रेण संवेष्ट्य सोष्णीषस्सोत्तरीयकम् १
देवाग्रे ध्वजमूले वा देवतावाहनमाचरेत्

स्थण्डिले त्रितयं कल्प्य मध्ये पश्चिम पूर्वयोः २
अस्त्रेशं पश्चिमे स्थाप्य पूर्वे भेरीञ्च विन्यसेत्
तयोर्मध्ये च पुण्याहं वाचयेद्देशिकोत्तमः ३
अस्त्रेश्वरं समभ्यर्च्य नैवेद्यं दापेयेत्ततः
ताम्बूलं दापयेत् पश्चाद्धूपदीपादिकन्ददेत् ४
मध्यपत्रे भवे रुद्रो ब्रह्मा दक्षिण पत्रके
वामे विष्णु समाख्यातं फलकायान्तु पार्वतीम् ५
सेनानी कुम्भ देशे तु तदास्ये विघ्ननायकम्
दण्डाग्रे मदनो ज्ञेयो भास्करो दण्डमध्यमे ६
दण्डमूले तु चण्डेशो लक्ष्मीं पूर्वदळाग्रके
मातरस्सप्तदक्षे तु ज्येष्ठा पश्चिमदिग्दळे ७
कात्यायनी क्रमे रास्याच्छूलमूला मता इमे
इत्येवं शूलमभ्यर्च्य भेरीं सन्ताडयेत्ततः ८
भेरी वस्त्रेण संवेष्ट्य गन्धपुष्पादिनार्चयेत्
नैवेद्यन्दापयेत्पश्चात् ताम्बूलन्धूपदीपकम् ९
आरात्रिन्दापयेत्पश्चात् भेरीमध्ये महेश्वरम्
ब्रह्माणन्दक्षिणेऽभ्यर्च्य वामे विष्णुं समर्चयेत् १०
वलयेर्दक्षिणे सूर्य मितरे चन्द्रमर्चयेत्
सप्तकीलेति मातृश्च नवकीले नवग्रहान् ११
प्रभारे स्कन्दमभ्यर्च्य मस्तके भ्यर्चयेत्क्रमात्
नन्दीशक्रम्मनसाध्यात्वा प्राङ्मुखो वा प्युदङ्मुखम् १२
जयघण्टारवोपेतं वाद्यकर्ता च ताडयेत्
ब्रह्मजज्ञानमन्त्रेण पूर्वं कोणे च ताडयेत् १३
इदं विष्णुरिति मन्त्रेण द्वितीय द्विप्रकारतम्
त्र्यम्बकेन मन्त्रेण तृतीयन्त्रिप्रकारतम् १४
एवं क्रमेण सन्ताड्य पश्चादाहूय वाद्यकान्

शुद्धतोयेन सम्प्रोक्ष्य उपवीतन्तु दापयेत्  १५
तद्धस्ते कुसुमन्दद्यान्नन्दिमन्त्रमनुस्मरन्
तत्पुष्पन्निक्षिपेत् भेर्यान्नमस्तुत्वा तु वाद्यकम्  १६
भेरीस्कन्दसमारोप्य वाद्यकर्ता च ताडयेत्
जयघरटारवोपेतं प्रोक्ष्यकश्चैव ताडयेत्  १७
देवता भवना वाद्यैश्च पादयेन्नाळवित्क्रमात्
पश्चाद्देवान् समाहूय देशिकश्शिष्य एव वा  १८
शङ्करोत्सवसेवार्थं श्रावयेदुत्सवान्तिकाम्
इन्द्रादिलोकपालांश्च रुद्रांश्च वसवाश्विनौ  १९
आदित्याष्टादशगुणै पुस्पेणावाह्यदेशिकम्
अस्त्रेणावाहयेद्धीमान् अर्चयेत्तत्स्वनामतः  २०
हर्मस्याभ्यन्तरे विश्य देवस्याग्रे स्थितो बुधः
देवस्य देवताभवनं सन्निवेद्य च चोत्सवम्  २१
अस्त्रेशं बलिमूर्तिञ्च अन्नलिङ्गञ्च पावकम्
छत्रचामरसम्युक्तन्दीपज्वालासमायुतम्  २२
सर्वालङ्कारसम्युक्तं सर्वातोद्य समायुतम्
वृषादीपरिवाराणां बलिं दद्यात्स्वनामतः  २३
इन्द्रादीशानपर्यन्तन्नित्यवत्पर्वमाचरेत्
ध्वजे ब्रह्मादिभिर्वापि इन्द्रादीनामथापि वा  २४
सिद्धदेवान् समावाह्य बलिमेवं समाचरेत्
एवमावाह्य देवांश्च प्रविशेदालयं प्रति  २५
पादप्रक्षाळनं कृत्वा भूतपीठे बलिं ददेत्
उत्सवं कारयेद्धीमान् ततः कौतुकबन्धनम्  २६
इत्यंशुमान् तन्त्रे भेरीताडनविधिपटलः

## वृषाधिवासम्

सम्पूज्य देव देवेशन्निवेद्यान्तं समाचरेत्
गणेशं पूजयेत् पश्चात् पायसान्नन्निवेदयेत् १
शिवं प्रणत्य विधिवद्विज्ञाप्योत्सवमुत्तमम्
भूषणाद्यैरलङ्कृत्य सुमना देशिकोत्तमः २
अङ्गन्यासकरन्यासं पूर्वोक्तविधिना कुरु
स्थण्डिलं कारयेद्विद्वान् सुश्वेतन्द्रोणशालिना ३
आलिख्य मध्यमे पद्ममष्टपत्रं सकर्णिकम्
रन्ध्रकुम्भं समादाय त्रिसूत्रेणैव वेष्टयेत् ४
विन्यसेत्कलशेनैव पूरयेत् गन्धतोयकम्
वृषकुम्भन्यसेन्मध्ये तस्य वामे तु वर्द्धनीम् ५
अभितः कलशानष्टौ वारुणीद्रींस्तु विन्यसेत्
सकूर्चान् सापिधानां स्तु वस्त्रपल्लवसम्युतान् ६
स्वर्णशृङ्गसमायुक्तौ श्यामऊर्वासमायुतान् ७
पुण्याहं वाचयेत्पश्चात् प्रोक्षयेत्कलशानपि
अभ्यर्च्य गन्धपुष्पाद्यैर्वृषस्थानं समाचरेत् ८
पाद्यमाचमनञ्चार्घ्यं दत्वा तन्दलमन्त्रतः
पञ्चगव्यामृतेनैव स्नापयेच्छुद्धतोयकैः ९
वृषगायत्रिमन्त्रेण स्नापयेद्वृषकुम्भकैः
वर्द्धन्यादीशपर्यन्तं स्नापये स्वस्वमन्त्रकैः १०
गन्धादिभिस्समभ्यर्च्य मुद्गान्नन्दापयेत् बुधः
धूपदीपन्ततो दत्वा आरात्रिन्दापयेत्ततः ११
ताम्बूलन्दापयेत्पश्चात् वृषाग्रे स्थण्डिलं कुरु
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्पुरुषेण तु १२
वृषकुम्भस्य वर्द्धन्यां स्थापयेत्स्थण्डिलोपरि
सकूर्चानुपयोपेतान् फलपल्लवसम्युतान् १३
तस्य मध्ये म्बुजन्ध्यात्वा संकल्प्य वृषवाहनम्

वृषेश्वरं समभ्यर्च्य उत्सवं श्रावयेत् बुधः १४
नमो धर्मस्वरूपाय वेदपादाय गोपते
शङ्करोत्सवसेवार्थं घटेस्मिन् सन्निधिं कुरु १५
वृषेन्द्राग्रे तु विज्ञाप्य कुम्भेद्वा वाहदिनं कुरु
तस्य वामे तु वर्द्धन्यां पूजयेद्विधिना सह १६
चलासनन्तु सङ्कल्प्य कुम्भमुत्थापयेद्बुधः
प्रासादस्त्विष्टदेशे वा मनोरम्येथवा पुनः १७
स्थण्डिलं कारयेत्तत्र स्थापयेत्कुम्भवर्द्धनीम्
स्थिरासनन्तु सम्पूज्य अभितोष्टघटान्यसेत् १८
वृषभम्मध्यमभ्यर्च्य उक्षणीमीशा गोचरे
उक्षाणं शृङ्गिणन्नन्दिं वेदपादञ्च गोपतिम् १९
उग्रशृङ्गं वृषन्नाथं वृषेश्वरमयाष्टकम्
वरुणादिनिर्ऋत्यन्तं मर्चयेत् स्वस्वनामतः २०
तस्याग्रे स्थण्डिलं कृत्वा साष्टपत्रं सकर्णिकम्
दभै पुस्पैस्तिलैर्लाजै पञ्च चूर्णैर्विचित्रितम् २१
ततस्तक्षकमाहूय पटं सङ्गृह्य देशिकः
तत्पटं हृदयेनैव स्थण्डिलं स्थापयेत् बुधः २२
गौर्धेनुहव्या मन्त्रेण पटलोकनमारभेत्
वृषगायत्रिया पश्चात् प्रोक्षये द्दिव्यवारिणा २३
सम्मार्ज्य द्विकुशेनैव वृषमूलमनुं स्मरन्
तद्वृषकुलिकयुक्त द्विकुशाग्रेण देशिकः २४
तदक्षिमोक्षणं कुर्यात् सूर्यसोमाधिदेवतः
जलाधिवासनार्थाय वृषगायत्रिया बुधः २५
पञ्चगव्येन सम्प्रोक्ष्य पवमानमुदीरयन्
गोपतेरम्बिकानाथ देशनात् भक्तवत्सल २६
सर्वानुकूलसम्भोग वृषेन्द्रश्शायितो भवेत्

पुष्पाञ्जलित्रयं कृत्वा वृषेन्द्रं शायितत्विह २७
मनसा भावयेद्विद्वान्मन्त्रन्यासं समाचरेत्
मूर्धादि गळपर्यन्तं शिवतत्वं प्रकल्पयेत् २८
गळादि नाभिपर्यन्त विद्यातत्वं प्रकल्पयेत्
नाभ्यादि खुरपर्यन्तं आत्मतत्वं प्रकल्पयेत् २९
तत्वतत्वेश्वरान्न्यस्त्वा गन्धा पुष्पादिना यजेत्
अग्न्यायतनमासाद्य अग्निकार्यं समाचरेत् ३०
पटकुम्भद्वयोर्मध्ये अग्नेरायतनं कुरु
तन्मध्ये वृषमावाह्य पश्चाद्धोमं समाचरेत् ३१
समिदाज्य चरून्लाजान् सर्षपांश्च यवांस्तिलान्
होमद्रव्याणि सप्तैते विधनाग्नौ तु होमयेत् ३२
शतमर्द्धन्तदर्द्धं वा प्रत्येकं होममाचरेत्
द्रव्यं प्रति विशेषेण हुत्वान्ते स्पर्शयेत् घटम् ३३
द्रव्यं प्रति दशांशेन हुनेत् स्पृष्ट्वा तु तत्घटम्
होमसंख्या जपं कुर्यात् प्रोक्षयेदस्त्रमन्त्रतः ३४
ध्वजकुम्भान्तरेद्विद्वान् वास्तु नाथं बलिं क्षिपेत्
तुभ्यन्नमोस्तु सर्वेश वास्तु नाथ वरप्रभो ३५
एतद्बलिं समादाय रक्षत्वं यागमादिरम्
इति विज्ञापयेद्विद्वान् रात्रौ जागरमाचरेत् ३६
इत्यंशुमान् तन्त्रे वृषाधिवासपटलः

## रथप्रतिष्ठाविधि

### रथलक्षणम्

रथाङ्गञ्च विधिं वक्ष्ये चतुश्चक्रत्रिचक्रधृत्
चतुष्पञ्च वितस्तिर्वा षट्सप्तमष्टमन्तु वा १
त्रिवितस्तिसमारभ्य षडङ्गुलविवर्द्धनात्

पञ्च षट् सप्त विस्तारं पञ्चैव विशालतम् २
सान्तनवा प्रमाणन्तु नेमिनाभिद्वयान्तरम्
भारमध्यगतं वापि प्रमाणं परिकल्पयेत् ३
अक्षोत्तरायतं भारं वा विमानञ्च तदेव हि
तुल्याश्रं वा श्वताश्रन्तमत्पादर्द्धापिकन्तु वा ४
पञ्चदानवहस्तानं षट् षडङ्गुलवर्द्धनात्
सप्तादशान्तसंख्यास्यु भारायामधीयते ५
पञ्च भारां हितां पार्श्वीं मर्द्धभारान्युखायतम्
रविरमनवाष्टौ च सप्त षड्वाङ्गुलास्तु वा ६
पञ्चमात्रचतुर्मात्र तुङ्गतासु दारुजाम्
तिर्यकल्पितकम्पेन दृढभूतसमाहितम् ७
मध्यभारोपरीकृत्य मूर्ध्वभूताग्रनिर्व्युति
तत्रिहस्तार्द्धदन्दीपाग्रं +++ त्रश्मळाकृतिम् ८
मध्या भवमिति प्रोक्तं कृत्वा रे युगभागभात्
फलात्वा प्रस्तरं भारो पविमात्रकलान्वितम् ९
पार्श्वभारात्तमूर्द्धे तु उपधानं विधीयते
अक्षमक्षोत्तरञ्चैव भावं भारोपयानकम् १०
यथेष्टविपुलोत्सेधैर्दारुकीलै दृढीकृतम्
भावतुर्पनोतुङ्गं अङ्गुलीक्षयमेव वा ११
उपधानविधाने तु तुल्यं भारसमन्वितम्
यथा तारदूर्ध्वे तुव्यसार्धविनिर्गतम् १२
तदग्रम्मवाध्हिका युक्तं मृणां प्यावा विचक्षणम्
तदयस्तात्विधानेन अक्षरेक्तर विधीश्वते १३
हस्तं वा दष्ट दशाङ्गुल्यं मृणाळ्यग्रं विशेषतः
कर्कटां ब्रथसम्प्रोक्षणं वक्ष्ये श्रूयतां रविसत्तम
अर्वकामार्थसिध्यर्थं सर्वाभीष्टफलप्रदम् १४

जयदं भूपतेश्चैव सर्वन्तत्रनिवारणम्
दारुसङ्ग्रहमारभ्याचालृये शिल्पिभिस्सह १५
चक्रादि स्थूपि पर्यन्तं सर्वाङ्गञ्चैक कारयेत्
प्रतिष्ठा कारयेत्तत्र यथाशास्त्र प्रमाणतम्
शिल्पिकर्मवसाने तु रथसंप्रोक्षणं कुरु १६
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
सुमुहूर्ते च सुलग्ने तु स्यन्दनमयनमन्तथा १७
निश्चित्य दिवसात्पूर्वे दंकुरार्पणमाचरेत्
रथस्य पश्चिमे भागे मण्डपं कारयेत्तथा १८
षोडश स्तम्भसंयुक्तं द्वादश स्तम्भमेव च
दश हस्तविप्राणां नृपाणान्तव हस्तकम् १९
षष्ठहस्तन्तु वैश्यानां रुद्राणां सप्तहस्तकम्
पङ्क्तिद्वयश्च समायुक्तं तन्मानमधुनोच्यते २०
द्वितलन्नाहसम्भानां दयो भूमौ तु हस्तकम्
धर्मज्ञानञ्च वैराग्यं मैश्वर्यञ्चतुष्टयम् २१
दन्तस्तम्भे चतुर्दिक्षु कोणस्याधिदेवता
बाह्याना द्वादशानान्तु द्वादशादित्य दैवता २२
मण्डपन्तु तथा भज्या वेदिका कुण्डसम्युतम्
वेदिकस्थापनञ्चैव विधिवत्कारयेत् बुधः २३
षडश्रं पूर्वदिग्भागे वेदाश्रं दक्षिणे यथा
अष्टाश्रं पश्चिमे भागे पद्मकुण्डन्तु सौम्यके २४
ऐशान्ये वृत्तकुण्डन्तु पूर्वोक्तविधिना सह
एवं सर्वं समापाद्य मण्डपं भूषयेत्क्रमात् २५
देशिकश्शिष्यसम्युक्तं रथशुद्धिक्रमं तथा
गोमूत्रं गोमयश्चैव जलेन वै तु सेचयेत् २६
प्रक्षाळ्य शुद्धतोयेन पुण्याहं प्रोक्षणं तथा

पञ्चगव्येन सम्प्रोक्ष्य पवमानमुदीरयन्  २७
कौतुकं बन्धयेद्धीमान् स्वर्णं कार्पाससम्युतम्
पुण्याहं वाचयेत्तत्र रक्षासूत्रन्तु धारयेत्  २८
स्थापिका तण्डुलैश्चैव तन्मध्ये कौतुकन्यसेत्
भस्मधारन्न्यसेन्मध्ये न्नागवल्ली दळैस्सह  २९
क्रमुखं बृहती चैव दर्भैश्चैव समण्डितम्
बृहत्सामेति मन्त्रेण भासितं दापयेत्क्रमात्  ३०
लिङ्गस्म भद्रभागे तु पीठे च नाम मध्यमे
महेश्वरादि बेराणां दक्षहस्ते तु बन्धयेत्  ३१
शक्तीनां वामहस्तेन शूलस्य मध्यमे दळे
मण्डपस्तम्भमध्ये च पूर्वस्य दक्षिणे श्रुति  ३२
रथे सिंहासने चैव एवमेव क्रमेण तु
आसने बन्धमे चैव हस्तस्य मणिबन्धके  ३३
वस्त्रेणाश्छादनञ्चैव दर्भेणैवावकुण्डिकम्
महेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः  ३४
कौतुकं बन्धयेद्धीमान् सर्वालङ्कारसम्युतम्
मण्डपाराधनश्चैव विमानं कारयेत्क्रमात्  ३५
जलाधिवासनञ्चैव चक्षुषि मोक्षणं विना
नवग्रहं यजेद्धीमान् नवकुम्भेषु योजयेत्  ३६
विष्णु ब्रह्माणमेवञ्च सर्वदेवाभिकुम्भके
एवं सर्वसमापाद्य रथस्थाने च देशिकम्  ३७
असुरराक्षसाश्चैव भूतगन्धर्वकिन्नरा
ग्ररथस्थानोश्रितन्देवान् गच्छत्वं हि सभीतमे  ३८
बलिदान क्रमेणैव तत्तदेवान् बलिन्ददेत्
भूकारञ्च कूस्माण्डं बलिदानं समाचरेत्  ३९
एवं क्रमेण विधिवत् प्रभाते स्नानमाचरेत्

भस्मन्यासक्रमञ्चैव भूतशुद्धिक्रमन्तथा ४०
मराडपस्य कञ्जने चैव पूर्णाहुतिमथाचरेत्
आचार्यशिष्यसम्युक्तं रथस्थाने प्रवेशयेत् ४१
रथमध्ये समभ्यर्च्य मुक्तिं पाशुपतन्तथा
त्रिणेत्रञ्चतुर्भुजं रौद्रं शिखा कोटि समज्वलम् ४२
वरदाभयसम्युक्तं वाम सप्येक्षशूलधृक्
एवं पाशुपतं ध्यात्वा पुष्पेणैव समर्पयेत् ४३
शतरुद्राधिदेवानां तत्तत्स्थाने समर्चयेत्
सुमुहूर्ते तु मनुप्राप्ते देववस्त्रं प्रपूजयेत्तथा ४४
कुम्भान्तुद्धृत्य शिरसा स्यन्दनं स्यात् प्रदक्षिणम्
रथमस्तकमेवन्तु अभिषेकं समाचरेत् ४५
तत्तत्स्थाने चतुर्दिक्षु दशमूर्ध्याभिषेचनम्
तत्तत्देवान् समभ्यर्च्य तत्तत्कुम्भाभिषेचयेत् ४६
पायसान्निवेद्याथ सर्वालङ्कारसम्युतम्
महेश्वरं समभ्यर्च्य शिवकायां समाचरेत् ४७
सर्ववाद्य समायुक्तं सर्वभक्तजनैस्सह
अथ मराडपसंस्थाप्य पुरायाहं वाचयेत्ततः ४८
सुमुहूर्तत्तत् निरीक्ष्याथ रथारोहणमाचरेत्
ग्रामप्रदक्षिणं कृत्वा पूर्वस्थाने प्रवेशयेत् ४९
महेशं शिबिकेनैव कुर्यादास्थानमराटपे
रथ संप्रोक्षणं प्रोक्तं मकुटारोहणं तथा ५०
एकविंशकुलोभूतान् शिवलोके महीयते
मुच्यते सर्वपापेभ्यो रथसेवापरोचना ५१
आचार्यशिष्यमेवन्तु यथाशक्तिन्तु दक्षिणा ५२
इत्यंशुमान् तन्त्रे रथप्रतिष्ठाविधिपटलः

## रथारोहणम्

रथारोहदिनात्पूर्वे सायरक्षावसानके
तीर्थार्थमङ्कुरं कुर्यात् पूर्वोक्तविधिना गुरुः १
तीर्थानां पूर्वदिवसे रथमारोपयेत्ततः
तद्दिने नित्यसन्ध्यान्ते रथशुद्धिं समाचरेत् २
चक्रादिरथपीठान्ते तैलेनैव तु मर्दयेत्
चित्रवस्त्रैर्वितानैश्च चामरैरुपशोभितम् ३
बध्वास्वर्णदाम्नैश्च रत्नदाम्नैः प्रलम्बयेत्
नानापुष्पैः फलैः पत्रै कदळ्याद्यैश्च शोभितम् ४
रजतार्धशतं भूष्य ध्वजैश्छत्रैश्च भूषयेत्
रथस्य पश्चिमे भागे मराडपं संप्रकल्पयेत् ५
गोमयालेपनं कृत्वा पित्रचूर्णैर्विचित्रकैः
शिबिकाममहेशञ्च सर्वालङ्कारसम्युतम् ६
ग्रारोप्य लक्षणैर्युक्तं रथमराडपमाविशेत्
महेशाग्रे विशेषेण स्थरिडलं शालिनां कुरु ७
विघ्नेशं पूजयेद्धीमान् पुरायाहं वाचयेत्ततः
पञ्चगव्यन्तु संकल्प्य नवकं संप्रकल्पयेत् ८
नवग्रहं यजेद्धीमान् नवकुम्भे सुयोजयेत्
गन्धपुष्पादिनाभ्यर्च्य पञ्चगव्याभिषेचयेत् ९
शुद्धतोयाभिषेकञ्च रथदेवान् समर्चयेत्
चक्रे दराडदिवानाथा हरिर्वज्री द्विदराडके १०
परितः पट्टिकाजाले शतरुद्राः प्रकीर्तिताः
गात्रेषु गात्रबन्धेषु धर्माद्याद्येतिकं क्रमात् ११
गात्रात् गात्रान्तरे वायुश्शैत्यादि गुणसम्युतम्
रथसाधके चोर्ध्वे स्थूपिकायां सदाशिवम् १२
स्कन्धेन्द्रदक्षिणामूर्ति विष्णुब्रह्मा तथैव च

रथप्रान्तं समाश्रित्य लोकपालान्यवस्थितान् १३
रज्ञौ वेद्यान् समभ्यर्च्य चतुर्दिक्षु धरोरगान्
स्वनाममन्त्रैरभ्यर्च्य गन्धपुष्पन्तु धूपकम् १४
तस्मात्कुम्भं समुद्धृत्य रथोर्ध्वे स्थापयेत्ततः
कुम्भात् बीजं समादाय वीरपीठे समर्चयेत् १५
परितो लोकपालानान्तत्तत्स्थानेऽभिषेचयेत्
गन्धपुष्पादिनाऽभ्यर्च्य पायसान्नन्निवेदयेत् १६
ताम्बूलञ्च निवेद्याथ धूपदीपादिकन्ददेत्
मुहूर्तं निरीक्ष्य देवज्ञं रथोर्ध्वे रोपयेत्ततः १७
पीठोपरि संस्थाप्य डोळासिंहासने शिवम्
ततो वलयसम्युक्ततन्तुना बन्धयेद्बुधः १८
चित्रवस्त्रैरलङ्कृत्य गन्धमाल्यादि भूषणैः
पाद्यमाचमनन्दत्वा फलादीनि निवेदयेत् १९
धूपदीपादिकं दत्वा ताम्बूलन्दापयेत्ततः
तन्महेश दक्षिणे भागे स्वासीनन्देशिकोत्तमः २०
षट्सप्तपरिकर्मीणां रोपयेत्तु ततोपरि
घण्टारवसमायुक्तन्दीपज्वालासमन्वितम् २१
रथाग्रे च विशेषेण कूष्माण्डं संहरेत्तथा
रथमाश्रित्य देवानां प्रतिमाप्नोति सर्वशः २२
मद्भक्तानान्तु समाहूय रथमारोपणं प्रभुः
नानावाद्यञ्च घोषञ्च रथाग्रे चैव सङ्गमम् २३
तदन्ते तु विशेषेण यन्त्रस्यारोपणन्ततः
मत्कन्न्यां वाथ मद्दासी सर्वालङ्कारसम्युतम् २४
चित्रवस्त्र समायुक्तं सर्वाभरणभूषिताम्
पञ्चाभिस्सप्तनवभिरेकविंशभिरेव च २५
द्वात्रिंशत्संख्यया चैव यन्त्र्यस्यारोपणन्ततः

डोळस्य चलनं कृत्वा मम प्रीतिकरं भवेत्  २६
तदन्ते विघ्नराजञ्च मूषिके वा रथेऽपि वा
देवदेवोत्सवन्नाथ रथयानस्य पृष्ठके  २७
उमा देवीरथञ्चैव तदन्ते चैव शङ्करम्
ग्रामप्रदक्षिणं कुर्यात् पूर्वस्थाने स्थितं भवेत्  २८
शिबिकायां महेशस्यात् कुर्यादास्थानमण्डपे
फलादीनाञ्च दातव्य धूपदीपादिकन्ददेत्  २९
यात्रार्थस्नपनं कुर्यात् सन्ध्याशेषं समाचरेत्
इत्यंशुमान् तन्त्रे रथारोहणविधिपटलः

## स्नानकर्मविधि

रात्रौ होमावसाने तु महातीर्थं समाह्वयेत्
महेशं वीरशक्तिञ्च ग्रस्त्रमूर्तिन्तथैव च  १
कौतुकं बन्धयेद्धीमान् पूर्वोक्तविधिना सह
शिवाग्रे मण्डपे वापि यागगेह प्रकल्पयेत्  २
स्थण्डिलद्वितयं कल्प्य शूलार्थं करकार्थकम्
पश्चिमे स्थापयेच्छूलन्तदग्रे काकन्न्यसेत्  ३
ससूत्रान् सापिधानां लम्बकूर्चान्वस्त्रवेष्टितान्
सोदकान् पल्लवोपेतान् करकान्नवसंख्यकान्  ४
स्थण्डिलोपरि विन्यस्तान्विघ्नेशं पूजयेत्ततः
पुण्याहं वाचयेत्पश्चात् ग्रस्त्रेशं पूजयेत्ततः  ५
मध्ये मनोन्मनीं पूज्य पूर्वादीशानमन्तकम्
गङ्गा च यमुना चैव नर्मदा या सरस्वती  ६
सिन्धोर्गोदावरी चैव कावेरीताम्रपर्णिका
गन्धपुष्पादिनाभ्यर्च्य स्वस्वनाम्ना तु देशिकः
नैवेद्यन्दापयेद्धीमान्धूपदीपादिकन्ददेत्  ७

दशास्त्रं परितोऽभ्यर्च्य कवचेन तु रक्षयेत्
वस्त्रेणाच्छादनं कृत्वा सन्ध्या शेषं समाचरेत् ८
इत्यंशुमान् तन्त्रे स्नानकर्मविधिपटलः

## यानक्रमविधि

ततो यानं प्रकर्तव्यं विधितोरणसम्युतम्
दर्भमालासमायुक्तन्नानाश्चर्य समन्वितम् १
वीथी सम्मार्जनं कृत्वा प्रोक्षयेच्छुद्धवारिभिः
कदळी क्रमुकैश्चैव सफलैः पूर्णकुम्भकैः २
विचित्र वस्त्रं गन्धञ्च कन्तुकं हिमतोयकम्
दर्पणं केशशोधञ्च कृष्णगन्धञ्च साञ्जनम् ३
उशीरं हरिबेरञ्च कल्हारञ्जातिचम्पकम्
शतपुष्पञ्च दीपञ्च गृहचारं प्रति प्रति ४
पाद्यार्थमृतकन्दद्याम्महेशाग्रे विशेषतः
गणेशं स्कन्दमेवञ्च भूतेशं वृषवाहनम् ५
त्रिपुरान्त्रे वृषारूढं +++++
इन्दुशेखरमूर्तिञ्च गजहारन्नटेश्वरम् ६
सोमास्कन्दञ्च वैवाह्य सुखासने चेकपादकम्
कालारिं कामनाशञ्च दण्डेशानुग्रहन्तथा ७
गङ्गाधरस्वरूपञ्च दक्षिणामूर्तिमेव च
विषप्पहरणञ्चैव चक्रदानस्वरूपकम् ८
लिङ्गोद्भवं महेशञ्च प्रतिमानन्दनं प्रति
तत्तदेवेषु योग्यानां वाहनं संप्रकीर्तितम् ९
प्रथमं खुवाहमाखुञ्च द्वितीयं पिञ्छवाहनम्
तृतीयं भूतवाहञ्च चतुर्थं वृषवाहनम् १०
पञ्चमं शक्तिवैकल्यं षष्ठन्तु गजवाहनम्

सप्तमं नृत्तयानञ्च अष्टमं मृगयात्रकम् ११
नवमं सिंहवाहञ्च दशमं महिषन्तथा
एकादशञ्च डारङ्ग द्वादशी कन्दळी तथा १२
त्रयोदशन्तु वेताळञ्चतुर्दशं कृष्णसारकम्
पञ्चादशं पिशाचश्च षोडशं गरुडकन्तथा १३
सप्तदशञ्च पद्मञ्च अष्टादम्मृगन्तथा
नवदशं व्याघ्रमेवञ्च विंशत् मृगेन्द्रमेव च २४
उक्षाणन्त्वेकविंशश्च द्वाविंशं मकरन्तथा
त्रयोविंशान्नमेवञ्च चतुर्विंशति नागकम् २५
पञ्चविंशति पञ्चास्यं षड्विंशत्मौक्तिकप्रभा
सप्तविंशद्रथञ्चैव शैवादीशोभनान्तकम् २६
यावदुत्सवसंख्यान्ते रथमारोपयेत्ततः
देवानामप्यभावे तु आरूढञ्चन्द्रशेखरम् २७
महेशं वीरशक्तिञ्च रङ्गे वा शिबिकेऽपि वा
शिबिके रोपयेत्तत्र ततो वलयसम्युतम् २८
तन्तुना बन्धयेद्धीमान् दृढवत्परिचारकम्
वस्त्रं गन्धञ्च दामञ्च भूषणाद्यैरलङ्कृतम् २९
महेश्वरादिबिम्बानां यानैर्भक्तजनैर्युतम्
नानादीपसमायुक्तं नानाभक्तजनैर्युतम् ३०
नानाछत्रसमायुक्तं नानाध्वजसमायुतम्
नानापिञ्छसमायुक्तं नानावाद्यसमन्वितम् ३१
चामरन्तालवृन्तञ्च दासिकैश्च प्रदापयेत्
समर्थैः परिचारैश्च खड्गखेटसमन्वितम् ३२
अष्टादशायुधञ्चैव महेशाग्रे प्रतापयेत्
महाशैवास्तदन्ते तु तदन्ते भूपुरांस्तथा ३३
तदन्ते रुद्रगणिकास्सर्वालङ्कारसम्युताम्

तपष्वनस्तदन्ते तु तदन्ते नृपवर्त्तिनम् ३४
महेशन्दक्षिणे पार्श्वे वीरशक्तिं समाचरेत्
आचार्यमूर्तिपैश्चैव दक्षपार्श्वे च वर्तिना ३५
वृषपार्श्वे विशेषेण चण्डेश्वरसमन्वितम्
तत्पार्श्वे सर्वभक्ताश्च सेवार्थवा विशेषतः ३६
वीथि मध्ये तदन्ते तु भक्ष्यादीनि प्रदापयेत्
कदळी नाळिकेरञ्च मातुळङ्गेक्षु दण्डकम् ३७
ताम्बूलन्दापयेत्तत्र आप्यपादि विवर्जयेत्
नृत्तमूर्ते विशेषेण धूपदीपादिकन्ददेत् ३८
मूषिकादिरथान्तञ्च वीथिमध्ये विशेषतः
फलभक्ष्यादिकञ्चैव धूपदीपं विवर्जयेत् ३९
कृत्वा प्रदक्षिणं ह्येवं प्रविश्यास्थानमण्डपम्
इत्यंशुमान् तन्त्रे यानक्रमविधिपटलः

## परिवेषक्रमम्

प्रपामध्ये स्थिते देवा सिंहासने ++ क्षाळयेत्तु विशेषतः
भक्ष्या पूपादिकन्दद्यात् पानीयन्दापयेत्ततः १
ताम्बूलं दापयेत्पश्चात् क्रमुकातृतफलैर्युतम्
धूपदीपन्ततो दत्वा नीराञ्जनमथाचरेत् २
शुद्धनृत्तावसाने तु बहुरूपं समाचरेत्
राजोपचारवत्सर्वं राजधानीति चोच्यते ३
चित्रालङ्कारसंयुक्तं मद्दासिभिः प्रकल्पयेत्
नानादेशयथा वेद्यै द्धर्मयुद्धादिदर्शनैः ४
विनोदवाद्यैरन्यैश्च महालाजादिदर्शनैः
वीणावेणुमृदङ्गैश्च वाद्यैरन्यैश्च शोभितम् ५
आचार्यस्सव्यभागे तु आसीनो वामके नृपः

तयोः पृष्टं प्रदेशे तु शिष्यभृत्यांश्च संस्थिताः ६
गायको वंशकश्चैव सव्यभागे तु संस्थितौ
मर्दको नृत्तकश्चैव वामभागे तु संस्थितौ ७
पार्श्वयोरुभयोश्चैव रुद्रस्य गणिकास्थिताम्
शैवानां भूसुराणाञ्च वामभागे तु संस्थिताम् ८
महेशाग्रे विशेषेण बहुरूपं समाचरेत्
यात्रार्थस्नपनं कुर्यात् सन्ध्याशेषं समाचरेत् ९
इत्यंशुमान्तन्त्रे परिवेषक्रमविधिपटलः

## कृत्तिकादीपविधि

कृत्तिकामासमेवोक्तं दीपपूजनमेव च
ब्रह्मविष्णुश्च संवादे स्वर्गस्तम्भोदितश्शिव १
तदेव रूप सञ्चिन्त्य स्थापयेच्छिवसन्निधौ
विधिवत् दीपपूजाश्च स्तम्भाग्रे तु सुयोजयेत् २
भूसुरैस्तु प्रसादं हि महं ज्वालाधरो हरः
लाजोपचारमेवोक्तं कृत्तिका दिनमेव च ३
मासे तु कृत्तिकाख्येन च नक्षत्रे कृत्तिकाह्वये
पूर्णायां वाथ तद्योगा सर्वकामार्थसिद्धयेत् ४
रव्यस्तमनवेळायां दीपारोहणमारभेत्
कर्तुरष्टमराश्यादिलग्नदोषन्निरीक्षणम् ५
सृष्टिवैनाशिकाक्षादि प्रोक्षणन्नात्रसम्मतम्
रवेरस्तयोत्पूर्वं धामपादावसानतः ६
कालस्तदूर्ध्वयामार्थपर्यन्तः कालयिष्यते
एवन्निश्चित्य काले तु कारयेदङ्कुरार्पणम् ७
यातिथिं मनुप्राप्य उदयं याति भास्करः
यातिथिस्सकला शुक्लपक्षे कृष्णद्विजोत्तमः ८

यातिथिं समनुप्राप्यास्तं व्याति भास्करः
सा तिथि सकला ज्ञेया नक्षत्रेप्येवमेव तु ९
वृश्चिकस्थे दिवानाथे सप्तमर्षे निशाकरे
कृत्तिका ऋक्षसायोगे रात्रौ दीपान् प्रकल्पयेत् १०
वृश्चिकेर्कगते चन्द्रे चाग्निऋक्षे समन्विते
सम्पूर्णरासवा रात्रौ कृत्तिकादीपमाचरेत् ११
दीपकाले कलामात्रं वह्निं भयदि सम्भवेत्
तस्मिन्काले समाकुर्यात् दीपमङ्गलमुत्तमम्
कृत्तिका रोहिणी मिश्रं तद्दिने पर्वसंयुतम् १२
राजाराष्ट्रं सुभिक्षञ्च तद्दिने दीपमुत्तमम्
आलयाभ्यन्तरे चैव विन्यसेद्दीपसंख्यया १३
षट् सहस्रं शिवस्थाने सहस्रशक्तिरेव च
गणेशं वा सहस्रञ्च कार्तिकेया सुसंख्यया १४
दुर्गमृतसहस्रञ्च ज्येष्ठादीपनस्य च
अष्टोत्तरशतं मातृक्षेत्रपालसहस्रकम् १५
दीपसंख्याक्रमं प्रोक्तं सर्वशुद्धिमाप्नुयात्
उत्तमं कपिलासिद्धि सात्विकं दीपमुच्यते १६
महिषञ्चा घृतं मध्यमं राजसदीपमुच्यते
अजाघृतञ्चाधमं तामसदीपमुच्यते
सर्वेषां वृक्षतैलन्तु शिवदीपन्तु वर्जयेत् १७
निमिषं निमिषार्थं वा घृतदीपनिवेदयेत्
तावद्वर्षसहस्राणि शिवलोके महीयते १८
मेरुमदरतुल्यानि कृत्वा पापस्य सञ्चितम्
निर्दहे दीपमात्रेण निमिषार्थेन पार्वती १९
दीपयेकोनसालोक्य द्वाभ्यां सामीप्यमेव च
त्रिभिं सारूप्यमाप्नोति सतुस्सायुज्यमाप्नुयात् २०

त्रकाङ्गुलका ज्वाला श्रेष्ठमध्यममाधमा
तामसञ्चैव पैशाचो दीपोयोग्ये तथास्मृताः २१
भास्करस्योदयात्पूर्वे दीपादेन त्रिनाडिकाः
पूर्ववत्परिसङ्कल्प्य शिवशास्त्रं विधीयते २२
सर्वलोकहितं पुरायं सर्वकाम्यार्थसाधनम्
सर्वशान्तिकरञ्चैव सर्वसस्य विवर्द्धनम् २३
श्रीकरं विजयं पुरायं मायुरराग्यवर्द्धनम्
कोदराडस्थे दीपानाथे उषः काले शिवार्चनम् २४
सहस्रवार्षकी पूजा दिनमेको न लभ्यते
कोदराडस्थ दिवानाथे प्रत्युषः पूजयेत् शिवम् २५
कल्पकोटययुतानान्तु दिनमेको न भ्यते
कोदराडस्थे सवितरि प्रत्युषे पूजयेत् शिवम् २६
द्वादशाब्दं शतं पुरायं निनैके लभ्यते क्रमात्
कोदराडमागतो भानुस्तोत्रैस्सम्पूज्यमीश्वरम् २७
उषः काले समभ्यर्च्य मुद्गान्नन्तु निवेदयेत्
सहस्रशृङ्गिबेरञ्च गुळं दधिमेव च २८
कोदराडस्तु रवे प्राप्ते स्तोत्रैस्सन्तोष्यशङ्करम्
उषः काले समभ्यर्च्य मुद्गान्नन्तु निवेदयेत् २९
मार्गशीर्षमाषे तु पूजायान्तु विशेषतः
प्रत्युषः कालसंप्राप्ते कवाटो कपाटनञ्चेत् ३०
दीपन्तु दीप्यशीघ्रञ्च देवदेवोत्सवञ्चरेत्
दद्ध्योदनं सङ्गरसिम्मरयुक्तञ्जम्बीरसीं एलकाशृंबेरम् ।
निर्माल्यपर्युषितमष्टपुष्पन्देवादि दद्यात् दुदुयादिकाले ३१
दान्तं पयः पक्वफलं पवित्रं तिलञ्च पुष्पान्न सुदीपलाजम् ।
घृतञ्च क्षौद्रं घृतकम्बळञ्च सुगन्धमेषादिषु मासपूजा ३२
आज्यस्नानविधिसहो धर्ममधुनतैषे वः कम्बळम्

फाल्गुन्यां दधिपूजनं दमनकश्चैत्रे ३३
अन्यतः चन्दनं ज्येष्ठे मासि फलत्रयम् ।
शुचिघनं क्षीरं सिता श्रावणे भाद्रेपूपविधिस्तदन्नयजनं
दीपार्चनं कार्तिके ३४
घृतमोक्षन्तु पूजार्थं क्षौद्रपूजायुर्वर्द्धनम्
घृतकम्बधागञ्च मोक्षमारोग्य कोद्भवेत् ३५
दधिपुत्रविवृद्धिस्यादनन्तं श्रीकरमुच्यते
सालोक्यं लभते गन्धं फलमिक्षार्थसिद्धिदम् ३६
शत्रुनाशकरं क्षीरं गौळं प्रीतिकरं भवेत्
माघमासे तु कर्तव्यं घृतकम्बळमेव च ३७
फलप्रदं अपूपन्धनलाभञ्च मन्नादिकामदम्
ब्रह्महत्यादिदोषघ्नं दीपदान प्रभञ्जन ++ ३८
इत्यंशुमान् तन्त्रे दीपसंख्याविधिपटलः

## गोपुरलक्षणविधि

गोपुरस्य विधिं वक्ष्ये श्रूयता द्विजसत्तम
अन्तर्मण्डलसालादिमङ्गळावरणान्तकम् १
शोभार्थरक्षणार्थञ्च गोपुरन्तु प्रकल्पयेत्
द्वारशोभ ++ द्वारप्रासादहर्म्यकम् २
द्वारगोपुरमित्येते पञ्चधा परिकीर्तिताः
एकद्वित्रिदळं वापि द्वारशोभाश्च प्रकल्पयेत् ३
द्वितलन्त्रिचतुस्सौम्यौ द्वारशालाश्च कल्पयेत्
त्रिचतुः पञ्चभूम्यन्तः द्वारप्रासादमाचरेत् ४
चतुः पञ्चतलं वाथ षट्सप्ताष्टतलान्तकम्
द्वारहर्म्यमिति प्रोक्तं पञ्चभूम्यादि भूमिषु ५
कलाभ्यवसानञ्च महागोपुरमिष्यते

अन्तर्मण्डलसाले तु द्वारशोभाञ्च कल्पयेत् ६
द्विसाला त्रिसालापर्यन्तद्वारशालाञ्च कल्पयेत्
त्रिसालावत् वेदसालाद्वारप्रासादमाचरेत् ७
चतुस्सालात् पञ्चसालात् द्वारहर्म्यं प्रकल्पयेत्
पञ्चसालात् रसाला च कल्पयेत् द्वारगोपुरम् ८
अथवा सर्वकालेषु गोपुरन्तु समाचरेत्
शालानामपि सर्वेषां मेक्ष्यातत्रितलं गुरु ९
उपपीठसमायुक्तं विनापात्रोपपीठकम्
उपपीठस्य चोत्सेधं युगांशं विभजेत्ततः १०
अधिष्ठानं शिवांशन्तु पक्षांशमपि मानकम्
शिवांशमञ्च मानन्तु विशेषन्तत्र कल्पयेत् ११
अथवान्यप्रकारेण उपपीठोक्तवक्तवत् गुरु
विस्तारं वाममुत्सेधं प्रोच्यते द्विजसत्तम १२
मूलप्रासादविस्तारं द्विगुणं त्रिगुणन्तु वा
चतुः पञ्च गुणं वाथ शोभादीनान्तु विस्मृतम् १३
तद्व्यासमष्टधा कृत्वा देशका दश भागतः
एकांशरोपयेद्विद्वान् शिवांश रहितं क्रमात् १४
चतुः पञ्च गुणं वा तु षट्सप्तगुणभागिकम्
शोभादिगोपुरान्तानां विपुलं कीर्तितं कृतेत् १५
हर्म्यमानमिति प्रोक्तं हस्तमानवशात्ततः
त्रिहस्तन्तु समारभ्य द्विद्विहस्ताविवर्द्धनात् १६
एकत्रिंशत्करान्तञ्च एकैकन्त्री त्रिमानकम्
शोभादिगोपुरान्तानां क्रमेणैव तु कल्पयेत् १७
पञ्चहस्तसमारभ्य त्रित्रीहस्त विवर्द्धनात्
धातु सप्त त्रिभागान्तं प्रत्येकं पञ्चधा विदुः १८
शोभादि गोपुरान्तानां विस्तारन्तु प्रशस्यते

एवं विस्तारमाख्यातं यामायाञ्च ततश्शृणु १९
सप्तादं सार्धपादेन ++ द्विगुणन्तु वा
द्विगुणन्तु सप्तांशमेवमायां प्रगृह्यताम् २०
अत्रकिञ्चिद्विशेषोऽस्ति श्रूयता द्विजसत्तम
हस्तन्त्रिपादमर्द्धं वा चतुर्भागै +++
हस्तश्चेदमिदं प्रोक्तं वृद्धिं हानि यथोचितम् २१
आयादि शुभसम्युक्तं कल्पयेत् कल्पवित्तमः
विस्तारयाममाख्यातमुत्सेधमधुनोच्यते २२
विस्तारं सप्तधा भज्य शोभोच्चरुप्रभागया
विस्तारमष्टधा कृत्वा सार्द्धं शेषसमन्वितम् २३
द्वारशालोदयं ख्यातं त्रिपादं द्विगुणन्तु वा
द्विगुणं साष्टभागन्तु प्रासादानि तदुच्छ्रयम् २४
उत्तरादि शिखान्तञ्च अत्रोपुन्तु प्रगृह्यताम्
मानसूत्रात् बहिः कर्णकूटकोष्ठादि निव्रकम् २५
कूटकोष्ठादिकानान्तु निप्रं वेशञ्च धामवत्
विस्तारस्य त्रिभागैकं चतुर्भागैकमेव व २६
पञ्चभागे द्विभागं वा सप्तांशे तु त्रिभागिकम्
सालाबाह्ये तु निष्कान्तं सालमध्यञ्च मध्यमम् २७
गोपुरस्य तु निप्रं स्यात् द्वारमानमथ श्रुणु
त्रिहस्तन्तु समारभ्य षट्षडङ्गुलविवर्द्धनात् २८
यावन्नवकरान्तञ्च द्वारव्यासं प्रकल्पयेत्
सपादं सार्धपादं वा त्रिपाद द्विगुणन्तु वा २९
द्वारोत्सेधं प्रकर्तव्यमिष्टमानेन कल्पयेत्
एकाङ्गुलसमारभ्य अङ्गुलाङ्गुलवर्द्धनम् ३०
धात्वङ्गुलविधिर्यावत् सप्तशालैर्विशेषतः
लिङ्गस्य मध्यात् वामे तु द्वामध्यञ्च कल्पयेत् ३१

नवाङ्गुलसमारभ्य त्रितयाङ्गुलवर्द्धनात्
पञ्चाशत् देवमात्रान्तमधोदुम्बरविस्मृतम्  ३२
तत्रिभागेकभागं वा चतुर्भागैकमेव वा
द्वारस्तम्भस्य निष्कान्तमधोदुम्बरमुन्नतम्  ३३
अधोदुम्बरचोत्सेधा एकद्व्त्र्यङ्गुलाधिकम्
ऊर्ध्वो दुम्बरमुत्सेधं होमाद्युत्तरसीमकम्  ३४
द्वारस्तम्भस्य चोत्सेधं कल्पयेत् कल्पवित्तमः
द्वारोच्च ईशभागन्तु त्रिभागमुपपीठकम्  ३५
अधिष्ठानं शिवांशेना द्व्यंशञ्चरणायतम्
सप्तभाष्टं दन्त्रभागन्तु त्र्यंशमुपपीठकम्  ३६
तत्रिभागैकभागेन अधिष्ठानोदयं भवेत्
द्विभाग ++ णायामन्दि भूम्यैवमुच्छ्रयम्  ३७
उपपीठस्यधिष्ठानसमवैस्थलमाचरेत्
उपपीठोदयान्तञ्च स्थलमानं प्रकल्पयेत्  ३८
पूर्वापरे च साले च द्वारस्तम्भञ्च कल्पयेत्
हारांशे कल्पयेद्विद्वान् निष्कान्तं भित्तिविस्मृतम्  ३९
द्वारस्तम्भस्य विस्तारमूर्ध्वायोदुम्बरत्यजेत्
पूर्वेकवाटयोगञ्च स्यात् दारे तु विवर्जयेत्  ४०
द्वारयोगं कवाटञ्च प्रासादोक्तवदाचरेत्
गुणपङ्क्तिं समारभ्य रुद्रपद्यन्त विस्मृतम्  ४१
युग्मं वा युग्मपङ्क्तिं वा कल्पयेत्तु प्रयत्नतः
विस्तारे पञ्चभागै तु गुणांशगर्भगेहकम्  ४२
शेषगुढ्य विशालस्यात् तदर्द्धं ग्रहस्ततः
कर्णकूटन्तु तारांशं शालादीर्घं द्व्यंशकम्  ४३
भारान्तान्तदंशेन विस्तारायाममेव च
द्वितलं ह्येवमाख्यातं त्रितलन्त्वधुनोच्यते  ४४

नवांशं विभजेत् व्यासमायामञ्च तथा भवेत्
नाळिकेहं स्यात् अंशेन ग्रहपिण्डकाम् ४५
अलन्द्रत्वेक भागेन हारव्यासं शिवासकम्
कर्णकूटं शिवांशेन शालादीर्घं गुणांशकम् ४६
शिवांशं पञ्जरव्यासमर्द्धांशं हारयोन्तकम्
एवमादितलं कुर्यात् द्वितलं पूर्वे तु पूर्ववत् ४७
त्रितलं ह्येवमाख्यातञ्चतुर्भूममधोच्यते
द्वितलाद्युगभूम्यन्त निष्कान्तं भित्तिकं विना ४८
पक्षभूम्यादिभूम्यन्तं सार्द्धकोटि समन्वितम्
अंशमर्द्धं त्रिपादं वा सार्द्धकोटि सुविस्मृतम् ४९
मर्द्धकोष्ठांशसंयुक्तं सार्द्धकोटिञ्च सम्प्रकम्
विस्तारे तु दशांशे तु नाळिगेहन्त्रिभागिकम् ५०
सार्द्धांश कुड्य विष्कम्भमंशेनान्धारिकं भवेत्
हाराव्यासमयार्द्धांशं बाह्यभित्तिस्तथैव च ५१
विस्तारन्दशधा कृत्वा कर्णकूटं शिवांशकम्
वेदांशं कोष्ठदैर्घ्यं स्यात् शेषं हारासपञ्जयम् ५२
कर्णकूटांशकन्त्यक्त्वा आयामे तु विशेषतः
कालांशं विभजे दैर्घ्यं पक्षांशं पञ्चकोष्ठकम् ५३
शालायामं रसांशन्तु अर्द्धांशेनैव पञ्जरम्
शेषं हारान्तरं प्रोक्तं बाणभूमिति स्मृतम् ५४
त्रयोदशांशविस्तारन्नाळीगेहेन्द्रयांशकम्
ग्रहपिण्डस्तु भागेन बाह्यभित्तिशिवांशकम् ५५
रसभूम्यादि भूम्यान्तन्नाळिगेहविशालकम्
शालायामन्तु सप्तांशं शेषं हारासपञ्जरम् ५६
++ तु मिख्यातं सप्तभूमिमथ श्रुणु
त्रयोदशांशविस्तारं व्योमांशं कूटविस्मृतम् ५७

शालायामन्तु भूतांशं शेषं हारान्तरं भवेत्
कर्णकूटांशकन्त्यक्त्वा आयामे तु विशेषतः  ५८
शेषाहारान्तरं प्रोक्तं सप्तभूमिमिति स्मृतम्
एवमादितलं कुर्यात् शेषं पूर्वतलोक्तवत्  ५९
विस्तारमनुभागन्तु कर्णकूटं शिवांशकम्
शालायामन्तु सप्तांशं शेषहारासपञ्जरम्  ६०
आयामे तु विशेषेण कर्णकूटांशकं त्यजेत्
रसवेदांशन्दैर्घ्यं पक्षांशं पार्श्वकोष्ठकम्  ६१
शालायामन्तु नन्दांशं सार्द्धांशेनैव पञ्जरम्
शेषं हारान्तरं प्रोक्तं वसुभूम्यैवमाचरेत्  ६२
एवमादितलं प्रोक्तं द्वितलादि च पूर्ववत्
अथवान्यप्रकारेण मूलभूमिवदाचरेत्  ६३
नवभूमितारमेकोनविंशन्तु शंकटविस्मृतम्
शालायामन्तु सप्तांशं शेषं हारा सपञ्चरम्  ६४
कर्णकूटांशकन्त्यक्त्वा आयामे तु विशेषतः
पञ्चत्रिंशांशकन्दैर्घ्यं घनांशं कोष्ठदैर्घ्यकम्  ६५
कलांशं पार्श्वकोष्ठं स्यात् शिवांशेनैव पञ्जरम्
शेषं हारान्तरं प्रोक्तं नन्दभूम्यैवमाचरेत्  ६६
एवमादितलं कुर्यात् द्वितलादि च पूर्ववत्
अथवान्यप्रकारेण आदिभूमिवदाचरेत्  ६७
सप्तादशांशविस्तारं व्योमांशं कूटविस्मृतम्
सार्द्धसप्तांशकं कोष्ठं शेषहारसपञ्जरम्  ६७
एकत्रिंशांशकन्दैर्घ्यं अक्षांशं पार्श्वकोष्ठकम्
सार्द्धनष्टांशकं कोष्ठन्त्रिपादेनैव पञ्जरम्  ६८
शेषं हारान्तरं प्रोक्तन्दश भूम्यैवदाचरेत्
एवमादितलं कुर्या द्वितलादि च पूर्ववत्  ६९

अधोर्ध्वे भूमयस्सर्वे मूलभूमिवदाचरेत्
चतुर्विंशांशविस्तारं कर्णकूटां शिवांशकम् ७०
पक्षांशं पार्श्व कोष्ठं स्यात् नाट्यांशं कोष्ठदैर्घ्यकम्
त्रिपादं पञ्जरव्यासं शेषं हारान्तरं भवेत् ७१
आयामे तु विशेषेण कर्णकूटांशन्त्यजेत्
चत्वारिंशांशकन्दैर्घ्यं धर्मांशकोष्ठदैर्घ्यकम् ७२
कलांशं पार्श्वकोष्ठं स्यात् त्रिपादांशेन पञ्जरम्
शेषं हारान्तरं प्रोक्त रुद्रभूम्यैवदाचरेत् ७३
अंशमर्द्धं त्रिपादं वा पञ्जरव्यांसमुच्यते
शेषं हारान्तरं प्रोक्तं कल्पयेत् कल्पवित्तमः ७४
अधोर्ध्वे मयस्सर्वे पूर्वोक्तविधिना चरेत्
अथवान्यप्रकारेण मूलभूमिवदाचरेत् ७५
तारन्त्रिसप्तभागन्तु कर्णकूटांशिवांशकम्
द्व्यंशं पार्श्वकोष्ठस्यात् नन्दांशमध्यको भवेत् ७६
अर्द्धेन पञ्जरव्यासे शेषं हारान्तरं भवेत्
पञ्चत्रिंशांशमायाम अक्षांशं पार्श्वकोष्ठकम् ७७
शालायमन्तु रुद्रांशन्धर्मांशेनैव पञ्जरम्
शेषं हारान्तरं प्रोक्तं भानु भूम्यैवमाचरेत् ७८
नन्दत्र्यंशविस्तारं चन्द्रांशं कूटविस्मृतम्
पक्षांशं पार्श्वकोष्ठं स्यात् नन्दांशं कोष्ठदैर्घ्यकम् ७९
अंशेन पञ्जरव्यांसं शेषं हारान्तरं भवेत्
सप्तचत्वारिभागन्तु रुद्रांशं कोष्ठदैर्घ्यकम् ८०
पक्षांशं पार्श्वकोष्ठं स्यात् सत्रांशेनैव पञ्जरम्
शेषं हारान्तरं प्रोक्तं त्रयोदशतली भवेत् ८१
एवमादि तलं कुर्यात् शेषं पूर्ववदाचरेत्
त्रयोविंशति विस्तारं व्योमांशं कूटविस्मृतम् ८२

शालायामन्तु रुद्रांशं पक्षांशं पार्श्वकोष्ठकम्
अर्धेन पञ्चरव्यासं शेषं हारान्तरं भवेत् ८३
चत्वारिंशत् त्रियांशन्तु भान्विंशकोष्ठदैर्घ्यकम्
कालांशं पार्श्वकोष्ठं स्यात् अर्धांशेनैव पञ्जरम् ८४
शेषं हारान्तरं प्रोक्तं मनुभूम्येवमाचरेत्
एवमादि तलं कुर्यात् शेषं पूर्वोक्तवत् गुरु ८५
तारषड्विंशदंशेन कर्णकूटं शिवांशकम्
तालायामन्तु रुद्रांशं पक्षांशं पार्श्वकोष्ठकम् ८६
त्रिपादं पञ्जरव्यासं शेषं हारान्तरं भवेत्
एवमादि तलं कुर्यात् द्वितारुदि च पूर्ववत् ८७
तिथिभूमिदं प्रोक्तं कला +++ श्रुणु
एकोनत्रिंशविस्तारञ्चन्द्रांशकूटविस्मृतम् ८८
पक्षांशं पार्श्वकोष्ठं स्यात् रुद्रांशमध्यकोष्ठकम्
अंशेन पञ्जरव्यासं शेषं हारान्तरं भवेत् ८९
आयामेकोनषष्ट्यंशं शालायामन्त्रयो दश
+++ शं पार्श्वकोष्ठं स्यात् सर्वत्रांशेषपञ्जरम् ९०
शेषं हारान्तरं प्रोक्तं आदिभूम्ये च माचरेत्
अधोर्ध्वे भूमयस्सर्वे पूर्वोक्तविधिना कुरु ९१
पङ्क्तिमानमिदं प्रोक्तं गरायमानमथ श्रुणु
उत्तरादि शिखान्तञ्च रसभागविभाजिते ९२
सपांशकपोतोच्चं शिवांशं गळमुच्यते
पादोन त्र्यंशशिखरं शेषं स्थूप्युदयं भवेत् ९३
एवमेव तलं प्रोक्तं द्वितलं श्रुणु सुव्रत
उत्तरादि शिखान्तञ्च रन्ध्रभागविभाजिते ९४
मञ्चमानं सपादांशं पक्षांशं चरणायतम्
कपोतोच्चं शिवांशञ्च सार्धं पक्षांशकं शिरः ९५

शेषं स्थूप्युदयं प्रोक्तं द्वितन्दित्वति विद्यते
उत्तरादि शिखान्तञ्च त्रयोदशविभाजिते ९६
सार्धांशं मञ्चमानं स्यात् सार्धांशोऽङ्घ्रि तुङ्गकम्
सपादांशं कपोतोच्चं कलांशञ्चरणायतम् ९७
मञ्चमानं सपादांशं गळन्तत्सममुच्यते
शिखरं वेदभागन्तु शेषं स्थूप्युदयं भवेत् ९८
रुद्रभूमिमिति प्रोक्तं भानु भूमिमथ श्रुणु
पञ्चाधिकमशीत्यंशं उत्तरादि शिखान्तरम् ९९
त्रिपादान्यंशमञ्चोच्चं त्वंशन्तलिपायतम्
सार्द्धान्यंशकपोतोच्चं चरणं सार्द्धषट्ककम् १००
सपादात्र्यंशमञ्चोच्चं षडंशन्तलिपायतम्
कपोतोच्चं गुणांशन्तु सार्धभूतांशमङ्घ्रिकम् १०१
पातोनत्र्यंशमञ्चोच्चं भूतांशन्तलिपायतम्
सार्द्धपक्षांशमञ्चोच्चं सार्द्धवेदांशमङ्घ्रिकम् १०२
सपादद्व्यंशमञ्चोच्चं वेदांशञ्चरणायतम्
पक्षांशमञ्चमानन्तु सार्धपक्षांशंघ्रितुङ्गकम् १०३
पादोनद्व्यंशमञ्चोच्चं गुणांशं तलिपायतम्
सार्धांशमञ्चमानन्तु सार्धपक्षांशमंघ्रिकम् १०४
पादांशं कपोतोच्चं पक्षांशञ्चरणायतम्
मञ्चमानं सपादांशं गळन्तत्सममेव च १०५
शिखरं वेदभागन्तु शेषं स्थूप्युदयं भवेत्
भानुभूममिति प्रोक्तं त्रयोदशमिदं श्रुणु १०६
उत्तरादि शिखान्तञ्च षण्णवत्यंशकं भजे
युगांशमञ्चमानन्तु सार्द्धसप्तांशमङ्घ्रिकम् १०७
त्रिपादान्यंशमञ्चोच्चं सप्तांशञ्चरणायतम्
सार्द्धान्यंशकपोतोच्चं तलिपं सार्द्धषट्ककम् १०८

सपादत्र्यंशमञ्चोच्चं षडंशं तलिपायतम्
गुणांशमञ्चमानन्तु सार्द्धभूतांशमङ्घ्रिकम् १०९
पादोनत्र्यंशमञ्चोच्चं भूतांशञ्चरणायतम्
कपोतं सार्धपक्षांशं सार्द्धवेदांशमङ्घ्रिकम् ११०
सपादद्व्यंशमञ्चोच्च युगांशञ्चरणायतम्
पक्षांशमञ्चमानञ्च सार्धान्यंशांघ्रितुङ्गकम् १११
पादोनद्व्यंशमञ्चोच्चं पक्षांशञ्चरणायतम्
सार्द्धांशमञ्चमानञ्च सार्द्धपक्षांशमङ्घ्रिकम् ११२
सपादांशमञ्चोच्चं पक्षांशञ्चरणायतम्
शिवांशमञ्चमानञ्च सपादांशगळोदयम् ११३
शिखरं युगभागन्तु शेषं स्थूप्युदयं भवेत्
त्रयोदशतलं प्रोक्तं मनुभूमिमथ श्रुणु ११४
उत्तरादिशिखान्तञ्च अधिष्ठाधिकशतांशकम्
सप्तादयुगमञ्चोच्चं वरंशञ्चरणायतम् ११५
वेदांशमञ्चमानन्तु सार्धसप्तंशमङ्घ्रिकम्
त्रिपादान्यंशमञ्चोच्चं सप्तांशञ्चरणायतम् ११६
सार्द्धान्यंशं कपोतोच्चं तलिपं सार्धषट्ककम्
सप्तादत्र्यंशमञ्चोच्चं षडंशं तलिपायतम् ११७
गुणांशमञ्चमानन्तु सार्द्धभूतांशमङ्घ्रिकम्
पादोन द्व्यंशमञ्चोच्चं भूतांशञ्चरणायतम् ११८
सार्द्धपक्षांशकमञ्चं सार्द्धवेदांशमङ्घ्रिकम्
सपादद्व्यंशमञ्चोच्चं वेदांशञ्चरणायतम् ११९
पक्षांशं मञ्चमानन्तु सार्द्धान्यंशाङ्घ्रितुङ्गकम्
पादोनद्व्यंशमञ्चोच्चं गुणांशन्तलिपायतम् १२०
सार्धांशं मञ्चमानन्तु सार्धपक्षांशमङ्घ्रिकम्
सपादांशञ्च मञ्चोच्चं पक्षांशञ्चरणायतम् १२१

शिवांशं मञ्चमानन्तु गळन्तत्सममेव च
शिखरं वेदभागन्तु शेषं स्थूप्युदयं भवेत् १२२
मनुभूममिति प्रोक्तं तिथिभौममथ श्रुणु
एकविंशत् शतांशन्तु उत्तरादि शिखान्तकम् १२३
मञ्चमानं युगांशन्तु सार्धवस्वंशमङ्घ्रिकम्
सपादयुगमञ्चोच्चं वस्वंशन्तलिपायतम् १२४
युगांशं मञ्चमानन्तु सार्धसप्तांशमङ्घ्रिकम्
त्रिपादान्यंशमञ्चोच्चं सप्तांशञ्चरणायतम् १२५
सार्द्धान्यंशं कपोतोच्चं तालिपं सार्धषट्ककम्
सप्त्यादत्र्यंशमञ्चोच्चं षडंशन्तलिपायतम् १२६
गुणांशमञ्चमानन्तु सार्द्धभूतांशमङ्घ्रिकम्
पादोनत्र्यंशमञ्चोच्चं भूतांशञ्चरणायतम् १२७
कपोतं सार्द्धपक्षांशसार्द्धवेदांशमङ्घ्रिकम्
सपादद्व्यंशमञ्चोच्चं भूतांशञ्चरणायतम् १२८
कपोतं सार्द्धपक्षांश सार्द्धवेदांशमङ्घ्रिकम्
सपादद्व्यंशमञ्चोच्चं वेदांशञ्चरणायतम् १२९
पक्षांशमञ्चमानन्तु सार्द्धान्यंशाङ्घ्रिः तुङ्गकम्
पादोनद्व्यंशमञ्चोच्चं गुणांशञ्चरणायतम् १३०
सार्धांशमञ्चमानन्तु सार्द्धपक्षांशमङ्घ्रिकम्
कपोतोच्चं सपादांशं पक्षांशञ्चरणायतम् १३१
सपादांशञ्च मञ्चोच्चं गळन्तत्सममेव च
शिखरं वेदभागन्तु शेषं स्थूप्युदयं भवेत् १३२
तिथिभौममिति प्रोक्तं कलाभौममथ श्रुणु
त्रिंशत् युगाधिकशतं कृत्वा तु सदनोदयम् १३३
कपोतोच्चं युगांशन्तु नवांशञ्चरणायतम्
वेदांशमञ्चमानन्तु सार्धवस्वंशमङ्घ्रिकम् १३४

सपादयुगमञ्चोच्चं वस्वंशञ्चरणायतम्
युगांशमञ्चमानन्तु सार्द्धसप्तांशमङ्घ्रिकम् १३५
पादोनत्र्यंशमञ्चोच्चं सप्तांशञ्चरणायतम्
सार्द्धन्यंशकपोतोच्चं चरणं सार्द्धषट्ककम् १३६
सपादत्र्यंशमञ्चोच्चं षडंशन्तलिपायतम्
गुणांशमञ्चमानन्तु सार्द्धभूतांशमङ्घ्रिकम् १३७
पादोनत्र्यंशमञ्चोच्चं भूतांशञ्चरणायतम्
कपोतं सार्द्धपक्षांशं सार्द्धवेदांशमङ्घ्रिकम् १३८
सपादद्व्यंशमञ्चोच्चं वेदांशञ्चरणायतम्
पक्षांशं पञ्चमानन्तु सार्धान्यंशाङ्घ्रितुङ्गकम् १३९
पादोनद्व्यंशमञ्चोच्चं गुणांशन्तलिपायतम्
सार्द्धांशं मञ्चमानन्तु सार्द्धपक्षांशमङ्घ्रिकम् १४०
सपादांशं कपोतोच्चं पक्षांशञ्चरणायतम्
मञ्चमानं सपांशगळन्तत्सममुच्यते
शिखरं वेदभागन्तु शेषं स्थूप्युदयं भवेत् १४१
गण्यमानमिति प्रोक्तं मलङ्कारमथोच्यते
ललाटोभयपार्श्वे तु हराष्ट्रकसमुञ्चितम् १४२
युगपञ्जरसम्युक्तं मध्यशाशसमन्वितम्
ग्रायामोभयपार्श्वे तु हाराष्टद्वयसम्युतम् १४३
वसुपञ्जरसम्युक्तं पार्श्वकोष्ठचतुष्टयम्
चतुष्कूटसमायुक्तं मध्यकोष्ठसमन्वितम् १४४
एवमादितलं कुर्यात् पञ्च षट् सप्त भूमिषु
नेत्रयोभयपार्श्वे तु पञ्जराष्टकसंयुतम् १४५
हारार्कसंख्यया युक्तं मध्यशाला समन्वितम्
ग्रायामोभयपार्श्वे तु भानुपञ्जरसम्युतम् १४६
पार्श्वशालाष्टकोपेतं हाराष्टद्वयसंयुतम्

चतुष्कूटसमायुक्तं मध्यशाला समन्वितम् १४७
एवमादि तलं कुर्यात् वसुनन्दशभूतले
ललाटोभयपार्श्वे तु पञ्जराष्टकसम्युतम् १४८
हाराष्टद्वय संयुक्तं पार्श्वशाला चतुष्टयम्
मध्यशाला समायुक्तं विस्तारे तु विशेषतः १४९
आयामोभयपार्श्वे तु हाराद्रियुगसंख्यया
पार्श्वशाला च संख्या च वसु +++ पञ्जरम् १५०
मद्यशालासमायुक्तं चतुष्कूटसमन्वितम्
एवमादि तलं कुर्यात् रुद्रार्काध्वतलं विदुः १५१
नेत्रयोश्च द्विपार्श्वे तु हाराष्टद्वयसम्युतम्
पञ्जराष्टकसम्युक्तं पार्श्वशाला चतुष्टयम् १५२
मध्यशालासमायुक्त विस्तारे तु विधीयते
आयामोभयपार्श्वे तु विंशत् पञ्जरसम्युतम् १५३
हाराभूताष्टसंख्या च पार्श्वशाला च षोडश
मध्यशालासमायुक्तञ्चतुष्कूटसमन्वितम् १५४
मनुभूम्यादि भूम्यन्तं कल्पयेत् आदिभूतलम्
तलप्रतिविशेषेण द्वारं सङ्कल्प्य बुद्धिमान् १५५
मध्य शालांशकं सप्तभागं कृत्वा विशेषतः
द्वभारञ्चरभित्तिं स्यात् शेषं सञ्चरणार्थकम् १५६
अथवान्यप्रकारेण द्वारमानं प्रकल्पयेत्
मूलद्वारस्य विष्कम्भं वसुभागविभाजिते १५७
शिवांशरहितं वाथ पक्षांशं रहितन्तु वा
त्र्यंश रहितं वाथ चतुष्पञ्चांश हीनकम् १५८
शेषं द्वारस्य विस्तारं द्वितलेषु प्रकल्पयेत्
तद्विस्ताराष्टधा कृत्वा एकांशरहितन्तु वा १५९
द्वारविस्तारमेवोक्तं मुपर्युपरि कल्पयेत्

+++ पार्श्वे तु जालकं संप्रकल्पयेत् १६०
ततो द्वारस्य पार्श्वे तु वाच्छया जलकं कुरु
महाद्वारं रसांशे तु एकांशजलकं क्रमात् १६१
रसांशन्तु समारभ्य विंशत् भागान्तकं क्रमात्
नेत्रयो द्विपार्श्वे तु जालकन्त्विष्टमानवत् १६२
मण्टपं वा यथाद्वार शोभांश्चैव प्रकल्पयेत्
दण्डवत् द्वारशालांश्च प्रासादं रस्थवत्कुरु १६३
मालिकाकृतिकर्तव्यं द्वारहर्म्यमिति स्मृतम्
शालाकारं प्रकर्तव्यं महागोपुरमिष्यते १६४
सर्वांश्च गोपुराकारं कल्पयेत् विप्रपुङ्गव
अथवा द्वारशालादि श्रुणु वक्ष्ये शिवेषतः १६५
एकद्वित्रितलं वापि सर्वालङ्कारसम्युतम्
मुखे मुखे महानासि पार्श्वयोर्विंशनासिका १६६
पादप्रत्यल्प नासाध्यं युग्मस्थूपि समन्वितम्
अन्तपादोत्तरैप्युक्तं सर्वालङ्कारसम्युतम् १६७
अतिकामितन्नाम्ना सर्वदेवेषु योग्यकम्
मुखे मुखे च नासि पार्श्वयोर्विंशनासिका १६८
सभाकारं शिरस्कन्धं कान्तं विजयमेव च
एवन्त्रिविधमाख्यात द्वारशोभादिकल्पयेत् १६९
मुखे मुखे महानासि पार्श्वयोश्च तथैव च
नानालङ्कारसंयुक्तं नानास्तम्भ समन्वितम् १७०
विप्रतिकान्तमेवोक्तं वक्ष्ये हञ्च विधावहम्
पूर्ववत् भूमिभागन्तु दिशिभद्रसमन्वितम् १७१
महानासि चतस्राध्य शिरोभद्रसमन्वितम्
अन्तः पादोक्तरैर्युक्तं मधुक्तस्थूपिकान्वितम् १७२
द्वारशाला स्तुतिख्यात द्वारप्रासाद उच्यते

अन्तःपादोक्तरैर्युक्तं अन्धार्याद्यैस्समन्वितम् १७३
द्वारोर्ध्वे रङ्गसंयुक्त भद्रद्वार समन्वितम्
मुखे पृष्ठे महानासि पार्श्वयोर्विंश नाडिका १७४
कूटकोष्ठादि सर्वाङ्ग पूर्वोक्तविधिना कुरु
श्री विशालमिति प्रोक्तं भूमि भागादि पूर्ववत् १७५
पूर्वे परे च नासार्द्धं सभद्रं भद्रनासिका
नानामयूक स्तम्भा नानालङ्कारसम्युतम् १७६
अन्तः पादोत्तरैर्युक्तं हारमध्ये मवारणम्
शालाकृतिशिरोयुक्तं जलकाद्यैरलङ्कृतम् १७७
गणविलालकं प्रोक्तं भूमिभागादि पूर्ववत्
मुखे पृष्ठे च पार्श्वे तु महानासि चतुष्टयम् १७८
स्थूपित्रयसमायुक्तन्धारप्रासादमुच्यते
वक्ष्येऽहं द्वारहर्म्यं स्यात् भूमिभङ्गञ्च पूर्ववत् १७९
सभाशिखरसम्युक्तं स्वस्तिकाकृति नासिकम्
शिखरेव सुनासाध्यं युग्मस्थूपि समन्वितम् १८०
स्वस्तिकाकृतिमेवोक्तं स्वस्तिभद्रमधोच्यते
मुखे मुखे च भद्रं स्यात् शिरश्चायतमण्डनम् १८१
अन्तः पादोत्तरैर्युक्तं युग्मस्थूपिकान्वितम्
द्वारहर्म्यमिति प्रोक्तं श्रुणुगोपुरलङ्कृतम् १८२
चतुर्दिक् भद्रसंयुक्तं अन्तः पादोत्तरैर्युतम्
नानामसूरकस्तम्भं वेदिकाद्यैरलङ्कृतम् १८३
चतुर्दिक्षु महानासि विदिक्षु क्षुद्रनासिका
शालाकंरा शिरोपेतं युग्मस्थूपिकान्वितम् १८४
भूतधातुश्च नन्दाष्ट रुद्राश्च स्थूपिसंख्यकाम्
गोपुरालङ्कृति प्रोक्तं सर्वसालेषु योग्यकम् १८५
ग्रहपिण्ड्यलिन्द्रपीडायां धनभित्तियुतन्तु वा

अलिन्द्रांशे तु मार्गं स्यात् गोपुरं रोहणार्थिकम् १८६
गोपुरस्येवमाख्यातं परिवारविधिं श्रुणु १८७
इत्यंशुमानागमे गोपुरलक्षणविधिपटलः

गर्भग्रहार्धमण्टपलक्षणविधि

पूर्वास्यमुत्तरास्यां वा समं कुर्याद्विचक्षणः
याम्ये च पश्चिमे चैव निष्फलन्तदवाप्नुयात् १
आर्दवस्त्रेण सम्युक्त कर्मकुर्यादनान्द्रितः
वृथा भवति तत्कर्म पुनस्नाने तु शुध्यति २
पुण्यक्षेत्रे नदीतीरे शुद्धदेशे मनोरमे
सङ्गृह्य मृदमादाय तद्गर्तं पूर्ववत् समम् ३
निघट्टनं वालुकाभिर्निम्नोन्नत विवर्जितम्
वास्तुमिष्ट्वा यथाशास्त्रं कृत्वा भूमौ समप्य वै ४
आयादि शुभसंयुक्तं यजमानानुकूलतः
शिलां वा चोष्टिकां वापि दारुमृण्मयमेव वा ५
समाश्रमण्डपं कुर्यादायताश्वमथापि वा
एवं मण्टपनिर्माणस्थाननिर्देशमुच्यते ६
गर्भवेश्मकतालञ्च तत्समञ्चार्धमण्टपम्
तत्समं विस्तृतञ्चैव पञ्चाङ्गुलोन्नतः ७
पञ्चतालायताश्रञ्च वेदतालञ्च विस्तृतम्
विद्याङ्गुलोन्नतञ्चैव निम्नोन्नत विवर्जितम् ८
बेरमण्टपमाख्यातं यद्वा समतलं ततः
गोमयालेपनं कृत्वा वामाद्यैर्वेन मन्त्रवित् ९
गर्भार्द्धमण्टपञ्चैव द्वितालञ्चैकसंख्यया
तत्समं विस्मृतञ्चैव चतुरश्रसमन्वितम् १०
पञ्चतालायताग्रञ्च वेदतालञ्च विस्मृतम्

बेरमराटपमाख्यातं तन्मध्ये तु दळं क्षिपेत् ११
स्थरिडलं पत्रहीनञ्च दसुराणां प्रवेशनम्
अस्त्रमन्त्रं समुच्चार्य पत्रन्तत्रैव विन्यसेत् १२
प्रासादं मसोकल्प्य वेदिका मानमेव च
तस्योर्ध्वे चैव तन्मानं चित्रवस्त्राद्यलङ्कृतम् १३
खेटके पश्चिमे देशे पञ्चपीठञ्च विन्यसेत्
प्रभामराडलसंयुक्तन्दामाधारञ्च विन्यसेत् १४
प्रभामराडलपार्श्वे तु चित्रवस्त्रैरलङ्कृतम्
पूजास्थलं प्रविश्याथ मृङ्गारकजलैर्युतम् १५
पादप्रक्षाळनं कृत्वा तच्छेषं वर्जयेज्जलम्
पुनर्जलं समादाया चम्य विधिना बुधः १६
मराटपान्ते प्रविश्याथ सौरपूजां समारभेत्
वेदज्ञानलयोर्मध्ये सूर्यमूर्तिं शिवायजेत् १७
सकळस्सूर्यरूपन्तु निष्कळश्शिव एव च
देहस्थं पूर्वमाराद्ध्य पश्चाद्देवं यजेत् बुधः १८
सौरे प्रतिम रेखे च चक्रे वापि समर्चयेत्
स्थरिडले पद्ममालिख्य यथा पूर्वोक्तमार्गतः १९
इत्यंशुमानागमे गर्भग्रहार्द्धमराटपलक्षणविधिपटलः

समापति अभिषेककालम्

मार्गशीर्षमासे तु कृष्णपक्षेऽष्ठमि तिथौ
पुरद्वयजयान्ते तु कृष्णशान्यर्थ कारणम् १
रात्रौ प्रथमयामे तु सर्वदैवस्सुपूजितम्
कपिलायां घृतेनैव क्षीरेणैवाभिषेचयेत् २
स्तुत्वा द्वादशभिमनामै सम्पूज्य परमेश्वरम्
अष्टोत्तरशतं वक्ष्ये स्नपनं भुक्तिमुक्तिदम् ३

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः
प्रोक्षणान्ते प्रतिष्ठान्ते चोत्सवान्ते तथैव च ४
सङ्क्रान्ति द्वयोपादे षडशीति मुखेषु च
सिनिबालौ कुसौचैवा हृदयान्तु विशेषतः ५
राजाभिषेकसमये कर्तृजन्मदिनेऽपि वा
स्नपनं कारयेत्तत्र सर्वपापनिकृन्तनम् ६
रोहिण्यां शनि संयोगे गुरुपुष्ये तथैव च
आदित्य हस्तसंयुक्ते भृगुरेवति संयुते ७
कुजाश्वनी समायुक्ते बुधानुराधमेव च
सोमवैष्णवसम्युक्ते यजमानानुकूलके
अष्टम्याञ्च चतुर्दश्याममावास्याश्च संक्रमे ८
यजमानस्य जन्मर्क्षे कुर्यात् शङ्खाभिषेचनम्
शङ्खचन्द्रादिदैवत्यं कुक्षिवरुणमेव च ९
प्रष्ठे प्रजापतिश्चैव शङ्खश्चन्द्रादिदेवताः
रुद्रश्च सहलक्ष्मी च कुक्षिं गङ्गाधिदेवताः १०
पूरितन्नवतीर्थन्तु शङ्खमित्येतु देवताः
पादं वै भास्करञ्चैव द्विपादञ्चन्द्रदेवताः ११
त्रिपादमिन्द्रदैवत्यं वलयश्चन्द्रदेवताः
वक्ष्ये नक्षत्रयजनं श्रूयतां रविसत्तम १२
प्रशमनं परसेना ++ पलायनम्
सर्वशत्रुक्षयकरं सर्वाभीष्टस्य सिद्धिदम् १३
अकालमृत्युशमनमवग्रहविनाशनम्
राजाभिषेकसमये तस्मात् जन्मदिनेऽपि वा १४
चतुर्द्दश्यामधाष्टम्यां पक्षयोरुभयोरपि
रणानामवसाने वा योगयुक्तादिपि वा १५
नक्षत्रं यजनं कुर्यात् सकलाभीष्ट सिद्धये

वारपूजाविधिं वक्ष्ये श्रूयतां रविसत्तम १६
अपमृत्युविनाशार्थं महामारी विनाशनम्
वक्त्रार्थञ्च जयार्थञ्च ग्रहपीडाविनाशनम् १७
ग्रामशान्तिकरं प्रोक्तं नृपाणां जयदं भवेत्
कर्तृर्वाञ्छा फलं सिद्धैर्वारपूजा फलान्वितम् १८
सौरवारं समाभ्यर्च्य मन्दवारान्तमर्चयेत्
प्रातस्सन्ध्यार्चनान्दे तु वारपूजां समाचरेत् १९
अब्जञ्चैव तु पुन्नागं रक्ताब्जञ्चैव पाटली
चम्बकं जातिपुष्पञ्च नीलोत्पलं यथा क्रमम् २०
सौरादिशनिवारान्तमर्चयित्वा विशेषतः
दूर्वा बिल्वपत्रञ्च धातकी तुळसी तथा २१
दान्दञ्च डाडिमी पत्रं विष्णुक्रान्तं तथैव च
एते सौरार्चनारभ्यर्च्य रक्तचन्दनमेव च २२
श्वेतचन्दनकर्पूरं कुङ्कुमञ्चागरून्तथा
कृष्णागरुञ्च कस्तूरिहिमतोयन्तथैव च २३
एते सौरादिनारभ्य नैवेद्यञ्च ततक्रमम्
पयसान्नञ्च दध्यन्नं मुद्गान्नञ्च हरिद्रकम् २४
गुळान्नमपि शुद्धान्ना तिलान्नञ्च यथाक्रमम्
नैवेद्यन्दापयेत् तस्मात् ताम्बूलञ्च निवेदयेत् २५
इत्यंशुमान्तन्त्रे सभापति अभिषेककालविधिपटलः

## क्षणिकलिङ्गपूजाफलन्

सिकतं मुक्तिदं प्रोक्तं तण्डुलं भुक्तिदायकम्
नदी मृत्वात्मशुद्धिस्यात् मन्नमायुष्यवर्द्धनम् १
गोमयं रोगनाशार्थं नवनीतं सुखप्रदम्
रुद्राक्षं रुद्ररूपत्वं पिष्टं पुष्टिप्रदायकम् २

गन्धदीप्तिकरञ्चैव कूर्चं सौभाग्यमेव च
पुष्पं भोगार्थमेवन्तु जलं सायुज्यमेव च ३
सर्वपापहरं भस्म गुळं प्रीतिप्रदं भवेत्
फलञ्चाभीष्टसिध्यर्थं पल्लवं सद्गुणप्रदम् ४
क्षणिकानान्तु लिङ्गानां फलमेवं प्रकीर्तितम्
क्षणिकं सिकदादिञ्च पूजयेत्तु विधानतः ५
स्नपनावाहनञ्चैव सर्वं मानसकल्पनम्
अर्चनान्ते विसृज्याथ न प्रमाणन्न च स्थिरम् ६
रुद्राक्षं क्षाळना शुद्धिरन्येषां परिवर्जयेत्
क्षणिकार्चनमेव स्यात् गुरुमार्गेण दृश्यते ७
क्षणिकादिनिवेद्यञ्च प्रथुकं गुळमुद्गकम्
फलादिञ्चैव नैवेद्यमेवमेव क्रमेण तु ८
चित्रञ्चैवार्थचित्रञ्च पटचित्रं क्रमेण तु
सौम्यञ्च चित्रभेदं स्यादर्धचित्रञ्च भित्तिकम् ९
पटे तु पटचित्रं स्यात् त्रिविधं लिङ्गमर्चयेत्
सौधजं सुखमाप्नोति सौन्दर्यभित्तिचित्रके १०
पटचित्रे श्रियञ्चैव चित्रलिङ्गार्चनात्फलम्
मण्डलद्वितयं प्रोक्तं पद्मं वा लिङ्गमेव वा ११
पद्मे तु श्रियमाप्नोति लिङ्गे वा सर्वकामदम्
क्षणिका लिङ्गादिभेदानां फलमेवं प्रकीर्तितम् १२
तेषु भेदेषु लिङ्गेषु चललिङ्गं विशेष्यते
मनसात् मण्डलं श्रेष्ठं मण्डलात् क्षणिकं भवेत् १३
क्षणिकात् फलमुत्कृष्टं पटञ्चैव ततः परम्
पठादाभासमुत्कृष्टं माभासात् बिम्बमुच्यते १४
बिम्बाद्वै लिङ्गमुत्कृष्टं लिङ्गद्वै निष्कळं परम्

## आशौचपूजाविधि

सूतके प्रेतकाशौचे प्यात्मार्थयजनं स्मृतम्
पूजालोपं न कर्तव्यस्सूतके प्रेतकेऽपि च १
शिवमन्त्रेण कर्तव्यं स्नानमात्रेण शुध्यति
आशौचान्तं भवेत्तत्र पद्मपत्रमिवाम्भसा २
पूजान्ते प्रविशेच्चेदमाशौचञ्च विशेषतः
एवं लिङ्गार्चनं कुर्यात् काम्यानुष्ठानहीनकम् ३
आशौचान्ते तु कर्तव्यं नित्यकाम्यमनुष्ठितम्
काम्यानुष्ठानहीनन्तु तद्दिने द्विगुणञ्चरेत् ४
एवं वै शुद्धशैवनां विप्रादीनान्तु कथ्यते
सूतके प्रेतके कुर्यात् तत्स्वयं लिङ्गपूजनम् ५
स्वकर्मानुष्ठितव्यन्तु जलहीनन्तु भस्मकम्
मानसञ्च यजेद्धीमान् सर्वमानसकल्पनम् ६
तल्लिङ्गं पूजयित्वा तु गुरुणा वा स्वजातिना
अनेनैवार्चनं कुर्यात् अन्ते पुष्पाञ्जलि त्रयम् ७
आशौचान्ते च कर्तव्यं पूर्वमार्गेन याजनम्
कथं पुष्पवती नारी अर्चनं कुरुते वद ८
अन्तर्यागप्रकर्तव्यं स्तया पूर्वदिनत्रयम्
चतुर्थे दिवसे स्नात्वा गव्यं प्राच्य यजे तु सा ९
चोरैर्लिङ्गं गृहीतञ्चेन्मनसा तु यजेत्तदा
चत्वारिंश दिनान्तञ्च उपवासञ्च कारयेत् १०
नाळिकेरोदकेनैव क्षीरेनैव फलादिना
आत्मानं रक्षयेद्धीमान् शिवध्यानपरायणम् ११
तस्मात्सर्वप्रयत्नेन तल्लिङ्गं ग्राह्यमेव च
लब्धञ्चेत् तत्समादाय प्रीतियुक्तो विशेषतः १२
लिङ्गशुद्धिं क्रमात्कृत्वा पूजयेत् पूर्ववद्बुधः

तल्लिङ्गं तत्रालब्धञ्चेत् नवलिङ्गन्तु सङ्ग्रहेत् १३
स्वगुरोर्लिङ्गमादाय पूजयेत् पूर्वमार्गतः
दृष्टञ्चेत्पूर्वलिङ्गन्तु द्वयं संपूजयेत्क्रमात् १४
तस्मात्सर्वप्रयत्नेन मरणान्तं यजेत्सदा
केवलं सहजं मिश्रं यजनन्त्रिविधं भवेत् १५
केवलं लिङ्गमेकं स्यात् सहजं पञ्चबेरकम्
महेश्वरादिबेराणां सहितं मिश्रमुच्यते १६
गणेशं स्कन्दबेरञ्च शक्तिञ्च वृषभन्तथा
लिङ्गेनैव समाख्यातं सहजञ्चेति कीर्तितम् १७
सहजेन समायुक्तं महेशं नृत्तमूर्तिकम्
काम्यार्थं थनि बेराणि सहितं मिश्रमुच्यते १८
यजनं त्रिविधं प्रोक्तं उत्तमं मध्यमाधमम्
केवलं शिवमन्त्रैस्तु यजनञ्चोत्तमं भवेत् १९
वैदिकैश्शिवमन्त्रैस्तु यजनं मध्यमं भवेत्
केवलं वैदिकैर्मन्त्रैर्यजनञ्चाधमं भवेत् २०
केवलं शैवकैर्मन्त्रैर्यजेदात्मार्थमुत्तमम्
उत्तमादि विशेषेण पूजात्रैविद्ध्यमुत्तमम् २१
आत्मार्थं पूजयेद्विद्वान् यथा शक्त्यानुरूपकम्
द्वारादि चण्डपर्यन्तं यजनञ्चोत्तमं भवेत् २२
द्वारादि च निवेद्यान्तं यजनं मध्यमं भवेत्
स्नानञ्चैव निवेद्यञ्च यजनञ्चाधमं भवेत् २३
सर्वोपचारः कर्तव्यो विशेषः कश्चिदेव हि
नित्योत्सवञ्च भोगाङ्गं सायं रक्षा विधानकम् २४
उपसन्धिं विनाकुर्यादात्मार्थयजनं क्रमात्
द्वारादि चण्डपर्यन्तमुत्तमत्वति कीर्तितम् २५
द्वारादि च निवेद्यान्तं मध्यमं परिकीर्तितम्

यथा सम्भव काले तु यथा सम्भव नाडिका २६
कालादि क्रमणे प्राप्ते प्रायश्चित्तन्न कारयेत्
जनिते चित्तसन्तापे व्याधिभिन्निहिते सति २७
कार्यादि पादसंरोधे व्यार्द्धव द्रवणादिषु
स्नानहीनन्तथा चैव पादप्रक्षाळनन्ततः २८
भस्मोद्धूळनकं कृत्वा अर्चयेत्तु विशेषतः
अर्चनायामशक्ताश्चेत् स्पर्शनञ्चापि कारयेत् २९
पुष्पन्तु मस्तकेन्यस्य मूलमन्त्रमनुस्मरन्
स्पर्शने वाप्यशक्तश्चेत् लिङ्गदर्शनमेव च ३०
खेटके पश्चिमे देशे द्वारं सम्पूज्य देशिकः
खेटकं दक्षदेशे तु स्वासीनो देशिकोत्तमः ३१
सम्पुटीकृत्य जान्वन्तं पादाग्रन्दक्षिणं परम्
अधस्सर्वं प्रकुर्वीत रुचिरासनसंज्ञकम् ३२
रुचिरासनमाख्यातं आसीनञ्चासनोपरि
हिमं मृदु च शीतञ्च पद्मन्निर्दहते यथा ३३
तथा घोरं प्रशान्तोऽपि पापनिर्दाहकारकः
तस्मादेतेन वचसा उत्तराभिमुखे यजेत् ३४
इत्यंशुमान् तन्त्र आशौचविधिपटलः

## चूर्णोत्सवम्

अपरो दिवसे चैव चूर्णोत्सवमथाचरेत्
बलिदानोत्सवं कृत्वा यानञ्चूर्णोत्सवन्तथा १
देवाग्रे च शिवस्थाने तीर्थतीरे मनोरमे
गोमयालेपनं कृत्वा पिष्टचूर्णैरलङ्कृतम् २
स्थण्डिलं कल्पयेत्कोणे मध्ये पूर्वे च पश्चिमे
दक्षिणे कल्पयेद्विद्वान् साष्टपत्रं सकर्णिकम् ३

मध्यमे लूखलन्यस्त्वा वस्त्रेणैव वेष्टयेत्
विघ्नेश्वरं समभ्यर्च्य नाळिकेरन्निवेदयेत् ४
दक्षिणे स्थण्डिले मध्ये अस्त्रमूर्तिं समर्चयेत्
जीवाशक्त्यग्निदेशे तु नैर्ऋतौ विघ्ननायकम् ५
स्वाहा शक्तिस्त्वनिले समाङ्गास्त्वीशगोचरे
स्वनाममन्त्रैरभ्यर्च्य धूपन्दत्वा समाचरेत् ६
भेरीं वस्त्रेण संवेष्ट्य चार्चयेत्पूर्वमण्डले
धूपन्दत्वा विशेषेण भेरी ताडनकं विना ७
वस्त्रेण वेष्ट्यमुसलं कूर्चं बध्वाथ तद्वयो
मुसलं रुद्रदैवत्यं वैष्णवं स्यादुलूखलम् ८
शूर्पं वै ब्रह्मदैवत्यमर्चयेत्तत्स्वनामतः
घृतैश्शिरोर्पणं कुर्यात् पूर्वोक्तविधिना सह ९
द्रोणार्द्धं वा तदर्धं वा शुष्कराजनिकान्ततः
सशुष्कां रजनीं क्षिप्त्वा त्वर्चयेम्मूलमन्त्रतः १०
निक्षिप्योलूखले मध्ये चूर्णयेद्देशिकोत्तमः
अस्त्रेणैव तु मन्त्रेण कुट्टयेम्मुसलेन तु ११
पश्चादाहूय गणिका भक्तादि स्तोत्रपाठकान्
गन्धं पुष्पञ्च दातव्यं वस्त्रं दत्वाथ तद्वयोः १२
तयोर्मुसलमुद्धृत्य चूर्णं गानसमन्वितम्
कुटयेत्तान् विशेषेण शङ्खध्वनिसमायुतम् १३
स्तोत्र पाठमाहूय दक्षिणान्दापयेद्बुधः
तच्चूर्णन्तु समुद्धृत्य सहृदा देशिकोत्तमः १४
चूर्णं तैलसम्मिश्रं दूर्वाङ्कुरसमन्वितम्
पञ्चभागन्तु सङ्कल्प्य लिङ्गार्थं प्रतिमार्थकम् १५
उत्सवप्रतिमार्थञ्च त्रिशूल्यार्थं विशेषतः
परिवारार्थमेकञ्च धूपदीपादिकन्दत्वा चूर्णन्दत्वा भटोजनः

चूर्णोत्सवविधि प्रोक्तं तीर्थयानं समाचरेत्
इत्यंशुमान्तन्त्रे चूर्णोत्सवविधिपटलः

## ध्वजावरोहणम्

पर्यष्टिकं समाहूय सोष्णीषस्सोत्तरीयकम्
सङ्ग्राह्य तीर्थवर्द्धन्यान्त्रिशूलेन समन्वितम् १
महेशं शिबिकारूढं गुह्यके वीरशक्तिकम्
सर्वातोद्य समायुक्तसर्वालङ्कारसम्युतम् २
गच्छेद्भक्तजनैस्सार्द्धं तीर्थस्नानं समाविशेत्
तीर्थतीरे प्रभामध्ये महेशं वीरशक्तिकम् ३
पाद्यमाचमनन्दत्वा फलादीनि निवेदयेत्
ताम्बूलञ्च निवेद्याथ धूपदीपादिकन्ददेत् ४
तस्य पश्चिम भागे तु स्नानार्थं संप्रकल्पयेत्
शूलञ्च तीर्थवर्द्धन्या स्थापयेत्स्थण्डिलोपरि ५
विघ्नेशं पूजयेद्धीमान् पुण्याहं वाचयेत्ततः
पञ्चगव्यन्तु सङ्कल्प्य नवकं संप्रकल्पयेत् ६
तीर्थाधिवासवर्द्धन्या संस्नाप्य जलमध्यमे
दशास्त्रं परितोऽभ्यर्च्य गन्धपुष्पञ्च धूपकम्
सतैलं रजनीन्दत्वा दूर्वाग्रं बिम्बमूर्धनी ७
पश्चाद्भक्तजनेऽभ्यश्च दत्वा तैलं हरिद्रकम्
देवन्देवीञ्च सङ्गृह्य त्रिशूलेन समन्वितम् ८
वारिमध्ये तु संस्थाप्य सर्वैषान्त्याज्यकौतुकम्
श्रीरुद्रं पञ्चशान्तिञ्च चमकं रुद्रसूक्तकम् ९
जपेयु ब्राह्मणास्सर्वे जलक्रीडां समाचरेत् १०
प्रपामध्ये विशेषेण बिम्बान् संस्थापयेत्ततः
स्नपनैरभिषिच्याथ नैवेद्यन्दापयेत्ततः ११

ताम्बूलन्दापयेद्धीमान्धूपदीपादिकन्ददेत्
समर्थैः परिचारैर्वा शीघ्रं गत्वालयेऽपि वा १२
आस्थान मण्डपे स्थाप्य ब्रह्मघोषसमन्वितम्
ताम्बूलं रजनीयुक्तं हिमतोयेन सेचयेत् १३
आचार्यो हस्तमुद्धृत्य द्विजहस्ते प्रदापयेत्
एतैरग्निश्च मन्त्रेण आशिषो वाचमब्रुवन् १४
द्विजहस्तात् समादाय देवस्य मकुटे न्यसेत्
पाद्यमाचमनन्दत्वा भक्त्यादीनि निवेदयेत् १५
वेदध्वनिसमायुक्तं स्तोत्रध्वनि समन्वितम्
नृत्तगीतञ्च वाद्यञ्च मूलस्थाने प्रवेशकम् १६
इत्यंशुमान् तन्त्रे ध्वजावरोहणविधि

## कुम्भपूजा

सौख्यसन्ध्यार्चने चैव योगेशं पूजयेत्ततः
पूर्णाहुतिन्ततो दत्वा स्विष्टातमाचरेत् १
कुण्डेष्वग्निं विसृज्याथ कुम्भमध्ये तु योजयेत्
नैवेद्यन्दापयेत्पश्चात् धूपदीपादिकन्ददेत् २
द्वारदेवान् समभ्यर्च्य क्षुद्रघण्टा तु ताडयेत्
लिङ्गशुद्धिक्रमं कृत्वा यागधामं प्रविश्य च ३
परिचारकमाहूय मूर्तिदेशे घटन्न्यसेत्
स्वस्तिसूक्तसमायुक्तं क्ष्वेळं वा विशेषतः ४
गीतवाद्यसमायुक्त दीपज्वालासमन्वितम्
छत्रचामरसंयुक्तं कृत्वा धामप्रदक्षिणम् ५
गर्भगेहं प्रविश्याथ स्थापयेत्स्थण्डिलोपरि
पाद्यमाचमनन्दत्वा धूपदीपादिकं ददेत् ६
कुम्भाद्देवं समादाय लिङ्गमध्ये समर्चयेत्

गौरीं पीठे समावाह्य कुम्भानामभिषेचनम् ७
परितो लोकपालानां पटसंस्नानमाचरेत्
मन्त्रपुष्पन्ततो दद्यान्मन्त्रान्नञ्च निवेदयेत् ८
स्राचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुळीयकैः
दक्षिणान्दापयेत्पश्चात् प्रागुक्तविधिना सह
एवं कृत्वा विशेषेण सन्ध्याशेषं समाचरेत् ९
इत्यंशुमान् तन्त्रे यागकुम्भाभिषेकपटलः

## ध्वजावरोहणविधि

ध्वजावरोहणं पश्चात् द्रात्रौ होमावसानके
ध्वजाग्रे स्थरिडलं कृत्वा विघ्नेशं पूजयेत्ततः १
पुरयाहं वाचयेत्तत्र प्रोक्षयेदस्त्रवारिणा
ध्वजावरोहणं कृत्वा वृषगायत्रिमन्त्रतः २
स्रवतार्घ्यं पटस्थञ्च योजयेद्वृषभं वृषे
वृषभं स्नपनं कृत्वा गन्धपुष्पादिभिर्यजेत् ३
मुद्गान्नञ्च निवेद्याथ ताम्बूलन्दापयेत्ततः
धूपदीपादिकं दत्वा सन्तोष्य वृषमूर्तिनम् ४
इत्यंशुमान् तन्त्रे ध्वजावरोहणविधिपटलः

## प्रायश्चित्तविधि

प्रायश्चित्तविधं वक्ष्ये श्रूयतां रविसत्तमः
प्रायो विनाशमित्युक्तं श्चित्तं सन्तानमुच्यते १
विनाशस्य तु सन्धानं प्रायश्चित्तमिति स्मृतम्
ब्राम्मम्मुरटत् मारभ्य क्षेत्रपालार्चनान्तकम् २
क्रियायां करणे चैव व्यत्यासे विपरीतके
विस्तृते ++++ प्रायशित्तं विधीयते ३

वैरिञ्चे तु मुहूर्ते तु आचार्योत्थापनन्नयेत्
तस्य वायुर्जपेद्धीनं सावित्रीन्तु शतं जपेत् ४
मूलेनैव +++ तद्दोषशमनं कुरु
विध्युस्नानहीने च महामारीप्रवर्तते ५
तद्दोषशमनार्थाय पवमानजपेद्गुरुः
मन्त्रस्नानन्ततः कृत्वा यावत्स्नानं समाचरेत् ६
देवादि तर्पणे हीने पुत्राणां दोषकृत् भवेत्
तद्दोषशमनार्थाय पुनस्नानं समाचरेत् ७
तर्पणं पूर्ववत् कृत्वा विधिना देशिकोत्तमः
सन्ध्या वन्दनकाले तु मन्त्राणां विप+ तके ८
क्रियाणां विपरीते तु कालातिक्रमणे सति
सावित्री जपहीने तु ब्राह्मन्तेजः प्रणश्यति ९
तद्दोषशमनार्थाय पुनस्नानं समाचरेत्
दशकृत्वोभिमन्त्र्यापस्सावित्र्या पिबेत् बुधः १०
पुरोक्ते वदनष्ठेयन्तदहश्चोपवासयेत्
आद्रवस्त्रेण सम्युक्तः कुर्यादतन्द्रितः ११
प्रयाभवततत्कर्म पुनस्नानेन शुध्यति
पूर्वास्य उत्तरास्यो वा सर्वं कुर्याद्विचक्षणः १२
याम्ये च पश्चिमे चैव निफलन्तदवाप्नुयात्
भस्मन्यास विहीने च सकळी करणहीनके १३
प्रदक्षिणविहीने च आचार्यन्नाशयेद्ध्रुवम्
तद्दोषशान्तये धीमान् मूलमन्त्रशतञ्जपेत् १४
भस्मन्यासादिकं सर्वं पुनः कुर्याद्विशेषतः
पञ्चघोषविहीने च सामान्यार्घ्यं विहीनके १५
द्वारपालार्च्चनाहीने भोगाङ्गस्यालये तथा
बधिरत्वमनादृष्टिः पैशाचात् भयमादिशेत् १६

तद्दोषशमनार्थाय नन्दिमन्त्रं शतञ्जपेत्
पञ्चब्रह्मतत पश्चा मूलमन्त्रं शतञ्जपेत् १७
पुनश्च पूर्ववत्कृत्वा सर्वकर्म्माणि कारयेत्
पुनर्व्यञ्जनहीने च छत्रदीपविहीनके १८
शङ्खघोषविहीने च राजाराष्ट्रसदोषकृत्
तद्दोषशमनार्थाय अघोरेण शतञ्जपेत् १९
पुनस्सर्वं समापाद्य यानशेषं समाचरेत्
यामं प्रवेशतः पश्चात् ज्ञाते सति विशेसतः २०
मूललिङ्गे विशेषेण स्नपनं शान्तिहोमकम्
मार्गशुद्धविहीने च यामश्रीत्वन्यथा भवेत् २१
शान्तिहोमं पुराकृत्वा नवकैरभिषेचयेत्
पुनर्यानविहीने च बालानान्नाशनो भवेत् २२
तत्कालेन विशेषेण नवकस्नपनं कुरु
+++ ले नुज्ञाते सति च यानकः २३
कर्त्राणां नाशनञ्चैव राजाराष्ट्रस्य दोषकृत्
पुनर्यानन्ततः कृत्वा +++ वद्धीमान् २४
नवकैरभिषिच्याथ मूलेन चो विशेषतः
षोडशस्नपनं कुर्याच्छान्ति होम पुरस्सरम् २५
म ++++ र्वकृत्तत्तां ते यदि बुद्धिमान्
उत्तमन्तु भवेन्नृणां नृपाणान्नाशनं भवेत् २६
पानं पुनहथाकुर्यान्नवकैरभिषेचयेत्
पञ्चविंशद्भिर्गर्याष्षोडशभिः क्रमात् २७
सौरार्हणा यामकाले वा तत्पूर्वे वितिते सति २८
पराष्ट्राद्धयं भूमौ । ते तद्दोष शमनार्त्थाय
पश्चात् स्नपनं कुरु ।
तत्काले तु विशेषेणा गौर्यास्नपनमाचरेत्

पुन ++ गव्येन च द्वारपालार्च्चने तथा २९
वास्तुनाथार्च्चने काले प्रातस्सन्ध्यादि कालके
होमकाले तु संप्राप्ते ++ दे तव दवापुनः ३०
दुर्भिक्षं जयते लोके राजा दुर्जयमाप्नुयात्
तत्र शान्तिं प्रकुर्वीत शान्तिहोमपुरस्सरम् ३१
मध्यमान्मध्यमेनैव स्नपनैरभिषेचयेत्
नित्योत्सवस्य काले तु ज्ञाते सति व बुद्धिमान् ३२
महाज्वरमवाप्नोति जनानाञ्च विशेषतः
मूलमन्त्रं शतञ्जप्त्वा शेषयानक्रमं कुरु ३३
यानान्ते तु विशेषेण पातुकायानमाचरेत्
मूललिङ्गे समायोज्य स्नानमष्टोत्तरं शतम्
चन्द्रशेखरमूर्तेस्तु नवकैरभिषेचयेत् ३४
नित्योत्सवान्त्यकाले तु दीपदानस्य कालके
उपसन्ध्यार्च्चनात्पूर्वे तत्काले वा तदन्तके ३५
सस्यानान्नाशनं प्रोक्तं ज्वरं सर्वत्र जायते
शान्तिहोमसमायुक्तमष्टोत्तरशतम्मतम् ३६
तत्तत्सर्वत्र काले तु गौर्याः स्नापनमाचरेत्
मध्याह्नयजने काले ज्ञाते सति तदन्तिके ३७
पादुकायास्ततः कुर्यात् पुनर्ध्यानादिकं बुधः
वर्ष्वादिभिश्चैव लोको बद्रवमाप्नुयात् ३८
तस्माद्दोषस्य शान्त्यर्थं द्विशताष्टोत्तरं बुधः
कलशैरभिषिच्याथ शान्तिहोमपुरस्सरम् ३९
चण्डपूजावसाने वा तत्काले वा तदग्रहे
ज्ञाते यदि तु तत्काले चण्डपूजां समाचरेत् ४०
परचक्रात् भयं भूमौ राजा दुर्जयमाप्नुयात्
ज्ञातकाले विशेषेण पुनर्यानं समाचरेत् ४१

सायान् समये प्राप्ते तत्रशान्तिं समाचरेत्
शान्तिहोमसमायुक्त मध्यमै बुधः ४२
कलशैरभिषिच्याथ गौर्याश्चैव तथैव च
सायरक्षां समारभ्य अर्द्धयामार्चनान्तकम् ४३
++ काले तु विदिते पुनर्यानं समाचरेत्
महामारी प्रकोपञ्च लोके चाग्नि भयं भवेत् ४४
दुर्भिक्षञ्जायते भूमौ राजाराष्ट्रं विनश्यति
तद्दोषशमनार्थाय शान्तिं कुर्याद्विचक्षणः ४५
मूर्तिहोमेन संयुक्त संप्रोक्षणमथाचरेत्
सहस्त्रकलशैश्चैव स्नपनन्निवेदयेत् ४६
हीने तु पातु काश्शक्ते मूललिङ्गे समर्पयेत्
तद्देशवासिनान्नॄणां शोकदुःखभयावहम् ४७
तद्दोषशमनात्र्थाय नवकैरभिषेचयेत्
तस्मात्सर्वप्रयत्नेन पुनः पूजां समाचरेत् ४८
सकळाराधना हीने राजा दुर्जयमाप्नुयात्
तद्दोषशमनात्र्थाय नवकं शान्तिहोमकम् ४९
सौरपूजाविहीने च भूपते रोगसम्भवम्
शान्तिहोमं ततः कृत्वा नवकै स्नपनं कुरु ५०
उषा सन्ध्यादि सर्वत्र पूर्ववत्कल्पयेत्पुनः
भूमिशुद्धिविहीने च वाश्री सत्वन्यथा भवेत् ५१
तद्दोषशमनात्र्थाय तन्मूलन्तु शतं जपेत्
सङ्कल्पे तु विहीने च तत्क्रिया विफलं भवेत् ५२
मूलमन्त्रं शतं जप्त्वा पुनस्सङ्कल्पमाचरेत्
पुण्याहन्तु विहीनञ्चे पात्रहीने च लक्षणम् ५३
दर्भपुष्पविहीने च गन्धाक्षत विहीनके
प्रतिवा च विहीने च विप्रहीने तथैव च ५४

कर्तृणान्नाशनञ्चैव नृपाणान्नाशनन्तथा
लोके दुर्भिक्षमाप्नोति महाज्वरमवाप्नुयात् ५५
तत्र शान्तिं प्रवक्ष्यामि नवकं शान्तिहोमकम्
लक्षणोक्तप्रकारेण पूर्ववत्सर्वमाचरेत् ५६
स्थण्डिले तु विहीने च तत्र संख्या विहीनके
कोष्ठपूजा विहीने च पात्रपूजा विहीनके ५७
पात्रलक्षणहीने च द्रव्यप्रमाणहीनके
पिष्ठादिद्रव्यहीने च तत्संख्या च विहीनके ५८
मानेन मन्त्रहीने च आश्छादनविहीनके
धूपदीपविहीने च महामारी प्रवर्त्तते ५९
बालानान्नाशनञ्चैव कर्तृणान्नाशनन्तथा
तत्तन्मन्त्रशतञ्जप्त्वा मूलमन्त्रं सहस्रकम् ६०
तद्रव्य द्विगुणं ग्राह्यं पूर्वसंस्थापयेत् बुधः
पात्रे तु पतिते हीने पिपीलिकादिदूषिते ६१
मार्ज्जारोच्छिष्टने चैव स्पृष्टे वा शुद्धिभिर्द्विजैः
इत्यंशुमान् तन्त्रे प्रायश्चित्तविधिपटलः

## मधुनीडम्

प्रासादस्थे मृत्यो दुधिरविनिते मूत्रदुष्टे
प्रासादे प्रागुणे प्राप्य परितं स्सूतकादि प्रविष्टे
खात्वा हस्तप्रमाणमतिलीमहितः पाठ समुद्धृत्य
दण्डग्रो मूत्रैर्विप्रपादै प्रगळितसलिलैः पूरयेत्
पञ्चगव्यैः ग्राममध्ये च चण्डालौ शूद्राण्याशौचसन्निधौ
अनृतेप्यन्नहोतव्यन्तभोक्तव्यं कदाचन ।
ग्राममध्ये गतो यावश्च वन्तिष्ठति अस्य ग्रामस्य
तावादाचौचं निर्गते शुचियामियात् १

पञ्चाशच्चापसीतान्ते ग्रामवीथ्या मृते सति
शिवमुत्थापयेत्पश्चात् पूजां सम्यक् समाचरेत् २
उत्थापनन्नकुर्वीत यजनविनश्यति
तद्दोषशमनार्थाय स्नपनं शान्तिहोमकम् ३
प्रासादे गोपुरे चैव प्राकारे मण्डपादिके
परिवारालये चैव मातृविघ्नेश्वरालये ४
अन्ये च देवतास्थाने मधुनीडात् समुद्भवेत्
विजयञ्च ज्वरञ्चैव मरणं बालनाशनम् ५
धान्यऋद्धिमहापातं रोगवृद्धिर्विशः क्षयम्
पूर्वादीशानपर्यन्तम्मधुनीडान्तराळके
मध्यमे मधुनीडञ्चेत् सर्वसम्पद्विनाशनम् ६
व्यपोह्य मधुनीडन्तु गव्येन प्रोक्षणं कुरु
शिवं सम्पूज्य विधिवत् स्नपनं शान्तिहोमकम् ७
शुभस्थानेषु संप्राप्ते मूलमन्त्रं शतं जपेत्
अन्यस्थाने तु संप्राप्ते महाघोरायुतञ्जपेत् ८
ब्राह्मणान् भोजयेत्पश्चात् प्रार्थयेद्दुरितक्षयम्
एवमेवन्तु सप्ताहं पूजयेच्छिवमादरात् ९
धामाग्रे गोपुराग्रे वा ध्वजदण्डाग्रकेऽपि वा
राजाग्रे राजवेम्माग्रे लूक्काकालयं कुरु १०
तद्राष्ट्रवह्निनामश्रे भूपदेस्त्वन्यथा भवेत्
व्यपोह्य निमिलं पश्चात् प्रोक्षयेदस्त्रवारिणा ११
क्षीराभिषेचनं शम्भो स्नपनं शान्तिहोमकम्
पायसान्नन्ददेत्पश्चात् सहस्रन्दक्षिणां जपेत् १२
ब्राह्मणान् भोजयेद्विद्वान् विज्ञाप्य दुरितक्षयम्
सप्त पञ्च त्रियाहञ्च पूजयेत्परमेश्वरम् १३
इत्यंशुमान् भेदे मधुनीडपटलः

## कूटच टच भेदम्

अर्थलाभासु दारिष्टं मानञ्च त महद्भवम्
सौम्यस्थानं विनाशञ्च सौख्यञ्चैव धनागमम् १
प्रागादि दिक्षु मध्ये च विनाशं गुरु ते मधु
यद्द्रव्य देशे संज्ञात तद्रव्यं सर्वनाशनम् २
शान्तिग्रहणकर्तव्यं पञ्चगव्यं सुयोजयेत्
सर्वदोषविनाशाय देवब्राह्मणभोजयेत् ३
नाशौ दुःखञ्च पञ्चत्वं श्रीलाभं पुत्रसम्पदम्
सौख्यं हानिक्रमाद्यौद्रकूटचाणा भेदनं फलम् ४
इत्यंशुमान् तन्त्रे कूटच टच भेदम्

## परिवारदेवस्थापनम्

खेटकान्नैर्ऋृते देशे गणेशस्थानतन्ततः
सर्वबेरासनञ्चैव तत्तत्स्थाने समर्चयेत् १
खेटकात् सर्वबेराणां पृथक्ग्राह्य विचक्षणः
आश्छाद्य वस्त्रगळितं प्रोक्षयेदस्त्रवारिणा २
निर्माल्यञ्च विसृज्याथ मानसं स्नानमाचरेत्
गणेशन्नैर्ऋृते न्यस्य स्कन्दं वै वायुदेशके ३
महेशन्दक्षिणे देशे पूर्वाभिमुखमेव च
नृत्तमूर्त्यादि देवानां उत्तरे दक्षिणाननम् ४
चक्रस्य दक्षिणे न्यस्य भस्म धाराक्षमालिका
भस्मधारेन्माधाख्यं भसिते लकुळीश्वरम् ५
वासुकीञ्चैव सूत्रे तु गन्धपुष्पैः समर्चयेत्
लिङ्गाग्रे वृषभन्न्यस्य पश्चिमाननमेव च ६
पीठस्य वामभागे तु भोगशक्तिञ्च विन्यसेत्
स्नानवेदिं लक्षणकञ्च दारुजञ्चैव वृत्ताकारसमन्तकम् ७

नाळञ्च पादसहितन्तन्मध्ये चेन्नतन्ततः
स्नानार्थे लिङ्गमादाय स्नानवेद्युपरिन्यसेत् ८
सुवर्णरजतं ताम्रैर्वा दारुणा चैव निर्मितम्
चतुरश्रायतालञ्च पेटकाकृतिमेव च ९
अथवा वृत्तमेवञ्च गर्भगेहे च विन्यसेत्
गर्भगेहं प्रविश्याथ विधानोद्घाटनन्तथा १०
गर्भाग्रे भीमरुद्रञ्च स्थितञ्चैव समन्वितम्
चतुर्भुजन्त्रिणेत्रञ्च वरदाभयसम्युतम् ११
छत्रचामरसम्युक्तं भीमरुद्रं समर्चयेत्
निशाचरान्तकृद्देवदेवेश यजनार्थकम् १२
शुद्धद्वारस्य सव्ये तु गच्छत्वं हि प्रसीद मे
एवं सम्प्रार्थ्य तन्मध्ये स्थितन्देवमहेश्वरम् १३
ओन्नमो देव देवेश सर्वलोकैक नायक
उत्तिष्ठस्नानकर्मार्थमात्मरक्षार्थमेव च १४
लिङ्गं सङ्गृह्य मतिमान् वस्त्रेणैव विवर्जनम्
ईशानादीनि सद्यान्तं वक्त्रन्यासक्रमन्तता १५
कनिष्ठानामिका मध्ये नव पुष्पन्तु सङ्ग्रहेत्
अङ्गुष्ठतर्जनीभ्याञ्च निर्माल्यञ्च विसर्जयेत् १६
क्षीरन्दधिघृतञ्चैव क्षौद्रञ्चैवान्नमेव च
नाळिकेरोदकञ्चैव इक्षुसारफलन्तथा १७
गन्धोदकेन संस्नाप्य शङ्खतोयाभिषेचनम्
अर्घ्योदकेन संस्नाप्य पुष्पं मूर्ध्नि विन्यसेत् १८
गन्धञ्च लेपनञ्चैव हिमतोयाभिषेचनम्
पञ्च ब्रह्मषडङ्गञ्च बीजमुख्येन मन्त्रतः १९
शिवगायत्रि मन्त्रेण सहस्रधाराभिषेचनम्
स्नानद्रव्यप्यलब्धे तु घृतेनैवाभिषेचयेत् २०

सर्वे द्रव्ये प्यलब्धे तु शुद्धतोयाभिषेचनम्
अस्त्रमन्त्रं समुच्चार्य पुष्पमूर्ध्नि च विन्यसेत् २१
शिवमन्त्रमनुस्मृत्या पद्मपीठोपरिन्यसेत् २२
आवाहनेन तन्मूर्ति द्रवति द्रवहेमतत्
तस्मादावाहने काले अर्घ्यन्दद्याद्विचक्षणः २३
पाद्यमाचमनार्घ्यन्दूर्वा पुष्पाक्षतादिकम्
सुस्वागतक्रिया पूर्वामविकल्पेन कल्पयेत् २४
समुत्क्षिप्य विशेषार्घ्यं भाजनं वामपाणिना
पद्भ्यं निवेशयेत् पाद्यन्दक्षहस्तेन सम्मुखम् २५
मुखेष्वाचमनन्दद्यात् अर्घ्यं पञ्चसु मूर्धसु २६
चलस्थिरासनञ्चैव स्नानद्विद्विधमेव च
चलासने तु स्नानं स्यादभ्यङ्गादि विशेषतः २७
स्थिरासने समावाह्य मानं स्नानमाचरेत्
तत्पीठं वामहस्तेन स्पर्शयेदस्त्रमन्त्रतः २८
नव पुसं गृह्य तत्पुष्पन्तु विसर्जयेत्
तत्पुष्पार्चितपुष्पञ्च वर्जयेत्तु विचक्षणः २९
दक्षहस्तद्विशेषेण जलोपस्पर्शनं कुरु
मन्त्रतोयाभिषेकान्ते मन्त्रपुष्पन्तु दापयेत् ३०
मन्त्रपुष्पन्ततो दत्वा मन्त्रान्नञ्च निवेदयेत्
अग्रे दीपन्नमेवञ्च शमनार्थन्निवेद्यकम् ३१
मन्त्रं रहस्यमित्युक्तं बिन्दुनादन्नमुच्यते
रहस्योद्योतनञ्चैव मन्त्रान्नमिति कथ्यते ३२
शिवमन्त्रमनुस्मृत्य गन्धपुष्पन्यसेत्ततः
गोळकाघृतवारिञ्च मकुटञ्चैव योजयेत् ३३
सर्वाभरणसम्युक्तन्दामवृक्षाद्यलङ्कृतम्
दामाधारसमायुक्त छित्रदामैरलङ्कृतम् ३४

प्रत्येकं पात्रविन्यासं ओदनेनैव पूरयेत्
तस्योर्ध्वे विन्यसेत्पत्रं प्रोक्षयेद्धृदयेन तु ३५
ताळत्रयन्ततः कृत्वा दिग्बन्धञ्चावकुण्ठनम्
धेनुमुद्रां प्रदर्श्याथ पूर्वपत्रं विसर्जयेत् ३६
परिषिच्यास्त्रमन्त्रेणापोशनं हृदयेन तु
मध्यमानामिका चैवा अङ्गुष्ठाग्रेण योजयेत् ३७
दक्षहस्ते हविर्दद्यान्मूलमन्त्रं समुच्चरन्
तत्पुष्पन्तु विसृज्याथ हस्त प्रक्षाळनं कुरु ३८
तत्परं लिङ्गनैवेद्यं पञ्चवारन्त्रिवारकम्
अथवा एकवारञ्च नैवेद्यन्दापयेत्ततः ३९
पानीयन्दापयेद्धीमान् हस्तप्रक्षाळनं कुरु
तन्मन्त्रेण तु नैवेद्यं एकवारन्निवेदयेत् ४०
प्रत्येकन्तु विशेषेण हस्तप्रक्षाळनं कुरु
गणेश्वरादि बेराणां लिङ्गेनैव तु योजयेत् ४१
अथवा एकपात्रञ्च ओदनेनैव पूरयेत्
नैवेद्यन्दापयेश्छम्भो हृदयेन तु मन्त्रतः ४२
निर्माल्यन्तु विसृज्याथ स्थानशुद्धिञ्च कारयेत्
गोमयालेपनं कृत्वा चतुरश्र समन्वितम् ४३
द्विदर्भैश्चैव सृङ्गृह्या मूलाञ्च समन्वितम्
निकट्टनन्त्रिसंखाभिरस्त्रमन्त्रसमन्वितम् ४४
दर्भं वर्जयित्वा तु जलोपस्पर्शनन्ततः
सिकतैस्थण्डिलं कृत्वा चतुरश्र समन्वितम् ४५
रुद्रेभ्यः पूर्वतो दद्यात् मात्रेभ्यो दक्षिणे तथा
गणेभ्यः पञ्चमे भागे यक्षेभ्यञ्चोत्तरे बलिम् ४६
ग्रहेभ्यश्चासुरेभ्यश्च राक्षसेभ्यस्तथैव च
नागेभ्यश्च बलिन्दद्यादाग्नेयादि विचक्षणम् ४७

मण्डलस्य तु तन्मध्ये क्षेत्रपालबलिन्ददेत्
सर्वमन्त्रं समावाह्याथ एकवारबलिन्ददेत् ४८
तदग्रे बलिदानञ्च मण्डलञ्चतुरश्रकम्
पाद्यमाचमनञ्चार्घ्यं गन्धपुष्पैस्समर्चयेत् ४९
बलिदनावसाने तु अग्निकार्यं समाचरेत्
अग्ने लोपस्पर्शना कृत्वा दर्पणं दर्शयेत्ततः ५०
छत्रचामरकञ्चैव व्यजनन्दालबृन्दकम्
पञ्चब्रह्ममनुस्मृत्य योजयेत्तु क्रमेण तु ५१
वेदैपुराणमेवञ्च पञ्चाङ्गश्रवणन्ततः
स्तोत्रनृत्तगीतञ्च वाद्यध्वनि समायुतम् ५२
अक्षमालां समादाय वामहस्ते च विन्यसेत्
ईक्षणं हृदयेनैव प्रोक्षणञ्चेश मन्त्रतः ५३
दिग्बन्धञ्चास्त्रमन्त्रेण कवचेनावकुण्ठनम्
कलामन्त्राभिमन्त्रेण पञ्चसंस्कारसम्युतम्
लयाङ्गयजनं कृत्वा पराङ्मुखन्ददेत् बुधः ५४
सद्यादीशान्तमभ्यर्च्यप्युत्क्रमेणैव योजयेत्
सद्यो वाममघोरञ्च पुरुषेशानकं क्रमात् ५५
अस्त्रादहृदयान्तञ्चाङ्गान्यङ्गे तु योजयेत्
चतुर्दिक्ष्वस्त्रमभ्यर्च्य सोमादिद्रान्तमेव च ५६
नेत्रमध्ये समभ्यर्च्य कवचं वायुदेशके
नैर्ऋते च शिखाञ्चैव शिरस्त्वीशानदेशके ५७
आग्नेयां हृदयञ्चैवार्चयेत्तु लयाङ्गकम्
दक्षिणे मणिबन्धञ्च वामहस्तन्तदूर्ध्वतः ५८
मध्यमादि त्रयाङ्गुल्यन्तलमध्ये तु योजयेत्
अङ्गुष्ठन्तर्जनीयुक्तं पुष्पत्रयं विसर्जयेत् ५९
तत्पुष्पं वर्जयित्वा तु निरोधाख्ये तु मुद्रया

एवं विसर्जनी मुद्रा शिरस्यञ्जलिमाचरेत् ६०
आवरणार्चनदेवानां लिङ्गेनैव तु योजयेत्
आसनार्चनमन्त्राणि पीठेनैव तु योजयेत् ६१
मण्डले चण्डमावाह्य तद्रूपं भावयेत्ततः

चण्डमूर्तिध्यानम्

द्विनेत्रञ्चतुर्भुजञ्चैव शुक्लवस्त्रसमन्वितम्
जटामकुटसंयुक्तं चन्द्रार्धकृतशेखरम् ६२
लम्बितं दक्षिणं पादं शयितं वामपादकम्
जानूर्ध्वौ वामहस्तन्तु सव्यहस्तन्तु टङ्कधृत् ६३
अथवाञ्जलिहस्तञ्च एवं रूपञ्च भावयेत्
आत्मार्थयजनान्ते तु सन्ध्यां प्रति विशेषतः ६४
देवस्याग्नेयदिग्भागे गोमयालिप्तभूतले
टङ्काभमर्द्धचन्द्राभं लिखे चण्डस्य मन्त्रतः ६५
ध्वनि चण्डेश्वरायेति हुंफडन्तेन मन्त्रवित्
तद्रूपं मध्यमे ध्यात्वा पाद्यमाचमनन्ददेत् ६६
विलेपनञ्च दामञ्च दत्वा तन्मूलमन्त्रतः
नैवेद्यकञ्च ताम्बूलन्तन्मूलेनैव शोधयेत् ६७
पराङ्मुखार्घ्यं दत्वा तु चण्डमुद्वासयेद्धृदि
स्थूललिङ्गनमस्तुत्य आलयन्तु प्रवेशयेत् ६८
स्थूललिङ्गं विमानं स्यात् सूक्ष्मलिङ्गं सदाशिवम्
बलिपीठं भद्रलिङ्गं लिङ्गत्रयमिहोच्यते ६९
स्थूललिङ्गन्नमस्कुर्यात् गोपुरद्वारपूर्वतः
प्रमाणस्थूललिङ्गस्य महापीठस्य बाह्यतः ७०
अथवा वृषपृष्ठे तु किञ्चिदाग्नेयमाश्रितः
वस्त्रेणाश्छाद्य देहं स्वं यो नरः प्रणमे तु माम् ७१
त्रिजन्मजायते मूकस्सप्तजन्मसुनिर्द्धनः

पशोः पशुपतेरग्रे दण्डवत्पतितो भुवि ७२
पतन्ति पातकास्सर्वे नो तिष्ठन्ति पुनस्सह ७३
देहसंसक्तरेण्यानां यावत्संख्याभिगण्यते
तावद्वर्षसहस्राणि शिवलोके महीयते ७४
इत्यंशुमान् तन्त्रे परिवारदेवस्थापनं विधि पटलः

## प्रदक्षिणक्रमम्

प्रदक्षिणक्रमं वक्ष्ये श्रूयतां रविसत्तम
सर्वपापहरञ्चैव सर्वदानफलप्रदम् १
सर्वरोगविनाशार्थं प्रदक्षिणमथाचरेत्
प्रदक्षिणप्रकारस्य लक्षण श्रुणु सुव्रत २
सव्यन्तु प्रथमं प्रोक्तमपसव्यद्वितीयकम्
सव्यापसव्यमपरन्ततस्त्वङ्गप्रदक्षिणम् ३
सव्यप्रदक्षिणं प्रोक्तमपसव्यन्तु दक्षिणम्
प्रासादस्य तु विस्तारं तन्मानं सोमसूत्रकम् ४
लिङ्गमूलस्य पार्श्वे तु योजयेत्सौम्यदेशके
यावत्सूत्रान्तमेवं स्याद्वर्जयेत्तु प्रदक्षिणम् ५
कराग्रौ बन्धयित्वा तु पादौ स्वस्तिकमाचरेत्
नेमिवद्भ्रमणं कृत्वा प्रासादात्परितस्तथा ६
अङ्गप्रदक्षिणं प्रोक्तं एवमेवं प्रदक्षिणम्
प्रदक्षिणसहस्त्रं स्यात् एकमेकं प्रदक्षिणम् ७
देशिकेन प्रकर्तव्यं गर्भगेहे प्रवेशनम्
पुष्पेणैव समभ्यर्च्य शिवमन्त्रमनुस्मरेत् ८
विप्राणाञ्च प्रवेशञ्चार्द्धमण्टपमाविशेत्
क्षत्रियस्य विशेषेण पुष्पाञ्जलि क्रमेण तु ९
मण्टपन्तु प्रविश्याथ मुखद्वारे स्थितिर्भवेत्

आत्मतत्वत्रयञ्चैवार्चयेत् गुरुमार्गतः १०
वैश्यश्चैव तु शूद्राश्च वृषाग्रे वृषपृष्ठके
गोमयालेपनं कृत्वा चतुरश्रसमन्वितम् ११
अर्चयेन्मूलमन्त्रेण गुरुमार्गेण कारयेत्
इत्यंशुमान् तन्त्रे प्रदक्षिणक्रमम्

## वास्तुहोमविधि

वास्तुहोमविधिं वक्ष्ये श्रूयतां रविसत्तम
स्नापनप्रोक्षणे चैव गर्भन्यासे तथैव च १
विमानस्थापने चैव चोत्सवे यागमण्टपे
मण्टपे च सभास्थाने सकळस्थापनेऽपि च २
आद्योपळेष्टयाने च सत्रे च नृत्तरंगके
प्रायश्चित्तादिके चैव स्नापने च समारभेत् ३
वास्तु पूजा प्रकर्तव्या सर्वसंपत्समृद्धिदा
वास्तुपूजाविहीनं स्यात् तद्राष्ट्रं च विनश्यति ४
तस्मात्सर्वप्रयत्नेन वास्तुपूजां समाचरेत्
आचार्यः शिष्यसंयुक्तः पूर्ववत्स्नानमाचरेत् ५
स शुद्धवस्त्रैराच्छाद्य सकळी करणं कुरु
सामान्यार्घ्यं च संकल्प्य विघ्नेशं पूजयेत्ततः ६
पुण्याहं वाचयेद्धीमान् पंचगव्यं तु विन्यसेत्
तदग्रे स्थंडिलं कृत्वा शालिभिर्विमलैः शुभैः ७
नन्दनं नन्दपदं कृत्वा मध्ये नन्दपतिं गृहेत्
परितस्तत्पदं त्वेकं कोणाग्रे शूलसंयुतम् ८
वृत्तं कुर्याच्चतुर्दिक्षु परं परमाधिकम्
ब्रह्माणं मध्यमेऽभ्यर्च्य गन्धपुष्पैः स्वनामतः ९
आपश्चैषापवत्सश्च साविप्रश्च सवित्रकः

इन्द्र इन्द्रजयश्चैव रुद्रोरुद्रजयस्तथा १०
ग्राग्नेयादि समारभ्य पूजयेत्स्वस्वनामतः
ईशानश्चैव पर्जन्यो जयन्तश्च महेन्द्रकः ११
ग्रादित्यस्सत्यको भ्रंशो ह्यन्तरिक्षश्च पूर्वगाः
ग्रग्निः पूषा च वितथो ग्रहक्षतो यमस्तथा १२
गन्धर्वो भृंगराजश्च ऋषयश्चैव दक्षिणे
नृतिर्देवारिकश्चैव सुग्रीवः पुष्पदन्तकः १३
वरुणश्शोषरोगश्च पापयक्ष्माश्च पश्चिमे
वायुर्नागस्तथा मुख्यो भल्लाटस्सोम एव च १४
ऋगादितिर्दितिश्चैव बाह्येष्वेकांशभोगिनः
चरकी च विदारी च पूतनापापराक्षसी १५
ग्राग्नेयादि समारभ्य पूजयेन्नाममंत्रतः
ईशानं जृंभकं चैव पिंछकम्बलिपिंछकम् १६
पूर्वादीनि चतुर्दिक्षु पूजयेत्स्वस्वनामतः
पाद्यमाचमनं चार्घ्यं गन्धपुष्पं च धूपकम् १७
बलिनैवेद्यताम्बूलं पुष्पमर्घ्यं प्रणाम च
स्वनाममंत्रैरभ्यर्च्य दद्याद्दध्योदनं बलिम् १८
कुक्कुटाण्डप्रमाणेन बलिमेकं प्रदापयेत्
नमोऽन्तं बलिनिर्दिष्टं स्वाहान्तेनैव होमयेत् १९
बलिमण्डलमैशान्यां स्थण्डिलं शलिना कुरु
लाजैः पुष्पैस्तिलैर्दर्भैः पंचचूर्णैरलंकृतम् २०
सकूर्चानुदकोपेतान् सवस्त्रान्सहिरण्यकान्
पलाशपल्लवोपेतान् नारिकेळफलैर्युतम् २१
संस्थाप्य वास्तुकुंभं तु परिवारघटान्वितम्
ग्रर्चयेद्गन्धपुष्पाद्यैः कलशस्थापनोक्तवत् २२
ब्रह्मादिवास्तुदेवानां समभ्यर्च्य स्वनामतः

नैवेद्यं दापयेत्तस्मात् धूपदीपादिकं ददेत् २३
बलिमण्डलपूर्वे तु अग्निकार्यं समाचरेत्
आधानादिविवाहान्तं अग्निकार्येण मार्गतः २४
वह्निमध्ये विशेषेण कल्पयेदासनं क्रमात्
ब्रह्मादि वास्तुदेवानां समभ्यर्च्य विशेषतः २५
दशाहुतिं प्रधानस्य अन्येष्वेकैकमाहुतिम्
पलाशसमिधेनैव हुत्वा ब्रह्मादिमंत्रतः २६
त्रयाधिकं च पंचाशद् देवताभिः स्वनामतः
घृतं तत्संख्यया हुत्वा चरुं तत्संख्यया तथा २७
तण्डुलं तिलमिश्रेण शिक्षा तत्संख्यया बुधः
द्रव्यान्ते व्याहृतिं हुत्वा महास्त्रेण शतं हुनेत् २८
सर्वद्रव्यं तु संगृह्य स्विष्टकृद्धोममाचरेत्
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् २९
मिन्दाहुतिं च जुहुयात् व्याहृतिभिश्च हूयते
यदस्य कर्मणो चेति हुनेत्पूर्णाहुतिं पुनः ३०
अश्वत्थोदुम्बरान्ब्रह्मपत्रान्यशुष्कान्सदर्भकैः
तद्वास्तुशोधनैश्च ध्वा सिद्धार्थं तिलसंयुतम् ३१
वह्निस्थं च पदस्थं च कुंभं स्वहृदये यजेत्
तद्वास्तुशोधनैर्ग्राह्य सुप्रोक्ष्य हृदयेन तु ३२
तदग्रे वह्निमारोप्य संप्रज्वाल्याग्निबीजतः
प्रकाम्यनगरादीनां भवनं यागमण्टपम् ३३
जयघण्टारवोपेतं पर्यग्निकरणं कुरु
पंचगव्येन संप्रोक्ष्य हृदयेन तु मंत्रतः ३४
वास्तुकुम्भस्थतोयेन शुद्धैरत्थेति मंत्रतः
प्रोक्षयेत्तु विशेषेण उल्कं त्यक्त्वाथ तद्बहिः ३५
स्नानं कुर्याद्विधानेन मार्जनप्रोक्षणं कुरु

वास्तुपूजाविधिः प्रोक्तः सर्वदोषनिवारणम्  ३६
होतारं पूजयेत्पश्चाद् वस्त्रहेमांगुळीयकैः
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्  ३७
इत्यंशुमतितन्त्रे वास्तुहोमविधिपटलः सप्तमः

## मुखलिङ्गार्चनम्

मुखलिंगं व्रतं वक्ष्ये श्रूयतां रविसत्तम
कालं द्विविधमाख्यातं स्थूलसूक्ष्ममिति स्मृतम्  १
स्थूलं श्रावणमासादि कर्कमासावसानकम्
यन्मासाद्युदयादिस्याद्यल्लिंगं परिवर्तते  २
तल्लिंगद्वादशांशेन मासद्रव्यैश्च पूजयेत्
स्थूले वा सूक्ष्मकाले वा मुखलिंगार्चनं चरेत्  ३
राजाभिषेकसमये युद्धारम्भावसानके
कर्तुर्जन्मानुकूलर्क्षे मासर्क्षे वाथ जन्मनि  ३-२
ग्रन्ये पुण्यदिने चैव मुखलिंगार्चनं चरेत्
प्रासादेऽप्यैशदिग्भागे पूर्वे वा चोत्तरेऽपि वा
सप्तषट्पंचहस्तैर्वा मण्टपं कारयेद्बुधः  ४
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम्
तन्मध्ये वेदिकां कुर्याद् दिशि भौमसमन्वितम्  ५
मध्ये वोन्नतवेदीस्यात्तालमात्रसमन्वितम्
चतुस्तोरणसंयुक्तं वितानाद्युपशोभितम्  ६
दर्भमालाभिरावेष्ट्य कदळीस्तम्भसंयुतम्
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः  ७
तदृक्षपूर्वरात्रौ तु ग्रधिवासनमारभेत्
क्षेत्रे देवालये चैव वल्मीके कुळिनावके  ८
दर्भमूले च मृद्ग्राह्यं शर्करादिव्यपोह्य च

स्थलिकोर्ध्वे तु विन्यस्य लिंगाकृतमथारभेत् ९
लिंगं हस्तसमुत्सेधं आरभेद्द्वादशांगुळम्
चतुर्वक्त्रसमायुक्तं शिरश्चक्राभमेव वा १०
अत्रानुक्तं तु यत्सर्वं मृल्लिंगस्य विधानवत्
शालिपिष्टमये चैव चतुर्भिर्वृषभान्वितम् ११
खुरशृंगास्य कर्णौ च वृषणं चातिरक्तकम्
शृंगाग्रं च खुराग्रं च वृषणं हेमवर्णकम् १२
एवं लक्षणसंयुक्तं वृषभं कारयेद्बुधः
देशिकस्सुप्रसन्नात्मा सकळीकृतविग्रहः १३
पुण्याहं वाचयेत्तत्र पंचगव्यं च साधयेत्
प्रोक्षयेच्छुद्धतोयेन शुद्धैरुत्थैरिति स्मृतः १४
स्थण्डिलं कारयेद्विद्वान् अष्टद्रोणेन शालिना
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि १५
लाजापुष्पैः परिस्तीर्य पंचचूर्णैरलंकृतम्
मण्टपं पूजयेद्विद्वान् पंक्तिमानक्रमेण तु १६
पश्चान्मृल्लिंगमादाय वेदिकोर्ध्वे तु विन्यसेत्
चतुर्दिग्वृषभं न्यस्त्वा कोणेषु च विशेषतः १७
नवकं स्त्वीशदेशे तु मासद्रव्यं प्रति प्रति
पाद्यमाचमनं चार्घ्यं वस्त्रमाभरणं ततः १८
गन्धपुष्पं विशेषेण नैर्ऋत्यां दिशि विन्यसेत्
षट्पात्रं वायुदेशे तु न्यसेन्नीराजनार्थकम् १९
रुद्राक्षं त्वीशदेशे तु विन्यसेत्तु विशेषतः
मौक्तिकैर्हेमसंयुक्तरुद्राक्षस्यान्तरान्तरे २०
योजयेत्तन्तुसूत्रेण मासं प्रतिधरेच्छिवम्
शिखा शिरसि कर्णौ द्वौ गळौ चैवोपवीतकम् २१
कोर्पारमणिबन्धौ च अंगुष्ठं जाप्यमालकम्

एतैर्द्वादशभिः स्थानैः मासं प्रत्येकमाचरेत् २२
शिखादिजप्यमालान्तं रुद्राक्षं च सहस्रकम्
शिखा संयोजयेत्वेकम् शिरसा स्वप्रमाणतः २३
कर्णे षट्कं तथास्त्वेकं हैमसूत्रेण योजयेत्
कर्णे च स्वप्रमाणं स्यात् उपवीतं चोपवीतवत् २४
कोर्परं मणिबन्धौ च स्वप्रमाणेन कारयेत्
रुद्राक्षं रुद्रसंख्या च संयोज्यां गुष्ठमालया २५
शिरोकर्णोपवीतं च कोर्परौ मणिबन्धकौ
अयुग्मं वाथ युग्मं वा कल्पयेत्कल्पवित्तमः २६
गळे च कोर्परे चैव मणिबन्धौ विशेषतः
नवरत्नैरलंकृत्य पद्माक्षं च युगाश्रकम् २७
यजमानवशात्सर्वं कारयेल्लक्षणान्वितम्
रुद्राक्षं पंच विंशद्भिः जपमालां तु योजयेत् २८
मासं प्रतिविशेषेण रुद्राक्षस्यैव संख्यया
रुद्रनाम्नैव चाभ्यर्च्य रुद्राक्षं च प्रति प्रति २९
प्रत्येकं त्वेकनाम्नैव सहस्रमपि चार्चयेत्
क्षाळनं त्वीशमन्त्रेण पंचगव्यामृतेन च ३०
स्नापयेच्छुद्धतोयेन रुद्रसूक्तमनुं जपेत्
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत् ३१
सहस्रपरमेन्नादौ पूर्वाग्रेणैव चार्चयेत्
विधाननववस्त्रेण जप्यं त्रियम्बकं मनुम् ३२
मुखलिंगं समभ्यर्च्य प्रोक्षयेदीशमन्त्रतः
नरादिसद्यमन्त्रान्तैः पूर्वादीनि प्रपूजयेत् ३३
वृषगायत्रिमन्त्रेण गन्धपुष्पादिनार्चयेत्
मंत्रं हिरण्यं श्रियेति दूर्वाग्रं धवळाक्षतैः ३४
संपूज्य वृषभं सर्वे नैवेद्यादीन्प्रदापयेत्

धूपदीपं ददेत्पश्चात् चतुर्दिक्षु विशेषतः ३५
चतुर्भिर्जनर्तनं कुर्यात् वेदाद्यादीनि तोषयेत्
पश्चाद्धोमं प्रकुर्वीत अग्निकार्योक्तमार्गतः ३६
समिदाज्यचरुं लाजान् तिलमुद्गयवं तथा
सद्यादिशिरपर्यन्तं सर्वद्रव्यं क्रमाद्धुनेत् ३७
त्रियम्बकेन मंत्रेण कृत्वा चाष्टोत्तरं शतम्
तत्संख्यया जपं कुर्याद्रुद्राक्षं संस्पृशन्बुधः ३८
सर्वद्रव्यं तु संग्राह्य स्विष्टकृद्धोममाचरेत्
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ३९
पुष्पं निक्षिप्य देवाग्रे नमस्कृत्वा तदीश्वरम्
एवं यः कारयेद्रात्रौ प्रभाते देशिकोत्तमः ४०
सुस्नात्वा सकळीकृत्य प्रातस्संध्यावसानके
द्वारपूजां ततः कुर्यात् पूर्वोक्तविधिना सह ४१
मृल्लिंगं तु समभ्यर्च्य वस्त्रपुष्पस्रगादिभिः
सर्वोपचारैस्संतोष्य चतुर्दिक्षु विशेषतः ४२
संस्थाप्य नवकुम्भैश्च मूललिंगे सिषेचयेत्
संस्नाप्य पात्रादिद्रव्यैः मूलबिम्बे तु योजयेत् ४३
प्रभूतहविषं दत्वा ताम्बूलं च निवेदयेत्
धूपदीपादिकं दत्वा वेदादींश्चैव तोषयेत् ४४
एवं मध्याह्नवेलायां संतोष्य परमेश्वरम्
ततस्सायाह्नसमये सायरक्षावसानके ४५
नीराजनं ततो दत्वा संस्थाप्यास्थं तु देशिकः
बलिपीठाग्रके क्षिप्त्वा बहुरूपमनुस्मरन् ४६
स्थापयेत्तृसृभिस्तोयैः पादप्रक्षाळनं कुरु
मण्टपं तु प्रविश्याथ मुखलिंगं समर्चयेत् ४७
धूपदीपादिकं दत्वा स्थापनीराजनं ददेत्

पञ्चवक्त्रेषु देवस्य बलिपीठे चतुर्दिशि ४८
ऐशान्यां विन्यसेद्विद्वान् पूर्वादि च विशेषतः
स्थापरुद्राक्षमादाय लिंगमूर्ध्नोपरिन्यसेत् ४९
भस्मनैव समारोप्य बृहत्सामेति मंत्रतः
जप्त्वा मृत्युंजयं मंत्रं साध्य नाम पुरस्सरम् ५०
अष्टोत्तरशतं जप्त्वा दूर्वाग्रेणैव चार्चयेत्
पश्चान्मण्टपमासाद्य मृल्लिंगं च वृषेश्वरान् ५१
शिरसा वाहयित्वा तु जलमध्ये विनिक्षिपेत्
एवं रात्रौ प्रकर्तव्यं भास्करस्योदयात्पुरा ५२
सुस्नात्वा सकळी कृत्य मूललिंगान्तिकं विशेत्
आदाय भस्म रुद्राक्षं दूर्वाग्रं स्थण्डिलोपरि ५३
पिधाय वस्त्रखण्डेन दिग्बन्धं चास्त्रमंत्रतः
यजमानं समाहूय प्राङ्मुखं चोत्तराननः ५४
देशिकस्सुप्रसन्नात्मा ध्यायेदोंकारमीश्वरम्
पश्चात्साध्यं समालोक्य आपादतलमस्तकम् ५५
भस्मना व्यापकं कुर्यात् शिवमंत्रशतं जपेत्
बृहत्सामेति मंत्रेण रुद्राक्षं धारयेन्नरः ५६
मंत्रं हिरण्यशृंगेति तन्मूर्ध्नि भस्म विन्यसेत्
सहसा परमे त्यादौ मंत्रैर्दूर्वाक्षतं न्यसेत् ५७
ईशानेति समुद्धूळ्य शिवमंत्रशतं जपेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः ५८
एवं यः कुरुते मर्त्यः सोऽन्ते सायुज्यमाप्नुयात्
ब्रह्महत्यादिपापानि मासैकेन विनश्यति ५९
नानाविधानि यागानि नानातीर्थफलानि च
नानाविधानि दानानि नानापूजाफलानि च ६०
तत्फलं कोटिगुणितं मृल्लिंगस्यार्चनस्य तु

मृल्लिंगस्यार्चनं प्रोक्तं शक्तिपीठार्चनम् शृणु ६१
इत्यंशुमति तंत्रे मुखलिंगार्चनविधिपटलः अष्टमः

## मृगमदस्नानम्

वक्ष्ये मृगमदस्नानं श्रूयतां रविसत्तम
कीर्तिदं विजयं पुण्यं आरोग्याणि प्रदं ततः १
सर्वदानफलं चैव सर्वयज्ञेषु यत्फलम्
सर्वतीर्थेषु यत्पुण्यं सर्वदेवार्चने तु यत् २
तत्फलं कोटिगुणितं स्नानं मृगमदेन तु
फाल्गुने मासि फाल्गुन्यां चित्रान्तं चैत्रमासके ३
नृपजन्मर्क्षके वापि षडशीति मुखेऽपि च
ब्रह्मविष्णुशिवर्क्षेषु अमावास्याष्टमी तथा ४
ग्रहणादिमहाकाले स्नानं कुर्यान्मृगं मदम्
देवालये नदीतीरे उद्याने च चतुष्पथे ५
मनोरमे न्यदेशे वा वीथ्यग्रे वापि तीरके
मण्टपं वा प्रपां वापि इष्टमानेन कारयेत् ६
त्रिहस्तं तु समारभ्य षडंगुलविवर्धनात्
सप्तहस्तावधिर्यावत् लिंगमानं प्रकल्पयेत् ७
पंचहस्तं समारभ्य द्वादशांगुलवर्धनात्
नवहस्तावधिर्यावत् लिंगोत्सेधं प्रकल्पयेत् ८
यजमानसमोत्सेधं उद्यतां जलिना समम्
उत्सेधद्विगुणं चैव यजमानोदयं विदुः ९
धातुर्वंशांगुलेनैव लिंगविष्कंभमुच्यते
लिंगोत्सेधं त्रिधा कृत्वा विष्कंभं तु शिवांशकम् १०
पंच षट्सप्तभागं वा विष्कंभं तु द्वयं शतम्
विष्कंभसदृशोत्सेधं लिंगे मूले युगाश्रकम् ११

विष्कंभसदृशं पीठ विस्तारं द्विगुणं ततः
अलंकारस्य नाळं च पिञ्छिकालक्षणोक्तवत् १२
शिरसो वर्तनं कुर्याच्छत्राकारं च पूर्ववत्
शिरसो वर्तनाधस्तात् बन्धनाशान्तमूर्ध्वतः १३
लिंगायामं तु संग्राह्य पंचाशद्विभजेत्ततः
चत्वार्यंशेशपंचाशकृत्तिकांशेशलिंगकम् १४
मूललिंगस्य पार्श्वे तु क्षुद्रलिंगं प्रकल्पयेत्
यवमात्रं तदर्धं वा क्षुद्रलिंगविनिर्गतम् १५
लिंगस्याभ्यन्तरे लिंगं उपर्युपरि कल्पयेत्
पंचाशतवृतं कल्प्य तल्लिंगमयुतं भवेत् १६
अधस्तात्सममूर्ध्वं तु सूत्रस्य वर्तुळं भवेत्
अव्यक्तं व्यक्तलिंगं च विविधं चेति कीर्तितम् १७
पूर्वलिंगं प्रतिष्ठाप्य पश्चात्पीठनिवेशनम्
व्यक्तलिंगमिति प्रोक्तं अव्यक्तमधुना शृणु १८
पूर्वं पीठं प्रतिष्ठाप्य पश्चाल्लिंगं प्रतिष्ठितम्
अव्यक्तमिति विज्ञेयं स्थापनं द्विविधं भवेत् १९
पीठोदयं तु संग्राह्य रुद्रभागविभाजिते
सपदांशं खरं प्रोक्तं पक्ष्मांशं पद्मतुंगकम् २०
जनोत्सेधं गुणांशं तु ++++ गळोदयम्
अर्धांशं वेत्रतुंगं तु सार्धांशं पद्मतुंगकम् २१
पट्टिकोच्चं सपादांशं शिववारि शिवांशकम्
पीठांगानां प्रवेशं च पूर्वोक्तविधिना कुरु २२
पीठव्यासं गुणांशेन शिवांशं नाळविस्तृतम्
व्यासायामं दीर्घमूलं मूलाग्रं तु त्रिधा भवेत् २३
जलमार्गं शिवांशेन कल्पयेत्कल्पवित्तमः
नाळव्यासे तु भूतांशे नाळाग्रं ++ तुंगकम् २४

अत्रानुक्तं तु यत्सर्वं पूर्वोक्तविधिना कुरु
+++++ लिंगांगं वर्तुळं भवेत् २५
पूर्वोक्तरम्यदेशे तु प्रभामण्टपमुच्यते
रुद्रहस्तप्रमाणेन वेदिका चतुरश्रकम् २६
उत्सेधं हस्तमानं स्यात् कल्पयेदतिसुन्दरम्
तन्मध्ये स्थापयेल्लिङ्गं पीठं संस्थापयेद्दृढम् २७
लिंगस्य गर्भविन्यासलक्षणोद्धारणं विना
अत्रानुक्तं तु सर्वेषां कुर्यात्साहस्रलिंगवत् २८
कल्पयेत्परितः कुड्यं पूर्वद्वारं प्रकल्पयेत्
कुड्यसारोपणार्थाय सोपानं दक्षिणे दिशि २९
स्थलं च परितः कुड्यां सुधया लिप्य सर्वशः
उत्तरे जलमार्गं स्यात् कल्पयेत्कल्पवित्तमः ३०
पूर्वे वा पश्चिमे वापि सौम्ये वा यागमण्टपम्
अष्टादिकं च पंचाशत् हस्तं मण्टपविस्तृतम् ३१
दशहस्तप्रमाणेन पंचविंशतिकोष्ठकम्
कोष्ठस्याभ्यन्तरे विद्धि द्विद्विहस्तप्रमाणतः ३२
द्विशतं च शिवाधिक्यं कुंभकोष्ठे प्रति प्रति
तद्बाह्ये परितो लिंगं पंचषट्सप्तहस्तकम् ३३
तन्मध्ये कल्पयेत्कुण्डं नव पंचैक एव वा
कुण्डद्विहस्तमानेन पूर्वोक्तविधिना कुरु ३४
मण्टपं वा प्रपां वापि निश्छिद्रं कारयेद्बुधः
वितानाद्यैरलंकृत्य दर्भमालाभिरावृतम् ३५
सर्वालंकारसंयुक्तं चतुर्द्वारसमन्वितम्
गोमयालेपनं कृत्वा शिल्पिनं तु विसर्जयेत् ३६
स्नानोद्दिश्य दिनात्पूर्वे रुद्रायेत्वधिवासनम्
अधिवास्य दिनात्पूर्वे पंचाहे वा त्र्यहेऽपि वा ३७

बीजानां वापनं कुर्यात् वास्तुहोमं तु कारयेत्
अधिवासदिने प्रातः आचार्यः शिष्यसंयुतः ३८
स्नानत्रयं तु विधिवत् कृत्वामण्डलमाविशेत्
देहशुद्धिं ततः कृत्वा पश्चाल्लिंगान्तिकं व्रजेत् ३९
शिल्पिं संपूज्य विसृजेत् गन्धपुष्पादिनार्चयेत्
पुण्याहं वाचयेद्धीमान् प्रोक्षयेल्लिंगमूर्धनि ४०
लिंगं संस्नाप्य तैलेन पिष्टैरामलकादिभिः
पयो दधि घृतं क्षौद्रं इक्षुसारं फलोदकम् ४१
अष्टमृत्सलिलेनैव रक्तपुष्पोदकादिभिः
संस्नाप्य शुद्धतोयेन गन्धपुष्पादिनार्चयेत् ४२
पश्चान्मण्टपमाविश्य प्रोक्षयेदस्त्रवारिणा
प्रागग्रं चोत्तराग्रं च विंशत्सूत्राणि पातयेत् ४३
मध्ये तत्वपदं कुर्यात् परितो द्विपदं त्यजेत्
प्रत्येकमिव दिक्ष्वस्त्रं पंचविंशत्पदस्थितम् ४४
मध्ये नन्दपदस्त्वेकं बाह्ये द्विशतगोष्ठकम्
ब्रह्मकुंभं च वर्धन्यां मध्ये कोष्ठे तु विन्यसेत् ४५
तत्कुंभोभयपार्श्वे तु मूर्तिकुंभं सशान्तिकम्
एवं क्रमेण संस्थाप्य कुंभं कोष्ठे प्रति प्रति ४६
शालिभिः स्थण्डिलं कृत्वा साष्टपत्रं स कर्णिकम्
तण्डुलैस्तिललाजैश्च पंचचूर्णैरलंकृतम् ४७
मण्टपं तु समभ्यर्च्य पूर्वोक्तविधिना सह
ससूत्रान्सापिधानांश्च सवस्त्रान्सहिरण्यकान् ४८
सकूर्चानुदकोपेतान् फलपल्लवसंयुतान्
संस्थाप्य कळशान्सर्वानुपकुम्भसमन्वितान् ४९
पश्चाल्लिंगान्तिकं गत्वा सायाह्नसमये बुधः
पश्चान्मण्टपमाविश्य सहस्त्रकलशैर्यजेत् ५०

शिवांभसा तु संगृह्य मध्ये कोष्ठे घटे न्यसेत्
झर्झरैः कूपतोयैर्वा सरिद्वार्यम्भसां गृहेत् ५१
आग्नेयादिषु कोणेषु स्थापयेत्तु विशेषतः
रत्नधातूकं लोहगन्धोदकं चतुर्दिशि ५२
वीजमृन्मार्जनं पत्रं परिमार्जनपुष्पकम्
अग्रं माल्यफलं मूल्यं कान्तं वैवत्कलोटकम् ५३
कषायाढ्योदकं ब्रह्मकूर्चं शान्त्युदकं तथा
पूर्वादिवान्तराळं तं स्थापयेद्देशिकोत्तमः ५४
हिमांभसा तु संयोज्य कलशेषु च सर्वशः
पंचां मृगमदं न्यस्त्वा द्विविधं कलशं प्रति ५५
रुद्रनाम्नायुतेनैव कलशानयुतं यजेत्
व्यूहे द्विशतनामानि अर्चयेत्कलशं प्रति ५६
शिवमंत्रं न्यसेन्मध्ये वर्धन्यां शक्तिमंत्रतः
अभ्यर्च्य गन्धपुष्पाद्यैः नैवेद्यान्तं यजेद्धटम् ५७
एकाहे वा द्वयाहे वा त्रिदिने वा घटार्चनम्
घटार्चनान्ते होमः स्यादेकद्वित्रियायाहके ५८
तदन्ते कलशस्नानं पूर्वोक्तदिनसंख्यया
तदन्ते चार्चनं कुर्यादुदवादौ समारभेत् ५९
यावन्मंत्रावसानं च तावत्पूर्वहमुच्यते
आरभ्याथापराह्ने तु यावन्मंत्रावसानकम् ६०
तावच्छायापराह्नं स्यात् तदन्ते स्नानमाचरेत्
ऋगाद्यध्ययनं कुर्यात् कोणमंत्रजपं कुरु ६१
पश्चाद्धोमं प्रकुर्वीत अग्निकार्योक्तमार्गतः
समिदाज्य चरुं लाजान् सर्षपांश्च यवांस्तिलान् ६२
पूपं च फलं मुद्गं ईशाद्यस्त्रान्तिकं हुनेत्
रुद्रानामयुतेनैव आज्येनैव तु हूयते ६३

नाम्नैकैर्दशकं हुत्वा एकं वापि प्रभूयते
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ६४
वह्निं विसृज्य देवेशं कुम्भमध्ये तु योजयेत्
नैवेद्यं दापयेत्पश्चात् व्यूहं प्रति विशेषतः ६५
धूपदीपादिकं दत्वा ताम्बूलं च निवेदयेत्
नृत्तवाद्यैश्च संतोष्य भस्म दत्वा तु देशिकः ६६
अधिवास्य दिने रात्रौ व्यपोह्य च परे दिने
लिंगं प्रत्यहमभ्यर्च्य विशेषं किंचिदस्ति हि ६७
शिवलिंगान्तिकं गत्वा मुक्तपुष्पं विसर्जयेत्
लिंगशुद्धिं ततः कृत्वा नववस्त्रेण वेष्टयेत् ६८
गन्धमाल्यैरलंकृत्य नैवेद्यादीनि दापयेत्
त्रिसंधिमर्चनं कुर्यात् देशिकः शिष्य एव वा ६९
यजमानेन चाभ्यर्च्य तन्मध्ये तु विशेषतः
प्रदक्षिणत्रयं कृत्वा प्रणम्य दण्डवद्भुवि ७०
अध्यास्य दिवसादि स्यात् स्नानान्तं प्रत्यहं यजेत्
देशिको यजमानश्च प्रत्यहं त्वेकभोजनम् ७१
तद्रात्रौ तु विशेषेण क्षीरं पीत्वा जितेन्द्रियः
अधिवासनहोमान्ते शिवलिंगान्तिके यजेत् ७२
लिंगशुद्धिं ततः कृत्वा वस्त्रेणाच्छादयेत्ततः
द्वारं च जलमार्गं च आदिमृद्भिर्निघट्टयेत् ७३
परिचारकमाहूय सोष्णीषः सोत्तरीयकः
शिवकुंभं समुद्धृत्य वर्धनीं च समुद्धरेत् ७४
हर्म्यप्रदक्षिणं कृत्वा शिवलिंगान्तिकं यजेत्
पुण्याहं वाचयित्वा तु लिंगमभ्यर्च्य देशिकः ७५
मुहूर्तं निरीक्ष्य देवस्य दक्षिणां संप्रदाय च
नीराजनं ततो दत्वा ब्रह्मकुम्भाभिषेचयेत् ७६

वेदपारगकुम्भैश्च तत्काले चाभिषेचयेत्
नैवेद्यं दापयेत्पश्चाद्धूपदीपादिकं ददेत् ७७
लिंगं प्रति निवेद्यं स्यात् प्रस्थाः प्रत्येक एव हि
मूर्धादि पादपर्यन्तं यजेत्सर्वसमृद्धिदम् ७८
पादादिमूर्धपर्यन्तं यजेन्मोक्षप्रदायकम्
स्नपनान्ते विशेषेण अर्चयेद्देशिकोत्तमः ७९
यजमानं समाहूय सकळीकरणं कुरु
अंगमन्त्रैः कलामन्त्रैः वर्णमन्त्रैश्च विन्यसेत् ८०
शिवमंत्रं जपेद्भक्त्या पूजार्थं पुष्पमाहरेत्
हर्म्यप्रदक्षिणं कृत्वा शिवलिंगस्य दक्षिणे ८१
उत्तराभिमुखो भूत्वा गन्धद्वारेति मन्त्रतः
स्नात्वा मृगमदेनैव कुङ्कं तद्द्वयमेव वा ८२
तत्संख्यया युतं ग्राह्यं लिंगमूर्ध्न्यभिषेचयेत्
गन्धपुष्पैस्समभ्यर्च्य नैवेद्यं दापयेद्बुधः ८३
कर्पूरशकलैर्वापि उत्पलैर्वा विशेषतः
यजमानेन चाभ्यर्च्य रुद्रनामायुतेन च ८४
देशिकः पद्मपुष्पैर्वा चन्दनैर्वा विशेषतः
अभ्यर्च्य रुद्रनाम्नैर्वापि सार्धं देशिकया सह ८५
पूर्वाह्णस्यार्चनान्ते तु महाहविर्निवेदयेत्
लिंगं प्रत्यायकेनैव नैवेद्यं चोपदंशकम् ८६
गुळखण्डसमायुक्तं दद्याद्देवाय तृप्तये
धूपदीपादिकं दद्यान् नृत्तवाद्यैश्च तोषयेत् ८७
यजमानं समाहूय अपराह्णे समर्चयेत्
अभ्यर्च्य जलमध्ये तु प्रदक्षिणमथाचरेत् ८८
प्रणम्य दण्डवद्भूमौ स्तोत्रं कुरु यथेप्सितम्
गुरुं च यजमानं च सहस्नानं समाचरेत् ८९

यद्वोदायेति मंत्रेण स्नानकाले जपेद्बुधः
तस्य बन्धुजनानां च तत्काले स्नानमाचरेत् ९०
ब्रह्महत्यादिकं पापं ज्वरमार्यादिपीडनम्
भूतादिग्रसनं चैव स्नानमात्रेण नश्यति ९१
आयुरारोग्यदं चैव पुत्रपौत्रविवर्धनम्
सर्वेश्वरपुटं चैव सर्वाभीष्टफलप्रदम् ९२
स्नानमात्रे ददेच्छंभोः सोऽन्ते सायुज्यमाप्नुयात्
पश्चात्स्नानजलं ग्राह्य प्राणिनां च प्रदापयेत् ९३
लिंगस्य प्राङ्मुखे देशे कूपकुड्यविसर्जयेत्
लिंगं संपूजयेच्छ्रीमान् प्रत्यहं वा विशेषतः ९४
सांवत्सरे तु पूजायां स्नानारंभे दिनेऽपि च
यथा विभवसारेण तद्दिनेषु समर्चयेत् ९५
आचार्यं पूजयेच्छ्रीमान् वस्त्रकां चन भूषणैः
दीनान्धकृपणानां च भोजनं च सदक्षिणम् ९६
भक्तानां परिचाराणां ब्राह्मणानां यथा विधि
यथा विभवसारेण दक्षिणां तु प्रदापयेत् ९७
एवं यः कुरुते मर्त्यः सपुण्यां गतिमाप्नुयात्
इत्थं स्नानविधिः प्रोक्तः मन्त्रस्नानविधिं शृणु ९८
इत्यंशुमति तन्त्रे मृगमदस्नानविधिपटलः नवमः

## शान्तिबलिविधि

वक्ष्ये बलिविधानं च सर्वशान्तिकरं नृणाम्
आयुष्करं पुष्टिकरं श्रीकरं रोगनाशनम् १
सर्वशत्रुक्षयकरं सर्वाभीष्टफलप्रदम्
ग्रहपीडाविनाशार्थं भूतादिग्रस्तनाशनम् २
अष्टकर्मावसाने तु शान्त्यर्थं बलिमाचरेत्

देवाग्रे मराटपं कृत्वा पूर्वोक्तविधिना सह ३
गोमयालेपनम् कृत्वा प्रोक्षयेदस्त्रमंत्रतः
मराटपस्य तु मध्ये तु कल्पयेद्बुद्धिमराटपम् ४
तस्य दक्षिराभागे तु षट्कोरां होममराटपम्
षट्कोरां वृत्तमश्रं वा पंचवर्णैरलंकृतम् ५
कोरााग्रं रक्तवर्णाभं मध्ये त्र्यंशं सवर्णकम्
नवकोष्ठं तु संकल्प्य पद्ममष्टदळान्वितम् ६
कर्णिका सितवर्णेन केसरा हेमवर्णकम्
दळं वै रक्तवर्णाभं तद्बाह्ये कृष्णमराडलम् ७
तद्बाह्ये चतुरश्रं तु पंचवर्णैरलंकृतम्
एवमष्टदळं पद्मं कृत्वा कोष्ठं प्रति प्रति ८
व्योमव्यापि पदेनैव दळं प्रति समर्चयेत्
बलिहोममराडलान्तं तु साध्यस्थानमुदाहृतम् ९
वस्वश्रमराडलं कल्प्य कोरारक्तनिभं भवेत्
चतुरश्रसमोपेतं पंचचूर्णैरलंकृतम् १०
तस्योर्ध्वे चासनं न्यस्त्वा वासीनं प्राङ्मुखासनम्
शिवमन्त्रशतं जप्त्वा शिवध्यानपारायराः ११
ब्राह्मराान्रुद्रसंख्या च त्रियम्बकमनुं जपेत्
खारित्रयं तदर्धं वा पावयेद्यवतराडुलैः १२
लिंगं प्रति विशेषेरा द्विप्रस्थं तराडुलोदनम्
द्वादशांगुलविस्तारं उत्सेधं चैव तत्समम् १३
अग्रमग्न्यंगुलं प्रोक्तं लिंगस्याकृतिवत्कृति
अतिरिक्तमयं लिंगं रक्तपुष्पैस्समर्चयेत् १४
यष्टिदीपं धमोपेतं लिंगमूर्धनि विन्यसेत्
एकाशीतिपदे मध्ये स्थापयेत्तु महाशिवम् १५
सदाशिवं यजेद्विद्वान् अतिरिक्तनिभान्वितम्

पश्चात्क्षुद्रशिवार्थं च तण्डुलं कुडुपं पचेत् १६
लिंगस्याकृतिवत्कृत्वा यष्टिदीपसमन्वितम्
शालिपिष्टमथेनैव प्रतिरूपं तु कारयेत् १७
द्वादशांगुलमायामं अथवा षोडशांगुलम्
तदायामं तपांशं तु गुल्फजानुगळं शिरः १८
एकांशेनैव कर्तव्यं पद्महृन्नाभिमेढ्रकम्
युगांशेनैव कर्तव्यं ऊरुमानं द्वयंशकम् १९
जंघाचोरुसमं चैव बाहूरूद्वयदीर्घकम्
शेषं युक्त्या प्रकर्तव्यं सर्वावयवसंयुतम् २०
पंचवर्णैरलंकृत्य उक्तस्थानेषु बुद्धिमान्
एवं क्रमेण संपाद्य पंचकर्म समाचरेत् २१
सकळी करणं कृत्वा सामान्यार्घ्यं च कल्पयेत्
मण्डलं तु समभ्यर्च्य सोमव्यापि पदेन तु २२
मध्यकोष्ठस्य मध्ये तु विन्यसेत्तु महाशिवम्
दळेष्वल्पं शिवं न्यस्त्वा वामादि परितो यजेत् २३
कालघ्नं कालदहनं दक्षेशं गजनिग्रहम्
त्रिपुरघ्नमघोरं च वृषारूढं सुखासनम् २४
बाह्याष्टपद्ममध्ये तु मूर्त्यष्टौ संप्रपूजयेत्
विघ्नेशाश्च गणेशाश्च लोकपालाष्टमूर्तयः २५
वसवश्चैव भूतानां नागाश्चैव तथैव च
दळे चाष्टाम्बुजैः स्थाप्य गन्धपुष्पैः समर्चयेत् २६
प्रतिरूपं समादाय स्थापयेदष्टदिक्षु च
रत्नकुंभसमोपेतं तदग्रे विन्यसेच्छिवम् २७
अर्चयेद्गन्धपुष्पैश्च दुर्गामात्रसमन्वितम्
प्रतिरूपाष्टकं यष्ट्वा यजन्तं विजयं तथा २८
उग्रो मधुकरो भीमो मांसभक्षो बलिप्रियः

रक्तपानप्रियश्चाष्टौ भूतनाथान्समर्चयेत् २९
स्थापयेत्पूर्वदेशे तु मंत्रखड्गौ समर्चयेत्
ध्यात्वा पशुपतिं देवं अर्चयेन्मूलमन्त्रतः ३०
वह्निं संपूज्य विधिवत् अर्चयेत्तु सदाशिवम्
नित्यहोमविधानेन होमं कुर्याद्विचक्षणः ३१
समिदाज्येन चरुणा हुत्वा तन्मूलमन्त्रतः
अभ्यर्च्य देवदेवेशं पश्चान्नीराजनं ददेत् ३२
मूलेन भसितं दद्यात् बलिविज्ञाप्य देशिकः
पश्चात्साध्यं समालोक्य स्वासीनश्चोत्तराननः ३३
भस्मना व्यापकं कुर्यात् अंगन्यासं तु कारयेत्
शिवमंत्रशतं जप्त्वा दिग्बन्धं चास्त्रमंत्रतः ३४
ज्वलदीपसमोपेतशिवं संग्राह्य पाणिना
बहुरूपमनुस्मृत्य साध्यस्य शिरसोपरि ३५
त्रिधा संभ्रामयेद्विद्वान् पुष्पैर्नीराजनं ददेत्
बहिबीजमनुस्मृत्य शिवाग्नौ तु विनिक्षिपेत् ३६
मध्यादीशानपर्यन्तं मण्डलस्य शिवं प्रति
बहुरूपमनुस्मृत्य शिवाग्नौ तु विनिक्षिपेत् ३७
मध्यादीशनपर्यन्तं वह्निमध्ये विनिक्षिपेत्
भ्रमयेद्रक्ततोयेन वह्निमण्डलबाह्यतः ३८
पश्चात्साध्यस्य परितः स्रावयेद्रक्ततोयकैः
अघोरमनुना जप्त्वा दिग्बन्धं चास्त्रमंत्रतः ३९
रक्तकुंभसमोपेतं प्रतिरूपं शिवाष्टकम्
ज्वलद्दीपसमोपेतं साध्यस्य शिरसोपरि ४०
त्रिधासंभ्रामयेद्धीमान् रक्तपुष्पैस्समर्चयेत्
रक्तौदनबलिं दद्यात् अजं शस्त्रेण संहरेत् ४१
भूतादिसर्वदेहाय बलिं गृह्णन्निदं पठेत्

पश्चात्साध्यसमीपे तु विशेदुत्तरदिङ्मुखः ४२
भस्मना व्यापकं कुर्यात् बृहत्सामेति मन्त्रतः
त्रियम्बकेन मंत्रेण भस्मना तिलकं कुरु ४३
एवमुक्तप्रकारेण बलिं दत्वा तु यो नरः
इह लोके सुखं प्राप्य सोऽन्ते सायुज्यमाप्नुयात् ४४
आचार्यं पूजयेत्तत्र वस्त्रकांचनभूषणैः
तत्र कर्मकरास्सर्वे दक्षिणां संप्रगृह्य च ४५
शान्तिं बलिविधिं प्रोक्तं लिपिन्यासविधिं शृणु
इत्यंशुमति तन्त्रे शान्तिबलिविधानविधिपटलः दशमः

## तन्तुच्छेदविधि

तनुच्छेदमहं वक्ष्ये श्रूयतां रविसत्तम
उभौ पुरुषचात्मानं एकीकृत्य सुबन्धयेत् १
सुमुखं वा दुर्मुखं वा उभौ यत्र प्रवेश्यते
साध्यसाधकयोः पुंसां मारणे मरणं भवेत् २
तस्मादात्मविभिन्नं यत् तन्तुच्छेदमिति स्मृतम्
नादमादौ समुत्पन्नं नादाद्यं योजयेत्परम् ३
साध्यनक्षत्रनामं च स्वात्मानं रक्षरक्षकः
नादाद्यं पूर्वमुच्चार्य भुवनस्वरसंयुतम् ४
तदन्ते च शिवास्त्राय साध्यात्मं च भयक्षय
वह्न्यन्तं मंत्रमुच्चार्य जपहोमेन तर्पयेत् ५
इष्टदेशे मनोरम्ये तीर्थे देवालयेऽपि च
मण्टपं कारयेत्तत्र पूर्ववच्छुद्धिमाचरेत् ६
कर्मारम्यदिनात्पूर्वे रात्रौ यं पूजयेच्छिवम्
पुष्पाणि मन्त्रयन्दत्वा प्रणम्यानुज्ञया ततः ७
कुंभं संस्थाप्य विधिवत् पद्ममण्डलमध्यमे

ध्यायेत्सदाशिवं देवं रक्तवर्णेन संवृतः ८
अर्चयेद्रक्तपुष्पैश्च धूपदीपादिकं ददेत्
मूलमंत्रशतं जप्त्वा नैवेद्यं दापयेत्ततः ९
आत्मरक्षाकरं मंत्रं सहस्रं वा तदर्धकम्
जप्त्वा वाष्टोत्तरशतं शिवमंत्रशतं जपेत् १०
ब्राह्मणा रुद्रसंख्याता जप्त्वा त्रियम्बकं मनुम्
शालिपिष्टमयेनैव प्रतिरूपं तु कारयेत् ११
वस्वश्रमण्डले स्थाप्य जीवन्यासं तु कारयेत्
ध्यात्वा साध्यस्य चात्मानं प्रतिरूपे प्रतिष्ठितम् १२
साधकात्मानमाकृष्य कुंभे संस्थापयेद्बुधः
दशास्त्रं परिवोऽभ्यर्च्य दिग्बन्धं चास्त्रमन्त्रतः १३
साध्यं मण्डूकवद्ध्यात्वा सर्पवत्साधकं स्मरेत्
उभयोरक्षणार्थाय भृंगवत्पुष्पवत्स्मरन् १४
षट्कोणमण्डले चाथ कार्यं पूर्वोक्तवर्त्मना
समिदाज्यचरूंश्चैव कळं च कदळीफलम् १५
नाळिकेरफलं मुद्गं जपं संख्या दशाशतम्
हुत्वा पूर्वोक्तमंत्रेण दृढं प्रति विशेषतः १६
प्रतिरूपं समादाय सप्तधा विभजेत्ततः
अंगैश्च मूलमंत्रैश्च सप्तभागं क्रमाद्धुनेत् १७
साध्यस्य रक्षणार्थाय प्रतिरूपं जपेत्क्षिपेत्
वह्निं विसृज्य देवेशं कुम्भमध्ये तु योजयेत् १८
होमान्ते तर्पणं कुर्यादतिरिक्त निबोधकैः
पश्चात्साधकमाहूय स्वासीनाः प्राङ्मुखा नराः १९
तदग्रे विन्यसेद्भस्म देशिकश्चोत्तराननः
भस्मना व्यापकं कुर्याद् ब्रह्मांगं विन्यसेद्बुधः २०
मातृका च कला चैव श्रीकण्ठादीनि विन्यसेत्

कुंभे संस्थाप्य चात्मानं साध्यस्य हृदये न्यसेत् २१
दिग्बन्धनं ततः कृत्वा प्रोक्षयेच्छुद्धतोयकैः
पश्चान्नीराजनं दद्यात् स्थापयेत्तु चतुष्पथे २२
भस्मनालिप्य सर्वांगं बृहत्सामेति मन्त्रतः
सप्ताहाद्वाथ पंचाहाद् एवं प्रत्यहमाचरेत् २३
अवधानदिने रात्रौ शान्त्यर्थं बलिमाचरेत्
देवार्थे मण्टपं कृत्वा एकाशीतिपदं बुधः २४
पंचवर्णैरलंकृत्य पदं प्रति पदं प्रति
रक्तपुष्पैस्समभ्यर्च्य व्योमव्यापीति मंत्रतः २५
शिवदीपसमोपेतं साधकस्य शिरोपरि
त्रिधा संभ्रामयेद्धीमान् रक्तपुष्पैस्समर्चयेत् २६
प्रतिरूपं शिवं ग्राह्य ग्रामस्याष्टदिशासु च
स्थापयेत्तु विशेषेण अजं शस्त्रेण संहरेत् २७
भूतप्रेतपिशाचेभ्यो बलिं गृह्णन्निदं पठेत्
पश्चात्साधकमालोक्य भस्मना व्यापकं कुरु २८
बृहत्सामेति मंत्रेण समुद्धूळ्य विचक्षणः
एवं यः कुरुते मर्त्य आत्मरक्षाकरं परम् २९
तन्तुच्छेदं समाख्यातं सेनास्तम्भविधिं शृणु
इत्यंशुमति तन्त्रे तन्तुच्छेदविधिपटलः एकादशः

## पवित्रारोहणम्

पवित्रारोहणं वक्ष्ये श्रूयतां रविसत्तम
मनसा कर्मणा वाचा यन्न्यूनं कर्मणामपि १
पतनात्त्रायते यस्मात् पवित्रं तमिहोच्यते
स्वसिद्धं सर्वसिद्धं च द्वयं स्यात्पवित्रकम् २
आत्मसंयजनं कुर्यात् स्वसिद्धिरिति चोच्यते

परार्थे चार्चयेद्धीमान् सर्वसिद्धिरिति स्मृतः ३
एतेषां सर्वसिद्धैश्च पूजां वक्ष्ये यथाक्रमम्
आषाढे श्रावणे मासे प्रोष्ठमासे तथैव च ४
अश्विनी कृत्तिका मासे पवित्रारोहणं कुरु
पूर्वपक्षे चतुर्दश्यां आषाढे च पवित्रकम् ५
अन्येषु सर्वमासेषु पक्षयोस्सितकृष्णयोः
चतुर्दश्यामथाष्टम्यां पवित्रं विधिवत्कुरु ६
कृत्तिकादीपतः पश्चान्नाचरेत्तु पवित्रकम्
मेषादिमिथुनार्केषु यदा दश द्वयं भवेत् ७
अब्दान्तरे यावदावश्य मिथुनार्के हरिः स्वपेत्
कर्कटाख्यादिके वापि यदा दर्शद्वयं भवेत् ८
शेते विष्णुस्सदाषाढे भाद्रे च परिवर्तते
कार्तिके सप्रबुध्येत शुक्लपक्षे हरेर्दिने ९
तेमैत्रश्रवणोपेते पावने परिकीर्तिते
आषाढासितपक्षेषु मैत्रश्रवणरेवती १०
आदिमध्यावसानेषु भवेषु द्वादशीषु चेत्
ते पावनस्वधायोगाः कथ्यते रविसत्तम ११
आषाढपक्षे द्वादश्यां पौर्णमास्यामथापि वा
सुप्ते तदा तु कर्तव्यं पवित्रारोहणं शिवे १२
क्षौमं कार्पासजं वाथ सूत्रमेव परिग्रहेत्
ग्त्रिगुणं त्रिगुणी कृत्य अस्त्रमंत्रेण शोषयेत् १३
रोमाद्यं तु विसृज्याथ क्षाळयेदस्त्रमंत्रतः
शोषणं हृदयेनैव पवित्रं कारयेत्सुधीः १४
वामाद्या नवशक्तिश्च नवसूत्राधिदेवता
तन्तुना द्विगुणीकृत्य दशवृध्या ततः क्रमात् १५
शतमष्टोत्तरं चैव तन्तूनामुत्तमं भवेत्

तन्तुना द्वादशेनैव द्वादशादित्यदेवतः १६
पंचाशत्तन्तुसंख्याता तन्तूनां मध्यमा मता
तन्तूनां च त्रिसंख्याता त्रिमूर्तिरधिदेवतः १७
पंचविंशति संख्याता तन्तुनां कन्यसास्तथा
अथवान्यप्रकारेण तन्तुसंख्यां शृणुष्वथ १८
एकाद्येकैकवृध्या तु तन्तुनैवेष्टसंख्यया
श्रद्धया तन्तुसंख्याता यथेष्टग्रन्थिसंयुता १९
एकं द्वित्र्यंगुलं वापि ग्रन्थिमानं प्रकल्पयेत्
ग्रन्थयस्त्वष्टदेशे वा कल्पयेत्कल्पवित्तमः २०
एभिर्लक्षणसंयुक्तं कुर्याद्ग्रन्थिपवित्रकम्
महापवित्रं वक्ष्यामि गंगा गौरीवतारकम् २१
ग्रन्थयस्तन्तुसंख्या वा गंगावतारमेव च
कुर्यादष्टादशग्रन्थियुक्तं गौर्यवतारकम् २२
गंगावतारमात्मार्थं यजने तु पवित्रकम्
परार्थयजनार्थाय तन्तु गौर्यवतारकम् २३
पंचग्रन्थिसमायुक्तं आमन्त्रेण पवित्रकम्
दूर्वाक्षतैस्समभ्यर्च्य तस्मान्नित्यपवित्रकम् २४
गैरिका गुरुकाश्मीरचन्दनैरक्तचन्दनिः
हरिद्राकृष्णकर्पूरैः रञ्जयेद्ग्रन्थिमध्यमे २५
आत्मविद्या शिवेनैव त्रितयं लिंगमूर्धनि
पवित्रं पिण्डिके त्वेकं परिवारामरादिषु २६
पवित्रमेकं कर्तव्यं महेशं तद्विशेषतः
शिरोमालामुरो माला बाहुमालोपवीतकम् २७
मणिबन्धाक्षमाला च सकळेऽप्येवमाचरेत्
पवित्रमेवं सर्वेषां कल्पं तन्तु विधीयते २८
प्रासादं यागशालां च प्राकारं पचनालयम्

त्रिगुणं त्रिगुणी कृत्य तन्तुनावेष्ट्य देशिकः २९
निश्चित्य दिवसात्पूर्वे अंकुरार्पणमाचरेत्
प्रासादस्याग्रदेशे वा वामे वा दक्षिणेऽपि वा ३०
रुद्रहस्तं समारभ्य द्विद्विहस्तविवर्धनात्
त्रयोविंशत्करान्तं च समं च चतुरश्रकम् ३१
तत्त्रिभागैकभागेन वेदिकां संप्रकल्पयेत्
हस्तमानं समुत्सेधं दर्पणोदरसंनिभम् ३२
वेदिकायाः पुरो भागे कुण्डं कुर्यात्सलक्षणम्
सर्वालंकारसंयुक्तं मण्टपं भूषयेत्सुधीः ३३
गोमयालेपनं कृत्वा पुण्याहप्रोक्षणं कुरु
शालिभिः स्थण्डिलं कृत्वा तन्मध्येऽब्जं समालिखेत् ३४
तण्डुलैस्तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत्
पंचचूर्णैरलंकृत्य आचार्यः स्नानमाचरेत् ३५
सकळीं करणं कृत्वा सामान्यार्घ्यं च कल्पयेत्
तद्दिनस्यादिपूर्वेद्युः अधिवासनमारभेत् ३६
पंचगव्यामृतेनैव स्नपनैरभिषेचयेत्
नैवेद्यं दापयेच्छम्भोः धूपदीपादिकं ददेत् ३७
विघ्नेश्वरं समभ्यर्च्य भक्ष्यापूपादिकं ददेत्
देवदेवं नमस्कुर्यात् स्थापयेच्च पवित्रकम् ३८
अस्त्रेणैव तु संप्रोक्ष्य कवचेन +++
मण्टपं तु समभ्यर्च्य भान्वादिगुरुरन्तकम् ३९
वेद्यूर्ध्वे च शिवं दृष्ट्वा परिवारसमन्वितम्
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत् ४०
अष्टमंगलरूपाणि वेदिबाह्ये समर्चयेत्
जलकुंभस्य सव्ये तु स्थापयेत्तु पवित्रकम् ४१
संस्थाप्योदकेनैव प्रोक्ष्य संहितयाणुभिः

कुंभस्योत्तरदेशे तु न्यसेद्गन्धपवित्रकम् ४२
ग्रामन्त्रेण पवित्रं तु कुंभस्याग्रे विनिक्षिपेत्
कुंभस्य मध्यमे भागे न्यसेन्नित्यपवित्रकम् ४३
ग्रस्त्रेणैव तु संप्रोक्ष्य कवचेनावकुण्ठयेत्
ग्रभ्यर्च्य हृदयेनैव धेनुमुद्रां प्रदर्शयेत् ४४
नववस्त्रेण संछाद्य बहुरूपमनुस्मरन्
मण्टपस्थं शिवं यष्ट्वा पश्चिमे तु विशेषतः ४५
पद्मं वा स्वस्तिकं वापि गौरीतिलकमेव वा
लिंगे वै षण्णवत्या वा मण्डले तु समर्चयेत् ४६
कर्त्रिका दन्तकाष्ठं च तालुशोधनमेव च
सुचिका श्रोत्रशोधी च नखशोधनमेव च ४७
पूर्वभागे न्यसेद्धीमान् पौरुषं मन्त्रमुच्चरन्
कौपीनं खण्डवस्त्रं च तैलमामलकं तथा ४८
रजनिं पंचगव्यं च पंचामृतं च दक्षिणे
बहुरूपमनुस्मृत्य ग्रर्चयेद्देशिकोत्तमः ४९
ईक्षहरं यूकहरं केशशोधनमञ्जनम्
वस्त्रयज्ञोपवीतं च पुष्पमाभरणं तथा ५०
चन्दनं पश्चिमे देशे स्थापयेत्सद्यमंत्रकैः
ग्रोड्याणं योगपट्टं च भिक्षापात्रं कमण्डलुम् ५१
व्याघ्राजिनं वेणुदण्डं चामरं छत्रदर्पणम्
भासितं पादुकं चैव मात्रादण्डं च खड्गकम् ५२
उत्तरे विन्यसेद्धीमान् वामदेवमनुस्मरन्
ग्रस्त्रमन्त्रैस्समभ्यर्च्य पश्चात्कुण्डान्तिकं विशेत् ५३
ग्रग्निकार्योक्तमार्गेण ग्रग्निकार्यं समाचरेत्
समिदाज्य चरून्लाजान् तिलापूपफलांस्तथा ५४
मुद्गं गौळं यवं चैव सक्तुं सर्षपमेव च

संहितेनैव जुहुयात् मूलेन सर्षपं हुनेत् ५५
स्थालीपाकविधानोक्तमार्गेणैव चरुं पचेत्
चरुं त्रिभागतः कृत्वा शिवांशं तु त्रिभागकम् ५६
बल्यर्थं स्यादथैकांशं कल्पयेत्कल्पवित्तमः
द्रव्यान्ते व्याहृतिं हुत्वा अस्त्रेणैव शतं हुनेत् ५७
सौरादिगुरुपर्यन्तं दद्यान्नित्यपवित्रकम्
द्वारदेवान्समभ्यर्च्य स्नानेनैव प्रदापयेत् ५८
अमन्त्रेण पवित्रं तु दद्याल्लिंगस्य मूर्धनि
परिवारामरादीनां दद्यान्मंत्रपवित्रकम् ५९
निवेदयेच्छिवांशं तु गन्धपुष्पैस्समर्चयेत्
अघोरेण शतं हुत्वा अस्त्रेणैव शतं हुनेत् ६०
मूलेनाष्टशतं हुत्वा अष्टग्रन्थपवित्रकम्
भान्वादिगुरुपर्यन्तं दद्याद्गन्धपवित्रकम् ६१
सर्वालंकारसंयुक्तं सर्ववाद्यसमन्वितम्
दीपज्वालासमायुक्तं हर्म्यप्रदक्षिणं कुरु ६२
द्वारपालान्समभ्यर्च्य दद्याद्गन्धपवित्रकम्
स्वनाममन्त्रैरभ्यर्च्य प्रविशेद्गर्भगेहकम् ६३
पाद्यमाचमनं दत्वा मूलमंत्रेण देशिकः
दद्याद्गन्धपवित्रं तु धूपदीपादिकं ददेत् ६४
पश्चान्नित्याग्निकार्यादि संध्याशेषं समाचरेत्
एवं रात्रौ प्रकर्तव्यं प्रभाते स्नानमाचरेत् ६५
सकळीकरणं कृत्वा सामान्यार्घ्यं करे कुरु
संप्रोक्ष्य बहुरूपेण पवित्राण्यवरोपयेत् ६६
तानीशमण्डले पात्रे चण्डेशार्थं प्रगृह्यताम्
अष्टं पुष्पकया देवं समभ्यर्च्य हृदाणुभिः ६७
यागशालां प्रविश्याथ सकळीकरणं कुरु

सामान्यार्घ्यं च संकल्प्य प्रोक्षयेदस्त्रमन्त्रतः ६८
भान्वादिगुरुपर्यन्तं अर्चयेद्देशिकोत्तमः
कुण्डमस्त्रेण संप्रोक्ष्य हृदयेन समर्चयेत् ६९
प्रज्वाल्य वक्त्रमंत्रेण अघोरेण शतं हुनेत्
अस्त्रेणैव शतं हुत्वा सृष्ट्वा गौरिव तारकम् ७०
मूलेनाज्येन जुहुयात् संपातं पंचविंशतिः
सर्वद्रव्यं समाहृत्य स्विष्टकृद्धोममाचरेत् ७१
नैवेद्यं दापयेच्छंभोः धूपदीपादिकं ददेत्
भान्वादिगुरुपर्यन्तं दद्याद्गौरिवतारकम् ७२
ब्रह्मकुंभे चस्र वर्धन्यां दद्याद्गौरीवतारकम्
पंचगव्यामृतं कल्प्य स्नपनं कल्प्य देशिकः
विघ्नेश्वरं समभ्यर्च्य द्वारदेवान्समर्चयेत् ७३
गर्भगेहं प्रविश्याथ लिंग ++ रं स्तलेन च
क्षाळनं चास्त्रमंत्रेण शिवमंत्रैस्समर्चयेत् ७४
पूर्वभागे न्यसेद्द्रव्यमानीयमन्तः प्रविश्य च
कर्त्रिका हृदनैवेद्यं दद्यात्तेनैव देशिकः ७५
शिरसा दन्तकाष्ठं च शिखया तालुशोधनम्
सूचिका कवचेनैव नेत्रेण श्रोत्रशोधनम् ७६
नखशोधनमस्त्रेण दद्यात्तेनैव देशिकः
दक्षिणे स्थापितं द्रव्यं आनीयान्तः प्रविश्य च ७७
कौषीनादिरजन्यन्तं सद्यादीशान्तकं ददेत्
व्योमव्यापि समुच्चार्य पंचगव्यामृतेन च ७८
संस्नाप्य देवदेवेशं स्नपनैरभिषेचयेत्
वस्त्रखण्डेन संमृज्य लिंगपीठं विशेषतः ७९
पश्चिमे स्थाप्य यद्द्रव्यं संगृह्यान्तः प्रविश्य च
ईक्षाहारं हृदा चैव हुंकारं चास्त्रमंत्रतः ८०

दद्यादघोरमन्त्रेण केशशोधनमंजनम्
युवं वस्त्रेति मन्त्रेण वस्त्रेणाच्छादयेत्प्रभुम् ८१
यज्ञोपवीतं हृदया पुष्पमाभरणं तथा
चन्दनेन समालिप्य गन्धद्वारेतिमंत्रतः ८२
नैवेद्यं दापयेच्छम्भोः धूपदीपादिकं ददेत्
पश्चान्मण्टपमाविश्य हृदया षोडशं हुनेत् ८३
परिचारकमाहूय सोष्णीषस्सोत्तरीयकः
पवित्रं वाहयित्वा तु सर्वालंकारसंयुतम् ८४
हर्म्यप्रदक्षिणं कृत्वा द्वारदेशं प्रविश्य च
द्वारदेवान्समभ्यर्च्य दद्याद्गौर्यवतारकम् ८५
गर्भगेहं प्रविश्याथ पूजयेत्परमेश्वरम्
आत्मविद्यादिभिस्तत्वैः दद्याद्गौर्यवतारकम् ८६
शंखघोषसमायुक्तं सर्वालंकारसंयुतम्
महेशप्रतिमादीनां परिवारामरादिषु ८७
प्राकारे बलिपीठे च दद्याद्गंगावतारकम्
प्रभूतहविषं दत्वा धूपदीपादिकं ददेत् ८८
ओड्याणमीशमंत्रेण पुरुषे योगवेष्टनम्
भिक्षापात्रमघोरेण वामेनैव कमण्डलुम् ८९
व्याघ्राजिनं तु सद्येन हृदा च वेत्रदण्डकम्
चामरं शिरसा चैव छत्रं वै शिखयाणुभिः ९०
भसितं कवचेनैव पादुकं नेत्रमंत्रतः
मात्रादण्डमथास्त्रेण खड्गं तेनैव दापयेत् ९१
दद्यान्नित्यपवित्रं तु अस्त्रमंत्रेण देशिकः
पश्चान्नित्याग्निकार्यादिसंध्याशेषं समाचरेत् ९२
महेश्वरं समभ्यर्च्य गन्धपुष्पस्त्रगादिभिः
सर्वालंकारसंयुक्तं बल्यन्तं चोत्सवं कुरु ९३

एकाहं त्रियहं वापि पंचसप्ताहमेव वा
नवाहं वा प्रकर्तव्यं यानमेवं समाचरेत् ९४
लिंगात्पवित्रमुद्वास्य क्षालयेदस्त्रमंत्रतः
तेन मंत्रेण जुहुयात् समिदाज्यान्नकैस्सह ९५
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात्
एवं दिने दिने कुर्याद् क्रियामेनां समाचरेत् ९६
अवरोहदिने प्राप्ते नित्यपूजां समाचरेत्
जयादिरभ्याधानं च राष्ट्रभृद्धोममाचरेत् ९७
+++ भेष्वग्निं विसृज्याथ कुंभमध्ये तु योजयेत्
+++ कुंभं समुद्धृत्य गर्भगेहं प्रविश्य च ९८
संस्नाप्य देवदेवेशं प्रभूतहविषं ददेत्
नित्यहोमं समारभ्य मृगान्नं पूजयेन्नयेत् ९९
अर्धयामावसानान्तं चण्डयागं समारभेत्
चण्डेश्वरं समभ्यच्य स्नपनाद्यैर्विशेषतः १००
वस्त्रमाल्यैरलंकृत्य श्वेतचन्दनलेपयेत्
अस्त्रादि पवित्रं च चण्डनाथस्य रोपयेत् १०१
पायसं च निवेद्याथ धूपदीपादिकं ददेत्
ततो होमं प्रकर्तव्यं स्थण्डिले तु विशेषतः १०२
बिलापत्याग्निमार्गेण होमं कुर्याद्यथा विधि
अग्निमध्ये यजेच्चण्डं तन्मध्येण हुनेत्क्रमात् १०३
मनसा पूज्य चण्डेशं दिवा पूजावसानके
पवित्राणि हुनेत्तत्र चण्डनाथं विसर्जयेत् १०४
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् १०५
पवित्रारोहणं प्रोक्तं गौरीपवित्रकं शृणु

इत्यंशुमति तन्त्रे पवित्रारोहणविधि पटलः चतुर्दशः

# गौरीपवित्रम्

अथ गौर्याः पवित्रस्य वक्ष्येहं तद्दिवाकर
समयाचारनिष्ठानां पुंसां भोगापवर्गदम् १
संय ++ प्रधानाथ त्रि चेत् पृथक्कार्यं पवित्रकम्
वैन सहिता सा चेत् किं तु तेन सहाधरेत् २
तपे यन्मिथुनं प्रापेद् द्वादश्यां शुक्लपक्षके
हरिश्शेते ततः कुर्यात् यदा मेषादिराशिषु ३
षट्स्वे +त्रभवेद्दर्शद्वयं कर्कटके तदा
निद्राति स्म तिथौ विष्णौ तत्स्वापानन्तरं मतम् ४
तत्रास्तिदर्शयुग्मं चेत् श्रावणे मासि तन्नयेत्
शुक्राद्यस्तमये कुर्यात् उत्सवं च पवित्रकम् ५
प्रतिष्ठा नैव कर्तव्यदीक्षा च रविसत्तम
प्रथमा पावकस्योक्ता द्वितीया ब्रह्मणो तिथिः ६
अम्बिकायास्तृतीया तु चतुर्थी स्याद्गणेशितुः
शेत्स्य पंचमी प्रोक्ता षष्ठी स्कन्दस्य कीर्तिता ७
सप्तमी सप्तसप्तेः स्यात् अष्टमूर्तेस्तथाष्टमी
दुर्गादेव्यास्तु नवमी यमस्य दशमी तिथिः ८
इन्द्रस्यैकादशी प्रोक्ता द्वादशी कमलापतेः
त्रयोदशी कुमारस्य शंकरस्य चतुर्दशी ९
पितृणां पंचदश्येवं पवित्राय प्रकीर्तिताः
बुभुक्षुः शुक्लपक्षे तु मुमुक्षुः कृष्णपक्षके १०
तिथिष्वेतासुकुर्वीत ++ देवोदितासु च
पूर्वोक्तवत्पवित्राणि कृत्वा तत्पूर्ववासरे ११
नित्यत्रैवेद्यसायाह्ने नवपंचैककुण्डकम्
पूर्ववद्वेदिका युक्तं वस्त्रादिभिरलंकृतम् १२
यागमण्टपमासाद्य द्वारादिकलशार्चनम्

विधाय तन्नः प्रविश्याथ वेदिदक्षिणदिक्स्थितिः १३
आत्मशुध्यादिकं कृत्वा देवहस्तं विधाय च
विकीर्णनाभिमन्त्र ++ सहव्येन प्रोक्षयेत् गुरुः १४
कृत्वा मण्टपसंस्कारं विक्षिप्य विकिरानथ
ऐशान्यामस्त्रवर्धन्यां न्यासनान्तं ताडमाहरेत् १५
पूर्वाढ्यां पश्चिमद्वारे संपूज्य महतीं श्रियम्
ऐशान्यामर्चयेदस्त्रवर्धनीं सिंहवाहिनीम् १६
इन्द्रादिकलशानिष्ट्वा स्ती लिंगान्तान्यथा क्रमम्
अध्याय वर्धनीं धारां अविच्छिन्नं च पातयन् १७
परिभ्राम्य यथा स्थाने स्थापयित्वा स्थिरासनम्
कल्पयित्वा यजेत्पाशु पतास्त्रं मुखरक्षणम् १८
ज्ञानखड्गं समर्प्याथ जपं कृत्वा निवेदयेत्
वेदिकामण्डले देवीं सर्वमैकाभसाकिणीम् १९
संपूज्य मूलदेव्या + विशेषेण समाचरेत्
कृत्वा कुण्डादिसंस्कारं वर्माद्यर्थं हुताशनम् २०
विभज्यान्यत्र संरक्ष्य शिवाग्निं हृदये शिवा
साधनावरणानिष्ट्वा मूलेन जुहुयाच्छतम् २१
मूलाद्दशांशमंगानां कृत्वा हुतिमनन्तरम्
समिदाज्येन चरुणा लाजयुक्तिलनाळिभिः २२
शतमर्धं तदर्धं वा प्रधाने होममाचरेत्
निमिक्षणाख्यैः संस्कारैः अपि चित्राणि शोध्य च २३
पूर्ववद्द्वारपादादि खसा दद्याद्गन्धपवित्रकम्
पवित्राणि समादाय कृत्वा हर्म्यप्रदक्षिणम् २४
देव्यग्रे स्थापयित्वाऽथ भूतांगानि निवेदयेत्
अत्र किंचिद्विशेषोऽस्ति कौपीनस्थानकंबरम् २५
देव्ये चरुं निवेद्याथ धूपयित्वा पवित्रकम्

अामंत्रितासि देवेशि सह वामादिशक्तिभिः २६
निवेदयाम्यहं प्रातः पवित्रं परमेश्वरि
एवमामन्त्र्य तन्मूलं शक्तितत्वान्तमुच्चरन् २७
निवेद्यामन्त्रिणा धूपदीपाद्यैः परितोषयेत्
तदभत्सर्पबल्याचर्च्य परिवारादि देवता २८
अमन्त्रिण पवित्रेण भूषयित्वाऽथ मण्टपे
शिवाग्निहृदयस्थायै देव्यै तच्चरुपूर्वकम् २९
दत्वा पवित्रं मूलेन हुत्वा चाष्टाधिकं शतम्
पूर्णाहुतिं ततो हुत्वा संप्राप्यान्तर्बहिर्बलिम् ३०
प्रायश्चित्ताय शास्त्रेण हुनेत्पूर्णान्वितं शतम्
अग्निस्थमण्डलस्थाय देव्या संयोज्य देशिकः ३१
शिवाग्निं च निरुध्याय भोजनादिकमाचरेत्
अवरोहदिने प्राप्ते कृत्वा स्नानादिकं विधिम् ३२
प्रविश्य मण्टपद्वारपालादीनर्चयेत्क्रमात्
देव्या वैशेषिकं पूज्य कृत्वा भूयः पवित्रकम ३३
समारोप्याथ कुण्डस्था देवं संपूजयेत्ततः
संतर्प्यमूलब्रह्मांगैः पूर्णा दत्वाथ निष्कृते ३४
शतमन्त्रेण पूर्णान्तं हुत्वाग्निस्थां महेश्वरीम्
मूल देव्यासमायोज्य भूराद्याहुतिकं चरेत् ३५
अग्निं विसृज्य यागस्थं व्युत्क्रमेण विसर्जयेत्
अष्टपुष्पिकया देवीं संपूज्य प्रार्थयेद्गुरुः ३६
पवित्रारोहणं पुण्यं यन्मया समुपार्जितम्
तद्गृहाण महेशान्य सांगोपांगं प्रसीद मे ३७
इति विज्ञाप्य पुण्य ++ द्वरहस्ते समर्चयेत्
देव्यास्त्रमननाद्देव्याः पवित्रानेवरोहयेत् ३८
ततश्चण्डेश्वरीं प्राप्य गन्धपुष्पस्त्रगादिभिः

समाराध्य यथान्यायं दद्याद्गन्धपवित्रकम् ३९
ततः शुद्धपवित्राणि गृहीत्वा मंत्रमुच्चरन्
शिवादितत्वैस्तन्नाम प्रातः पूर्ववदर्चयेत् ४०
देव्या निर्माल्यमावेद्य धूपदीपादिकं ददेत्
सर्वासां संकोचे शिवविद्याख्य सर्वविद्याः पाय च ४१
++देवतानां तु गन्धशुद्धपवित्रयोः
मंत्रविस्तारसंयोज्य पक्षसामान्यमुच्यते ४२
++ मूलाणुभिर्गन्धपवित्राण्यपराणि तु
शिवादि सर्वतत्वान्तैः ++ मन्त्री समर्चयेत् ४३
संकोचे शिवविद्याय सर्वतत्वाधिपाय च
तन्नामोक्त्या चतुर्थ्यन्तं दद्योदेकपवित्रकम् ४४
एवमुक्तप्रकारेण देव्या कृत्वा पवित्रकम्
सर्वकामानिह प्राप्य देव्याः पदमवाप्नुयात् ४५
गौरीपवित्रकं प्रोक्तं लम्बोदरव्रतं शृणु
इत्यंशुमति तन्त्रे गौरीपवित्रारोहणविधि पटलः पंचदशः

## समकालनैमित्तिकद्वयार्चनविधि

नित्यनैमित्तिकं वक्ष्ये श्रूयतां रविसत्तम
नित्ये प्रवर्तमाने तु तथा नैमित्तिकं चरेत् १
नित्यपूजावसाने तु नैमित्तिकमुपक्रमेत्
संध्यावसानं त्रिविधं संध्येकेन विशेषतः २
नैवेद्यान्तं च बल्यन्तं दीपान्तं च त्रिधामतम्
यत्कर्म च समारभ्य तत्कर्मणश्चावसानके ३
संध्यावशिष्टमापाद्य नित्यं वै देशिकोत्तमः
ग्राचार्यायाश्च कर्तारः द्विधा चेति प्रकीर्तिताः ४
ग्राचार्येणैव कर्तव्या पूजा नैमित्तिकक्रिया

अर्चकेनार्चनं कुर्यात् नित्यपूजा विशेषतः ५
नैमित्तिकं च तन्तेदं साकल्यं पावनं ततः
शान्तिकं चैव मंगल्यं चतुर्भेदमुदाहृतम् ६
द्वारादि च निवेद्यान्त साकल्यं चेति कीर्तितम्
हुतादिबलिदानान्तं पावनं त्विति कीर्तितम् ७
धूपनृत्तावसानं च तच्छान्तिकमिहोच्यते
द्वारादिताराडवान्तं च मंगल्यं प्रविधीयते ८
नैमित्तिकविधानेन तथा नैमित्तिकं चरेत्
नैमित्तिकावसानान्तं नित्यं नैमित्तिकं सह ९
आचार्येणैव कर्तव्यं यथा नैमित्तिकार्चनम्
नित्यसंध्यावसानं यत् अर्चकेन समर्चयेत् १०
नित्यं नैमित्तिकं काम्यं त्रिविधं चेति कीर्तितम्
नित्यागमात्तु तन्नित्यं द्विविधाः संप्रकीर्तिताः ११
दिनं प्रत्यर्चनं नित्यं यजेन्मासं प्रति प्रति
विशेषयजनं यत्तद् आगन्तुन्नित्यमुच्यते १२
अष्टम्याराधनं चैव प्रदोषयजनं तथा
अमावास्याराधनं चैव विषु संक्रान्तिपूजनम् १३
इदमागन्तुकं नित्यं अर्चकेनैवमाचरेत्
नैमित्तिकं द्विधा प्रोक्तं नैमित्तागन्तुकं तथा १४
कर्षणादिप्रतिष्ठान्तं नैमित्तिकमिति स्मृतम्
अन्यानि सर्वकर्माणि नैमित्तागन्तुकं स्मृतम् १५
काम्यं तद्विविधं प्रोक्तं बाह्यमाभ्यन्तरं ततः
काम्य प्रसिद्धिदं कर्मा आत्मार्थं चाष्टकर्मसु १६
काम्यं नैमित्तिकं चैव आचार्येणैव कारयेत्
अंगोपांगं च सांगं च त्रिविधं चेति कीर्तितम् १७
स्नानं चैव निवेद्यं च हुतं नित्योत्सवं ततः

धूपदीपादिकं सर्वं अंगमित्युच्यते बुधैः १८
वस्त्रमाभरणाद्यैश्च गन्धमाल्यादलंकृतम्
उपांगमिति विज्ञेयं चामरं छत्रदर्पणम् १९
शेषानन्योपचाराणि प्रत्यंगमिति कीर्तितम्
नित्यं नैमित्तिकं कर्म यत्काले तु विमिश्रितम् २०
तत्काले चोभयं कर्म आचार्येणैव कारयेत्
शेषाश्च नित्यकर्माणि अर्चकेन समर्चयेत् २१
असंध्यायां भवेत्पूजामाभिचारकमुद्भवम्
कर्मारम्भे तथाचार्यः स्त्वं शक्तश्चेद्विशेषतः २२
सपुत्रो वाथ शिष्यो वा सर्वकर्म समारभेत्
आचार्या अर्चकाश्चैव साधकालं कृतस्तथा २३
पाचकश्च कुलोद्भूतः पंचाचार्याः प्रकीर्तिताः
आचार्येणागमालोच्य यजेन्नैमित्तिकक्रियाम् २४
एवमाचार्यकृत्यं स्यात् अर्चकेनार्चनं शृणु
अलंकृतेनालंकृत्यं साधको द्रव्यसाधकम् २५
वाचकस्तु धृतिं कर्ता पंचाचार्यक्रमं विदुः
अर्चनादि चतुर्णां तु नित्यकर्मार्हको भवेत् २६
एवं क्रमेण चाभ्यर्च्य नित्यं नैमित्तिकक्रियाम्
नित्यनैमित्तिकं प्रोक्तं रुद्राक्षयजनं शृणु २७
इत्यंशुमतितन्त्रे समकालनैमित्तिकद्वयार्चनविधिपटलः षोडशः

## शृकाभिषेकः

शृकाभिषेचनं वक्ष्ये श्रूयतां रविसत्तम
अंकुराद्यादि कर्मान्ते अवभृतस्नानं पूर्वके १
उत्सवान्ते विशेषेण शृकाभिषेचनं कुरु

स्वर्णरजतताम्रेण गजशृंगेण कारयेत् २
उग्रसप्तांगुलोत्सेधं मूलं तदर्धविस्तृतम्
अग्रव्यासं त्रिभागैकं हीनं तस्या शिखोदयम् ३
अग्रे दान्मूलपर्यन्तं क्रमात्क्षीणं च लाघवम्
नानाचित्रसमायुक्तं नानारत्नविभूषितम् ४
अथवा वेणुखण्डं च प्रस्थं प्रस्था च मानतः
शृकाद्यष्टौ च संगृह्य अणिमाद्यष्टशक्तिकम् ५
शिवाग्रे स्थण्डिलं कृत्वा पुण्याहं वाचयेत्ततः
शालिभिः स्थण्डिलं कल्प्य नवकोष्ठं समालिखेत् ६
पात्राधारं न्यसेन्मध्ये स्वर्णपात्रं च निक्षिपेत्
शृकाष्टकं तु संगृह्य क्षाळयेदस्त्रमंत्रतः ७
इन्द्रादीशानपर्यन्तं शृकं तत्रैव निक्षिपेत्
पंकाष्टकं च संगृह्य सुगन्धकुसुमैर्युतम् ८
जलं चन्दनकच्चोललवंगोशीरकुंकुमम्
अगरुं चन्द्रसंयुक्तं पंकाष्टकमिहोच्यते ९
हिमतोयेन संयुक्तं अश्मना पेषयेत्ततः
गौरीमिमायमंत्रेण मध्ये मृगमदं न्यसेत् १०
शंनो देवेति मंत्रेण जलं चैव तु विन्यसेत्
गन्धद्वारेति मंत्रेण चन्दनं चैव संयुतम् ११
एषामीशेति मंत्रेण कच्चोलं चैवमेव च
कितवासेति मंत्रेण योजयेत्तु लवंगकम् १२
भूमिर्भूम्नेति मंत्रेण उशीरं चैव विन्यसेत्
तत्वायेति मंत्रेण कुंकुमं चैव संयुतम् १३
शुभिके शिरमंत्रेण कच्चोलं चैवमेव च
यद्वा खातेति मंत्रेण आमकर्पूरविन्यसेत् १४
हिमतोयं च संगृह्य पूरयेच्छृकमष्टकम्

पंकाष्टकं यजेद्धीमान् नवशक्तिं च संयुतम्  १५
स्नानं विज्ञाप्य विधिवत् स्नानक्रम समाचरेत्
शुद्धोदकं च संस्नाप्य गन्धं चैव तु लेपयेत्  १६
सुगन्धादाममेवं च धारामृगमदेन च
हिमतोयाभिषेकं च धूपदीपादिकं ददेत्  १७
तत्तन्मंत्रमनुस्मृत्य स्नापयेच्छृकमष्टकम्
ततो भक्तजनास्सर्वे शृकलीलां समाचरेत्  १८
एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात्
शृकाभिषेचनं प्रोक्तं श्रद्धोत्सवविधिं शृणु  १९
इत्यंशुमति तन्त्रे शृकाभिषेकविधि पटलः अष्टादशः

## नैमित्तकविधि

समानतन्त्रकं वक्ष्ये श्रूयतां रविसत्तम
दैविकं मानुषं चैव द्विविधं तत्प्रकीर्तितम्  १
मानुषं गुरभेदं स्यात् दैविकं पंचधा भवेत्
साम्यं विशेषनिर्वाणं मानुषं त्रिविधं विदुः  २
प्रतिष्ठास्थापनं चैव स्थितिस्थापनमेव च
उत्थापनमास्थापनं पंचधा दैविकं त्विदम्  ३
प्रतिष्ठास्थापनं तेषु चाष्टांगेन विधीयते
मेदिनी संग्रहं बालस्थापनं प्रथमेष्टका  ४
गर्भमूर्ध्नेष्टकायामलिंगसंस्थापनं यथा
संप्रोक्षणक्रमेणैव चाष्टांगमिति कीर्तितम्  ५
तेषु भूग्रहणं बालस्थापनं प्रथमेष्टका
कर्मत्रयं क्रमेणैव कारयेत्तत्पृथक्पृथक्  ६
लिंगसंस्थापनं चैव गर्भसंस्थापनं सह
एककाले प्रकर्तव्यं एकाचार्येण कारयेत्  ७

स्तूपीकीलप्रतिष्ठा च विमानस्थापनं च यत्
शिवसंप्रोक्षणं चैव युग्मतंत्रेण कारयेत्  ८
पृथक्तंत्रेण वा कार्यं अष्टांशं देशिकोत्तमः
प्रथमस्थापनं चेत्तु स्थूपी कीलं च वास्तुकम्  ९
शिवं संप्रोक्षणं कर्म समकाले समाचरेत्
प्रासादं देहमित्युक्तं तत्सर्वं निष्फलं भवेत्  १०
तस्मात्सर्वप्रयत्नेन विमानस्थापनं त्विदम्
शिवसंप्रोक्षणं चैव विधिनानेन देशिकः  ११
अंकुरं वास्तुयोगं च पर्यग्निकरणं ततः
मण्टप ++ समित्परिधिविष्ठरम्  १२
प्रणीता प्रोक्षणीपात्रं आसारपरिषेचनम्
परिस्तरणमंत्रान्तं एकमेवं समाचरेत्  १३
एकाचार्येण कर्तव्यं मूर्तिहोमादिकं विना
प्रासाद +++ मण्टपं चतुरश्रकम्  १४
सप्ताष्टकरमारभ्य द्विद्विहस्तविवर्धनात्
पंचविंशतिषड्विंश विस्तारान्समकल्पयेत्  १५
अयुग्मं वाथ युग्मं वा पंक्ति यः परिकीर्तिता
अनर्घ्यमण्टपे ++ टं समाचरेत्  १६
शालाकारप्रपा वाथ परितः कल्पयेत्क्रमात्
चतुर्भिर्द्वारसंयुक्तं चतुस्तोरणभूषितम्  १७
ताळमानं तलोत्सेधं अथवाथविडंगुलम्
तन्मध्ये वेदिकां कुर्यात् ++ गैकभागतः  १८
शिववेदिस्तु संप्रोक्ता तद्विस्तारसमोन्नता
तत्पूर्वादि चतुर्दिक्षु ब्रह्मवेदीं प्रकल्पयेत्  १९
आग्नेयादिषु कोणेषु धर्ममाख्या च वेदिका
नवग्रहस्य मध्ये तु तत्पूर्वादि चतुर्ष्वपि  २०

+++ दिश्वेदी ज्ञानाख्या दक्षिणे दिशि
वैराग्या पश्चिमे वेदी चोत्तरेश्वर्यकाख्यका २१
सुधापेष्टिकया कुर्यात् मृण्मये वाथ वा बुधः
तत्र समंशरभागोनं तदर्धं पदमर्ध ++ २२
++ न्नतं कार्यं शिवब्रह्मादिवेदिकम्
वह्नेरायतनं कुर्यान् मानुषे तु पदे यथा २३
स्नपनं कल्पयेद्विद्वान् पदे पैशादिके क्रमात्
कल्पपक्षो विधानज्ञो यमेकं दैविकत्रये २४
आग्नेयादिषु कोणेषु कारयेत्पूर्ववर्त्मना
अथवा नन्दनन्दांशैः मध्ये नवपदं ग्रहेत् २५
लग्नांशलोहकेनैव वेदिकां कारयेद्बुधः
तदूर्ध्वे वेदिकां कुर्यात् महादिक्षु च मध्यमे २६
पदमानोन्नतं वाथ त +++ पि वा
शरवेदांशहीनं वा वेदिकोदयमाचरेत् २७
उपवेदीं ततः कृत्वा समेतां च दशंगुलैः
परितः कल्पयेद्विद्वान् उत्सेधं समनिर्गमम् २८
दर्पणोदरसंकाशं नि +++ र्जितम्
कुण्डानि कारयेद्विद्वान् चतुर्दिक्ष्वीशकोणके २९
षट्कोणं पूर्वदिग्भागे चतुरश्रं तु दक्षिणे
पश्चिमे वसुकोणं स्यात् सौम्ये चाब्जं प्रकल्पयेत् ३०
प्रधान +++ चास्त्रं वा वित्तमेव च
एवं मण्टपमेवाद्य द्वितानाद्यैरलंकृतम् ३१
गोमयालेपनं कृत्वा शिल्पिनं विसृजेत्ततः
प्रणम्य देवदेवेशं पुष्पांजलि समन्वितम् ३२
देवदेवं म ++++++ र्तिविनाशनम्
त्वामुद्दिश्य सुतन्त्राणि त्वत्प्रसादात्करोम्यहम् ३३

इत्युक्त्वा प्रार्थयेन्मंत्री प्रणम्यानुज्ञया सह
आश्रयेदंकुरस्थानं प्रोक्षयेदस्त्रमंत्रतः ३४
शालिभिः स्थण्डिलं कृत्वा ++ खेत्
मध्ये नवपदं सौम्यं लोपयेत्परितः पदम् ३५
पूर्वादीनि चतुर्दिक्षु त्रीणि त्रीणि पदं त्यजेत्
चारार्थकं महादिक्षु पदमेकं परित्यजेत् ३६
भानुमार्गसमायुक्तं +++ यत्
कोणेषु घटिकाष्टौ च पालिकाष्टौ महादिशि ३७
अन्यानि च शरावाणि विन्यसेत्तु प्रदक्षिणम्
तन्मध्ये कलशे स्थाप्य कूर्चपल्लवतोययुक् ३८
सप्तबीजानि संक्षाळ्य क्षीरमध्येऽधिवासयेत्
क्षणिकैर्वाथ लोहैर्वा शिवास्त्रं परिकल्पयेत् ३९
स्थलिकोर्ध्वे न्यसेदस्त्रं गन्धपुष्पादिभिर्यजेत्
पंचगव्यसमायुक्तं बलिद्रव्यसमन्वितम् ४०
तदस्त्रेशं समादाय सर्वालंकारसंयुतम्
नदीतीरे तटाके वा शुद्धदेशेऽथ वा बुधः ४१
वने वा पर्वते वापि त्रिस्थानं संप्रकल्पयेत्
सममाज्याभ्युक्ष्य तोयेन गोमयेनानुलेपयेत् ४२
मण्डलत्रितयं कल्प्य शालिपिष्टार्द्ररेखया
पश्चिमे स्थापयेत्स्थूलं मध्यमे बलिमाचरेत् ४३
तदग्रे मण्डले भूमिं देविसंस्नापयेत्ततः
गणेशं पूजयेत्तत्र पुण्याहं वाचयेद्गुरुः ४४
स्थण्डिलं शालिभिः कुर्यात् नवकोष्ठं समालिखेत्
मध्ये ब्रह्माणमभ्यर्च्य अनन्तं पूर्वकोष्ठके ४५
विनन्तमग्निदिग्भागे भद्रं याम्ये समर्चयेत्
जयन्तं नैर्ऋते देशे भ्रमरी वारुणी भ्रमा ४६

वायव्ये प्रस्तुता सोमे जृंभितास्त्वीशकोणके
स्वनाम्नैव च संपूज्य दत्वा दध्योदनं बलिम्  ४७
धूपदीपं ततो दत्वा देवतो द्वासनं नयेत्
भूमिमंत्रेण संसिच्य कुंभामंक्षाळयेत्ततः  ४८
तेन भूमिं समाकृष्य ++  पात्रं न्यसेत्ततः
गन्धपुष्पादिनाभ्यर्च्य वस्त्रेणाच्छादयेत्ततः  ४९
शिरसा वाहयित्वा तु शूलास्त्रेण समन्वितम्
सर्वालंकारसंयुक्तं ब्रह्मघोषसमन्वितम्  ५०
प्रविशेदंकुरस्थानं ++++ मर्चयेत्
मृदमीशेन संगृह्य घटिकादिषु विन्यसेत्  ५१
पुण्याहं वाचयेत्तत्र प्रोक्षयेद्धृदयेन तु
तज्जलं विसृजेद्बीजपात्रे चन्द्रमनुस्मरन्  ५२
याजाताहुतिसंजप्त्वा ध्यायेत्तु ++  त्
वापयेच्छिवमंत्रेण घटिकादि यथा क्रमम्  ५३
घटिका पालिका चैव शरावं च यथाक्रमम्
संपूज्य गन्धपुष्पाद्यैः नैवेद्यं दापयेद्गुरुः  ५४
प्रोक्षयेद्धटिकादीनि +++ न तु
वस्त्रेणाच्छादनं कृत्वा तदन्ते बलिमाचरेत्  ५५
ततः प्रभातसमये स्नानं कृत्वा सुदेशिकः
चन्द्रं संपूजयेद्विद्वान् सामान्यार्घ्य जलेन तु  ५६
पालिकादीनि बीजानि सेचयेन्मूलमंत्रतः
पिधाय शुद्धवस्त्रेण बलिमग्ने नयेत्ततः  ५७
शिल्पि कर्मावसाने तु सदनं संप्रविश्य च
ग्रन्तर्बहिश्च संमार्ज्य कुशाग्रेणैव बुद्धिमान्  ५८
प्रोक्षयेत्पंचगव्येन क्षाळयेच्छुद्धवारिणा
तिलतैलेन चालिप्य प्रोक्षयेत्तु शिवाम्भसा  ५९

उशीरं मेघसिद्धार्थपद्मं मृगमदद्वयम्
कृष्णगन्धसमायुक्तं हिमतोयेन मर्दयेत् ६०
अन्तर्बहिश्च सर्वत्र लेपयेज्जलसंयुतम्
धूपमामोदयुक्तं तद्दत्वा दीपं प्ररोपयेत् ६१
ततः संप्रोक्ष्य गव्येन प्रकारेण यथाक्रमम्
मार्जनं प्रोक्षणं कृत्वा पुनरभ्युक्षणं नयेत् ६२
ततो विमानदेवानां अक्षिमोक्षणमाचरेत्
प्रासादपूर्वदिग्भागे गोमयेनानुलेपयेत् ६३
स्थण्डिलं शालिभिः कुर्यात् पंचतालप्रमाणतः
नन्दनन्दपदं कृत्वा मध्ये नवपदं गृहेत् ६४
विदिक्षु नवकं स्थाप्य शेषाश्च परिवर्जयेत्
अनले नैर्ऋते कोणे वायुदेशे त्वथैशके ६५
मध्यमे नवकं स्थाप्य गन्धपुष्पादिनार्चयेत्
मध्यमे शिवकुंभं तु शक्रकुंभं तथानले ६६
श्रीकण्ठं नैर्ऋते कुंभे माधवं वायुकोणके
ईशकोणे यथा तारं लोकेशात्परितो यजेत् ६७
आचार्यो मूर्तिपैस्सार्धं पुण्याहं वाचयेद्बुधः
ततो विमानमारुह्य मूर्तिपैस्सह देशिकः ६८
बिम्बानस्त्रेण संप्रोक्ष्य पटेनाच्छादयेद्धृदा
नेत्रे चास्त्रे समादाय भ्रूरेखां प्रथमं लिखेत् ६९
द्वितीयं पक्ष्मरेखां च तृतीयं श्वेतमण्डलम्
चतुर्थं मण्डलं कृष्णं पंचमं ज्योतिमण्डलम् ७०
देशिकस्य नियोगेन लेखयेन्मूर्तिपान्क्रमात्
ततः शिल्पिनमाहूय नेत्रं सुव्यक्तमालिखेत् ७१
शिखरे बिन्दुवृत्तं च लेखयेदतिसुन्दरम्
प्रासादाम्बुकवेयेति विद्यते तद्दिवाकरे ७२

ततः शिल्पिनमुद्वास्य मध्याज्याभ्यां च तर्पयेत्
प्रच्छन्नपटमावर्ज्य धान्यराशिं प्रदर्शयेत् ७३
प्रोक्षयेत्कलशाम्भोभिः दर्पणे चाभिषेचयेत्
प्रासादस्य चतुर्दिक्षु गोमयेनानुलेपयेत् ७४
धनाभिषेचनं कुर्यात् दर्पणोपरि देशिकः
यामं वा अर्धयामं वा घटिकाद्वयमेव वा ७५
स्नानमात्रमथा वापि जलाधिवासनं नयेत्
पुण्याहं वाचयेद्विद्वान् लिंगशुद्धिं समाचरेत् ७६
पश्चाच्च पंचगव्यैश्च बिल्वपत्रैश्च घर्षयेत्
इष्टिकास्थूपिकलशं चक्षायै दस्त्र वारिणा ७७
प्रोक्षयेच्छिवमंत्रेण भवनं देशिकोत्तमः
ब्राह्मणान्भोजयेत्तत्र गोमयेनानुलेपयेत् ७८
पुण्याहप्रोक्षणं कृत्वा प्रासादमुखमण्टपे
स्थण्डिलं शालिभिः कृत्वा सप्तविंशांगुलान्तरम् ७९
अंगुलत्रयविस्तारं नन्दनन्दपदं लिखेत्
ब्रह्मादिदेवताः पूज्य वासं कुम्भपुरस्सरम् ८०
दध्योदनं बलिं दत्वा ताम्बूलं दापये पृथक्
धूपदीपैस्समभ्यर्च्य शिवाग्निं संप्रकल्पयेत् ८१
पूर्वादीनां च देवानां अग्निमध्ये समर्चयेत्
समिदाज्यचरूणां च हुत्वा प्रेत्येकमाहुतिम् ८२
तिलतण्डुलमिश्रेण हुत्वा तत्तत्स्वनामतः
हव्यवाहेण मंत्रेण होमयेत्तदनन्तरम् ८३
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्
पूर्णाहुतिं ततो हुत्वा पर्यग्निकरणं नयेत् ८४
अन्तर्बहिश्च सर्वत्र प्राकारं मण्टपादिकम्
पंचगव्येन संप्रोक्ष्य वास्तुकुंभजलेन तु ८५

कृणुष्वपाजमंत्रेण संप्रोक्ष्य हृदयेन तु
उल्कां दत्वाऽथ तद्बाह्ये देशिकः स्नानमाचरेत्  ८६
ततो मण्टपमासाद्य भूतशुद्धिं समाचरेत्
मण्टपस्योत्तरे देशे स्थूपिकीलेष्टकान्न्यसेत्  ८७
तस्मिन्गैरिकया वापि शालिपिष्टेन वा बुधः
विलिखेदक्षरन्यासं शंखघोषपुरस्सरम्  ८८
लक्ष्मीशं द्वादशादित्यं शक्तिरूपं शिवादिकम्
प्राग्याम्यपश्चिमे सोमे विलिखेदिष्टकोपरि  ८९
स्थालिं प्रविन्यसेद्विद्वान् रक्षाबन्धनमाचरेत्
स्थूपिकीलेष्टकानां च देवतानां च देशिकः  ९०
सदनस्यापि लिंगस्य रक्षासूत्रं सबन्धयेत्
मुक्तपुष्पैस्समभ्यर्च्य लिंगस्यापूरणं तथा  ९१
पिधाय नववस्त्रेण शिवलिंगं चलात्मकम्
पादप्रक्षाळनं कृत्वा मण्टपं विधिनार्चयेत्  ९२
ततो बालगृहं गत्वा यात्राहोमं समाचरेत्
शिवाग्रे स्थण्डिलं कृत्वा शुद्धदेशोत्थसैकतैः  ९३
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिना नयेत्
समिदाज्येन चरुणा प्रत्येकं षोडशं हुनेत्  ९४
शिवाग्निश्चैव विद्यांगैः व्योमव्यापि पदैरपि
प्रासादबीजमुख्यैश्च स्पर्शाहुतिमथाचरेत्  ९५
शिवाग्रे स्थण्डिलं न्यस्त्वा पूर्णकुंभं च वर्धनीम्
घटमध्ये समावाह्य लिंगाद्देवं समूलतः  ९६
आवाह्य वर्धनीमध्ये पीठाद्देवीं मनोन्मनीम्
पूर्वाद्यैशानपर्यन्तं अष्टविद्येश्वरान्क्रमात्  ९७
संपूज्य गन्धपुष्पाद्यैः नैवेद्यं दापयेत्सुधीः
पूर्णाहुतिं ततो हुत्वा शिवकुंभादिकान्गृहेत्  ९८

बाललिंगं परित्यज्य शिवास्त्रेणैव देशिकः
परिवारघटोपेत शिवकुम्भं च वर्धनीम् ९९
विन्यसेच्छिववेद्यूर्ध्वे वृषभासनसंयुते
अधमं वेदिके विद्यान् इष्टकायां न्यसेत्क्रमात् १००
राक्षसैः स्थूपिकीलं च शयनोपरि विन्यसेत्
योगस्थापनकुम्भं च वायुवेद्युपरि न्यसेत् १०१
रासादकलस्त्वीशे पूर्वे चैन्द्रघटे न्यसेत्
दक्षिणे दक्षिणं कुंभं विष्णुकुंभं च पश्चिमे १०२
उत्तरे ब्रह्मकुंभं च विन्यसेत्तु यथाक्रमम्
परिवारघटां स्थाप्य तत्तत्कुंभप्रदक्षिणम् १०३
संपूज्य पूर्वमार्गेण प्रासादकलशायकान्
आचार्यस्त्वीशदिक्कुण्डे शिवाग्निं संप्रकल्पयेत् १०४
शुद्धपात्रे समानीय वालकं लौकिकं यथा
प्रोक्षयेच्छिवमंत्रेण हृदिना पञ्चधा भजेत् १०५
एकांशं मन्त्रहोमार्थं एकं ब्रह्महुनार्हकम्
एकांशं तु प्रधानं स्यात् तत्तत्कुण्डे प्रदापयेत् १०६
कृत्वा तु कुण्डसंस्कारं मध्ये वागीश्वरीं यजेत्
अग्निमंत्रेण संप्रोक्ष्य भावयेदनलत्रयम् १०७
गन्धपुष्पादिभिः पूज्य चामृतीकरणं कुरु
कुण्डमध्ये न्यसेन्मंत्री पावकं तर्प्य बीजतः १०८
आधानादिविवाहान्तं अग्निकार्योक्तमाचरेत्
देशिकस्य नियोगेन मूर्तिपास्तदनन्तरम् १०९
तत्तद्वेद्यग्रके कुण्डे होमकर्म समाचरेत्
समिदाज्य चरुं लाजामाषशालितिलं क्रमात् ११०
सद्यादिशिवपर्यन्तं हुत्वा तद्बीजसंयुतम्
शतमर्धं तदर्धं वा षोडशं वाहुतिं नयेत् १११

स्थूपिकीलेष्टिकाधामलिंगपीठाधिदेवतान्
हुत्वा स्पृष्ट्वा तु जुहुयात् द्रव्यं प्रति विशेषतः ११२
अथवा चोपले कुंभे स्पर्शाहुतिमथाचरेत्
द्रव्यान्ते व्याहृतिं हुत्वा हव्यवाहं समारभेत् ११३
ततो जागरणं रात्रौ ++++
++++++
++++++++++++ विन्यसेत्
विमानदेवतादेवीं अम्बिकाद्याश्चतुर्दिशि
विमानस्त्वीशकुंभे तु पार्वतीं च समर्चयेत् ११४
एवं तु विन्यसेद्धीमान् मूलगेहं प्रविश्य च
त्रिमृद्भिर्बिल्वपत्रैश्च कर्षयेन्मूलदेवताम् ११५
पंचगव्यामृतैः स्नाप्य शुद्धोदैरभिषेचयेत्
वस्त्रेणाच्छादयेद्बिम्बं भूषणाद्यैरलंकृतम् ११६
चन्दनादिदशद्रव्यैः लेपयेन्मूलमंत्रतः
कौतुकं बन्धयेद्धीमान् मुक्तपुष्पैस्समर्चयेत् ११७
ततो बालगृहं गत्वा यात्राहोमं समाचरेत्
बिम्बस्यान्तर्गतं मंत्रं कुंभमध्ये तु योजयेत् ११८
पश्चात्कुंभं समुद्धृत्य वेद्युपरि विन्यसेत्
अभितः कलशानष्टौ परिवारं समर्चयेत् ११९
पश्चात्कुण्डान्तिकं गत्वा अग्निकार्यं समाचरेत्
समिदाज्य चरून्लाजान् सर्षपांश्च यवांस्तिलान् १२०
होमद्रव्याणि सप्तैते सद्यकादिशिरोन्तकम्
वीजमुख्येन मंत्रेण अष्टोत्तरशतं हुनेत् १२१
विमानदेवतामंत्रैः प्रत्येकं दशकं हुनेत्
पृथिव्याद्यादिबीजैश्च होमयेत्पंचविंशतिम् १२२
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्

कुण्डेष्वग्निं विसृज्याथ कुंभमध्ये तु योजयेत् १२३
पश्चान्मूलगृहं गत्वा मुक्तपुष्पं विसृज्य च
संस्नाप्य शुद्धतोयेन गन्धपुष्पादिनार्चयेत् १२४
स्थूलिकीलं तु संग्राह्य सुमुहूर्ते प्रतिष्ठितम्
शेषाश्च शिल्पिकर्माणि सुदृढं कारयेद्बुधः १२५
पश्चाच्छिल्पिनमुद्वास्य शुद्धैरुत्थेति मंत्रतः
प्रोक्षयेच्छुद्धतोयेन विमानस्थापनं कुरु १२६
याममावाह्य कुंभांश्च स्नापयेत्स्वस्वमंत्रतः
पश्चाद्गर्भगृहं गत्वा मंत्रन्यासं समाचरेत् १२७
संप्रोक्षणार्थकलशैः स्नापयेन्मूलमंत्रतः
प्रभूतहविषं दत्वा धूपदीपादिकं ददेत् १२८
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः
एवं यः कुरुते कर्ता सर्वान्कामानवाप्नुयात् १२९
नैमित्तिकविधिः प्रोक्तः आज्ञाचक्रविधिं शृणु
इत्यंशुमति तन्त्रे नैमित्तिकविधिपटलः एकोनविंशः

## अन्नपूर्णाप्रतिष्ठा

अन्नपूर्णाप्रतिष्ठां तु श्रूयतां रविसत्तम
सर्वकामविवृध्यर्थं सर्वैश्वर्यफलप्रदम् १
राष्ट्रदुर्भिक्षनाशार्थं स्थापयेदोदनेश्वरीम्
ग्रामादिदेशे संस्थाप्य स्वतन्त्रमिति कीर्तितम् २
पचनालये तथाग्नेय्यां स्थापयेदोदनेश्वरीम्
परतन्त्रमिति प्रोक्तं स्थापनं द्विविधं स्मृतम् ३
सुवारे सुमुहूर्ते च नक्षत्रकरणान्विते
पुष्टितुष्टिश्रिया भूमिं निधिं मेधां सरस्वतीम् ४
अन्नहोमा तथा प्रोक्ता परिवाराष्टकं यजेत्

बीजत्रयं समुद्धृत्य बिन्दुनादसमन्वितम् ५
संपूर्णं च पदं पश्चात् स्वाहान्तं संप्रयोजयेत्
द्विभुजं चैकवक्त्रं च स्थापयेदोदनेश्वरीम् ६
++++ द्विपादं च द्विनेत्रकम्
हेमवर्णां महादेवीं उद्धृत्य बिन्दुनादसमन्वितम् ७
संपूर्णं च पदं पश्चात् स्वाहान्तं संप्रयोजयेत्
+++++ सर्वाभरणभूषिताम् ८
देवीं च दक्षिणे हस्ते वामे दुग्धान्नपात्रकम्
एवं ध्यात्वान्नपूर्णेशीं स्थापनं च समारभेत् ९
शक्तिस्थापनमार्गेण स्थापयेदोदनेश्वरीम्
अत्र किंचिद्विशेषोऽस्ति होमद्रव्यां दिवाकर १०
समिदाज्यगुळं सक्थुतिलमाषं तिलोदनम्
सर्वद्रव्यं विशेषेण स्वमूलेनैव होमयेत् ११
स्थापनस्य क्रमं प्रोक्तं अर्चनस्य क्रमं शृणु
अरुणोदयबेळायां अर्चयेत्परमेश्वरम् १२
पश्चान्नैवेद्यकद्रव्यैः देवाग्रे स्थाप्य देशिकः
आहूयचान्नपूर्णेशीं सर्वं पाचेत्तु शांकरीम् १३
शंखवाद्यादिसंयुक्तं पचनालयमाविशेत्
देवाग्रे स्थापयेद्विद्वान् पुण्याहं वाचयेत्ततः १४
शुद्धैरुत्थेति मंत्रेण प्रोक्षयेदस्त्रवारिणा
हविष्य विधिमार्गेण पाचयेत्पाचनार्हकान् १५
नैवेद्योपावनान्ते च देवीगर्भगृहं यजेत्
++ श्य भोजनद्रव्यैः देवीं दत्वा हृदेन तु १६
नैवेद्यान्तेऽन्नपूर्णेशीं पचनालयमाविशेत्
होमान्ते तु निवेद्यं स्याद्धूपदीपादिकं ददेत् १७
एवं दिने दिने कुर्यात् पुण्यां गतिमवाप्नुयात्

चान्नेशीस्थापनं प्रोक्तं स्थूपीस्थापनकं शृणु १८
इत्यंशुमति तन्त्रे अन्नपूर्णेश्वरीप्रतिष्ठा विधिपटलः विंशः

## रुद्राक्षविधिः

रुद्राक्षस्य विधिं वक्ष्ये श्रूयतां रविसत्तम
जपमाला उरोमाला शिरश्चोद्बाहुमालिका १
हस्तमाला कण्ठमाला लक्षणं वक्ष्यतेऽधुना
पंचविंशतिरुद्राक्षो मोक्षार्थीनां जपे स्मृतः २
षड्विंशति शिवार्थं च ज्ञानार्थं शत्रुनाशनम्
सप्तविंशति भुक्त्यर्थं पुष्ट्यर्थं चाष्टविंशति ३
त्रिंशज्जयार्थिनां कार्यं दशपंचाभिचारकम्
इत्थं वै जपमालाया धारणं लक्षणं शृणु ४
शिरो माला तु तन्नाहात् बीजमाला भुजान्ततः
कण्ठभूषा तु नाभ्यन्ता उरो माला सलक्षणा ५
कण्ठमाला तु तन्माला हस्तमाला तु तत्समम्
दर्शनात्पापनाशं तु स्पर्शनात्सर्वसिद्धिदम् ६
प्रागुक्तधारणात्पुण्यं रुद्राक्षं धारयेत्सदा
रुद्राक्षं कण्ठमाश्रित्य श्वानो वा म्रियते यदि ७
ते रुद्रपदमाप्नोति किंपुनर्मानुषादयः
मरणकाले रुद्राक्षं भक्षयित्वा म्रियन्ति ये ८
ते रुद्रपदमाप्नोति पुनर्जन्म न विद्यते
रुद्राक्षस्य ततोत्पत्तिं शृणुत्वं तद्दिवाकर ९
दिव्यवर्षसहस्त्रं तु चक्षुरुन्मीलितं मया
मुंचन्ति मम नेत्राणि तेन रुद्राक्षमुच्यते १०
एकवत्रः शिवस्साक्षात् अनन्तं धारणात्फलम्
सन्धार्य तत्र यतेस्तु स याति परमां गतिम् ११

द्विवक्त्रं शक्तिरित्युक्तं त्रिवक्त्रं नादमेव च
चतुर्वक्त्रं तु बिन्दुः स्यात्पंचवक्त्रं सदाशिवम् १२
षड्वक्त्रमीश्वरं प्रोक्तं रुद्रसप्तमुखं स्मृतम्
विष्णुश्चैवाष्टवक्त्रं तु नववक्त्रं चतुर्मुखम् १३
नववक्त्रैकवक्त्रान्तं फलं शतगुणोत्तरम्
हस्ते कराठे शिखा कर्णौ सन्धा यज्ञोपवीतकम् १४
सर्वपापात्प्रमुच्यन्ते सहभस्मैश्च धारयेत्
राजवार्ता वणिग्वार्ता लोकवार्ता तथैव च १५
रुद्राक्षचलनादेव मंत्रोद्धारफलं लभेत्
रुद्राक्षस्य सहस्त्रं तु धारणाच्छिवरूपिणम् १६
रुद्राक्षमालकृद्धार्य स याति परमां गतिम्
तस्मात्सर्वप्रयत्नेन जप्यरुद्राक्षकैस्सह १७
रुद्राक्षस्य विधिः प्रोक्तो भस्मोद्भवविधिं शृणु
इत्यंशुमति तन्त्रे रुद्राक्षविधिपटलः एकविंशः

## भस्मोद्भवविधि

भस्मोद्भवविधिं वक्ष्ये श्रूयतां रविसत्तम
भूतिश्चतुर्विधा प्रोक्ता दाद्यैस्तु वध्यते क्वचित् १
अनुरूपमहं देवं महादेवसमुद्भवम्
आग्नेय भस्म जगतां दृष्टमानं तु ++ २
अग्निना भस्म संबद्धं भस्मनाग्निसमन्वितम्
अविनाभावसंबद्धं भस्म कीर्तिं व्दन्ति ते ३
देवासुराश्च सार्वे च न जानन्ति मम प्रिये
भस्मनारायते अशून्य शून्येन तु निरंजनम् ४
निरंजने मम ज्योत्स्ना ज्योत्स्नायां च चिदम्बरम्
चिदम्बरेण नादं च नादाद् बिन्दुसमुद्भवः ५

बिन्दुनादपराशक्ति शक्त्या देवस्सदाशिवः
सदाशिवेन शिरसि महेश्वरसमुद्भवम् ६
महेश्वरश्च भगवन् रुद्रमूर्तिस्तु शंकरः
शंकराद्विष्णुसंभूतः विष्णुना च चतुर्मुखः ७
चतुर्मुखात्त्रिभुवनं पंचतत्वमयं जगत्
अग्निरूपमहं देवि विष्णुरूपं जलं तथा ८
पृथिवी च चतुर्वक्त्रः वायुरूपो महेश्वरम्
आकाशात्पंच संख्यातं एतेषां च गुणत्रयम् ९
युगान्ते निलयं शम्भोः ईशानं च प्रकीर्तितम्
तत्र भस्म विलेपं च वदन्त्येव हि केचन १०
इन्द्रियाणां च ++ शान्ति भस्म वदन्ति हि
कामस्य दहनं केचित् वदन्ति मुनयस्तदा ११
अग्निरूपमहं देवं अग्न्यासहसमुद्भवम्
स्वयंभूश्च विभूतिश्च विश्वभूतिस्सकारणम् १२
विभूत्या जननं ब्रह्मा विभूत्या जायते हरिः
विभूत्या जननं रम्यं विभूत्यां च महेश्वरः १३
विभूत्यां च समुत्पन्नः सदाशिव इति श्रुतिः
सर्वेषां देवतानां च त्रैलोक्यं सराचरम् १४
विभूति षिचनं चैव विभूतिस्सप्तसागरः
विभूतिः प्रळयाकारं विभूतिस्सृष्टिकारणम् १५
विभूतिश्च पुरावृत्तिः अत एव महेश्वरः
विभूतिस्सर्वदेवानां वन्दनीया मनोन्मनी १६
विभूत्या शृणु देवेशि कलुः पति ममाद्भुतम्
तस्मिन्करण उत्पन्नः कश्चिदौदुम्बरस्तरुः १७
अशीतिलक्षविस्तारं आयामं प्रांशुमानकम्
आमूलाग्रावसानं च फलवत्तरुरेवहि १८

तस्मिन्स्तरौ फलं चैकं तत्फलैः कृमिकीटकः
++ क्रियमस्ते तु भुवनानि चतुर्दश १९
तद्वदेवहि मां विद्धि मामिदं भुवनमम्बिके
एते सुरासुरास्सर्वे मूढास्ते गर्विणः खलुः २०
भूतिमाहात्म्यमखिलं शुद्धिसौभाग्यकारणम्
वक्तुं न शक्ता वेदाश्च कारणां च कमलां मया २१
विभूतिश्च गुरुस्साक्षात् विभूतिश्च चतुर्मुखः
विभूतिस्सर्वदेवानां कर्ता नारायणश्च सः २२
स भूतिस्सर्वरुद्रश्च विश्भूतिश्च महेश्वरः
सदाशिव इयं भूतिः सत्यं सत्यं दिवाकर २३
स्पर्शानाद्दर्शनाच्चैव धारणाद्भूतिका मुहुः
अश्वमेध सहस्राणि वाजपेयशतानि च २४
वाराणस्यां च वसः कोटिकल्पफलं भवेत्
ब्रह्महत्या च गोहत्या स्तेयं हेमस्य पापकम् २५
महापापोपपापानि नश्यन्ति भूतिधारणात्
तिस्रः कोट्यर्धकोटयश्च तीर्थानि भुवनत्रये २६
विभूतिस्नानमात्रेण तत्फलं भवति ध्रुवम्
यज्ञकाले तपः काले पूजाकाले जपे तथा २७
स्नाने जप्ये तथा ध्याने विभूतिस्नानमाचरेत्
त्रिपुण्ड्रेन विना श्राद्धं त्रिपुण्ड्रेन विनाहुतिः २८
त्रिपुण्ड्रेन विना दानं राक्षसं तत्प्रकीर्तितम्
जन्मान्तरकृतं पापं वर्तते यस्य कस्य चित् २९
तत्क्षणान्नश्यते सद्यो विभूतिस्पर्शनात्प्रिये
यो वा वर्षशतं कोटि एकपादस्थितो नरः ३०
विभूतिधारणात्पुण्यं कलां नार्हन्ति षोडशीम्
विभूतिः शिवलिंगं च रुद्राक्षं जपमालिका ३१

पंचाक्षरार्धवदनं तन्नरं नौमि पार्वति
विभूतिधारणाद्देवि अन्यो वापि द्विजा भवेत् ३२
भूतिं विना चतुर्वेदी चण्डालो भवति ध्रुवम्
गुरुद्रोही शिवद्रोही पातकी चोपपातकी ३३
विभूतिधारणादेव रुद्रो भवति नान्यथा
अणिमादि महासिद्धि बिलद्वारप्रवेशनम् ३४
अंजनं गुळिका सिद्धिः खड्गं भसितं च लभ्यते
विभूतिधारणं तस्य भुक्तिमुक्तिं च विन्दति ३५
विनायकग्रहग्रस्ता ये चान्ये क्षुद्रजन्तवः
त्रिपुण्ड्रधारिणं दृष्ट्वा पलायन्ते न संशयः ३६
भसितं धूम्रवर्णं च रक्तं पीतं च वर्जयेत्
धारयेद्भसितं श्वेतं सर्वपुण्यफलप्रदम् ३७
कृष्णं रोगकरं प्रोक्तं रक्तं कीर्तिहरं भवेत्
धूम्रमायुक्षयं चैव पीतं संपद्विनाशनम् ३८
दुर्जनानां निरीक्ष्ये तु असत्ये दुर्जनस्थले
तन्त्रीव भ्रुकुटिष्वेव मद्यपानां निरीक्षणे ३९
दुर्भोजने दुरालापे दुष्टस्त्रीसंगमेषु च
पिशुनानां च संस्पर्शे दोषशान्तिकरं परम् ४०
भस्म धारणमात्रेण सर्वपापैः प्रमुच्यते
दावानलाञ्च संजातं तन्त्राणामन्तरेऽन्तरे ४१
वने च पर्वताग्रेषु वज्रान्निर्दहनं च तत्
सर्वश्रद्धा भवेदत्र शिवे मात्रानुशोधयेत् ४२
तद्भस्म सदा मुख्यं शिवमंत्रं विना न तत्
अन्यहस्ते तु निक्षिप्य प्रेषयद्भस्तु भस्म तत् ४३
सदा च धार्यमनिशं महापापहरं भवेत्
गुरुर्माता पिता भ्राता स्वसा चान्त्यांगवामिनी ४४

एषां हस्ते गृहीत्वा तु भस्म तन्मंगळार्थकम्
आशीर्वादपुरस्सर्वं ब्राह्मणैर्वेदवेदिभिः ४५
ज्ञानभिर्विविधैः शास्त्रमंत्रज्ञैश्च तु यज्वभिः
एभिस्संधार्यते भूतिः शिवहस्तसमं भवेत् ४६
हीनचण्डाळपिशुनमद्यपानी च कित्करे
अंगहीने कुष्ठजनने दुराचारस्त्रियभिके ४७
एषां हस्तेन यद्दत्तं भस्म तद्दोषजं भवेत्
स्नाने दाने तथा श्राद्धे वैश्वदेवे सुरार्चने ४८
हृदये चैव भूतात्मा मृत्युं जयति मानवम्
मार्गे यातो जनः कश्चित् तिष्ठन्भूतिं न धारयेत् ४९
धृत्वा चेन्नरकं याति सत्यमेव न संशयः
एकहस्तेन पुण्ड्रस्य अधोमुखविलेपनम् ५०
श्वानयोनिशतं प्राप्य रौरवं नरकं व्रजेत्
द्विहस्तेन त्रिपुण्ट्रं स्यात् ऊर्ध्वमुखविलेपनम् ५१
अनेन विधिना सद्यः शिवसायुज्यमाप्नुयात्
रात्रौ भस्मनि यत्तोयं क्षिपेत्सततमद्रुवे ५२
रेणु संख्यानि ++ रेकरवं वृते शठः
उच्छिष्टे तु श्मशाने तु सूतकस्य तु मन्दिरे ५३
ताम्बूलचर्वणे कालेऽप्यशुद्धे सुरतस्थले
भूतिं न स्पर्शयत्येव स्पृशेत्सो पातकी भवेत् ५४
शुद्धः सुखी सुहृदयः सुमुखी सत्यभाषणः
दुर्गोषि रहितः प्रीतो धारयेद्भूतिभव्यके ५५
भस्मोद्भवविधिः प्रोक्तः पंचाक्षरविधिं शृणु
इत्यंशुमतितंत्रे भस्मोद्भवविधिपटलः द्वाविंशः

# ध्वारपालप्रतिष्ठा

द्वारपालविधिं वक्ष्ये श्रूयतां रविसत्तम
शिलादार्वेष्टकादीनि कारयेल्लक्षणान्वितम् १
स्थाप्याग्रे मणटपद्वारे नदीकाळौ विशेषतः
ऋन्तर्मणडलकद्वारे जयन्तविजयौ स्थितम् २
गौरिका वृतकद्वारे भृंगीशं चाग्ररूपिणम्
त्रितया वरणद्वारे भीषणश्चणडनायकम् ३
चतुर्थावरणद्वारे पिंगळः शंकरप्रियः
पंचमावरणद्वारे विशालाक्षो जटाधरम् ४
षष्ठमावरणद्वारे क्रूरविद्येशनायकम्
मंगळावृतकद्वारे त्रिदिशश्शिवशेखरः ५
द्वारदेवा इमे प्रोक्ता स्थानं वक्ष्ये द्विजोत्तम
द्वारस्योभयपार्श्वे तु स्वाधिष्ठानस्य चोर्ध्वतः ६
भित्तियुक्तो वियुक्तो वा स्थापयेद् द्वारपालकान्
द्वारमन्तर्मुखं विद्यात् द्वारपालान्बहिर्मुखे ७
स्तम्भोत्सेधांशमानेन द्वारपालोदयं विदुः
स्तम्भोत्सेधसमं वाथ त्रिपादं वाथ संगृहे ८
तयोर्मध्येष्टभागं च एकांशेन तु ह्रासयेत्
एवं बिम्बोदया ख्यातं शुभयादीनि संभवे ९
शालादिगोपुरान्तानां स्तम्भमानेन कल्पयेत्
मणटपद्वारदेशे तु द्वारपालांश्च कल्पयेत् १०
नवतालोक्तमानेन ऋंगमानं प्रकल्पयेत्
उष्णीषमध्यमद्वारे नेत्रान्ते च पुटान्तके ११
हनोर्वामे समालम्ब्य वामपार्श्वे स्तनाग्रके
नाभेर्वामे समालम्ब्य वामभित्पिणडसव्यके १२
स्थितांघ्रिनळकामध्ये पूर्वसूत्रं प्रकल्पयेत्

सूत्रस्योभयपार्श्वे तु नीव्रं वक्ष्ये यथाक्रमम् १३
सूत्रं तु वामजान्वन्तं एकविंशांगुलं भवेत्
सूत्रवामांघ्रिपार्ष्ण्यर्न्तं वसुद्व्यांगुलं भवेत् १४
स्थितांघ्रिनळकामध्ये वामपादाग्रकावधि
चत्वारिंशांगुलं वाथ चतुर्वर्णांगुलं तु वा १५
सूत्रात्पुष्कळविस्तारं कोर्परं विंशदंगुलम्
सूत्राद्विस्तृतविस्तारं कोर्परं द्वादशांगुलम् १६
विस्तृतं वासमाख्यातसूत्रवृक्षांगुलान्तरम्
करण्डमकुटोपेतं मौल्यग्रं तु शिखान्वितम् १७
कर्णपुष्पं चाल्पकेशै +++ विचित्रितः
चाळिका रत्नताटंकं बाहुमालासमन्वितम् १८
पादे कटितटे कर्णे कण्ठे हस्ततलेऽपि वा
मूर्ध्निदेशे च हृदये सर्पराजैर्विभूषितम् १९
द्विनेत्रं द्विभुजं भीमं सौम्यनेत्रसुवृत्तकम्
पुष्कलं दक्षिणे हस्ते विस्मयं वामहस्तके २०
पुष्कलं दण्डमुष्ट्यूर्ध्वे स्थापितं नाभिसीमकः
दिव्यैर्वस्त्रैरलंकृत्य सर्वाभरणभूषितम् २१
धूम्रवर्णं महाकाळं एवं संकल्पयेद्बुधः
महाकाळं समाख्यातं तज्ज्ञानं नन्दिकेश्वरम् २२
कश्चिदत्र विशेषोऽस्ति तद्भेदं शृणु सुव्रत
उष्णीषमध्यमात्सव्ये नेत्रान्ते पुटान्तके २३
हनोः सव्ये समालंब्य सव्यपार्श्वे स्तनाग्रके
नादे दक्षे समालम्ब्य सव्यस्फिक् पिण्डसव्यके २४
स्थितांघ्रिरळकामध्ये पूर्वसूत्रं प्रलम्बयेत्
दक्षिणे सूचिहस्तं स्यात् दुष्कुलं वामवस्तकम् २५
अन्यत्सर्वं समानं स्यात् प्रमाणं नन्दिकाळयोः

भुवंगं च पतंगं च कमलां च सरस्वतीम्  २६
विमलं च सुबाहुं च शंखं पद्मनिधिस्तथा
द्वारदेशे तु संस्थाप्य सकळस्थापनोक्तवत्  २७
द्वारपाले अयं प्रोक्तः दिक्पालस्थापनं शृणु
इत्यंशुमति तन्त्रे द्वारपालप्रतिष्ठाविधि पटलः

## द्वारपालार्चनम्

द्वारपालार्चनं वक्ष्ये श्रूयतां रविसत्तम
द्वारस्य दक्षिणे पार्श्वे अर्चयेन्नन्दिकेश्वरम्  १
तस्यैव वामपार्श्वे तु गंगां चैव समर्चयेत्
द्वारस्य वामपार्श्वे तु महाकाळं समरचयेत्  २
तस्य दक्षिणपार्श्वे तु यमुनां च समर्चयेत्
गणेशं दक्षिणेऽभ्यर्च्य वामपार्श्वे सरस्वतीम्  ३
लक्ष्मीं मध्यमदेशे तु ऊर्ध्वे उदुम्बरके स्थितः
पतंगं च भुवंगं च ऊर्ध्वाधस्तात्समर्चयेत्  ४
विमलं च सुबाहुं च अर्चयेत्तत्कवाटयोः
गुद्गुळुं च वदानं च वामदक्षे निविस्थितम्  ५
कवाटार्गळमध्ये तु श्रीदेवीं तत्र पूजयेत्
स्कन्दं यंत्रिकयाभ्यर्च्य द्वाराग्रे वृषभं यजेत्  ६
वृषाग्रे चास्त्रराजानं अर्चयेत्तत्स्वनामतः
धूपदीपादिकं दत्वा महाघण्टां तु ताडयेत्  ७
कवाटोद्घाटनं कृत्वा मूलमंत्रेण देशिकः
दक्षशाखां समाश्रित्य यामान्ते च निवेदयेत्  ८
द्वारपलार्चनं प्रोक्तं वास्तुपूजाविधिं शृणु
इत्यंशुमति तन्त्रे द्वारपालार्चनविधिपटलः

# आद्येष्टकाविधि

आद्येष्टकाविधिं वक्ष्ये श्रूयतां रविसत्तम
द्विविधं वास्तुभेदं स्यात् लांगलिंघकमेव च १
पूर्णगन्धरसैश्शब्दैः स्पर्शनाक्षितिपूर्ववत्
प्रशस्तं खातभूमानशिलान्तं वा जलान्तकम् २
स्वाधिष्ठानप्रमाणं वा त्रिगुणाद्यर्थमेव वा
लांगले घातविस्तारं द्विगुणं त्रिगुणं तु वा ३
चतुः पंचगुणैर्वाथ खातैर्वासंद्वितीयके
पुरुषांजलिमात्रं वा कटिस्थानावसानकम् ४
जानुमात्रावसानं च खात्वा समतलं शृणु
तन्मृदं तु बहिर्न्यस्त्वा पूरयेद्वालुकादिभिः ५
इष्टकादिपाषाणैः मृद्भिरद्भिश्शनैः शनैः
घने कृत्वैस्त्रिपादैश्च पक्षतुष्टैर्बहिश्चरैः ६
मुसलैश्चिक्कणैश्चैव जलेनापूरयेत्ततः
घनीकृत्वा समतलं इष्टकास्थापनं कुरु ७
प्रासादं च सभास्थानगोपुरं च त्रिधामयम्
एकैकानेकभेदेन प्रोच्यते रविसत्तम ८
प्रासादं संचितं प्रोक्तं सभास्थानसमन्वितम्
संचितासंचितं चैव गोपुरं चेति कीर्तितम् ९
स्त्रीपुंनपुंसकं चैव संचितादिषु भेदकम्
बेरसंस्थापनं यत्तद् संचितं चेति कीर्तितम् १०
नानाजनसमाघुष्टं संचितमिति स्मृतम्
यथाचारमिलीकारं संचितासंचितं भवेत् ११
एकैकं द्विविभेदं स्याद् इष्टकास्थापनं विधा
प्रासादमानं निश्चित्य समं समतलं कुरु १२
गर्भगेहविशालं स्यात् तत्र कुस्थितसूत्रकम्

परितः कल्पयेद्विद्वान् नरैर्वा संप्रकल्पयेत् १३
द्वारस्तम्भस्य मूर्ध्वे तु कुड्यस्याभ्यन्तरे बुधः
निर्गमस्सर्व्यपार्श्वे तु आद्यशैलेष्टकां न्यसेत् १४
अथवान्यप्रकारेण इष्टकास्थापनं शृणु
चतुर्मुखविमानं चेन्मध्यमे चेष्टकां न्यसेत् १५
गर्भं तस्योपरि स्थाप्य तदूर्ध्वे देवतां न्यसेत्
एवं संचितमाख्यातं असंचितमिदं शृणु १६
सभास्थानस्य तन्मानं पंक्तिमानवशात्कुरु
अंकणस्य तु मध्ये तु इष्टकान्यासमाचरेत् १७
अथवान्यप्रकारेण इष्टकास्थापनं शृणु
सभासांकणहीनं चेन्नैर्ऋतस्तंभमूलके १८
इष्टकास्थापनं कुर्यात् तत्र गर्भं निधापयेत्
अभ्यन्तरांघ्रिमूले तु कल्पयेत्कल्पवित्तमः १९
असंचितमिति प्रोक्तं संचितासंचितं शृणु
आदौ नाळिगृहं कल्प्य कुड्यं कुड्योक्तमार्गतः २०
द्वारैर्व्यासं च संकल्प्य सूत्रन्यासं च कारयेत्
कुड्यस्याभ्यन्तरेद्वत्यां स्तंभं च परिकल्पयेत् २१
अथवान्यप्रकारेण स्तम्भयोगं शृणुष्वथ
नाळिगृहविशालं तु उक्तमानेन कल्पयेत् २२
शेषं च कुण्डविस्तारं परितः परिकल्पयेत्
वनभित्तियुगं चेत्तु नाळीगेहस्य बाह्यके २३
द्वादशांगुलमारभ्य त्रित्र्यंगुलविवर्धनात्
एकाधिकं च पंचाशत् संख्यान्तं परिकल्पयेत् २४
नाळिकेरबहिर्नाव्र ++ द्वारस्य मध्यमे
मुखे पृष्ठे द्विपार्श्वे च द्वारस्तम्भं च कल्पयेत् २५
पृष्ठे द्वारांघ्रिमूले तु कल्पयेत्कल्पवित्तमः

असंचितमिदं प्रोक्तं संचितासंचितं शृणु २६
आदौ नाळीगृहं कल्प्य कुड्यं कुड्योक्तमार्गतः
द्वारस्तम्भस्य मध्यं तु इष्टकायाश्च मध्यमम् २७
समस्तास्त्रेण संस्थाप्य प्रविशस्यैव दक्षिणे
स्तम्भविष्कंभमानेन द्विगुणं त्रिगुणं तु वा २८
स्तम्भबाह्ये तु संस्थाप्य भित्तिरभ्यन्तरे बुधः
अंघ्रेः पादतलं यत्तद् स्थानं ++ तद्वदेव हि २९
अथवान्यप्रकारेण इष्टकास्थापनं शृणु
शैलजं शैलमध्ये तु इष्टका चेष्टकालये ३०
तरुभिस्तरुहर्म्ये तु समग्रैव शिला भवेत्
विपरीतमनर्थाय कर्तव्यं सुपरीतकम् ३१
आद्येष्टका तु कर्तव्या पुंशिलायास्तु देशिकः
पर्वतांगुलमारभ्य द्विद्व्यंगुलविवर्धनात् ३२
कलासंख्यावसानं च तावदायं प्रकल्पयेत्
विस्तारमायतार्धं च आयतार्धं घनं भवेत् ३३
रन्ध्रांगुलं समारभ्य द्विद्व्यंगुलविवर्धनात्
कलासंख्यावसानं च इष्टकायाममुच्यते ३४
विपुलं बहुळं प्राग्वत् संख्याश्च परिकीर्तिताः
एकादि षोडशान्तानां कल्पयेत्तु यथाक्रमम् ३५
इष्टकालक्षणं प्रोक्तं स्थापनस्य विधिं शृणु
पूर्वे वा पश्चिमे वापि दक्षिणे चोत्तरे तथा ३६
पंचहस्तप्रमाणेन प्रपां कृत्वाति सुन्दराम्
द्वित्रिभागैकभागेन वेदिकायास्तु संस्मृतम् ३७
रन्तिमात्रसमुत्सेधं दर्पणोदरसंनिभम्
तोरणैर्दर्भमाल्यैश्च वितानाद्यैरलंकृतम् ३८
वेद्यास्तु पूर्वदिग्भागे कुण्डं कुर्यात्सलक्षणम्

गोमयालेपनं कृत्वा गव्येन प्रोक्षयेद्बुदा ३९
ब्राह्मणान्भोजयेत्पश्चात् उच्छिष्टादीन् व्यपोह्य च
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु ४०
मण्डलं तु समभ्यर्च्य पूर्वोक्तविधिना सह
तण्डुलैस्तिललाजैश्च वेदिकायां तु विन्यसेत् ४१
पद्ममष्टदलं लिख्य पंचचूर्णैरलंकृतम्
विधिस्नानं पुराकृत्वा सकळीकरणं कुरु ४२
द्रव्यैर्गन्धोदकैः स्नाप्य शुद्धैरुक्षेति मंत्रतः
कौतुकं बन्धयेद्धीमान् पूर्वोक्तविधिना सह ४३
लकारादि क्षकारान्तं पूर्वादिषु च विन्यसेत्
अभ्यर्च्य गन्धपुष्पाद्यैः प्रत्येकं वस्त्रवेष्टितम् ४४
पूर्वाग्रं याम्य सौम्ये तु अन्यद्वा चोत्तराग्रकम्
अभ्यर्च्य गन्धपुष्पाद्यैः पृथिव्यादीनि देवताः ४५
नवकुंभं समादाय अश्मसाभ्यन्तरे न्यसेत्
सदाशिवं न्यसेन्मध्ये विद्येशानभितो यजेत् ४६
गन्धादिभिस्समभ्यर्च्य तत्तन्मन्त्रेण देशिकः
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत् ४७
समिधा सद्यमंत्रेण आज्यं मूलेन होमयेत्
अघोरेण चरुं हुत्वा नेत्रेणैव तिलं हुनेत् ४८
सर्षपं हृदयेनैव लाजं हृदयमंत्रतः
प्रत्येकाष्टशतं हुत्वा द्रव्यान्ते व्याहृतिं हुनेत् ४९
सर्वद्रव्यं तु संग्राह्य स्विष्टकृद्धोममाचरेत्
एवं रात्रौ प्रकर्तव्यं प्रभाते देशिकोत्तमः ५०
क्रमात्स्नानत्रयं कृत्वा सकळीकरणं कुरु
आचार्यः शिष्यसंयुक्तो मण्डपान्तः प्रविश्य च ५१
कुंभेशमर्चयेद्धीमान् पश्चाद्धोमं समाचरेत्

अघोरेण चरुं हुत्वा राक्षोघ्नेनैव होमयेत् ५२
दध्याज्यान्नतिलैर्मिश्रं राक्षसानां च तृप्तये
होमं कुर्याद्विशेषेण पुण्याहुतिमथाचरेत् ५३
आचार्यं शिल्पिनं पूज्य वस्त्रहेमांगुळीयकैः
मुहूर्तं निरीक्ष्य दैवज्ञात् दक्षिणां संप्रदाय च ५४
आद्योपलेष्टकां ग्राह्य नानालंकारसंयुतम्
यजमानसमोपेतं नानाभक्तजनावृतम् ५५
स्वस्तिसूक्तसमायुक्तं इष्टकास्थानमाचरेत्
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्पंचगव्यकैः ५६
नैर्ऋृते इष्टकाः स्थाप्य तदग्रमनिगोचरेत्
पश्चिमं तूत्तराग्रं तु पूर्वाग्रं तद्वापयेत् ५७
उत्तराग्रं तु पूर्वाग्रं विन्यसेत्प्रथमेष्टकाम्
पंच ब्रह्म समुच्चार्य पूर्वादीनि विन्यसेत् ५८
तन्मध्ये विन्यसेद्द्रव्यहेमपंकजसंयुतान्
कच्छपंस्तु मध्ये तु विन्यसेद्धृदयेन तु ५९
अष्टमृद्भिः समालिप्य कुंभतोयेन पूरयेत्
शान्तिकं दक्षिणावर्तं वामावर्तमशोभकम् ६०
अशुभैर्लक्षणैर्युक्तं शान्तिहोमेन शाम्यति
गन्धपुष्पादिनाभ्यर्च्य महास्त्रबलिमाचरेत् ६१
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
आद्येष्टकाविधिः प्रोक्तः अशुभाशुभकं शृणु ६२
इत्यंशुमति तन्त्रे आद्येष्टकाविधि पटलः पंचाविंशः

## बालस्थापनम्

बालस्थानविधिं वक्ष्ये श्रूयतां रविसत्तम
आद्यद्वितीयमेवं तु द्विविधं तरुणालयम् १

आद्यं बालगृहं कल्प्य मूलगेहमतः परम्
मूलबिम्बं प्रतिष्ठाप्य पश्चाद्बालगृहं त्यजेत् २
एवमाद्यगृहं प्रोक्तं द्वितीयं चाधुना शृणु
प्रायश्चित्तार्थकं यत्र स्थापयेद्बालबिम्बकैः ३
द्वितीयमिति विज्ञेयं तद्भेदं दशधा विदुः
खड्गेति मूलबिम्बे च दर्पणे प्रतिबिम्बके ४
कुम्भे च स्थण्डिले चैव मण्डले पादुकेऽथवा
पटे वा भित्तिचित्रे वा बालबिम्बार्थकं ग्रहेत् ५
मासादूर्ध्वं न कर्तव्यं कुंभे संस्थापयेद्विदुः
कलशस्थापनस्योक्तमार्गेणैव समाचरेत् ६
मण्डले स्थण्डिले चैव कूर्चेनैव विशेषतः
तद्बिम्बस्यार्चनं कुर्यात् आसप्तदिवसान्तकम् ७
मण्डलार्चनमार्गेण कारयेद्देशिकोत्तमः
शेषानन्यानि बिम्बानि द्वादशाब्दावधी यजेत् ८
प्रतिमास्थापनस्योक्तमार्गेण स्थाप्य देशिकः
अत्र किंचिद्विशेषोऽस्ति तन्मूलप्रतिमेन तु ९
तदग्रे स्थण्डिलं कृत्वा कलशान्स्थाप्य देशिकः
परिवारामरादीनां आसनस्यार्चनक्रमम् १०
++ कुम्भे समभ्यर्च्य यात्राहोमं तु कारयेत्
बिम्बेनाकृष्य तच्छक्तिं स्थापयेद्घटमध्यमे ११
स्पर्शाहुतिमथो हुत्वा स्विष्टकृद्धोममाचरेत्
पश्चात्कुंभात्समुद्धृत्य तत्पीठे चाभिषेचयेत् १२
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत्
शिल्पिस्पर्शनमात्रेण नित्यं + जो विरोधयेत् १३
नवकैः पंचगव्यैस्तु स्नापयेत्प्रतिमादिकम्
शान्त्यर्थसहिता मंत्रैः होमं कुर्याद्विचक्षणः १४

एवं यः कुरुते मर्त्यः स पुरयां गतिमाप्नुयात्
इत्यंशुमति तंत्रे बालस्थापनविधिपटलः षड्विंशः

## नक्षत्रपूजाविधि

वक्ष्ये नक्षत्रयजनं श्रूयतां रविसत्तम
महाभूतप्रशमनं परसेनापलायनम् १
सर्वशत्रुक्षयकरं सकलाभीष्टसिद्धिदम्
अकालमृत्युशमनं अपग्रहविनाशनम् २
राजाभिषेकसमये तस्य जन्मदिनेऽपि च
चतुर्दश्यामथाष्टम्यां पक्षयोरुभयोरपि ३
रणानामवसाने वा योगयुक्तदिनेऽथ वा
नक्षत्रयजनं कार्यं सकलाभीष्टसिद्धये ४
शिवाग्रे मराटपं कुर्यात् सर्वालंकारसंयुतम्
तन्मध्ये वेदिकां कुर्यात् गुणभागैकभागतः ५
विस्तारार्धं समुत्सेधं दर्पणोदरसंनिभम्
निशि तत्र समायुक्तं निम्नोन्नतविवर्जितम् ६
द्वादशस्तंभसंयुक्तं प्रासादवदलंकृतम्
तुरंगं वाथ वृषभं कल्पयेदग्रपार्श्वयोः ७
अलंकृत्य विशेषेण वस्त्रपुष्पस्त्रगादिभिः
कैलासं कल्पयेन्मध्ये शालिपिष्टमयेन तु ८
उपवेदीं ततः कृत्वा तद्विस्तारार्धमानतः
चतुरंगुलमुत्सेधं निम्नोन्नतविवर्जितम् ९
राशिमराडलकं कल्प्य मध्ये पद्मं समालिखेत्
भानुसंख्या महापंचलिंगं षराणवतिं विदुः १०
कुंकुमं कृष्णवर्णं च रक्तं गोक्षीरवर्णकम्
शुक्लवर्णक्रमेणैव कल्पयेत्पूर्ववर्त्मना ११

यागार्थमण्टपं कुर्यात् पूर्वोक्तविधिना ततः
निश्चित्य दिवसात्पूर्वे नवमे सप्तमेऽथ वा १२
पंचमे वा विशेषेण बिल्ववृक्षं समाश्रयेत्
तत्पूर्वादि परितः त्रीणि दिनानि विपोह्य च १३
पुण्याहं वाचयेद्विद्वान् प्रोक्षयेच्छिवमंत्रतः
हस्तमात्रेण तन्मूले परितश्चतुरश्रकम् १४
खानयेदस्त्रमंत्रेण पंचगव्येन पूरयेत्
गन्धादिभिस्समभ्यर्च्य मूलमंत्रेण सुव्रत १५
त्रियम्बकेन मंत्रेण बध्वा प्रतिसरं यथा
दध्योदनं बलिं दत्वा वनदेवादितृप्तये १६
यावदाशेषितं गव्यं जप्त्वा रुद्राधिदेवताः
जपान्ते संगृहेद्विद्वान् बिल्ववृक्षं समूलकम् १७
पंचांगं प्रणवेनैवं विभजोत्तान्पृथक्पृथक्
सद्यो जातेन संगृह्य मूलमूर्तिकयान्वितम् १८
दारु वामेन संगृह्य पत्रं हृदयमंत्रतः
फलमस्त्रेण संगृह्य ईशानेन सुमृद्गृहेत् १९
शुद्धवस्त्रेण संवेष्ट्य शिरसा वाहयेत्ततः
सर्वालंकारसंयुक्तं स्वस्ति सूक्तसमन्वितम् २०
धामप्रदक्षिणं कृत्वा शिवाग्रे वापि मण्टपे
गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत् २१
स्थण्डिलं कारयेद्विद्वान् शालिभिर्विमलैः शुभैः
विन्यसेद्बिल्वपंचांगं तत्तन्मंत्रक्रमेण तु २२
तत्पूर्वे पश्चिमे वापि चोत्तरे वा विशेषतः
अष्टांगुलप्रमाणेन भित्त्वा परशुना ततः २३
बिल्वकाष्ठं च मूलं च शुद्धतोयेऽभिषेचयेत्
रोचनां कुंकुमं कोष्ठं चन्दनं हरिचन्दनम् २४

उशीरमेर्वकर्पूर विवागरुमिश्रितम्
हिरिबेरसमायुक्तं हिमतोयेन दर्शयेत् २५
छायाशुष्कापटी त्वापपत्रपुस्पफलादिकम्
गृहीत्वा नवभाराडे तु मुखं वस्त्रेण बन्धयेत् २६
न्यस्त्वाभ्यर्च्य षडंगेन चामृतकरं कुरु
जप्त्वाष्टोत्तरसाहस्त्रं पापभक्षणमंत्रतः २७
तद्दिनावाथ पूर्वेद्युः अधिवासं समारभेत्
ततो मराटपमासाद्य सकळीकृतविग्रहः २८
विघ्नेश्वरं समभ्यर्च्य पुरायाहं वाचयेद्गुरुः
मराटपं पूजयेद्विद्वान् पूर्वोक्तविधिना सह २९
स्थरिडलं वेदिकामध्ये चाष्टद्रोणेन शालिना
तराडुलैस्तिललाजैश्च दर्भैश्चैव परिस्तरैः ३०
सहरूपेण संप्रोक्ष्य पूजयेद्वृषभासनम्
मराटपस्योत्तरं पूर्वे पश्चिमे वा विशेषतः ३१
अष्टद्रोणेन दुग्धेन स्नपनं परिकल्पयेत्
अर्घ्यं संसादयेद्विद्वान् पात्रशुद्धिं समाचरेत् ३२
विभजेद्बिल्वपंचांगं अष्टधा देशिकोत्तमः
द्विभागं शिवरूपं स्याद् एकभागेन वाप्यति ३३
नक्षत्रान्पंचभागेन कल्पयेत्तु यथाक्रमम्
गन्धपुष्पादिना यष्ट्वा जप्त्वा पूर्वोक्तमार्गतः ३४
प्रणवेनैव संगृह्य विन्यसेद्वेदिकोपरि
पूजयेत्कर्णिकामध्ये पार्वतीपरमेश्वरौम् ३५
चतुर्भिर्विन्यसेद्विद्वान् नक्षत्राणि यताक्रमम्
अग्न्याद्याश्लेषपर्यन्तं सप्तकं त्विन्द्रदेशके ३६
अनुराधादिविष्णवन्तं सप्तमं पश्चिमे दिशि
मखादि + विशाखान्तं सप्तमं याम्य देशके ३७

श्रविष्ठादि भरण्यन्तं सप्तकं सौम्यदेशके
संकल्प्याभ्यर्च्य गन्धाद्यैः तत्तत्स्वनाममंत्रतः ३८
ततो गर्भगृहं गत्वा लिंगशुद्धिं समाचरेत्
निवेदयेत्तु मुद्गान्नं लेपयेच्चन्दनेन तु ३९
धूपदीपैस्समभ्यर्च्याभीष्टार्थं प्रार्थयेद्गुरुः
ततो मण्टपमासाद्य मण्टपाधिपतीन्यजेत् ४०
अग्न्यायतनमासाद्य शिवाग्निं विधिनानयेत्
मधुरत्रयसंयुक्तं दूर्वाग्रं कदळीफलम् ४१
नाळिकेरफलं दुग्धं ओदनेन समन्वितम्
शतमर्धं तदर्धं वा मूलेनैव हुतं चरेत् ४२
पूर्णाहुतिं ततो हुत्वा शिवाग्निं तु विसर्जयेत्
ततः संपूज्य देवेशं उमादेवीसमन्वितम् ४३
हविर्निवेदयित्वा तु ताम्बूलं दापयेद्बुधः
परिचारकमाहूय सोष्णीषं सोत्तरीयकम् ४४
कुंभानुद्धृत्य शिरसा कृत्वा धामप्रदक्षिणम्
प्रविशेद्गर्भगेहस्थं स्नापयेत्स्नपनार्हकैः ४५
हविर्निवेदयित्वा तु गन्धपुष्पादिभिर्यजेत्
ततो मण्टपमासाद्य सर्वालंकारसंयुतम् ४६
प्रणवेनैव संगृह्य पंचचूर्णं सकल्पकम्
शिरसा वाहयित्वा तु प्रदक्षिणमथाचरेत् ४७
विन्यस्त्वा मण्टपस्याग्रे पुण्याहं वाचयेत्ततः
कैलासगिरिमभ्यर्च्य पूजयेद्वृषदैवतम् ४८
तस्योर्ध्वे विन्यसेद्बिल्वं पंचांगं साधिदेवतम्
नक्षत्रं परितः स्थाप्य पूर्ववत्पूजयेत्क्रमात् ४९
पट्टिका पाटकव्याघ्री रक्तास्यं च धातकी
लक्ष्मी च रक्तपद्मं च सप्तमं कृत्तिकादिषु ५०

बकुळं द्रोणपुष्पं च धूर्धूरं करबीरकम्
प्रदोषं पृथिवीपद्मं भूपाटलं च दक्षिणे ५१
तुळसी जातिपुन्नाग श्वेतार्कं बिल्वपत्रकम्
विष्णुक्रान्तिसहा भद्री श्रविष्ठादिषु सप्तके ५२
मुद्गान्नं कृत्तिकादौ स्यात् कृसरान्नं मखादिषु
पायसान्नं प्रदातव्यं अनूराधादिसप्तके ५३
श्रविष्ठादीनि गौळान्नं ईश्वरस्य +++
भक्त्या सर्वोपचारेण पूजयेदिष्टसिद्धये ५४
एवं यः कुरुते मर्त्यः सर्वलोकं जयिष्यति
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः ५५
भक्तानां परिवाराणां यथाशक्त्यादि दक्षिणा
दीनान्धकृपणानां च अन्नपानादिकं ददेत् ५६
सन्ध्याह्ने वापरे वाथ पुष्पांजलिकरो गुरुः
मूलेन शिवमादाय योजयेच्छिवमात्मनि ५७
पंचचूर्णं समादाय शुद्धपात्रे ग्रहेद्गुरुः
तच्चूर्णं यजमानाय दापयेत्तद्विधानतः ५८
पंचचूर्णं समादाय चन्दनेनैव संयुतम्
भस्मना चैव संयोज्य सततं धारयेन्नरः ५९
सर्वपापविनिर्मुक्तः सर्वत्र विजयी भवेत्
नक्षत्र यजनं प्रोक्तं जन्मक्षयजनं शृणु ६०
इत्यंशुमति तन्त्रे नक्षत्रपूजाविधि पटलः सप्तविंशः

## दीपारोपणम्

दीपस्यारोहणं वक्ष्ये श्रूयतां रविसत्तम
कार्तिके वाग्निनक्षत्रे दीपारोहणमुत्तमम् १
तदृक्षपूर्वरात्रौ तु दीपं चैवाधिवासयेत्

शिवं संपूज्य विधिवत् नैवाद्यान्तं विशेषतः २
मण्टपे स्विष्टदेशे वा स्थण्डिलं शालिना कुरु
लाजैः पुष्पैस्तिलैस्सार्धं दर्भैश्चैव परिस्तरेत् ३
विघ्नेश्वरं समभ्यर्च्य विज्ञाप्य परमेश्वरम्
पुण्याहं वाचयेत्तत्र दीपपात्रं तु संगृहेत् ४
प्रक्षाळ्यहृदयेनैव स्थापयेत्स्थण्डिलोपरि
घृतमिक्षेति मंत्रेण पात्रेणैव प्रपूरयेत् ५
वाससावर्तिभिः कुर्यात् पात्रमध्ये विनिक्षिपेत्
वामादिपरितश्चाष्टशक्तिं संपूज्य देशिकः ६
मध्ये सदाशिवं पूज्य गन्धपुष्पादिनार्चयेत्
वह्निबीजमनुस्मृत्य दीपानारोपयेत्सुधीः ७
गन्धपुष्पैस्समभ्यर्च्य नैवेद्यं धूपदीपकम्
ताम्बूलं दापयेद्विद्वान् शिवमंत्रेण देशिकः ८
पश्चान्नित्याग्निं कार्यादिसन्ध्याशेषं समाचरेत्
ततः प्रभातसमये दण्डसंस्थापनं कुरु ९
वैणवं शाखमसिनं मधूकं क्रमुकं तथा
नाळिकेरं च तालं वा तिलकं वार्जुनं तथा १०
चम्पकं खदिरं वापि दीपदण्डं विधीयते
चतुर्विंशांगुलं नाहं अधमं प्रविधीयते ११
अष्टत्रिंशतिनाहं स्यात् मध्यमं त्विति विद्यते
चतुश्चत्वारिकां गुल्यं उत्तमं नाहमुच्यते १२
देवाग्रे वृषपृष्ठे वा बलिपीठस्य पृष्ठतः
खानयेत्पृथिवीं तत्र चतुस्तालप्रमाणतः १३
तन्मूले वेदिकां कुर्यात् समं च चतुरश्रकम्
विस्तारार्धसमुत्सेधं मेखलात्रयसंयुतम् १४
गोमयालेपनं कृत्वा पंचचूर्णैरलंकृतम्

स्नपनं कारयेच्छंभोः सायाह्नसमये बुधः १५
वस्त्रैय भरणैर्माल्यैः अलंकृत्य विशेषतः
नैवेद्यं दापयेत्तस्मै ताम्बूलं दापयेत्प्रभोः १६
विघ्नेशं पूजयेद्विद्वान् भक्ष्यापूपादिकं ददेत्
पुण्याहं वाचयेत्तत्र महेशं चास्त्रमूर्तिनम् १७
अभ्यर्च्य गन्धपुष्पाद्यैः नानावाद्यसमन्वितम्
नानालंकारसंयुक्तं नानाच्छत्रसमन्वितम् १८
पिंछचामरसंयुक्तं पताकाद्युपशोभितम्
नानाभक्तजनैस्सार्धं रथाद्यारोहितेन च १९
हर्म्यप्रदक्षिणं कुर्याद्दीपदण्डान्तिकं भजेत्
महेश्वरहितं वाथ चास्त्रराजं विशेषतः २०
चास्त्रे राजं विना चेत्तु स्थण्डिले तु समर्चयेत्
पुण्याहं वाचयेत्तत्र दण्डशुद्धिं समाचरेत् २१
ब्रह्मचारी गृहस्थो वा शीघ्रमारोपयेत्सुधीः
उत्तराभिमुखो मौनी शिवगायत्रिया पुनः २२
पत्रं तु निक्षिपेदूर्ध्वे पुत्तलं तु विनिक्षिपेत्
गोघृतैर्वा सुतैलैर्वा त्रिप्रस्थं चोत्तमं भवेत् २३
द्विप्रस्थं मध्यमं प्रोक्तं सपादप्रस्थकन्यसम्
बहुरूपेण मंत्रेण पात्रेणैव प्रपूजयेत् २४
अध्याप्य दीपमानीय उल्वेणारोपयेद्बुदा
वह्निबीजमनुस्मृत्य दीपमारोपयेत्ततः २५
दीपारोपणकाले तु शंखघोषसमन्वितम्
दीपारोपणकर्तारं उद्वास्य च विशेषतः २६
गन्धपुष्पैस्समभ्यर्च्य दीपदण्डे सदाशिवम्
अनन्तादिशिखण्डयन्तान् प्रागादिष्वष्टवात्रके २७
स्वनाममंत्रैरभ्यर्च्य दीपमारोपयेत्सुधीः

गन्धैः पुष्पैश्च धूपैश्च दीपैरर्घ्यैश्च पूजयेत् २८
वेदादिवाद्यैस्संतोष्य अभीष्टफलदायकम्
प्रार्थयेद्देवदेवेशं प्रदक्षिणक्रमं नयेत् २९
गोपुरं मालिका चैव देवाग्रं मण्टपादिकम्
दीपानारोपयेद्धीमान् देवदेवप्रियार्थकम् ३०
महेश्वरं समभ्यर्च्य स्वस्थानेनैव देशिकः
सायरक्षां ततः पश्चात् प्रभूतहविषं ददेत् ३१
अपूपपृथुकादीनि भक्ष्यादीनान्निवेदयेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः ३२
एवं यः कुरुते मर्त्यः आल्कं फलमवाप्नुयात्
दीपारोहविधिः प्रोक्तः शिवरात्रिविधिं शृणु ३३
इत्यंशुमति तंत्रे दीपारोहणविधि पटलः

## साध्यसाधकनाम विधि

साध्यसाधकनामं च संयोगं च वदाम्यहम्
वश्यमाकर्षणं चैव स्तम्भनं मोहनं तथा १
भेदनं मारणं चैव उच्चाटनं तथैव च
मंत्रप्रतिक्रियाश्चैव अष्टधामंत्रमुच्चरन् २
वैदर्भं गारुडं चैव गर्जं गरुभवास्पदम्
क्रीढमालीढनं चैव स्यन्दनं चाष्टधा भवेत् ३
मंत्रान्ते साधको नामस्तदन्ते साध्यनामकम्
क्रियानामाक्षरं चान्ते कुरु कुरु पदं ततः ४
सर्ववश्यकरं मंत्रं वैदर्भमिति कीर्तितम्
मंत्रादौ साधकं साध्यं क्रियानामाक्षरान्वितम् ५
मध्ये चान्ते च संयोज्य मंत्रमाकर्षणात्मकम्
गारुडं चेति विख्यातं सर्वशास्त्रेषु भाषितम् ६

मन्त्रान्ते साधकं साध्यं क्रियावर्णं तदन्तके
स्तम्भनं त्विति विख्यातं गजमित्युच्यते बुधैः ७
मन्त्रादौ साधकं साध्यं क्रियावर्णमनन्तरम्
मोहनं त्विति विख्यातं गर्भमित्युच्यते बुधैः ८
+++ मथैकं तु साधकं साध्यकं तथा
क्रियावर्णं तु संयोज्य वंशस्पन्दं च भेदनम् ९
मन्त्रान्तद्वयमध्ये तु साधकं साध्यनामकम्
कर्मनामाक्षरं योज्य क्रीडामरणमुच्यते १०
मन्त्रार्धे च तदन्ते च साधकं साध्यसंयुतम्
क्रियानामार्णवं योज्य आलीढोच्चाटनार्थकम् ११
मंत्रं तु द्विविधा भज्य साधकं साध्यनामकम्
क्रियाणां चैव संयोज्य मंत्रस्पन्दप्रतिक्रिया १२
शान्तिकं क्रूरकर्म च द्विविधं चेति प्रकीर्तितम्
विष्यन्तं साधको नाम द्वितीयान्तं च साध्यकम् १३
क्रूरकर्मेति विज्ञेयं सर्वशास्त्रेषु भाषितम्
साधकस्य द्वितीयान्तं चतुर्थ्यन्तं च साध्यकम् १४
शान्तिकर्मेति विख्यातं सर्वकर्म समाचरेत्
तर्पणं जपपूजां च जपं होमं समाचरेत् १५
आवाहनादिकं सर्वं पूर्वोक्तविधिवद्यजेत्
तत्तत्कर्मक्रियाभेदमन्त्रैः पुष्पैस्समर्चयेत् १६
वह्निं संपूज्य विधिवत् कल्पयेत्पूर्ववर्त्मना
समिदाज्यचरुं लाजान् सर्षपांश्च यवांस्तिलान् १७
होमद्रव्याणि सप्तैते हुनेत्षोडशसंख्यया
प्रत्येकं दशकं हुत्वा एकं हुत्वा घृतेन तु १८
मरीच्यन्नं हुनेद्विद्वान् सस्यार्थं पूर्वसंख्यया
पायसान्नं हुनेद्धीमान् इदमाकर्षणार्थकम् १९

पक्वान्नंम् च हुनेद्धीमान् स्तम्भनं चेति कीर्तितम्
माषान्नं च हुनेद्विद्वान् मोहनार्थं विशेषतः २०
मरीचिलवणोपेतं ग्रर्कक्षीरविमिश्रितम्
+ भेदं च हुनेद्विद्वान् मारणार्थं विशेषतः २१
होमयेत्तु गुळान्नं च उच्चाटनमिहोच्यते
शुद्धान्नं च गुळं चैव मधुदधिफलैर्युतम् २२
घृतमिश्रं हुनेद्धीमान् भेदद्रव्यं प्रतिक्रिया
सहस्रं वा तदर्धं वा शतमष्टोत्तरं हुनेत् २३
सप्ताहं चैव पंचाहं मासमेवं समाचरेत्
एवं दिने दिने कुर्यात् तत्कर्मफलमाप्नुयात् २४
इत्यंशुमति तन्त्रे साध्यनामविधिपटलः त्रिंशः

## स्थाननिर्देशः

+++++++ हस्तिपृष्ठविमानकम्
श्रीच्छन्दं स्कन्दकान्तं च श्रीभोगः स्यात्तथैव च १
कैलासच्छन्दशिखरे पूर्वदिशीशानमन्तकम्
ग्रन्तर्मण्डलके सर्वपरिवाराणि कल्पयेत् २
शालामण्टपयुक्तं चेत् बाह्ये पीठं प्रकल्पयेत्
गौरिका वृतके चैव मध्यादिमध्यावसानकम् ३
मध्यादिसालमाश्रित्य ग्रन्तर्भारे विशेषतः
इन्द्रपावकयोर्मध्ये ग्रादित्यस्थानमेव च ४
सौरस्थानं समाश्रित्य पावके पचनालयम्
महेन्द्रवह्न्योममध्ये वाद्यस्थानं +++ ५
याम्यपावकयोर्मध्ये धान्यवासमुदाहृतम्
वायव्यसोमयोर्मध्ये शयनस्थानमुच्यते ६
वरुणानिलयोर्मध्ये कुर्यादायुधमण्टपम्

पचनालयपार्श्वे तु कर्तव्यं यजनालयम् ७
सोमशांकरयोर्मध्ये यागार्थं मराटपं कुरु
याम्यनैर्ऋृतयोर्मध्ये कुर्यात्सस्यादिमराटपम् ८
शकृभ्यानलयोर्मध्ये कुर्यात्स्नपनमराटपम्
शांकरे तु सभास्थाने विद्याशालां च वायवे ९
निर्ऋृतिवरुणयोर्मध्ये पुष्पमराटपमुच्यते
सौम्यानिलयोर्मध्ये पुस्तकाच्छादनालयम् १०
सौम्य ईशानयोर्मध्ये कोशकास्थानमुच्यते
प्राकारमध्यमाश्रित्य कुर्यादाश्रालयं तु वा ११
प्राकाराभ्यन्तरे त्वीशे कूपस्थानमुदाहृतम्
प्राकारस्त्वीशदेशे वा क्षेत्रेशस्थापनं कुरु १२
प्राकारमेवमाख्यातं बाह्य विधिरथोच्यते
त्रिचतुः पंचषट्सप्तदराडं वा विधिविस्तृतम् १३
कुर्यान्माहेश्वरादीनां पश्चिमे वासमुच्यते
वाद्यकानां च सर्वेषां प्राच्यां वासमुदाहृतम् १४
महावास्तु चतुर्दिक्षु जलदानप्रकां कुरु
सोमशंकरयोर्मध्ये गोशालासंप्रकीर्तिता १५
देवालयाग्रके कुर्यात् सूतिकावासमुच्यते
वरुणानिलयोर्मध्ये रोगशान्त्यर्थमराटपम् १६
सौम्यकानिलयोर्मध्ये विद्यादानप्रपां कुरु
इन्द्र ईशानयोर्मध्ये कल्पयेत्तु जलाशयम् १७
सर्वेषामपि भक्तानांण् ग्रास्थानं चोत्तरे दिशि
याम्ये महाव्रतस्नानं निर्ऋृते पाशुपतालयम् १८
काळामुख्यं तु वारुरायां बौद्धालयं तु याम्यके
सौम्ये चार्हतस्थान++ स्थानाभ्यासं तदीशके १९
याम्यपावकयोर्मध्ये भूसुराभोज्य मराटपम्

शक्रशांकरयोर्मध्ये चैन्द्रे शांकरमध्यमे २०
नृपस्यावासकं कृत्वा तद्बहिर्भृत्यसद्मनि
ईशानशक्रयोर्मध्ये शूद्रावासमुदाहृतम् २१
वायव्यसोमयोर्मध्ये वैश्यानां वासमुच्यते
तद्बाह्ये परितः कल्प्य शूद्राणां गणिकादिनाम् २२
नर्तकानां च गानानां क्रयविक्रयजीविनाम्
चक्रिणां पुष्पजीवानां कुलालानां तथैव च २३
मत्स्यमांसोपजीवानां तन्तुवायककोष्ठकम्
कष्ठणानां गृहश्रेणी चतुर्दिक्षु प्रकल्पयेत् २४
तद्बाह्ये सर्वजातीनां परितो वासमुच्यते
तद्बाह्ये चैशदिग्भागे क्रोशमात्रे श्मशानकम् २५
दक्षिणे चोत्तरे बाह्ये चण्डालकुटिलां कुरु
बाह्येतिक्रोशमात्रेण चण्डालानां तु वासनम् २६
केवलस्थाननिर्देशं मण्टपस्य विधीयते
इत्यंशुमति तन्त्रे स्थाननिर्देशविधिपटलः एकत्रिंशः

## जन्मादिनक्षत्रम्

देव्यादीनां च जन्मर्क्षं वक्ष्येऽहं शृणु सूर्यक
अश्वरूढानहं पूर्णा महालक्ष्मी च मातरः १
अश्विनी चाष्टवसवस्तुरगे च समुद्भवाः
सप्तर्षयस्समुद्राश्च गन्धर्वगण एव च २
अप्सरो गणयस्सर्वे गजऋक्षे समुद्भवाः
+++ महाघोरं धिम्माकखं च हुताशनम् ३
कृत्तिके च समुद्भूतं मेषलग्नमिति स्मृतम्
कृत्तिके च परोद्भूतं दुभ्या वृषभलग्नके ४
विधाता वृषभो विष्णुः रोहिणी ऋक्षसंभवाः

वाणी मृगशिरोद्भूता वृषलग्नमिति स्मृतम् ५
धनेशः क्षेत्रपालश्च वीरभद्रस्तथैव च
मृगशीर्ष उद्भूता लग्ने मिथुनसंयुताः ६
शिवस्सदाशिवश्चैव महेशास्त्रेषुकोद्भवाः
हिमाद्रिभूतनागाश्च पुनर्वसु ऋृक्षसंभवाः ७
मिथुनांशसमुद्भूतवृक्षा सर्वौषधयस्तथा
वायुः पुनर्वसोर्जातो लग्नः कर्कटकस्तथा ८
पुण्यके वरुणे जात आश्लेषा राक्षसोद्भवाः
मखे पुरन्दरे पूजा तथान्यं तद्वृक्षसंभवाः
उमा मनोन्मनी चैव पूर्वऋृक्षे समुद्भवाः ८-२
शास्तिका मृण्डिका सौरी चोत्तरे सिंहलग्नके
भानुभट्युत्तरे जातः कन्यांशमिति हि स्मृतम्
शंखपद्मनिधिर्हस्तनक्षत्रे च समुद्भवाः ९
वाराही चैत्रनक्षत्रे कन्यांशे च समुद्भवाः
कन्दं च चैत्रनक्षत्रे तौल्यंशकसमुद्भवाः १०
तत्वादिचण्डेश्वरो भूतं नन्दिकाळौ विशाखके
तौल्यं शक्रसमुद्भूतः चन्द्रो वैशाखवृश्चिके ११
विप्रादीनामतन्धूरान् ज्येष्ठे ज्येष्ठासमुद्भवाः
कन्दानि मूलनक्षत्रे रतिस्तद् ऋृक्षसंभवः १२
पूराडं वैश्यऋृक्षं स्यात् धर्मदेवसमुद्भवम्
शूद्रस्तु चोत्तराषाढा कन्यांशकमिति स्मृतम् १३
धूमावत्या तथाषाढा मकरांशमिति स्मृतम्
विष्णुः श्रवणसंभूतो राहुर्जातः श्रविष्ठके १४
मकरांशे समुद्भूतः केतुः श्रविष्ठके परे
शततारे च विघ्नेशः तार्क्ष्य प्रोष्ठपदे पदे १५
गंगाप्रोष्ठपदोद्भूता मीनांशकमिति स्मृतम्

नृपर्क्षदुत्तराषाढा अन्येऽहं सर्वजातिषु १६
एवं जन्मर्क्षता ख्याता संयुक्तं चेद्विशेषतः
++ ग्रार्क्षं नृपार्क्षं च यजमानर्क्षमेव च १७
बेरोदयं च नक्षत्रं यजमानकमेव च
+++++ पूर्वमक्षानुकूलतः १८
संग्रहे शुभऋक्षं स्याद् गृहऋक्षं विसर्जयेत्
अत्र कश्चिद्विशेषोऽस्ति स्थापनादिषु कर्मणि १९
आयव्ययं च नक्षत्रं योनिवारांशकस्तथा
यस्य बिम्बस्य नक्षत्रं प्रतिष्ठा ऋक्षसंयुतम् २०
एवं नक्षत्रनिर्माणं तत्र संख्या विधिं शृणु
इत्यंशुमति तन्त्रे जन्मनक्षत्रविधानविधिपटलः द्वात्रिंशः

## कमलार्चना

कमलार्चनाविधिं वक्ष्ये श्रूयतां रविसत्तम
सर्वपापहरं चैव सर्वाभीष्टफलप्रदम् १
सर्वशान्तिकरं चैव सर्वशत्रुविनाशनम्
स्वर्णं वा रजतं वापि ताम्रेणैवाथ कल्पयेत् २
युगाश्रं फलका चैव मुकुळी वृत्तमेव च
त्रियंगुलं समारभ्य द्वियंगुलविवर्धनात् ३
एकविंशांगुलान्तं च मानांगुलविधानतः
मु+कोच्चं तु कर्तव्यं शुभमानं प्रकल्पयेत् ४
तदुच्चं त्रिगुणीकृत्य मुकुळस्याथनाहकम्
तद्वयं फलकानाहः तद्भागं षोडशांशकम् ५
तदंशं फलदोत्सेधं तदूर्ध्वे वेदिकां कुरु
पद्मकोशस्य नाहं तु वेदिका वृत्तमेव तु ६
वेदिकोत्सेधमानं तु फलिकोत्सेधमर्धकम्

मुकुळोच्चं तु संयुक्तं तन्नाळं नाहदीर्घकम्  ७
मुकुळोत्साहमानं तु तदर्धं पीठविस्तृतम्
तदर्धं नाहनाळं तु तदर्धं पीठमुन्नतिः  ८
सुषिरं वा घनं वापि नाळमेवं प्रकल्पयेत्
अथवा द्वारतुंगं तु तदर्धं वा तदर्धकम्  ९
गृहीतोच्चं तु षड्भागे एकांशं मुकुळोदयम्
फलकापीठनाळं तु पद्मकोशं तु पूर्ववत्  १०
गर्भविस्तारमानं वा तदर्धं वा तदर्धकम्
गृहीतोदयमानं तु दशांशं मुकुळोदयम्  ११
अष्टांशं नाळदीर्घं स्यात् एकांशं पीठमुन्नतम्
यथाशोभमलंकारं कल्पयेद्बहुचित्रकैः  १२
मानमेवं प्रकर्तव्यं अधिदेव्याः प्रकीर्तिताः
पद्मस्य मध्ये श्रीदेवीं पूर्वे चैव सरस्वतीम्  १३
अनले माहिषीं चैव याम्ये चैव सुकेशिनी
नैर्ऋते मंगळी चैव कालकण्ठी च वारुणे  १४
वायव्ये मारुतं चैव सोमे च भगवर्तिमा
ईश्वरे च वृषादीनि चैव मध्यादीनि दळान्यसेत्  १५
हर्षणीफलकामध्ये गंगायां नाळमध्यमे
नालमध्ये स्वधादेवी पीठे चैव मनोन्मनी  १६
सर्वशक्तिमयं चैव कमलास्त्रं समर्चयेत्  १७
इत्यंशुमति तन्त्रे कमलार्चनविधिपटलः त्रयस्त्रिंशः

## नमस्कारविधि

नमस्कारविधिं वक्ष्ये श्रूयतां रविसत्तम
पंचपातकदोषघ्नं सर्वयज्ञफलप्रदम्  १

सर्वरोगविनाशार्थं नमस्कारमथाचरेत्
स्थूललिंगनमस्कारं गोपुरद्वारपूर्वके २
प्रणामं सूक्ष्मलिंगस्य महापीठस्य बाह्यके
ग्रथवा वृषपृष्ठे तु किंचिदाग्नेयमाश्रितः ३
पतेशां पशुपतेरग्रे दण्डवत्पतिते भुवि
पतन्ति पातकाः सर्वे नोत्तिष्ठन्ति पुनस्सह ४
प्रणम्य दण्डवद्भूमौ नमस्कारक्रमं ततः
ग्रष्टांगं चैव पंचांगं त्र्यंगमधुनोच्यते ५
मस्तके चैव हस्ते च श्रोत्रौ च चुबुकं तथा
भुजद्वयोभयोश्चैव ग्रष्टांगमिति कीर्तितम् ६
मूर्ध्नि चैव चतुर्हस्ते युग्मजानु तथैव च
पंचांगं तु नमस्कारं त्र्यंगं च ततः परम् ७
हस्तौ बध्वा तु मुकुलं मूर्ध्नि देशे नियोजयेत्
त्रियंगलक्षणं चोक्तं नमस्कारं च संख्यया ८
त्रीणि पंच च सप्तापि नवसंख्या क्रमं ततः
देहसंसक्तरेणूनां यावत्संख्या विधीयते ९
तावद्वर्षसहस्राणि शिवलोके महीयते
वस्त्रमाच्छाद्य देहं तु यो नरः प्रणमेच्चतु १०
त्रिजन्मजायते मूकः सप्तजन्मनि मूर्धनि
नृत्यतः शंकरस्याग्रे करसंस्फोटनादिभिः ११
उत्तिष्ठन्ते शरीरस्था महापातककोटयः
प्रदक्षिणक्रमं चैव नवपंच त्रिसंख्यया १२
प्रदक्षिणावसाने च नमस्कृत्वा तदीश्वरम्
मण्टपान्ते प्रविश्याथ शिवाग्रेऽथ विशेषतः १३
वृषभं चण्डमूर्तिं च प्रणम्यानुज्ञया तथा
देवदेवं नमस्कृत्वा स्तोत्रं चैव समुच्चरन् १४

मस्तके हृदये चैव अंजलिं चैव विन्यसेत्
देशिकेनैव कर्तव्यं गर्भगेहं प्रवेशयेत् १५
पूष्णे चैव समभ्यर्च्य शिवमन्त्रमनुस्मरन्
विप्राणां च प्रवेशं च अर्धमण्टपमाविशेत् १६
क्षत्रियस्य विशेषेण पुष्पांजलिक्रमेण तु
मणतपं तु प्रविश्याथ मुखद्वारस्थितिर्भवेत् १७
आत्मतत्वत्रयं चैव अर्चयेद्गुरुमार्गतः
वैश्याश्चैव रुद्राक्ष वृषाग्रे वृषपृष्ठके १८
गोमयालेपनं कृत्वा चतुरश्रसमन्वितम्
अर्चयेन्मूलमन्त्रेणं गुरुमार्गेण कारयेत् १९
ततः कृत्वा नमस्कारं तत्पुष्पं वर्जयेत्ततः
आलयान्निर्गमं कृत्वा स्वगृहं प्रविशेत्ततः २०
लिंगस्य दर्शनं प्रातः नैशमंहो व्यपोह तु
आजन्मजन्ममध्याह्ने सायाह्ने सप्तजन्मनि २१
एवं यः कुरुते मर्त्यः सोऽन्ते सायुज्यमाप्नुयात्
नमस्कारविधिः प्रोक्तः रुद्राक्षस्य विधिं शृणु २२
इत्यंशुमति तन्त्रे नमस्कारविधिपटलः चतुस्त्रिंशः

## गौरुत्सवविधि

गौर्युत्सवविधिं वक्ष्ये श्रूयतां रविसत्तम
प्रभां च चरणक्षणार्थं तद्राष्ट्रविजयादिकम् १
सर्वकामार्थसिध्यर्थं भोगमोक्षफलप्रदम्
योगं भोगं च वीरं च शक्तित्रयमिहोच्यते २
योगं पीठसमायुक्तं भोगं वामे समन्वितम्
वीरं स्वतंत्रमित्युक्तं शक्तिरेवं त्रिधा भवेत् ३
वीरं द्विविधमित्युकं स्वप्रधानं च केवलम्

एवं क्रमेण विधिवत् केवलं द्विविधं भवेत् ४
मण्टपस्योत्तरे देशे स्थापनं च विशेषतः
शिवस्याराधनं चैव ++ अवसानके ५
यजनादिक्रमं चैव सहमेव समाचरेत्
भोगांगाराधनं चैव तद्वृक्षयजनं ततः ६
शिवोत्सवादितन्त्रं च तद्देव्याश्च समाचरेत्
तदुत्सवस्य तत्काले किल्बिषे थानमाचरेत् ७
स्वतन्त्रोत्सवहीने च केवलं त्वधुनोच्यते
स्वप्रधानं च शक्तीनां विविधं चैवमेव च ८
पंचप्राकारबाह्ये वा अन्तर्वास्थानमेव वा
स्वतन्त्रालयमेवं स्यात् स्थापनं शास्त्रवद्बुधः ९
शिवधामांगदेवी च षट्समायादिरावृतम्
परिवारसमायुक्तं द्वात्रिंशद्धर्मसंयुतम् १०
तद्देव्यर्चनमेवं च नित्योत्सवमहोत्सवम्
भोगांगाराधनं चैव देवांगयजनादिकम् ११
महोत्सवविधानं च वसन्ताख्यं तमुत्सवम्
मदनारोहणं चैव पवित्रारोहणं तथा १२
मासपूजाविधानं च कृत्तिकादीपमेव च
आर्द्रावृतविधानं च नवमं चैव वेद्यकम् १३
चटगौव्रतविधानं च तद्वृक्षस्य विधानकम्
एवं क्रमेण विधिवत् महोत्सवस्य विधिं शृणु १४
संकल्प्य पावनं सान्तं मंगल्यं देविकं तथा
साकल्प्यं चैकमेकं स्यात् पावनं त्रिदिनं भवेत् १५
पंचांगं शान्तिकं चैव मंगळ्यं दिनसप्तकम्
नवाहं दैविकं प्रोक्तं उत्सवं पंचधा विदुः १६
पूर्वफाल्गुननक्षत्रे तीर्थान्तं वा समाचरेत्

तदृक्षस्यावसानं च नृपऋृक्षावसानकम् १७
ध्वजारोहणपूर्वं च भेरीताडनपूर्वकम्
अंकुरार्पणपूर्वं च उत्सवं त्रिविधं तथा १८
पुष्कळं विजयं सौख्यं बलिसंख्याक्रमेण तु
तत्वं च कौशिकं चैव धर्मं च भुवनं तथा १९
स्मृतिसंख्याबलिं चैव पुष्कलं च विधीयते
चन्द्रकोलकनागाश्च भानुषोडशसंख्यया २०
विजयस्य क्रमं चैव बलिसंख्या प्रकीर्तिताः
देवनागं च सौर्यं च विकारं चैव विंशतिः २१
सौख्यस्य क्रममेवं च बलिसंख्या क्रमेण तु
ध्वजारोहादितीर्थान्तं शिवोत्सवक्रमेण तु २२
किंचिद्भेदविशेषेण देव्युत्सवक्रमं तथा
सिंहं वा वृषभं वाथ पटे चैव विलेखयेत् २३
चक्रं वा शूलमेवं वा वज्रं वा अस्त्रमेव वा
उत्सवप्रतिमादेव्या पूर्वदक्षिणमाचरेत् २४
चतुर्भुजा त्रिणेत्रा च करण्डमकुटान्विता
वरदाभयसंयुक्ता पाशांकुशकरान्विता २५
शुक्रोत्पलकरं वापि शूलपाशकरान्विता
पद्मोत्पलधरां देवीं वरदाभयपाणिनीम् २६
शंखचक्रधरं चैव वरदाभयमेव च
द्विभुजां चोत्पलकरां वामहस्तप्रसारिताम् २७
मूलबेरस्य यद्रूपं तद्रूपं यानमाचरेत्
एवं क्रमेण विधिवत् शक्तीनां च विशेषतः २८
तच्छक्तिश्चैव कर्तव्या शिवोत्सवे यानमाचरेत्
देव्युत्सवस्य देवानां यानमेवं न कारयेत् २९
तच्छक्ति वास्तुविन्यासं तद्देशे बलिमाचरेत्

तत्रैव यानमेवं स्यात् सर्वालंकारसंयुतम्  ३०
स्थानसंकटसंयुक्तं शिवधाम च वास्तुके
कृतकौतुकदेव्यास्तु तद्ग्रामान्निर्गमो न हि  ३१
प्रथमादि निवाहान्तं शक्तीनां यानमाचरेत्
एवं क्रमेण विधिवत् यानक्रममिहोच्यते  ३२
पंचास्यं प्रथमं चैव द्वितीयं महिषं तथा
प्रेतारूढं तृतीयं तु चतुर्थं चोक्षमेव च  ३३
पंचमं पुष्पधामं च दामतोरणसंयुतम्
मर्दास्य डोलनं चैव गौरीलीलां समाचरेत्  ३४
षड्दिने वासमेवं च प्लवंगं सप्तमं तथा
कृष्णमृगाष्टकं चैव तद्दिने यंत्रयुद्धकम्  ३५
नानाश्चर्यसमायुक्तं दारुणा यंत्रमेव च
नवकं गारोहा ++ दशमे तीर्थकर्मणि  ३६
एवं क्रमेणविधिवत् उत्सवारम्भमेव च
आरम्भं द्विविधं तेषां धजभेर्यं कुरादिकम्  ३७
केत्वद्कुरुं तु प्रथमं द्वितीयं वृषयागकम्
प्रदक्षिणं तृतीयं स्यात् चतुर्थं दण्डशुद्धिकम्  ३८
पंचमं केतुक्रमं च कलशस्नानषट्ककम्
सप्तमं दण्डपूजां च अष्टमं चास्त्रपूजनम्  ३९
नवमं भेरीयागं च दशमं देवता भवम्
एकादशं बलिं दद्यात् द्वादशं चोत्सवं कुरु  ४०
रक्षाबन्धं ततः प्रोक्तं षट्दशं यागकर्मणि
सप्तदशं हतं विद्धि बलिकर्म ततः परम्  ४१
नवदशं तु यानं स्यात् आस्थानं मण्टपं तथा
नीराजनं च विंशद्ध संध्याशेषमतः परम्  ४२
तीर्थांकुरं ततः पश्चात् तीर्थकौतुकमेव च

तीर्थाधिवासनं चैव चूर्णकर्म ततः परम् ४३
यागकुंभाभिषेकं च तत्परं चैवमेव च
दक्षिणादानमेवं च अवरोहणमेव च ४४
उल्कपूजाविधानं च पैशाचबलिमाचरेत्
एवं द्वात्रिंशदंशेन चोत्सवं तु प्रकीर्तितम् ४५
अंकुरं वृषयागादि पूर्वोक्तविधिमाचरेत्
उत्सवस्य विधिः प्रोक्तः गौरीव्रतमिदं शृणु ४६
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इत्यंशुमति तन्त्रे गौर्युत्सवविधिपटलः सप्तत्रिंशः

## संकोचविधि

संकोचनविधिं वक्ष्ये श्रूयतां रविसत्तम
आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम् १
सर्वसंपत्करं चैव सर्वपापविनाशनम्
सायुज्यं लभते सत्यं पुनर्जन्म न विद्यते २
संकोचं द्विविधं चैव मूले बालालये तथा
स्वायं भुवे दैविके च आर्षे गाणपते तथा ३
दैविके दैवतं पूज्य आर्षे च ऋषिपूजितम्
गाणवे राक्षसे पूज्य स्वायंभुवं स्वयमुद्भवम् ४
स्वायंभुवं सूत्रयुक्तं तल्लिगं श्रेष्ठमुच्यते
पौराण्यानि च लिंगानि पौराण्यास्थानमेव च ५
तत्स्थाने लिंगयुक्तं च तल्लिंगं चोत्तमं भवेत्
एत्तनु लिंगमेवं च स्वायंभुवं सूत्रयुक्तकम् ६
तल्लिंगं यजनं चैव कोटिलिंगार्चनं भवेत्
संकोचेनैव मार्गेण कारयेद्देशिकोत्तमः ७
विमानं जीर्णितं चैव उपानाद्यादिजीर्णकम्

पुराणानि विमानानि न्यूनाधिक्यं न कारयेत् ८
पूर्वमानं च कर्तव्यं अन्यमानं न कारयेत्
यजमाने च्छया कुर्यात् लालापेक्षं न कारयेत् ९
पीठस्थं तु त्रिवर्षान्तं द्विवर्षान्तमेव वा
एकवर्षान्तमेवं च षण्मासं च त्रिमासकम् १०
संकल्प्य दिवसाधिक्यं पुनस्संकोचमाचरेत्
तस्मात्सर्वप्रयत्नेन संकल्पदिवसान्तके ११
एवं क्रमेण विधिवत् संकोचस्य विधिं शृणु
पूर्वादिसौम्यपर्यन्तं स्वस्थाने कलशं न्यसेत् १२
प्रासादं च समारभ्य अग्निर्द्वित्स्थण्डिलं न्यसेत्
धूपकीलं समावाह्य ऐशान्यकलशं न्यसेत् १३
सौरादि चण्डपर्यन्तं आवाह्य कलशं न्यसेत्
महेशप्रतिमादीनां आवाह्य क्रममेव च १४
चन्द्रशेखरमूर्तिं च चण्डेश्वरं च विन्यसेत्
द्वारस्य देवतानां च आवाह्य विधिनाचरेत् १५
प्रासाददेवसंस्थानि सरतत्वान्यनुक्रमात्
मूलदेवे तु संयोज्य संकोचं वा समाचरेत् १६
शिवाग्रे स्थंडिलं कल्प्य कुण्डं वेदीं समाचरेत्
वेदिकारहितं चैव स्थंडिलं चैव कारयेत् १७
मण्टपस्यार्चनं चैवं पूर्ववद्देशिकोत्तमः
स्नपनं कल्पयेद्धीमान् द्वारादियजनं ततः १८
लिंगशुद्धिक्रमं चैव स्नपनैरभिषेचयेत्
आवाह्य कलशे चैव मूललिंगेषु योजयेत् १९
स्नानान्ते मन्त्रपुष्पं च मंत्रान्नं च निवेदयेत्
वस्त्रं गन्धं च धूपं च हिमतोयेन सेचयेत् २०
कौतुकं बन्धयेद्धीमान् पूर्ववद्देशिकोत्तमः

शिवाग्रे स्थण्डिलं कल्प्य आवाह्य कुंभं च विन्यसेत् २१
अष्टविद्येश्वरांश्चैव वर्धनीं च विना चरेत्
अष्टगन्धसमायुक्तं गन्धोदकं च पूजयेत् २२
सुवर्णपद्मपुष्पं च स्नपनोक्तविधानतः
आचार्ययजनं चैव पंचांगभूषणैस्सह २३
सुमुहूर्तं च कर्तव्यं ब्राह्मणानुज्ञया सह
तं शिवं च समावाह्य क्षणहोमं समाचरेत् २४
तदन्ते कुम्भमुद्धृत्य मण्टपे वेदिषु न्यसेत्
अधिवासनहोमं च पूर्ववद्देशिकोत्तमः २५
होमान्ते योजयेद्धीमान् नैवेद्यं धूपदीपकम्
नीराजनं ततः कृत्वा ताम्बूलं च निवेदयेत् २६
तदनन्तरमेवं च गर्भगेहं प्रवेशयेत्
उपानत्पादुकां चैव जगती घटमेव च २७
कुमुदं कुक्षिरित्युक्तं मूर्धकुम्भं च बाहुके
कर्णाकर्णमिति ज्ञेयं अधरोधरपंक्तिकाम् २८
म्जहापट्टिं मुखं ज्ञेयं घृतवारिशिरस्तथा
मनः शक्तिरिति ख्याता उन्मनः परमः शिवः २९
मनः शिवोऽपि संबन्धान् मनोन्मन्यभिधीयते
लिंगं लिंगे समायोज्य उन्मनः परमः शिवः ३०
आचार्यं भावयेद्धीमान् तत्पीठे वाभिषेचयेत्
स्नानान्ते मंत्रपुष्प च मंत्रान्नं च निवेदयेत् ३१
सर्वालंकारसंयुक्तं सर्वाभरणभूषितम्
नैवेद्यं दापयेद्धीमान् नित्याग्नियजनं ततः ३२
बलिं नित्योत्सवं चैव स्तोत्रनृत्तं च संयुतम्
धूपदीपसमायुक्तं नृत्तं च समापयेत् ३३
नित्यसंध्यावसाने तु आहूय तत्तकं ततः

विमानयोग्यकर्मं च आचार्यं शिल्पिभिस्सह ३४
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः
लिंगपंजरसंयुक्तं दारुपंजरमेव च ३५
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः
आचार्ययजनं चैव गव्येन प्रोक्ष्य देशिकः ३६
स्नपनं शान्तिहोमं च सौख्यसंध्यार्चनं ततः
सायं संध्यार्चनं चैव भोगांगयजनं तथा ३७
महेशप्रतिमादीनां पृथुकं नाळिकेरकम्
द्वारादिताण्डवान्तं च त्रिपादेन त्रिनाडिका ३८
नित्यसंध्याक्रमं चैव उत्सवादीनि वर्जयेत्
इत्यंशुमति तन्त्रे संकोचविधिपटलः अष्टत्रिंशः

## रथसंप्रोक्षणविधि

रथसंप्रोक्षणं वक्ष्ये श्रूयतां रविसत्तम
सर्वकामार्थसिध्यर्थं सर्वकामफलप्रदम् १
जयदं भूपतेश्चैव आयुरारोग्यवर्धनम्
दारुसंग्रहमारभ्य आचार्यः शिल्पिभिस्सह २
चक्रादिस्तूपिपर्यन्तं सर्वांगं चैव कारयेत्
प्रतिष्ठां कारयेत्तत्र यथाशास्त्रप्रमाणतः ३
शिल्पिकर्मावसाने तु रथसंप्रोक्षणं क्रमात्
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने ४
सुवारे सुमुहूर्ते तु रथस्य यजनं ततः
निश्चित्य दिवसात्पूर्वे अंकुरार्पणमाचरेत् ५
रथस्य पश्चिमे भागे मण्टपं कारयेत्क्रमात्
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा ६
दशहस्तं तु विप्राणां विंशद्धस्तं नृपस्य तु

अष्टहस्तं तु वैश्यानां शूद्राणां सप्तहस्तकम् ७
पंक्तित्रयसमायुक्तं पंक्तिमानमथोच्यते
द्वितालनाहस्तंभानां एधो भूमौ तु हस्तकम् ८
धर्मज्ञानं च वैराग्यं ऐश्वर्यं च चतुष्टयम्
अन्तः स्तम्भे चतुर्दिक्षु कोणस्य त्वधिदेवताः ९
बाह्यानां द्वादशानां तु द्वादशादित्यदेवताः
मण्टपं शतधा भज्य वेदिका कुण्डसंयुतम् १०
वेदिकास्थापनं चैव विमानमिव कारयेत्
षडश्रं पूर्वदिग्भागे वेदाश्रं दक्षिणे तथा ११
अष्टाश्रं पश्चिमे देशे पद्मकुण्डं तु सौम्यके
ऐशान्ये वृत्तकुण्डं च पूर्वोक्तविधिना सह १२
एवं सर्वं समापाद्य मण्टपं भूषयेत्क्रमात्
देशिकः शिष्यसंयुक्तो रथशुद्धिक्रमं ततः १३
गोमूत्रं गोमयं चैव जलेनैव तु सेचयेत्
प्रक्षाळ्य शुद्धतोयेन पुण्याहप्रोक्षणं ततः १४
पंचगव्येन संप्रोक्ष्य पवमानमुदीरयन्
कौतुकं बन्धयेद्धीमान् स्वर्णं कार्पाससंयुतम् १५
पुण्याहं वाचयेत्तत्र रक्षाबन्धं तु कारयेत्
स्थलिकां तण्डुलैः पूतं तन्मध्ये कौतुकं न्यसेत् १६
भस्माधारं न्यसेन्मध्ये नागवल्लीदळैर्युतम्
क्रमुकं बृहती चैव दर्भैश्चैव समन्वितम् १७
बृहत्सामेति मंत्रेण कौतुकं बन्धयेत्क्रमात्
यो ब्रह्मा इति मन्त्रेण भसितं दापयेद्बुधः १८
लिंगस्य रुद्रभागे तु पीठे नाळस्य मध्यमे
महेश्वरादिबेराणां दक्षहस्ते तु बन्धयेत् १९
शक्तीनां वामहस्ते तु तालस्य मध्यपत्रके

मराटपे स्तम्भमध्ये च वृक्षस्य शृंगमध्यमे २०
रथे देवासने चैव एवमेवं क्रमेण तु
आध्याने बन्धने कम्पे हस्तयोर्मणिबन्धके २१
वस्त्रेणाच्छादनं चैव दर्भेणैवावकुराठनम्
महेश्वरं समभ्यर्च्य पुरायाहं वाचयेत्ततः २२
कौतुकं बन्धयेद्धीमान् सर्वालंकारसंयुतम्
मराटपाराधनं चैव विमानमिव कारयेत् २३
जलाधिवासनं चैव वाक्षिमोक्षणकं विना
नवग्रहं यजेद्धीमान् नवकुंभेषु योजयेत् २४
विष्णुं ब्रह्माणमेवं च सर्वदेवांश्च कुम्भके
एवं सर्वं समापाद्य रथं स्थाने च देशिकः २५
वसुराक्षसपैशाचा भूतगन्धर्वकिन्नराः
रथस्थानाश्रिता देवा गच्छत्वं हि प्रसीद मे २६
बलिं विधानकं चैव पूर्णाहुतिं समाचरेत्
आचार्यः शिष्यसंयुक्तो रथस्थाने प्रवेशयेत् २७
रथमध्ये समभ्यर्च्य पश्चात्पाशुपतं ततः
त्रिनेत्रं चतुर्भुजं चैव वरदाभयसंयुतम् २८
वामे सव्या ++++++ णैव समर्चयेत्
श ++++++++ तत्तत्स्थानं समर्चयेत् २९
++++++++++++जयेत्ततः
वेद्यां स्थापितकुंभं च रथे चैवाभिषेचयेत् ३०
तदासने चतुर्दिक्षु दिङ्मूर्तिं चाभिषेचयेत्
तत्तद्देवान्समभ्यर्च्य तत्कुंभे वाभिषेचयेत् ३१
पायसान्ननिवेद्यं च सर्वालंकारसंयुतम्
महेश्वरं समभ्यर्च्य शिबिके यानमाचरेत् ३२
सर्ववाद्यसमायुक्तं सर्वभक्तजनैस्सह

रथस्य मराटपे स्थाप्य पुरयाहं वाचयेत्ततः ३३
मुहूर्तं निरीक्ष्य दैवज्ञैः रथारोहरामारभेत्
ग्रामप्रदक्षिरां कृत्वा पूर्वस्थाने स्थितं भवेत् ३४
महेशि शिबिके नैव कुर्यादास्थानमराटपे
रथारोहक्रमं प्रोक्तं मकुटारोहरां शृरा ३५
एकविंशत्कुलोपेतः शिवलोके वसेच्चिरम्
मुच्यते सर्वपापेभ्यो रथमेवा पराजनाः ३६
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः
एवं यः कुरुते मर्त्यः स पुरयां गतिमाप्नुयात् ३७
इत्यंशमति तंत्रे रथसंप्रोक्षराविधिपटलः एकचत्वारिंशः

## काम्यार्थपटलः

काम्यार्थदर्शनं वक्ष्ये श्रूयतां रविसत्तम
आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम् १
सर्वकामार्थसिध्यर्थं सर्वपापविनाशनम्
दर्शं नवविधं चैव स्थावरं जंगमिश्रकम् २
आरामे गोपुरे चैव जंगमं चाक्षमेव च
मिश्रं चतुर्विधं चैव एवमेव क्रमेरा तु ३
आरामे गोपुरे चैव मराटपे स्थावरं तथा
स्थरी च रथमेवं च जंगमं चेति कीर्तितम् ४
मौक्तिकं मकुटं चैव सेना चैवेन्दुदर्शनम्
मिश्रमेवं समारव्यातं तस्य क्रममिहोच्यते ५
स्थनि च दर्शनं चैव मौक्तिकं मकुटं तथा
सेना चैवेन्दुदर्शनं च उपचारं विशेषतः ६
आरामे गोपुरे चैव मराटपे स्थापनादिकम्
फलादीनां निवेद्यं च रथमेवं समर्चयेत् ७

एवं क्रमेण विधिवद् रथदर्शनकं शृणु
उत्तरायणकाले तु दक्षिणायनकं विना ८
सुमुहूर्ते सुलग्ने च नृपऋक्षानुकूलकम्
बेरक्षत्रसमायुक्तं यजमानर्क्षसंयुतम् ९
शुभबारादिसंयुक्तं रथदर्शनमारभेत्
शिल्पिकर्मावसाने तु रथसंप्रोक्षणं क्रमात् १०
निश्चित्य दिवसात्पूर्वे बीजावापनमारभेत्
तद्दिनात्पूर्वरात्रौ तु अधिवासनकं क्रमात् ११
कौतुकं बन्धयेद्धीमान् नाथं चैव महेश्वरम्
आसन्नकम्पबन्धे च हस्ते चैव महेश्वरम् १२
पूर्वोक्तविधिना चैव रक्षाबन्धनं कारयेत्
ततः प्रभाते विमले देशिकः स्नानमाचरेत् १३
रथसंप्रोक्षणं कुर्यात् पूर्ववद्विधिमाचरेत्
नित्यसंध्यावसाने तु महेशयजनं ततः १४
स्नानकर्मक्रमं चैव प्रभूतहविषं ददेत्
सर्वोपचारसंयुक्तां पूजां चैव समर्चयेत् १५
सौख्यसंध्यावसाने तु सर्वालंकारसंयुतम्
सर्वमंगलवाद्यैश्च शिबिके यानमाचरेत् १६
रथस्य मण्टपे स्थाप्य पुण्याहं वाचयेत्ततः
मुहूर्ते निरीक्ष्य दैवज्ञं रथमारोपयेत्ततः १७
पाद्यमाचमनं दद्याद् फलादींश्च निवेदयेत्
धूपदीपसमायुक्तं आरात्रिकं च दापयेत् १८
ताम्बूलं दापयेद्धीमान् विनोदशिबिके यानमाचरेत्
++++++ रथं चैव ग्रामादीनां प्रदक्षिणम् १९
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् २०
इत्यंशुमति तन्त्रे काम्यार्थदपटलः द्विचत्वारिंशः

# पवित्रारोहणम्

अथ वक्ष्ये विशेषेण पवित्रारोहणं शृणु
मनोवाक्कायकर्मेण रौरवादि विशेत्क्रमात् १
तत्पापं पतनं प्रोक्तं तद्भेदं बहुधा भवेत्
पतनात्त्रायते यस्मात् तस्मादेतत्पवित्रकम् २
स्थण्डिलं परसिद्धं च आत्मार्थं च परार्थकम्
वर्णाश्रमविभेदत्वात् स्वसिद्धिर्बहुधा भवेत् ३
स्वायंभुवादिभेदैश्च परसिद्धिस्तथैव च
आवश्यकमिदं कर्म तस्माद्भेदानि चोच्यते ४
चान्द्रादिमासषट्के च अथवा कृत्तिकान्तकम्
सितपक्षे चतुर्दश्यां एवाषाढे पवित्रकम् ५
इतरेषु च मासेषु शुक्लकृष्णद्वयोरपि
चतुर्दश्यामथाष्टम्यां पवित्रविधिमाचरेत् ६
यत्पक्षे पूर्वमुद्दिश्य तत्प्रत्यब्दं समाचरेत्
पक्षे तिथौ च यत्पूर्वं तथैव परिकल्पयेत् ७
तन्मासे चण्डपूजान्तं सर्वसिद्धिकरं परम्
अष्टम्यां वा चतुर्दश्यां पवित्रविधिमाचरेत् ८
विपरीतं कृतं चेत्तु आभिचाराय तन्नृणाम्
दर्भजं वत्कलोत्थं वा क्षौमं कार्पासजं तु वा ९
यथा संस्कारमार्गेण संगृहेद्देशिकोत्तमः
तन्तुना त्रिगुणी कृत्य तदेकं प्रथममुच्यते १०
एकतंतु विवृद्ध्या तु नवसंख्यावसानकम्
एवं सप्तविधं प्रोक्तं एकमेकमिदं मतम् ११
वामाद्यभूमिदेवाश्च नवसूत्रेषु कल्पयेत्
तन्तुना दिगुणी कृत्य दशवृध्या ततः क्रमात् १२
शतमष्टोत्तरं ज्ञेयं अन्यथा च निगद्यते

तारद्वादशवृद्ध्या तु अष्टोत्तरशतं भवेत् १३
एवं सप्तविधं कृत्वा तत्तत्सूत्रेण कल्पयेत्
पूर्वतन्तु क्रमेणैव पदसंख्या च मध्यमम् १४
पंचाशत्तन्तु संख्या च अधमं परिकीर्तितम्
उत्तमत्रयमेवोक्तं मध्यमत्रयमुच्यते १५
षट्त्रिंशत्पंचविंशच्च कलासंख्याक्रमेण तु
मध्यमत्रयमेवोक्तं कन्यसत्रयमुच्यते १६
त्रिसूत्रादिनवान्तं च द्विद्विसूत्रेण योजयेत्
अधमत्रितयं प्रोक्तं सप्तभेदं पृथक्पृथक् १७
तन्तु संख्या समाख्याता ग्रन्थिसंख्यां ततः शृणु
एकग्रन्थियुतं वापि पंचसप्तनवान्तकम् १८
स्वायंभुवे चन्द्रसंख्या देविकादिषु संख्यया
पुराणे नवसंख्यादि द्रव्यलिंगेषु सत्तम १९
एकग्रन्थिषु सर्वत्र आमन्त्रणपवित्रकम्
एवं गन्धपवित्रं च महतां चैव कथ्यते २०
आत्मविद्याशिवाख्यं च दशग्रन्थिसमन्वितम्
गंगावतारमेवं तु ग्रन्थिरष्टादशस्मृतम् २१
गौर्यवतारमेवं तु एकवृद्धिविहीनकम्
सकळादि पवित्रं तु ग्रन्थयस्तत्वसंख्यया २२
अथवा तन्तु मार्गेण ग्रन्थिमानं प्रकल्पयेत्
तत्वग्रन्थिगुरोश्चैव ++ विंशतिर्भवेत् २३
भूमृत्तत्वैकहीनं च भक्तानां त्विष्टसंख्यया
कळशादिषु शान्यच्च पंचग्रन्थियुतेन च २४
नानाविधयुतग्रन्थि पर्णसक्तानुतन्तुभिः
स्वायंभुवेन वस्त्रं च +++ ष्ठसूत्रकम् २५
मानुषे सप्तसूत्रं च उत्तमादिक्रमान्नयेत्

वर्णाश्रमविभेदेन पट्पदं च युगाग्निकम् २६
यत्तत्संख्या यथावृत्तं तथा विधिपुरस्सरम्
अन्यथा तन्तु संग्राह्य राजराष्ट्रस्य दोषकृत् २७
लिंगभेदेन तन्त्राणां कल्पयेत्कल्पवित्तमः
पूर्ववद्ग्रन्थिसंयुक्तं द्विविधं परिकीर्तितम् २८
कलशादिषु होमान्तं कन्यसत्रयमेव वा
तत्तत्प्रतिमबेराणां तत्तत्संख्या च तन्तुना २९
आचार्यं शिववत्कृत्वा गुरूणां चान्यमध्यमा
अथवान्यप्रकारेण तन्त्राणामिष्टसंख्यया ३०
गैरिका गरुकाश्मीरचन्दनै रक्तचन्दनैः
हरिद्राकृष्णगन्धं च रंजयेद्ग्रन्थिमध्यमे ३१
तत्वत्रयपवित्रं तु त्रितयं लिंगमूर्धनि
रुद्रभागं समं दीर्घं गंगावतारमेव वा ३२
मकुटादिजानुपर्यन्तं गौर्यवतारमेव वा
नाभ्यन्तं हृदयान्तं च ++ गौर्यवतारकम् ३३
प्रतिमानां च सर्वेषां तद्वद्गंगावतारकम्
प्रतिमानां च सर्वेषां पूर्वोक्तविधिना सह ३४
शिरोमालादि+वैश्च महशे सुविशेषतः
प्रासादं यागशालां च प्राकारं पचनालयम् ३५
नारिवारालये चैव गोपुरान्तं क्रमेण तु
नन्दसूत्रेण संवेष्ट्य कवचं स्मृत्य देशिकः ३६
निश्चित्य दिवसात्पूर्वे चांकुरार्पणपूर्वकम्
यागशालां प्रकुर्वीत यथा स्थाने प्रकल्पयेत् ३७
कुण्डवेदीसमायुक्तं पूर्ववल्लक्षणं नयेत्
गोमयालेपनं कृत्वा पूर्ववच्छुद्धिमाचरेत् ३८
तद्दिनस्य तु पूर्वेद्युरधिवासनमारभेत्

पंचगव्यादिना स्थाप्य स्थापयेत्परमेश्वरम् ३९
नैवेद्यादि समर्प्याथ स्तोत्रं कुरु यथेप्सितम्
देवदेवं नमस्कृत्वा स्थापयेत्तु पवित्रकम् ४०
यागधाम प्रविश्याथ भान्वादिगुरुमन्तकम्
गौरी तिलकभद्रं च राशिस्वस्तिकमेव च ४१
आत्मार्थमिति कर्तव्यं परार्थमधुना शृणु
शिलालिंगोद्भवं चैव गौरीतिलकमेव वा ४२
पार्वती कान्तमेवं च लिंगाब्जस्वस्तिकं तथा
मण्डलं षण्णवत्यन्तं स्वायंभुवे प्रकल्पयेत् ४३
दैविकादित्रिलोकेषु नन्द्यावर्तं च स्वस्तिकम्
सुन्दरीतिलकं चैव श्रीकान्तं पद्ममेव वा ४४
लिंगाब्जं स्वस्तिकं चैव शृंगारतिलकं मतम्
दैविकादि समाख्यातं मानुषं मण्डलं शृणु ४५
कल्याणतिलकं चैव भौकल्पं च कुक्षिकम्
मण्डलेश्वरसोमं च वह्निमण्डलसूर्यकम् ४६
केसरीमण्डलं चैव हस्तिमण्डलमेव वा
एवं मानुषमाख्यातं मण्डलाधिपतिं यजेत् ४७
कुम्भस्य वामपार्श्वे तु स्थापयेत्तु पवित्रकम्
शान्तिकुंभाम्भसा प्रोक्ष्य संहिता मंत्रमुच्चरन् ४८
कुम्भस्य चोत्तरे पार्श्वे न्यसेद्गन्धपवित्रकम्
तत्पश्चिमे तु संस्थाप्य नित्यपवित्रं च पूर्वकम् ४९
शान्तितोयेन संप्रोक्ष्य हृदयेन यजेद्बुधः
शंखमुद्रां प्रदर्श्याथ वस्त्रेणाच्छादयेत्ततः ५०
मण्डळेशं समभ्यर्च्य उपदेशस्य मार्गतः
कर्तरिं दन्तकाष्ठं च जिह्वा शोधनमेव वा ५१
सोविकांश्रोत्रशोधं वा नखशोधनमेव वा

पूर्वभागे तु संस्थाप्य पुरुषमंत्रमनुस्मरन् ५२
रजनीं पंचगव्यं च कौपीनं खराडवस्त्रकम्
तैलमामळकं चैव पंचामृतं च दक्षिणे ५३
अघोरमन्त्रमुच्चार्य पूजयेत्तु विचक्षणः
भिक्षापात्रं वृ +++ केशशोधनमंजनम् ५४
पुष्पमाभरणं चैव वस्त्रयज्ञोपवीतकम्
चन्दनं वारुणे देशे त्र्यक्षरं मंत्रमुच्चरन् ५५
कमराडलुं योगपट्टं ओड्याणं भैक्षपात्रकम्
व्याघ्राजिनं वेणुदराडं चामरं छत्रदर्पणम् ५६
पादुकं भसितं चैव मात्रादराडं च खड्गकम्
वामदेवमनुस्मृत्य सौम्ये तु स्थापयेद्बुधः ५७
एवं क्रमेण संस्थाप्य प्रोक्षयेच्छान्तिमंत्रकैः
पश्चाद्धोमं प्रकर्तव्यं अग्निकार्योक्तमार्गतः ५८
समिधादिनवद्रव्यान् पुरायाहं च हुनेत्क्रमात्
शतमष्टोत्तरं होमं तदर्धं वा तदर्धकम् ५९
स्थालीपाकक्रमेणैव चरुपाकं पचेद्बुधः
त्रिधा चरुं विभज्याथ शिवांशं त्वेकभागकम् ६०
भोगार्थं त्वेकभागं वा एकांशं बलिरेव वा
द्रव्यान्ते व्याहृतिं हुत्वा प्रायश्चित्तं हुनेत्क्रमात् ६१
भान्वादिगुरुपर्यन्तं नित्यपवित्रं दापयेत्
द्वारपालं संप्रविश्याथ तत्तन्नाम्ना च पूजयेत् ६२
नाळीगृहं प्रविश्याथ चाष्टपुष्पं च विन्यसेत्
पतिमंत्रं समुच्चार्य नित्यपवित्रं च दापयेत् ६३
मूर्ध्नीनां नित्यपवित्रं च तत्तन्नाम्ना च योजयेत्
शिवांशेनैव नैवेद्यं तत्कालेर्चार्पयित्वा विचक्षणः ६४
अघोरास्त्रं शतं जप्त्वा प्रायश्चित्तं ततो हुनेत्

गन्धपवित्रं संप्रोक्तं मूलमन्त्रेण होमयेत्  ६५
अर्कादिगुरुपर्यन्तं गन्धपवित्रं च दापयेत्
वाद्यघोषसमायुक्तं कुरुवंशसमाकुलम्  ६६
ज्वलद्दीपसमायुक्तं धामप्रदक्षिणं कुरु
द्वारदेवान्यजेद्धीमान् दापयेद्गन्धपवित्रकम्  ६७
पत्रपुष्पैस्समभ्यर्च्य धूपं दत्वा विशेषतः
पत्रपुष्पैस्समभ्यर्च्य संतोष्य परमेश्वरम्  ६८
दद्याद्गन्धपवित्रं तु धूपदीपं ददेत्क्रमात्
++++++++++++++++
इत्यंशुमति तन्त्रे पवित्रारोहणविधिपटलः त्रिचत्वारिंशः

## चक्रलिङ्गार्चनविधि

चक्रलिंगविधिं वक्ष्ये श्रूयतां रविसत्तम
तस्य पूजाक्रमं कृत्वा संक्षेपात्प्रोच्यते बुधैः  १
पूजालक्षणकर्माणि शुचिगत्वा जितेन्द्रियः
उदङ्मुखकृतं चैव भस्मस्नानं समाचरेत्  २
अष्टत्रिंशत्कलान्यासं मूलमंत्रेण संयुतम्
मातृकान्यासमेवं स्यात् गोळका न्यासमेव च  ३
पंचब्रह्मषडंगं च यथा स्थानं च विन्यसेत्
कलान्यासात्षडंगान्तस्थितिन्यासं प्रकल्पयेत्  ४
न्यासान्ते कलशार्चाय शंखपूजामतः परम्
गुरूपदेशमार्गेण आत्मपूजामतः परम्  ५
द्वितीयं दीपपूजा च तृतीयं पीठपूजनम्
चतुर्थं चक्रपूजा च पंचमं बिम्बपूजनम्  ६
एवं पूजनमार्गेण अभिषेकमतः परम्
कलशस्थोदकैः स्नाप्य त्रिसूत्रे चाभिषेचयेत्  ७

शंखतोयाभिषेकं च तन्मूलं च शतं जपेत्
लिंगस्य रुद्रसूक्तेन अभिषिच्य यथा विधि ८
वामदेवादिसद्यान्तं शंखतोयेन सेचयेत्
शक्त्यादिशक्तिपर्यन्तं पीठपूजां च कल्पयेत् ९
पीठमध्ये न्यसेच्चक्रं बिन्दुमध्ये सदाशिवम्
त्रिकोणेषु त्रिमूर्तिश्च वसुकोणे वसुस्तथा १०
विंशत्कोणे तु शक्तिश्च पश्चादादित्यमर्चयेत्
उषा च प्रत्युषा चैवं अश्वश्रमधिदेवता ११
नागाग्रे नागदेवाश्च लोकपालास्तथैव च
अष्टभैरवसंयुक्तं अर्चयेदष्टदिग्दळे १२
षोडशे तु दळानां तु षोडशाश्च गणाधिपाः
भूम्यन्तरिक्षस्वर्गं च वृत्तत्रयमिति स्मृतम् १३
धरण्यामष्टदीपैश्च सप्तपाताळमेव च
द्वारद्वाराणि संपूज्य द्वारपालांस्तथैव च १४
दिक्षु चैव विदिक्षु च अष्टपर्वतमर्चयेत्
ओंकारादि नमोन्तश्च मंत्रास्सर्वे विशेषतः १५
स्वनामपदमध्ये तु बिन्दुयुक्तं पठेन्नरः
अर्चनेनैव तत्काले तद्रूपध्यानमाचरेत् १६
गन्धं पुष्पं च धूपं च दीपं प्रति ददेद्बुधः
कुंकुमं मृगमदं चैव कर्पूरं रोचनादिकम् १७
कस्तूरी गन्धसंयुक्तं कृष्णागन्धं तथैव च
हिमतोयेन संयुक्तं लेपयेच्चक्रमूर्धनि १८
तदूर्ध्वे विन्यसेल्लिंगं लिंगपीठं तु संयुतम्
अर्चनोक्तक्रमेणैव अर्चयेद्विधिपूर्वकम् १९
ध्यानमावाहनं चैव पाद्यमाचमनार्घ्यकम्
स्नानं वस्त्रं च गन्धं च पुष्पमाल्यं सुगन्धस्रक् २०

पंचावरणमार्गेण अर्चयेद्विधिपूर्वकम्
धूपं दीपं च नैवेद्यं ताम्बूलं होममेव च  २१
आधानादि विवाहं च अग्निकार्योक्तमाचरेत्
अन्नं च आज्यमेवं च होमं प्रत्येकमेव च  २२
अष्टादशाहुतीनां तु श्रीसूक्तं हुतमाचरेत्
शुक्रवारे विशेषेण पायसान्नं ददेत्क्रमात्  २३
नाळिकेरं विशेषेण मधुना होमयेद्बुधः
होमान्तेष्वग्निमुद्वास्य तद्भस्म तिलकं कुरु  २४
स्तुत्वा प्रदक्षिणं कृत्वा नमस्कारं तथैव च
उद्वासनं च इत्येते संयुक्ताश्च विधानतः  २५
स्वर्णं च रजतं चैव ताम्रं चैव तु लोहजम्
एतानि चक्रमाख्यातं बाणलिंगस्थितिर्भवेत्  २६
अन्यलिंगं च संयोज्य कर्तृनाशं न संशयः
सर्वाभीष्टार्थसिद्धिं च पूर्णमेरुस्थितेश्वरम्  २७
अर्धमेरुस्ततो रुद्रपुत्रकामार्थसिद्धिदम्
लळिताचक्रसंयुक्तं सर्ववश्यकरं भवेत्  २८
भूमिप्रस्तारमध्ये तु अर्चयेत्परमेश्वरम्
श्रीपदं वाग्निशुद्धिः स्यान्मोक्षसिद्धिर्न संशयः  २९
एवमेव क्रमात्पूज्य तस्मात्पूज्यार्हभाग्यकम्
एवं पूजाविधिः प्रोक्तः पश्चान्मंत्रजपं शृणु  ३०
इत्यंशुमति तन्त्रे चक्रलिंगार्चनविधिपटलः चतुश्चत्वारिंशः

## कल्याणकर्म

वक्ष्ये कल्याणकर्मं च श्रूयतां रविसत्तम
योगं भोगं च वीरं च शक्तित्रयमिहोच्यते  १
योगपीठसमायुक्तं कल्याणं वर्धयेद्बुधः

भोगशक्तिं च कल्याणं कुम्भहीनं समाचरेत् २
मराटपे स्वीशदेशे वा स्थापनं विधिना कुरु
द्वितीयावरणे चैव तृतीयावरणे तथा ३
परिवारादिसंयुक्तस्थापनं विधिना चरेत्
वीरशक्तिप्रतिष्ठा च कल्याणं कारयेद्बुधः ४
प्रतिष्ठादिनमारभ्य चतुर्थे पंचमे विना
सप्तमे नवमे वापि दशमे तद्दिनेऽपि च ५
शुभवारादिभिर्युक्ते कल्याणं कारयेद्बुधः
तद्दिनस्य तु पूर्वे तु अंकुराणयर्पयेद्बुधः ६
तद्दिनस्य तु पूर्वाह्ने जलक्रीडां समाचरेत्
ततो मध्याह्नसमये पूरकर्म समाचरेत् ७
एवं कृत्वा दिवाकाले रात्रौ कल्याणमाचरेत्
सायाह्नस्यापरार्धे तु तद्दिने देशिकोत्तमः ८
पूर्वोक्तविधिमार्गेण कौतुकं बन्धयेद्बुधः
नवकुम्भान्समादाय क्षाळयेदस्त्रमंत्रतः ९
तन्तुनावेष्ट्य संधूप्य भस्मना पूरयेद्धृदा
वस्त्रेणाच्छाद्य तद्वक्त्रं विश्वे त्वातेति बन्धयेत् १०
लाक्षा चाष्टममृद्वापि विन्यसेद्ग्रन्थिमध्यमे
जप्त्वा वृषभगायत्रीं भावयेद्वृषलांछनम् ११
पूरयेद्गन्धपुष्पाद्यैः तन्मूलेनैव देशिकः
ताम्बूलं नाळिकेरं च क्रमुकस्य फलं क्षिया १२
कदळीफलकह्लारं दामं कुंकुमचन्दनम्
कर्पूरं हिमतोयं च चित्रवर्णं च भूषणम् १३
क्षौमं शार्दूलचर्मं च चामरं छत्रदर्पणम्
कन्दुकं कृष्णगन्धं च केशशोधनमंजनम् १४
पृथक्पात्रं तु विन्यस्य यजमानेच्छया गृहेत्

अस्त्रेणैव तु संप्रोक्ष्य प्रणवेनाभिमन्त्रयेत्  १५
परिचारिणमाहूय सोष्णीषस्सोत्तरीयकः
सर्वद्रव्यं समादाय ब्रह्मघोषसमन्वितम्  १६
सर्वभक्तजनैस्सार्धं यजमानसमन्वितः
गीतवाद्यसमोपेतं सर्वालंकारसंयुतम्  १७
भस्मकुंभं समादाय प्रणवेन समर्चयेत्
शिवशस्त्रेति मंत्रेण त्यजेद् वृषभलांछनम्  १८
भस्म संगृह्य तारेण ललाटे देविहृद्गळे
संतर्प्य गौरीबीजेन सद्यद्रव्यं करे ददेत्  १९
प्रणम्य परया भक्त्या स्थित्वा देवाग्रके बुधः
अम्बिके गौरि कल्याणि कारुण्याकर चन्द्रिके  २०
जगदार्त्तविनाशाय शम्भुपत्नी भविष्यति
इत्युक्त्वा तां महादेवीं प्रणिपत्य गुरूत्तमः  २१
धामस्यैशानदिग्भागे प्रपां कृत्वाऽतिसुन्दरम्
गोमयलेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत्  २२
तन्मध्ये सितरक्तेन स्वस्तिकं कारयेद्बुधः
सर्वशृंगारवेषाढ्या सुविकीर्णाळकान्विता  २३
धूमावर्णमहाभोगां चित्रिणं पूरयेत्ततः
पुण्याहं वाचयेत्तत्र दध्यन्नं कदळीफलम्  २४
रक्तपुष्पसमोपेतं बलिं दद्याद्विचक्षणः
ततो देवगृहं गत्वा पूजयेत्परमेश्वरम्  २५
कुम्भे संगृह्य देवेशं शिवहस्तसमन्वितम्
चित्रवस्त्रैरलंकृत्य पुष्पाभरणभूषितम्  २६
गजे वा गल्लिके वापि शिबिके वाऽधिरोपयेत्
पवनं कारयेद्विद्वान् चक्रवर्त्युपचारतः  २७
ततो देवी गृहं गत्वा मण्टपे स्थण्डिलं कुरु

तत्र सिंहासनं कल्प्य वस्त्रोर्ध्वे स्थापयेद्विभुः २८
तदग्रे स्थण्डिलं कृत्वा निर्दोषैस्सिकतैः शुभैः
अग्निकार्योक्तमार्गेण शिवाग्निं परिकल्पयेत् २९
समिदाज्यान्नलाजैश्च माषशालियवैस्तिलैः
सर्षपैर्नाळिकेरैश्च फलैस्तु जुहुयाद्बुधः ३०
सद्यादिनेत्रपर्यन्तं प्रत्येकं षोडशं हुनेत्
पूर्णाहुतिं ततो हुत्वा सर्वद्रव्यसमन्वितम् ३१
मनुहस्तसमायान्तत् चतुर्थांशविस्तृतम्
नानाचित्रसमायुक्तं क्षौमं कार्पासिकं तु वा ३२
मन्त्रवस्त्रमिति प्रोक्तं मांगल्यं च ततः शृणु
कुंजं षोडशमारभ्य कुंजद्वयविवर्धनात् ३३
यावद्द्वात्रिंशकुंजान्ते गृहेन्मंगल्यकांचनम्
गणेशा कृतिकं वा तु पद्माकृतिमथापि वा ३४
शिवलिंगाकृतिर्वापि मंगल्यं परिकल्पयेत्
बिन्दुपंचकसंयुक्तं पार्श्वे सुषिरसंयुतम् ३५
हेमसूत्रद्वयोपेतं गौरीकर्णानुकूलकम्
एवं लक्षणसंयुक्तं मंगल्यं गंधसंयुतम् ३६
भूषणं मंत्रवस्त्रं च खड्गदामसमन्वितम्
संगृह्यान्तः प्रविश्याथ गीतवाद्यसमन्वितम् ३७
शंखध्वनिसमोपेतं गत्वा देव्यालयं गुरुः
संपूज्य गन्धपुष्पाद्यैः मंत्रवस्त्रेण वेष्टयेत् ३८
बध्वा मंगल्यसूत्रं च गौरीबीजेन देशिकः
आवाह्य करकेऽभ्यर्च्य सर्वालंकारसंयुतम् ३९
कुम्भेशवामदेवीशीं स्थापयेत्तदनन्तरम्
गन्धपुष्पादिना यष्ट्वा पार्वती परमेश्वरम् ४०
शिवद्विजकुलोत्पन्ने कृतदीक्षाभिषेकतः

शिवशास्त्रविचारज्ञः पुत्रपौत्रकळत्रकः ४१
शुक्लचन्दनलिप्तांगः शुक्लमाल्यैरलंकृतः
पंचांगभूषणोपेतः सोष्णीषस्सोत्तरीयकः ४२
विष्णुमंत्रं जपेद्भक्त्या संगृहेध्वेव वर्धनीम्
शिवाग्रे स्थंडिलं कृत्वा सुश्वेतद्रोणतंडुलैः ४३
तन्मध्ये नळिनं लिख्य त्रिपादि विन्यसेद्बुधः
तदूर्ध्वे स्थलिकां न्यस्य संयतः पूर्वदिङ्मुखः ४४
शिवहस्तसमोपेतः स्थित्वा कुंभेशपृष्ठके
विष्णुमंत्रं समभ्यर्च्य श्रीकण्ठं गौरिसंयुतम् ४५
देविहस्तं समादाय शिवहस्तं समर्पयेत्
अनोदिगोत्रसंभूतलोकनाथ जगत्पते ४६
आदिगोत्रमुदा देवीं गृहाणलोकशान्तये
इत्युक्त्वा सोदकं दद्यात् शिवहस्ते समन्त्रवित् ४७
देव्याग्रे देविहस्तं च शिवहस्तं शिवांशके
तत्तन्मन्त्रेण विन्यस्य धूपदीपं ददेद्गुरुः ४८
ततो हुताशनं यष्ट्वा सम्बद्धाहुतिमाचरेत्
मधुदुग्धाज्यकदळीस्तत्तत्खण्डसमन्वितम् ४९
मधुपर्कं ततो दत्वा हृन्मंत्रेणैव देशिकः
पाद्यमाचमनं दत्वा धूपदीपं प्रदापयेत् ५०
शिवहस्ते तु संस्पृश्य वर्धनीं प्रजपेद्यदा
बीजमुख्यं जपेद्विद्वान् शंखघोषसमन्वितम् ५१
पुण्याहं वाचयेत्तत्र पादुंकाराधनार्थकम्
अग्नेश्चोत्तरपार्श्वे तु गोमयालिप्तभूतले ५२
स्थण्डिले दारुपीठोर्ध्वचित्रवस्त्रैर्विभूषिते
अश्मानं स्थापयेद्विद्वान् चन्दनाद्यैर्विलेपितम् ५३
धर्मासनं समभ्यर्च्य प्रोक्षयेदस्त्रवारिणा

गौरीदक्षपदाम्भोजं शिवहस्तेन संगृहेत् ५४
अश्मोपरि समारोप्य साष्टांगेन प्रपूजयेत्
शिवहस्तेन संगृह्य गौरीहस्तं गुरूत्तमः ५५
ततः शिष्यं समाहूय ग्राहयेद्देविपादुकम्
वह्निं प्रदक्षिणी कृत्य सुस्थाने पादुकां न्यसेत् ५६
संपूज्य देवं देवेशीं धूपदीपं ददेद्गुरुः
अन्येन देशिकेनैव पट्टबन्धयुतेन च ५७
सांगुलीयकरेणैव लाजं संगृह्य देशिकः
दंपत्योरुभयोस्तेन हुत्वा लाजं शिवाणुना ५८
अतोऽश्मानं समारोप्य पूर्ववद्गौरिपादुकम्
आराध्य पूर्वमार्गेण पूजयेत्कुंभवर्धनीम् ५९
एवं त्रिवारकं हुत्वा व्याहृतिं जुहुयात्ततः
शतमर्धं तदर्धं वा जुहुयान्मूलमन्त्रतः ६०
पूर्णाहुतिं ततो हुत्वा सर्वद्रव्यसमन्वितम्
मनुहस्तसमायामं तच्चतुर्थांशविस्तृतम् ६१
तद्भस्म च विसृज्याथ तद्भस्म तिलकं कुरु
सर्वोपचारैः संतोष्य संगृहेत्कुम्भवर्धनीम् ६२
ब्रह्मघोषसमायुक्तं शंखवाद्य समन्वितम्
गृहे यागगृहे रम्ये शयनं स्थापयेद्गुरुः ६३
स्थलिकेऽग्निं समाहूय सायं प्रातर्हुतं चरेत्
समिधाज्येन चरुणा प्रत्येकं पंचविंशतिः ६४
द्रव्यं प्रति विशेषेण व्याहृत्याहुतिमाचरेत्
पंचमेऽग्निपरीयन्तं तत्तन्मूलमनुस्मरन् ६५
पंचमेऽहनि संप्राप्ते प्रातस्संध्यावसानके
चूर्णोत्सवं ततः कुर्यात् जलक्रीडां समाचरेत् ६६
सर्वालंकारसंयुक्तं छत्रचामरसंयुतम्

ग्रामप्रदक्षिणवशात् नीत्वा स्नपनमण्टपम् ६७
देवं च देवदेवीं च स्नपनं कारयेद्गुरुः
शिवाग्निं तत्र संकल्प्य पूर्वोक्तविधिना बुधः ६८
अघोरेण शतं हुत्वा पूर्णाहुतिं समाचरेत्
अग्निं विसृज्य संयोज्य कुम्भमध्ये विचक्षणः ६९
ततो गर्भगृहं गत्वा लिंगशुद्धिं समाचरेत्
कुम्भोदकेन संस्नाप्य स्नापयेत्स्नपनोदकैः ७०
तदर्थं स्नाप्य देवेशीं स्नपयेत्स्नपनोदकैः
स्नानमेवं समासाद्य नित्यपूजां समाचरेत्
रात्रौ पूजावसाने तु भोगांशं संप्रकल्पयेत् ७१
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इत्यंशुमति तंत्रे कल्याणकर्मविधिपटलः षट्चत्वारिंगः

## आयुधाराधनम्

आयुधाराधनं वक्ष्ये श्रूयतां रविसत्तम
कीर्तिदं विजयं सौख्यं शत्रुसंहारकारणम् १
मनो दुःखविनाशार्थं आयुधं संप्रपूजयेत्
आयुधानामनेकेषु प्रथमं खड्गमुच्यते २
सर्वलक्षणसंयुक्तं शोभाबन्धसमन्वितम्
++++ राढ्यं वा रुचिरासनसंस्थितम् ३
दीपं वामेन संस्नाप्य द्रव्याण्यन्यानि दक्षिणे
अंगन्यासादिकं कृत्वा बीजमुख्येन मन्त्रतः ४
अर्घ्यमंत्रेण संरक्ष्य तेनैव प्रोक्ष्य भूतले
खड्गं संग्राह्य मतिमान् यजमानानुकूलतः ५
ततः प्रातः समुत्थाय क्रमस्नानादिकं कुरु
भस्मन्यासं ततः कृत्वा विशेदालयमण्टपम् ६

गोमयालेपनं कृत्वा हस्तमात्रेण विस्तृतम्
अर्घ्यं पुष्पं च धूपं च धूपदीपं निवेद्यकम् ७
पूर्वास्य मुक्तं संस्थाप्य स्थापयेन्मण्डलोपरि
पूर्वाग्रमुत्तराग्रं वा खड्गं मूलेन विन्यसेत् ८
गन्धपुष्पादिनाभ्यर्च्य देवतान्यासमाचरेत्
ईळिका च महादेवी बिलये तु सरस्वती ९
वृत्ये तु पार्वती प्रोक्ता खण्डे कात्यायनीं यजेत्
चण्डिका पट्टिकोर्ध्वे तु संध्याग्रे माधवं यजेत् १०
सुषिरं सोमदैवत्यं नाळमग्निस्वदैवतम्
धर्माया चण्डरुद्रं च खड्गमूले गणेश्वरः ११
स्कन्दः स्यात्खड्गमध्ये तु खड्गाग्रे वीरशक्तयः
स्वनाममन्त्रैरभ्यर्च्य बीजमुख्यसमन्वितम् १२
एवं क्रमेण चाभ्यर्च्य धूपदीपादिकं ददेत्
खड्गे चैव न्यसेन्मूर्ध्नि रविगायत्रि रास्यके १३
महास्त्रदेवीं हृदये अंगमूलेन कल्पयेत्
भ्र्यूं णि भ्र्यूं क्षिभ्र्यूं विचिचित्यक्षरेण तु १४
दिक्षुकृत्स्वपदं पश्चात् शत्रुसंमोहनाय च
सर्वं जयतु मे स्वाहा पदमन्ये सुयोजयेत् १५
अष्टोत्तरशतं वापि पंचाशत्पंचविंशतिः
मा तत्संध्याजपं कुर्यात् जपान्ते सर्वसिद्धिदम् १६
नैवेद्यं स्थापयेन्मन्त्री खड्गहस्तेन बन्धयेत्
एवं दिने दिने भ्यर्च्य सर्वत्र भजते जयम् १७
आयुधाराधनं प्रोक्तं शान्तिकर्माथ शृणु
इत्यंशुमति तन्त्रे आयुधाराधनविधिपटलः अष्टचत्वारिंशः

# महानैवेद्यविधि

महानैवेद्यविधिं वक्ष्ये श्रूयतां रविसत्तम
सर्वरोगविनाशार्थं सर्वशत्रुविनाशनम्  १
सर्वपापप्रशमनं महापातकनाशनम्
ब्रह्महत्यादिदोषघ्नं राष्ट्रदुर्भिक्षनाशनम्  २
पुत्रपौत्रविवृद्ध्यर्थं धनधान्यविवर्धनम्
एवं फलप्रदानार्थं महापूजाविधिक्रमम्  ३
राजाभिषेकसमये तस्य जन्मदिनेऽपि वा
युद्धारम्भे च तत्काले मासनक्षत्रकेऽपि च  ४
आप्रजर्क्षे विशेषेण नैवेद्यस्य विधिक्रमम्
पीतशाली रक्तशाली सौगन्धिचमसोत्तमा  ५
शालीनामुत्तमं प्रोक्तं यववेरे विमिश्रितम्
अन्येषां व्रीहिरथवा पक्षीनामपरित्यजेत्  ६
नतद्द्वयं पंचविंशच्च व्रीहयः शक्तिरुच्यते
शक्तिद्वयं तलं प्रोक्तं प्रकृज्ञं स्यात्कलद्वयम्  ७
तद्द्वयं प्रसृतिः प्रोक्तं तद्द्वयं कुडुपं भवेत्
कुडुपस्य चतुर्थं स्यात् प्रस्थमित्यभिधीयते  ८
तद्द्वयं चरितं पात्रं ++ मित्यभिधीयते
आढकं तद्द्वयं प्रोक्तं तद्द्वयं शिवमुच्यते  ९
तद्द्वयं द्रोणमित्युक्तं खारिस्तद्द्वयमुच्यते
खारित्रयं तु भारं स्यात् ++++  १०
भारादिनवभारान्तं धामादि त्रयं त्रयम्
नैमित्तिके तु नैवेद्यं नवधा समुदाहृतम्  ११
प्रस्थस्य द्विपलं प्रोक्तं आर्द्रं वा पक्वमेव वा
लवणेन समायुक्तं मरीचीजीरकैर्युतम्  १२
सिता च लवणं चैव आद्येणैव समाचरेत्

इक्षुखरडसमायुक्तं शर्करेण विमिश्रितम्  १३
तक्रेरौव समायुक्तं पाचयेत्तु विशेषतः
एवं पक्त्वा तु धूपं तु नाळिकेरसमन्वितम्  १४
द्वात्रिंशदंशमेवं स्यात् गोघृतं तु परिग्रहेत्
द्वादशांशं पयस्यैव तत्समांगुलसंयुतम्  १५
दव्यष्टांशकमेवं स्यात् गुल्माषं तु कशोंशकम्
पनसस्य पर्वला चैव परिचत्वाश्च ये फलाः  १६
कदळीफलमेवं स्यात् यथेष्टं तु समन्वितम्
पचनालयक्रमं प्रोक्तं पूजयेत्तु समाचरेत्  १७
ग्राचार्यः शिष्यसंयुक्तं पूर्ववत्स्नानमाचरेत्
भस्मन्यासादिकं कृत्वा विघ्नेश्वरं समर्चयेत्  १८
पुरयाहं वाचयेद्धीमान् शंखपूजां समाचरेत्
पंचगव्यसमायुक्तं पंचामृतसमन्वितम्  १९
ग्रष्टोत्तरशतं चैव स्नपनं तु समाचरेत्
कलशद्रव्याणि संयुक्तं पूर्वोक्तविधिना सह  २०
गोरोचना समायुक्तं तराडुलं नाळिकेरकम्
वल्कलोदं तथा प्रोक्तः गन्धोदकं तथैव च  २१
धामोदकमिति प्रोक्तं बीजोदकं तथैव च
मार्जनोदकमिति प्रोक्तं परिमार्जनमुच्यते  २२
कषायमूलमित्युक्तं फलोदकमिति स्मृतम्
तत्तद्रव्यमिति प्रोक्तं पूर्वोक्तविधिना सह  २३
गोरोचनासमायुक्तं तराडुलं नाळिकेरकम्
घृतेनैव विशेषेण भ्रामयेत्तु सदाशिवः  २४
स्नानान्ते तु हुतं कुर्यात् पूर्णाहुतिमथाचरेत्
कुंभे शम्भुं समभ्यर्च्य महाभिषेकं समाचरेत्  २५
नित्यसंध्यावसाने तु स्नानकर्मविधीयते

गन्धतैलैस्समभ्यर्च्य शंखध्वनिसमन्वितम्  २६
पुण्याहं वाचयेद्धीमान् गन्धतैलाभिषेचनम्
शुद्धोदकेन संस्नाप्य पुष्पमूर्ध्नि निधापयेत्  २७
पंचामृतादिसंयुक्तं स्नापयेत्पूर्ववद्बुधः
शुद्धतोयेन संस्नाप्य गन्धपुष्पैस्समर्चयेत्  २८
वल्कलोदकादि संस्नाप्य शुद्धतोयेन सेचयेत्
वस्त्रैराभरणैर्माल्यैः अलंकृत्य विशेषतः २९
शिवकुम्भं समुद्धृत्य प्रथमावरणान्वितम्
सर्वालंकारसंयुक्तं गर्भगेहं समाविशेत्  ३०
धूपदीपादिकं दत्वा संस्नाप्य कलशोदकैः
मन्त्रपुष्पं ततो दत्वा पायसान्नं निवेदयेत्  ३१
स्थापितस्य क्रमेणैव तोयस्नानान्तरान्तरे
क्षीरं दधि घृतं चैव स्नापयेत्परमेश्वरम्  ३२
द्वितीयावरणं चैव कलशैः स्नापयेत्क्रमात्
पुष्पं मूर्धनि विन्यस्य कृसरान्नं निवेदयेत्  ३३
धूपदीपं च दत्वाथ आरात्रिकमाचरेत्
फलेनापूर्य देवेशं क्षौद्रेणैव तु सेचयेत्  ३४
धूपदीपान्नतो दत्वा नाळिकेरोदकेन तु
गुळोदकेन संस्नाप्य पुष्पं मूर्धनि धापयेत्  ३५
तृतीयावरणं चैव कलशैः स्नापयेत्क्रमात्
संस्नाप्य देवदेवेशं गुळान्नं च निवेदयेत्  ३६
धूपदीपं हृदा दत्वा आरात्रिकमथाचरेत्
चन्दनेन समालिप्य हिमतोयाभिषेचयेत्  ३७
पंचमावरणं चैव कलशैः स्नापयेत्क्रमात्
मन्त्रपुष्पं ततो दत्वा मन्त्रान्नं च निवेदयेत्  ३८
सर्वालंकारसंयुक्तं भूषयेद्भूषणार्हकैः

व्रीहीन्सम्यक्परिस्तीर्य वस्त्रेण परिच्छादयेत् ३९
तस्योर्ध्वे कदळीपत्रं पूर्वाग्रं चोत्तराग्रकम्
तस्योर्ध्वे तु विशेषेण घृतेनैव तु सेचयेत् ४०
दर्व्या लक्षणयुक्तेन पात्रमानेन पूरयेत्
त्रिमेखलसमायुक्तं उपदंशं समाचरेत् ४१
मध्ये ताटकसंयुक्तं पायसाद्यविशेषतः
देवस्य त्वेति मन्त्रेण नैवेद्यं दापयेत्ततः ४२
पानीयाचमनं दत्वा मुखवासं समाचरेत्
नित्याग्नियजनं कुर्यात् मूलं बिम्बे समर्पयेत् ४३
वैश्वदेवाग्निकं कुर्यात् पूर्वोक्तविधिना सह
अयुतं लक्षसाहस्रं संख्यादीनि विशेषतः ४४
होमान्ते भूतबलिं दत्वा संध्याशेषं समाचरेत्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ४५
इहैव धनवांछ्रीमांश्चान्ते सायुज्यमाप्नुयात्
इत्यंशुमति तंत्रे महानैवेद्यविधिपटलः पंचाशः

## जन्मर्क्षापूजाविधि

अतः परं प्रवक्ष्यामि जन्मर्क्षस्य विधिक्रमम्
उत्तरायनकाले तु शुभवारे समाचरेत् १
सर्वशत्रुक्षयकरं सर्वोपद्रवनाशनम्
अकालमृत्युशमनं सर्वदोषाभिनाशनम् २
राजाभिषेकसमये तस्य जन्मदिनेऽपि च
राजारम्भावसाने वा योगयुक्तदिनेऽथ वा ३
नक्षत्रयजनं कार्यं सर्वाभीष्टसमृद्धये
तदृक्षपूर्वरात्रौ तु कौतुकं बन्धयेत्ततः ४
महेशस्नपनं कुर्यात् सर्वालंकारसंयुतम्

पुण्याहं वाचयेत्तत्र कौतुकं प्रोक्षयेत्ततः ५
स्थलिकं तंडुलैः पूर्य दर्भैः पुष्पैः समन्वितः
पूगीफलसमायुक्तं नागवल्लीदळैर्युतम् ६
भस्माधारं न्यसेन्मध्ये कौतुकं भस्म संयुतम्
सौवर्णं रजतं वापि क्षौमं कार्पासकं तु वा ७
कौतुकं बन्धयेद्धीमान् पूर्वोक्तविधिना सह
पश्चान्नित्याग्निकार्यं च संध्याशेषं समाचरेत् ८
तत्प्रभाते तु समये प्रातस्संध्यावसानके
सर्वालंकारसंयुक्तं सर्ववाद्यसमन्वितम् ९
पंचगव्यं च संकल्प्य पंचामृतसमन्वितम्
स्नपनं कारयेत्पश्चाद् अलंकृत्य विशेषतः १०
नैवेद्यं धूपदीपं च नृत्तान्तं वा समाचरेत्
ग्रामप्रदक्षिणं कृत्वा प्रविश्यास्थानमण्टपम् ११
यात्रार्थस्नपनं पश्चात् संध्याशेषं समाचरेत्
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमांगुलीयकैः १२
यागावशिष्टं यद्द्रव्यं आचार्याय प्रदापयेत्
भक्तानां परिचाराणां यथा शक्त्याथ दक्षिणा १३
ब्राह्मणेभ्यो यथाशक्ति दक्षिणां दापयेत्ततः
जन्मर्क्षस्य विधिः प्रोक्तो नक्षत्रयजनं शृणु १४
इत्यंशुमति तंत्रे जन्मर्क्षपूजाविधिपटलः एकपंचाशः

## पञ्चबेरप्रतिष्ठा

पंचगोचरमूर्तेस्तु यार्चनं वक्ष्यतेऽधुना
आयुः प्रदं च पुष्टिं च श्रीकरं च यशस्करम् १
सदेशमोक्षकामार्थं स्नानार्थं विष्णुपूजनम्
दुर्गां शत्रुजयार्थं च विघ्नेशं पुत्रकामदम् २

शान्तिकं स्कन्दपूजा च पंचमूर्तिं सहार्चयेत्
एतेषां पंचबेराणां प्रधानस्तु महेश्वरः ३
स्वतन्त्रं परतन्त्रं च द्विविधं चेति कीर्तितम्
ग्रामे वा नगरे वापि पत्तने राजधानिके ४
खर्वटे कुब्जके चैव पर्वते च मनोरमे
आपणे वाथ नद्यां वा वनमध्ये चतुष्पथे ५
स्थापयेत्पंचमूर्तिं च सर्वप्राणिहितावहम्
पौराण्यायतनं चैव पंचमूर्तिप्रतिष्ठितम् ६
एवं प्रदक्षिणं कुर्यात् सर्वकामफलप्रदम्
स्वतन्त्रमिति विख्यातं परतन्त्रं गृहार्चनम् ७
परतन्त्रे विशेषेण विष्णुमूर्तिं तथार्चयेत्
पूर्वास्युर्वा महेशश्च तस्याग्रे स्नानबेरकम् ८
पश्चिमास्ये महाविष्णुः सर्वो माद्यराडयस्तथा
विष्णुर्वामे तु भूशक्तिः अंजलिकरसंस्थितम् ९
तस्याग्रे स्नानबेरं च शास्त्रोक्तविधिना बुधः
परिवाराष्टकं चैव द्वारदेवान्प्रपूजयेत् १०
उभयार्चयाथार्थेन आदिशैवान्प्रपूजयेत्
दुर्गाणां चोत्तराग्रं स्यात् अर्चयेद्विधिना बुधः ११
देवीं च पार्श्वे सनकौ वामे सनत्कुमारकौ
चित्रबेरं विशेषेण तस्याग्रे स्थानबेरकम् १२
महिषाणां शिरो स्थित्वा अथवा सिंहरोहणम्
यावत्तन्त्रेषु युक्तानां तावच्छास्त्रोक्तमार्गतः १३
दुर्गास्थानं द्विपार्श्वे तु स्त्रिभूतं च न्यसेद्बुधः
देव्यास्थानं च सव्येन स्थापनं स्कन्दमूर्तिनम् १४
स्कन्दं कल्याणमूर्तेस्तु स्थापयेद्विधिना बुधः
देवनामांजलिकारः कुक्कुटासनमारभेत् १५

देवीनां पश्चिमे भागे ब्रह्मस्थानं प्रकल्पयेत्
सुब्रह्मण्यस्य वामे तु नारदानां च कल्पयेत् १६
सर्वदेवादिसेवानां सिद्धविद्याधरास्तथा
यावत्पूजोक्तमार्गेण तावच्छैवं प्रपूजयेत् १७
दुर्गालयस्य वामे तु गणाधीशं प्रतिष्ठितम्
सर्वभूतावृतं चैव फलभक्ष्यादिकानि च १८
चन्द्रादित्यादिदेवानां सिद्धकिन्नरसेविताम्
पूजा या विधिना प्रोक्ता विघ्नेशं पूजयेत्ततः १९
स्वदेशं प्रधानमूर्तिं च अर्चयेद्विधिना बुधः
देवाग्रे मण्टपं कल्प्य द्वारपालादिदेवतान् २०
यद्बिम्बं द्विविधं प्रोक्तं केवलं सहजं स्मृतम्
केवलं स्त्वेकबेरं वा सहजं बहुबेरकम् २१
यावच्छास्त्रविधिर्मार्गसामान्यमर्चयेद्बुधः
पंचावरणसंयुक्तं अर्चयेत्तु सदाशिवः २२
विष्णुं संपूजयेद्विद्वान् गर्भाभरणसंयुतम्
अच्युतानन्तमूर्तिस्तु चक्रपाणिर्जनार्दनः २३
पुरुषः पुरुषतश्चैव गोविन्दो विघ्ननायकः
यावत्सामान्यतन्त्रेषु आदिशैवार्चनं बुधः २४
दुर्गाणां चैव यो धीमान् पूजयेत्तु क्रमेण तु
अणिमा महिमा चैव गरिमा लघिमा तथा २५
ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमेव च
देवीं च दक्षिणे चैव सनकौ वा सनत्कुमारकौ २६
चित्रबेरं विशेषं च तस्याग्रे स्नानबेरकम्
दिवानां महिषीं स्थित्वा अथवा सह रोहिणी २७
यावच्छास्त्रोक्तयुक्तं च अर्चयेद्विधिना बुधः
दुर्गास्थानं च सव्ये तु स्कन्दस्थानं सहार्चनम् २८

स्कन्दं कल्याणमूर्तं च स्नापनं च क्रमेण तु
स्कन्दानां वामभागे तु देवीनां स्थापयेद्बुधः २९
तद्देवीमंजलिहस्तं कुक्कुटासनसंस्थितम्
देवीं पश्चिमदेशे तु ब्रह्मस्थानं सहार्चनम् ३०
स्कन्दं च दक्षिणे पार्श्वे नारदानां च सुस्थिताः
आदित्यसोमदेवाश्च सिद्धकिन्नरसेविताः ३१
यावच्छास्त्रोक्तमार्गेण तावत्पूजां समारभेत्
षण्मुखः शक्तिपाणिश्च कार्तिकेयो गुहस्तथा ३२
स्कन्दो मयूरवाही स्यात् सेनानीत्वविशाखगाः
पूर्वादिपरितः स्थाप्य परिवाराष्टकं क्रमात् ३३
दुर्गालयानां वामे तु विघ्नेशं पूजयेद्बुधः
गणानामर्चनं कृत्वा एकावरणसंयुतम् ३४
सुमुखं त्वेकदन्तं च कपिलो गजकर्णिकः
लम्बोदरश्च विकटो विघ्नराजो विनायकः ३५
विघ्नेशं पुजयेत्कृत्वा परिवाराष्टकं यजेत्
सर्वत्राताव्रतं चैव मुनिगन्धर्वसेवितः ३६
आदित्यसोमदेवाश्च पुरुषाः किंनरसेविताः
विघ्नपूजां समाप्नोति सदेशं पूजयेद्बुधः ३७
देवाग्रे मण्टपं कल्प्य द्वारपालादिपूजनम्
यद्बिम्बं द्विविधं प्रोक्तं केवलं सहजं स्मृतम् ३८
केवलं त्वेकबेरं स्यात् सहजं बहुबेरकम्
पंचावरणसंयुक्तं अर्चयेत्तु सदाशिवम् ३९
पूर्वोक्तं पुरतः कृत्वा कल्पं च पूजयेद्बुधः
महामार्यादिसव्ये च महालक्ष्मीं च मातृकौ ४०
मण्टपस्यैव यामे च भुवनेशीं गृहार्चयेत्
देवीनां परितः कुर्यात् देवानां च समूहतः ४१

अनंगानंगमदन अनंगमेखलाय च
भुवंगमेखला चैव भुवंशं पालनी तथा ४२
सर्वशिखादैनतारा अनंगपटली तथा
भुवनेशीं समूहानां परिवाराष्टकं यजेत् ४३
आदित्यस्सोमदेवश्च ऋषीणां मुनिसेवितम्
दक्षश्च वीरभद्रश्च पौराण्यायां तथैव च ४४
एतच्छास्त्रविधिः प्रोक्तः तावच्छास्त्रविधिं बुधः
एतद्बाह्ये च पश्चिम्ये कामकोष्ठकमेव च ४५
यावच्छास्त्रविधिः प्रोक्तः पूजानां च क्रमाद्बुधः
प्रथमावरणे बाह्ये द्वारभूतद्विपार्श्वकौ ४६
अण्डनावरणानाम्ना या द्वारभूतस्थितानि वै
चतुःप्रस्थतण्डुलं पिष्टं मोदकं भुक्तमाचरेत् ४७
भूतानां सव्यपार्श्वे तु ज्वरदेवं तु पूजयेत्
तद्देवं दक्षिणे भागे ज्येष्ठाष्ठाश्च प्रकीर्तिताः ४८
ज्येष्ठायां सव्यपार्श्वे तु मालिकावृतमाचरेत्
एवमभ्यर्च्य विधिवत् प्रधानं तु सदाशिवम् ४९
शिवार्चनविधानेन नित्योत्सवबलिं क्रमात्
आलयस्यैव देव्यग्रे वृष ++++ देशिकः ५०
वृषस्थानोत्तरे देशे ध्वजदण्डं विधीयते
दण्डस्योत्तरदेशे तु भूतपीठं प्रतिष्ठितम् ५१
स्थानसंकटयामेन किंचिद्भेदं शिवार्चनम्
यत्र देशे विशालं स्यात् तत्र देशे प्रतिष्ठितम् ५२
मालिकानन्तरं कृत्वा कल्पयेल्लोकपालकौ
मध्ये वृषं च पीठं च कल्पयेद्विधिना बुधः ५३
गृहस्य वारे वारे वा डिण्डिमुण्डिबलिं ददेत्
मध्यद्वारस्य देशे तु नन्दिकालौ बलिं ददेत् ५४

अन्तर्द्वारद्वारे द्विपार्श्वे भूतबलिं तथा
वृषभादिबलिं दद्याद् लोकपालविधिं क्रमात् ५५
मालिकायास्तु परितः इन्द्रादिबलिरुच्यते
महापीठे बलिं कृत्वा आमोदादिक्रमाद्बुधः ५६
महापीठस्य बाह्ये तु त्रितयभ्रमणं कुरु
नृत्तगीतादि यत्सर्वं आलयस्य प्रवेशयेत् ५७
बलिबेरं च मूर्तीनां नीराजनं क्रमाद्बुधः
नित्योत्सवं तथा कुर्यात् नैमित्तिकं ततः शृणु ५८
इत्यंशुमति तन्त्रे बेरप्रतिष्ठा विधि पटलः त्रिपंचाशः

## मण्डूकपदविधि

मण्डूकस्य विधिं वक्ष्ये श्रूयतां रविसत्तम
सकळे वास्तु विन्यस्य मण्डूकपदमाचरेत् १
गोमयालेपितं भूमिं चतुरश्रसमन्वितम्
प्रागग्रं युग्मसूत्रं च उदगग्रं तथैव च २
तन्मध्याद्वज्रसूत्रं च धर्मस्वरूपिणं न्यसेत्
निशाकरान्तार्धसूत्रं च पूर्वादीनां च कल्पयेत् ३
इति वरुणपार्श्वे तु कर्मांगद्वयसूत्रकम्
यमस्योत्तरपार्श्वौ तु चत्वारिंशाष्टसूत्रकम् ४
विकारं कर्णसूत्रं च सूत्यलंध्यं न कारयेत्
अष्टाविंशति संधिं च विद्यासूत्रं च संयुतम् ५
तत्सूत्रसंख्ययां चैव अशीतिस्तुर्यसंख्यया
षट्त्रिंशत्संख्यया चैव जर्यसूत्रं तथा भवेत् ६
तत्संख्या वृतमेवं च शतैश्चत्वारि चाब्दिकम्
षट्सूत्रं भानुसंख्या च कला सप्तति संख्यया ७
कोणेषु गुणसूत्रं च भानुसंख्यास्तथैव च

तन्मध्ये चाष्टसूत्रं च सूत्रकर्ममिहोच्यते ८
एतैश्च सूत्रसंख्याभिः चतुस्सूत्रैर्युतं तथा
व्यंजनाष्टपदं चैव मध्ये चैव त्यजेत्ततमः ९
तत्संख्या चतुष्पदं चैव पूर्वादीनि चतुर्दश
व्यंजनं षोडशं चैव पदेकं चाष्टमेव च १०
द्विपदाष्टपदं चैव द्व्यैकं चैव त्यजेद्बुधः
तत्संख्या चतुष्पदं चैव पूर्वादीनि चतुर्दिशि ११
पदे षोडशसंख्या च प्रागादीनि तथैव च
सूत्रमध्ये बलिं कुर्यात् एकविंशति संख्यया १२
पदमध्ये बलिं कुर्यान् मूर्तिसंख्या तथैव च
विकाराच्यपदं चैव तत्पदे बलिमाचरेत् १३
वेदशूलैश्चतुर्वृत्तैः पंचाशद्गुणसंख्यया
एवं क्रमेण विधिवत् बलिदेवाः प्रकीर्तिताः १४
तन्मध्ये तु बलिं कुर्यात् ब्रह्मणश्च बलिं ददेत्
मरीची च विवस्वांश्च मित्रो क्षमाधरमेव च १५
पूर्वादीनि चतुर्दिक्षु तद्देवानां बलिं ददेत्
महेन्द्रादित्यसत्यश्च भृंगश्च राक्षसो यमः १६
गन्धर्वो भृंगराजश्च पुष्पदन्तजलेश्वरः
अरमश्शोषहल्लाटो सोमो मोगो द्युतिस्थरा १७
दिशि दिश्यथ चत्वारो देवा द्विपदभागिनः
आपश्चैवापवत्सश्च अन्तः प्रागुत्तरे स्थितौ १८
सवित्रश्चैव सावित्रः चान्तः प्राग्दक्षिणे स्थितौ
इन्दुश्चैवेन्दुराजश्च दक्षिणावपरस्थितौ १९
रुद्रो रुद्रजयश्चैव पश्चिमोत्तरतो दिशि
एतैश्च बलिदेवानां सार्धार्धस्सार्धपदभोगिनः २०
जयन्तश्चान्तरिक्षश्च वितथैस्तु मृगैस्सह

सुग्रीवः पापयक्ष्मा च मुख्यश्चैवाच्युतिस्तथा २१
पार्श्वद्वये महादिक्षु तथैकैकपदास्तथा
ईशानश्चैव पर्जन्यो अग्निः पूषा बलिं ददेत् २२
नृतिद्वौ वारिकश्चैव वायुर्नागाष्टदेवता
ईशादि वायुपर्यन्तं विदिक्षु व्यंजनकोष्ठकाः २३
कुंभकं च भकं चैव पिच्छिकं पिंछकं तथा
पूर्वादीनि चतुर्दिक्षु वृत्तमध्ये बलिं ददेत् २४
ताम्बूलं दापयेद्धीमान् धूपदीपं समाचरेत्
एवं बलिक्रमं प्रोक्तं वास्तुकुंभार्चनं ततः २५
पूर्वे चैवोत्तरे देशे स्थलं वृत्तवत्क्रमात्
कुंभं च वर्धनीं चैव कलशं च विसर्जयेत् २६
स्नपनोक्तप्रकारेण वास्तुदेवान्समर्चयेत्
बलिमण्डलपूर्वे तु वास्तुहोमं च पूर्ववत् २७
पर्यग्निकरणं कुर्यात् होमान्ते तु विचक्षणः
जयघण्टारवोपेतं शुद्धस्नानमेव च २८
पलालदर्भसंयुक्तं शुष्क आद्येन संगृहेत्
तदग्निं योजयेद्धीमान् पर्यग्निकरणं कुरु २९
अशुद्धिस्नानमेवं च शोधयेत्तु विशेषतः
वर्धनीं स्तावमेवं च उत्कं त्यक्त्वाऽथ तद्बहिः ३०
मार्जनं प्रोक्षणं चैव स्नानं कृत्वा तु देशिकः
तत्स्थाने तु प्रवेश्याथ प्रोक्षयेत्पंचगव्यकम् ३१
वास्तुकुंभं ततो येन प्रोक्षयेत्तु विशेषतः
आचार्यं पूजयेत्पश्चात् वस्त्रहेमांगुलीयकैः ३२
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
मण्डूकस्य विधिः प्रोक्तो वास्तुहोमविधिं शृणु ३३
इत्यंशुमति तन्त्रे पण्डूकपदविधिपटलः चतुःपंचाशः

## ग्रङ्गोपाङ्गप्रत्यङ्गम्

ग्रंगोपांगप्रत्यंगं शरीरांगं तदुच्यते
ग्रंगं प्रधानशूलं स्यात् ब्रह्मदराडमिहोच्यते १
वक्षोदराडं कटीदराडं बाहुकोर्परकोष्ठकम्
ऊरू च जानुजंघा च उपांगमिति कीर्तितम् २
शेषाणि च विजानीयात् प्रत्यंगमिति बुद्धिमान्
प्रयंगोपांगहीने च वस्त्राभरणहीनके ३
पुनस्संधानकं कृत्वा संप्रोक्षणमथाचरेत्
लिंगं वा प्रतिमा वापि वह्निना दुष्यते सति ४
छिन्नं भिन्नं विना यत्र संप्रोक्षणमथाचरेत्
उमास्कन्दादिदेवानां शक्त्यायुधविहीनके ५
पूर्ववच्छक्तिदं कृत्वा कल्याणं कारयेत्ततः
ग्रायुधाभरणे हीने पूर्ववत्कारयेत्सुधीः ६
संप्रोक्षणं ततः कृत्वा चोत्सवं कारयेत्ततः
परिवारांगवैकल्ये पुनस्संधानमाचरेत् ७
संप्रोक्षणमथाभ्यर्च्य पुनः पुरायाहमाचरेत् ८
इत्यंशुमति तन्त्रे ग्रंगोपांगप्रत्यंगपटलः सप्तपंचाशः

## प्रवेशबलिः

प्रवेशस्य बलिं वक्ष्ये श्रूयतां रविसत्तम
सर्वविघ्नविनाशार्थं सर्वारिष्टविनाशनम् १
वसन्ति भूतरक्षांसि जीर्णारामादि वास्तुषु
तेषां निरसनार्थाय तृप्त्यर्थं च बलिमाचरेत् २
ग्रामं ऋद्धिकरं शान्तिनृपराष्ट्रसमृद्धिदम्
तत्तत्स्थानसमृद्ध्यर्थं पुत्रदारसुखप्रदम् ३
तस्मात्सर्वप्रयत्नेन तद्गणस्य बलिं ददेत्

भूपरिग्रहकाले च वेश्मारम्भस्य कालके ४
जीर्णोद्धारणकाले च शून्यवास्तु प्रवेशने
प्रथमोत्सवकाले च प्रथमवास्तु प्रवेशने ५
महामारी प्रकोपे च तत्काले बलिमाचरेत्
निश्चित्य दिवसात्पूर्वे शुक्रवारे विशेषतः ६
कृष्णपक्षे विशेषेण मध्यरात्रौ बलिं ददेत्
अथवा सितपक्षे च लब्धवारे बलिं कुरु ७
आचार्यः शिष्यसंयुक्तः पूर्ववत्स्नानमाचरेत्
रक्तवस्त्रेण संवेष्ट्य चोत्तरीयसमन्वितः ८
चन्दनेनानुलिप्तांगं सितपुष्पधरस्सुधीः
विघ्नेशं पूजयेद्धीमान् नाळिकेरफलैर्युताम् ९
शिवाग्रे स्थण्डिलं कल्प्य पुण्याहं वाचयेत्ततः
बलिस्थानेषु शुध्यर्थं पंचगव्यं तु साधयेत् १०
बल्यर्थद्रव्यसंपन्नं तत्काले शुद्धिमाचरेत्
अस्त्रबिम्बसमायुक्तं खड्गं वा कूर्चमेव वा ११
वस्त्रमाल्याद्यलंकृत्य घण्टारवसमन्वितम्
भेरीघोषसमायुक्तं सर्ववाद्यसमन्वितम् १२
दीपज्वालासमायुक्तं ग्रामवास्तुबलिं ददेत्
ब्रह्मस्थानादिकं कृत्वा इन्द्रस्थानादिकं तु वा १३
इष्टिका रजनी चूर्णं शंखचूर्णं पृथक्पृथक्
अथवा पिष्टमेवं तु कल्पयेत्तु विचक्षणः १४
ब्रह्मस्थानेब्जमालिख्य महालक्ष्मीं प्रपूजयेत्
शुद्धान्नं तु बलिं दद्यात् ताम्बूलेनैव दापयेत् १५
इन्द्रस्थानेष्टकोणं तु आग्नेय्यां तत्त्रिकोणकम्
याम्यायां धर्मकोणं तु नैर्ऋत्यां सूर्यकोणकम् १६
वारुण्यां विबकोणं तु वायव्यां षोडशं भवेत्

सौम्यायास्तत्त्रिकोणं च षट्त्रिंशच्चैश कोणके १७
नाळीकेरदळैर्युक्तं तत्पुष्पं पूगपुष्पकम्
बलिस्थानेषु कर्तव्यं लाजैः पुष्पैश्च शोभितम् १८
बलिं दद्याद्विशेषेण तत्तत्स्थाने स्वमंत्रतः
शुद्धान्नं दधिसंयुक्तं सूपयुक्तं घृतप्लुतम् १९
कुक्कुटाजवराहाश्च तत्तत्स्थाने बलिं ददेत्
अथवान्यप्रकारेण कूष्माण्डबलिमाचरेत् २०
मृत्पात्रे जलमापूर्य चूर्णं हारिद्रमिश्रकम्
फलादिखण्डसंयुक्तं एतत्पानमिति स्मृतम् २१
एकवारं त्रिवारं वा तन्मंत्रैस्तर्पयेत्कुरु
यक्षराक्षसभूताश्च पिशाचा ब्रह्मराक्षसाः २२
काळिका च शरळ्याश्च असंख्या भैरवादयः
पूर्वादीशानपर्यन्तं यक्षादिबलिमाचरेत् २३
उज्वलनेत्रेभ्यो महबलपराक्रमेभ्यो यक्षेभ्यो बलिं प्रयच्छस्व । पर्वते ओं नमो भगवते चण्डकोपिने महारक्षसे बलिं प्रयच्छस्व । पर्वताग्रे २ ओं नमो भूतेभ्यो मेघतुल्येभ्यो महाबलपराक्रमेभ्यो भूतानां बलिं प्रयच्छस्व । पर्वताग्रे ३ ओं नमो सर्वपिशाचेभ्यो कृशोदरेभ्यो दीर्घरूपेभ्यो बलिं प्रयच्छस्व । वने ४ ओं दीर्घदंष्ट्राय महोदराय ससर्वान् ब्रह्मन् बलिं प्रयच्छस्व । समुद्रे ५ ओं नमो चण्डे शूलकपालिकाळिसंघान्बलिं प्रयच्छस्व । वनमध्ये ६ विमुखी दीर्घरूपेभ्यो शरल्यां बलिं प्रयच्छस्व । शून्यस्थाने ७ ओं नमो बटुकादि भैरवेभ्यो बलिं प्रयच्छस्व । समुद्रमध्ये ।

इत्यंशुमति तन्त्रे प्रवेशबलिविधिपटलः त्रिषष्टितमः

## भद्रपूजाविधि

भद्रपूजां प्रवक्ष्यामि श्रूयतां रविसत्तम
आयुरारोग्यजयदं पुष्टिश्रीकीर्तिवर्धनम् १
सर्वमंगळमांगल्यं सर्वाभीष्टफलप्रदम्
अकालमृत्युशमनं अपस्मारविनाशनम् २
लोके दुर्भिक्षनाशं स्यात्तद्ग्रामे तु विशेषतः
कर्तुरायुष्करं चैव सर्वसंपत्सुखावहम् ३
भद्रपूजां तु यः कुर्यात्सकलं भद्रमश्नुते
सर्वमासेषु कर्तव्या राज्ञां जन्मदिनेऽपि च ४
तत्तन्मासर्क्षके वापि आर्द्रायां श्रवणेऽपि वा
पर्वद्वये च संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ५
अष्टम्यां वा चतुर्दश्यां अयने विषुवे तथा
यजमानेच्छया वापि पुण्यं काले विशेषतः ६
निश्चित्य दिवसात्पूर्वे रात्रौ दीपावसानके
आचार्यः शिष्यसंयुक्तः स्नानं कृत्वा समाहितः ७
सुशुद्धवस्त्रैराच्छाद्य सोष्णीषः सोत्तरीयकः
विघ्नेशं पूजयेत्सर्वं संकल्पं च तथाक्रमम् ८
पुण्याहं वाचयेद्विद्वान् पंचगव्यादिभिः क्रमात्
पंचामृतं सुसंसाध्य नवकं तत्र कल्पयेत् ९
तैलस्नानं च कर्तव्यं विघ्नेशं मूलमन्त्रतः
शुद्धतोयेन संस्नाप्य नवकैरभिषेचयेत् १०
शुद्धवस्त्रैरलंकृत्य गन्धमाल्यादिभिस्तथा
पद्मपुष्पैश्च कह्लारै जातिपुष्पैश्च चम्पकैः ११
तुळसी बिल्वपत्रौ च एकपात्रे विमिश्रितम्
गणेशं मूलमन्त्रेण सांगं सपरिवारकम् १२
अर्चयित्वा तु मतिमान् धूपदीपं ददेद्गुरुः

पायसं लड्डुकं चैव अपूपं पिष्टमेव च १३
मुद्गं तिलं च पृथुकं नाळिकेरेक्षुखण्डकम्
पनसाम्रफलं चैव कदळीफलमेव च १४
निवेदयेद्गणेशाय देशिकः शुद्धमानसः
ताम्बूलं मुखवासं च धूपदीपं ददेत्क्रमात् १५
मूलेनाष्टोत्तरशतं अर्चयेत्तु विचक्षणः
प्रार्थयित्वा तु मतिमान् गणेशं प्रीतिमानतः १६
द्वारपूजां ततः कृत्वा गर्भगेहं प्रविश्य च
क्षीरेण स्नापयेच्छम्भुं मुद्गान्नं च निवेदयेत् १७
ताम्बूलं तु निवेद्याथ धूपदीपं ददेद्गुरुः
पंचब्रह्मषडंगैश्च बिल्वपत्रैः समर्चयेत् १८
मूळेनाष्टोत्तरशतं अर्चयित्वा विशेषतः
देवदेव जगन्नाथ सर्वज्ञ जगदीश्वर १९
भद्रपूजां करिष्येऽहमनुज्ञां दातुमर्हसि
अनेन प्रार्थयित्वा तु सन्ध्याशेषं समापयेत् २०
रात्रौ जागरणं कृत्वा देशिकः शंभुसंनिधौ
ततः प्रभातसमये देशिकः कर्तृसंयुतः २१
स्नानं कृत्वा तु विधिवदालयं तु प्रविश्य च
प्रदक्षिणत्रयं कृत्वा दण्डवत्प्रणिपत्य च २२
प्रातस्सन्ध्यावसाने तु इमां पूजां समारभेत्
प्रासादाग्रे विशेषेण गोमयालेपनं कुरु २३
तन्मध्ये तु मतिमान् कल्पयेत्स्थण्डिलं पृथक्
पूर्वे तु स्थण्डिलं कुर्याच्छालिभिर्द्रोणसंख्यया २४
द्विगुणं दक्षिणे भागे शालिभिस्थण्डिलं कुरु
पश्चिमे तु गुणद्रोणस्वार्युग्मं तु तथोत्तरे २५
मध्यमे तु विशेषेण स्थण्डिलं भारसंख्यया

तदर्धं तण्डुलं प्रोक्तं तदर्धं तिलमेव च  २६
तदर्धं लाजमेवं तु तदर्धं पिष्टचूर्णयुक्
तदर्धं रजनीचूर्णं स्थण्डिलं तु पृथक्पृथक्  २७
तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत्
अग्न्यादिषु च कोणेषु स्वस्तिकं मण्डलं कुरु  २८
तदूर्ध्वे स्थण्डिलं कुर्यादाढकैस्तण्डुलैस्तथा
दीपाधारं तदूर्ध्वे तु स्थापयेद्दीपसंयुतम्  २९
गोघृतैर्वा सुतैलैर्वा यथा लाभं तु कल्पयेत्
पुण्याहं वाचयेत्तत्र पंचगव्यं तु साधयेत्  ३०
पंचामृतं सु संस्थाप्य कलशान्स्थापयेत्ततः
पूर्वे तु नवकं स्थाप्य सद्येनैव तु पूजयेत्  ३१
दक्षिणे षोडशं स्थाप्य वामदेवेन पूजयेत्
पश्चिमे पंचविंशञ्च अघोरेण तु पूजयेत्  ३२
उत्तरैकोनपंशाचत् पुरुषेण समर्चयेत्
मध्ये चाष्टोत्तरशतं ईशानेनैव पूजयेत्  ३३
मूलमन्त्रेण मतिमान् पूजयेत्तु विशेषतः
कलशस्थापनोक्तेन क्रमेणैव समाहितः  ३४
कलशान्पूजयेद्विद्वान् पूर्वादिषु यथाक्रमात्
जया च विजया चैव अजिता च पराजिता  ३५
मायाबीजसमायुक्तं प्रणवादिनमोऽन्तकम्
स्वनामपदमध्यस्थं अर्चयेत्तु पृथक्पृथक्  ३६
अग्न्यादिषु च दीपेषु पूजयेत्तु गुरूत्तमः
कान्तोदं पूर्वदिग्भागे पुष्पोदं दक्षिणे न्यसेत्  ३७
रत्नोदं पश्चिमे भागे लोहोदं चोत्तरे तथा
इन्द्रपावकयोर्मध्ये गन्धोदं विन्यसेद्बुधः  ३८
निवृत्त्यादिकलाः पंच उदकेषु च पूजयेत्

एतेषामुदकानां तु प्रमाणं द्रोणसंख्यया ३९
ऋगाद्यध्ययनं कुर्याच्चतुर्दिक्षु यथाक्रमम्
वेदं प्रति विशेषेण चत्वारो वेदपारगाः ४०
कलशस्थापनं कृत्वा वेदपारायणं कुरु
होमं कुर्यात्तदग्रे तु कुण्डे वा स्थण्डिलेऽपि वा ४१
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
समिदाज्यचरुं लाजान् सर्षपांश्च यवांस्तिलान् ४२
माषमुद्गगुळैश्चैव पयसा होमयेत्क्रमात्
पंचब्रह्मषडंगैश्च प्रत्येकं पंचविंशतिः ४३
नाळिकेरं च कदळी पायसापूपमेव च
इक्षुखण्डं तथैतानि सद्यादिब्रह्मपंचकैः ४४
सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा
शतमष्टोत्तरं वापि होमं कुर्याद्विचक्षणः ४५
सर्वद्रव्यसमायुक्तं स्विष्टकृद्धोममाचरेत्
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ४६
अग्निस्थं मूर्तिमादाय कुम्भमध्ये तु योजयेत्
कुम्भं प्रति विशेषेण नैवेद्यं धूपदीपकम् ४७
नीराजनं तु संस्थाप्य प्रतिकुम्भं विशेषतः
द्वारपूजां ततः कृत्वा गर्भगेहं प्रवेशयेत् ४८
व्योमव्यापि समुच्चार्य पुष्पैरभ्यर्च्य देशिकः
निर्माल्यं तु विसृज्याथ गन्धतैलेन मर्दयेत् ४९
पिष्टादिचूर्णैः संस्नाप्य पंचगव्याभिषेचनम्
पंचामृतेन संस्नाप्य ततः क्षीराभिषेचनम् ५०
तत्काले भूसुरैः सार्धं जपं कुर्याद्विचक्षणः
चमकं नमकं चैव रुद्रसूक्तं तथैव च ५१
पवमानं पुरुषसूक्तं शिवसंकल्पमेव च

श्रीसूक्तं पंचशान्तिं च जपं कुर्यात्समाहितः ५२
कान्तोदेनाभिषिच्याथ नवकैरभिषेचयेत्
चित्रवस्त्रैरलंकृत्य गन्धमाल्यं च दापयेत् ५३
पायसं तु निवेद्याथ ताम्बूलं तु निवेदयेत्
धूपदीपं ददेत्पश्चान्नीराजनं ततः कुरु ५४
सद्यमन्त्रं समुच्चार्य अष्टाविंशतिसंख्यया
पद्मपुष्पैः समभ्यर्च्य प्रथमं समुदाहृतः ५५
द्वितीय पूजा कर्तव्या दधिना स्नानमाचरेत्
शुद्धोदेनाभिषिच्याथ पुष्पोदैरभिषेचयेत् ५६
षोडशैः कलशैः स्नाप्य रक्तवस्त्रं च दापयेत्
गन्धादिभिरलंकृत्य मुद्गान्नं च निवेदयेत् ५७
+++++++++ धूपदीपं च दापयेत्
नीराजनं ततो दद्यात् करवीरैः समर्चयेत् ५८
वाममन्त्रं समुच्चार्य अष्टाविंशतिसंख्यया
तृतीयपूजा कर्तव्या घृतेन स्नापयेद्गुरुः ५९
रत्नोदेनाभिषिच्याथ शुद्धतोयाभिषेचनम्
कलशैः पंचविंशद्भिः स्नापयेत्परमेश्वरम् ६०
शुद्धवस्त्रैरलंकृत्य गन्धमाल्यादिभिस्तथा
गुळान्नं च निवेद्याथ ताम्बूलं च निवेदयेत् ६१
धूपदीपं ततो दद्यात् नीराजनमथाचरेत्
चम्पकैस्तु समभ्यर्च्य अघोरं पूर्वसंख्यया ६२
चतुर्थपूजा कर्तव्या फलैः संस्नाप्य देशिकः
लोहोदेनाभिषिच्याथ शुद्धतोयाभिषेचयेत् ६३
क्रमेणैकोनपंचाशत् कलशैरभिषेचयेत्
चित्रवस्त्रैरलंकृत्य गन्धमाल्यैर्विशेषतः ६४
हरिद्रान्नं निवेद्याथ ताम्बूलं च निवेदयेत्

पुरुषं मरात्रमुच्चार्य जातिपुष्पैः समर्चयेत् ६५
अष्टाविंशति संख्यां तु आचार्यस्तु प्रसन्नधीः
भूतपूजा प्रकर्तव्या नाळिकेरेक्षुसारकैः ६६
गन्धोदेनाभिषिच्याथ शुद्धतोयाभिषेचनम्
वेदकुम्भाभिषेकं च प्रासादं मन्त्रमुच्चरन् ६७
शुक्लवस्त्रैरलंकृत्य गन्धमाल्यैस्तथार्चयेत्
परिचारकमाहूय सोष्णीषः सोत्तरीयकः ६८
कुम्भानुद्धृत्य शिरसा मूर्ध्निदेशे निधाय च
आचार्यो वर्धनीं गृह्य यजमानसमन्वितः ६९
नानावाद्यसमायुक्तं नानादीपसमन्वितम्
स्वस्तिवाचकसंयुक्तं नानास्त्रीपरिसेवितम् ७०
छत्रचामरसंयुक्तं कृत्वा धामप्रदक्षिणम्
प्रविशेदालयं पश्चाद् देवाग्रे स्थण्डिले न्यसेत् ७१
धूपदीपं ददेत्पश्चात् नीराजनमथाचरेत्
दीपशक्तिं समादाय पीठमूले तु योजयेत् ७२
कुम्भाद्देवं समादाय लिंगे चावाहनं कुरु
तज्जलैरभिषिच्याथ पीठे चैव तु वर्धनीम् ७३
कलशैरभिषिच्याथ अष्टोत्तरशतैः क्रमात्
मन्त्रपुष्पं ततो दद्यात् फलान्नं तु निवेदयेत् ७४
पीतवस्त्रैरलंकृत्य गन्धमाल्यं च दापयेत्
ईशानेनैव मन्त्रेण दान्तमष्टोत्तरं शतम् ७५
अर्चयित्वा विधानेन पंचब्रह्मषडंगकैः
अष्टत्रिंशत्कलाभिश्च मूलेनाष्टोत्तरं शतम् ७६
पंचावरणमार्गेण पूजयित्वा विशेषतः
महाहविर्निवेद्याथ ताम्बूलं तु निवेदयेत् ७७
मुखवासं ततो दद्यात् पाद्यमाचमनार्घ्यकम्

धूपदीपं ततो दद्यात् शुद्धनृत्तं तु कारयेत् ७८
आचार्यं पूजयेत्पश्चात् वस्त्रहेमांगुळियकैः
ब्राह्मणान्भोजयित्वा तु दक्षिणां संप्रदाय च ७९
प्रासादाग्रेष्टदेशे तु आसनं संप्रकल्प्य च
तत्रैव साध्यसंस्थाप्य पंचब्रह्मषडंगकैः ८०
न्यस्त्वा तस्य शरीरे तु स्वतीर्थारक्तवर्त्मना
तीर्थमूलेन मतिमान् अभिषेकं समाचरेत् ८१
कुण्डस्थं भस्ममादाय मृत्युंजयं समुच्चरन्
उद्धूळनं च कर्तव्यं त्रिपुण्ड्रमथवा कुरु ८२
एवं समाप्य विधिवत् संध्याशेषं समाचरेत्
इहलोके सुखं प्राप्य सोऽन्ते सायुज्यमाप्नुयात् ८३
इत्यंशुमति तन्त्रे पूजाविधिपटलः पंचषष्टितमः

## छिन्नपूजाविधि

छिन्नपूजाविधिं वक्ष्ये विघ्नेशस्य विशेषतः
आयुरारोग्य जयदं पुत्रपौत्रविवर्धनम् १
सर्वकामप्रसिध्यर्थं सार्वभौमप्रदायकम्
परसंहारमेवं स्यात् कर्तुरायुष्करं परम् २
तस्मात्सर्वप्रयत्नेन छिन्नपूजां समाचरेत्
सर्वमासेषु कर्तव्यं कर्तृमानेच्छया सह ३
उत्तमं शुक्रवारं तु मध्यमं सोमवारकम्
अधमं चार्कवारं तु अन्यवाराणि वर्जयेत् ४
नवमी तृतीया चैव अष्टमी च चतुर्दशी
तिथिना मध्यमं प्रोक्तं अमावास्यां विवर्जयेत् ५
कर्तुर्ऋक्षानुकूलं च कालनिर्णयमेव च
ग्रामादिस्थापने मूर्तिविशेषाच्छंकरालये ६

स्वतन्त्रं परिवारं वा विघ्नेशयजनं परम्
भास्करोदयमारभ्य त्रिपादेन त्रिनाडिका ७
नित्यपूजावसानान्ते छिन्नपूजां समारभेत्
बालश्च भक्तो वीरश्च शक्तिश्च ध्वजपिंगलौ ८
उच्छिष्टरक्तौ क्षिप्रश्च हेरम्बो लक्ष्मिरेव च
विजयो नृत्त ऊर्ध्वश्च महाहरिद्रनामकौ ९
षोडशानां गणेशानां नामैवं परिकीर्तितम्
विप्रादिशूद्रपर्यन्तं मूर्तिभेदं तदुच्यते १०
बलादियुगमूर्ती च भूसुराणां विधीयते
इतराण्येवमेवं स्यात् भूपादीनां विशेषतः ११
बालादिनि ++ न्तं योग्यं पूर्वफलान्वितम्
तत्तन्मन्त्रेण कर्तव्यं पूजान्तं मन्त्रमुच्चरन् १२
आयुर्भोगादिमोक्षं च श्रीकीर्तिश्शत्रुनाशनम्
यथाकामं विशेषेण मन्त्रोच्चारमिहोच्यते १३
श्रीं ह्रीं क्लीं बीजमेवं च ह्रां ह्रीं ह्रूं बीजमेव च
इं ईं ++ बीजमेवं च तत्तन्मूलसमन्वितम् १४
एवं क्रमेण मन्त्रं तु गुरुमार्गेण योजयेत्
एवं मन्त्रं समुच्चार्य तत्तत्कर्माणि साधयेत् १५
गुळं चैवेक्षुखण्डं च नाळिकेरफलान्वितम्
त्रिपुष्पं कर्करीं चैव बृहती चोर्वारुकं तथा १६
पनसाम्रफलं चैव कदळी मातुलुंगकम्
चारंगद्वयमेवं च कपित्थं शृंगिबेरकम् १७
जम्बूफलं तामरतं कुञ्जराननमेव च
आव्रयुक्तमरीचिश्च वल्लीमूलं च कन्दकम् १८
एवं फलानि संगृह्य फलं च सफलं द्विधा
पृथुकं लाजयुक्तं च मुद्गान्नं तिलमिश्रकम् १९

पयसोदनमारभ्य अपूपं बहुधा भवेत्
वित्वक् सत्वक् कृतं युक्त्या पक्वं वापक्वमेव च २०
फलाभावे तु पत्रं स्यात् पत्राभावे तु मूलकम्
मूलाभावे तु मन्त्रं स्यात् मूलमन्त्रं जपेच्छतम् २१
फलमेवं समाख्यातं पुष्पाणां विधिरुच्यते
करवीरं जातिपुष्पं नीलोत्पलं च दान्तकम् २२
कह्लारं कुटजं चैव द्रोणं चैवान्यपुष्पयुक्
द्रव्यं संपातनं प्रोक्तं स्थापनं द्विविधं भवेत् २३
सर्वद्रव्यसमिश्रं वा तत्तद्द्रव्यं पृथग्भवेत्
संमिश्रं चैव कालेन पृथक्स्थापनमुच्यते २४
संकल्पं च तथा पूर्वं पुण्याहं तत्र वाचयेत्
त्रिप्रस्थं क्षीरमित्युक्तं द्विप्रस्थं दधिरुच्यते २५
आज्यं प्रस्थेन कर्तव्यं षट्प्रस्थं गोमयं भवेत्
गोमयं तु चतुः प्रस्थं उत्तमं तु प्रकीर्तितम् २६
तदर्धं मध्यमं प्रोक्तं तदर्धं कन्यसं भवेत्
पंचगव्यमिति प्रोक्तं पंचामृतमिहोच्यते २७
मधुपयो दधिसर्वशर्कराः स्थापयेत्क्रमात्
स्नानद्रव्याणि सर्वाणि स्थापयेत्स्थण्डिलोपरि २८
नवकस्थापनार्थाय स्थण्डिलादिरिहोच्यते
तत्पूर्वे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः २९
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
तदर्धं लाजसंयुक्तं दर्भैः पुष्पैः परिस्तरेत् ३०
तन्मध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम्
नवकुम्भान्समादाय क्षाळयेद्धूपितं प्रति ३१
मध्यमे मूर्तिकुम्भं तु आवृतं परिवारकैः
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ३२

स्वर्णेन कमलं कल्प्य निष्कद्वयसमन्वितम्
नवरत्नसमायुक्तं मध्याद्यष्टदळेषु च ३३
वर्धन्यौ वान्यकुम्भानि केवलं स्वर्णपुष्पयुक्
प्रधानं वस्त्रयुग्मेन अपिधानं सहैव तु ३४
परिवारघटानष्टौ चैकैकं वस्त्रवेष्टितम्
गणेशं मध्यमे पूज्य गुरुणोक्तविधानतः ३५
गजाननं पूर्वकुम्भे गजवक्त्रं तु दक्षिणे
पश्चिमे गजहस्तं तु गजेन्द्रं सौम्यदेशके ३६
लम्बोदरं चाग्निदेशे महोदरं नैर्ऋते यजेत्
वामनं वायुदिग्भागे ईशाने गजकर्णकम् ३७
एवं संपूज्य विधिवत् निरोधार्घ्यं ददेद्गुरुः
स्थापनस्य क्रमं प्रोक्तं पूजानियम उच्यते ३८
विघ्नेश्वरं समभ्यर्च्य विज्ञापनमथाचरेत्
शुद्धतैलेन संस्नाप्याभिषेकं शुद्धवारिणा ३९
पिष्टं चामलकं चैव रजनीं चैव मर्दयेत्
पुरो वाच्य जलैः स्नाप्य पंचगव्याभिषेचनम् ४०
पंचामृतेन संस्नाप्य गन्धतोयाभिषेचयेत्
स्नानद्रव्याणि सर्वाणि स्नापनं चाभिषेचयेत् ४१
मन्त्रपुष्पं च मन्त्रान्नं मूलमन्त्रेण दापयेत्
तण्डुलप्रस्थमेवं तु द्रव्यमानं विधीयते ४२
द्विप्रस्थं क्षीरमेवं च चतुष्वंगुलमेव च
कदळी नाळिकेरन्तु तत्समं फलमेव च ४३
क्षीरकं रात्रिमेवं च महौषधिघृतान्वितम्
तण्डुलेन समायुक्तं किंचिल्लवणसंयुतम् ४४
पायसान्नमिति प्रोक्तं द्रोणतण्डुलकन्यसम्
द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमं भवेत् ४५

महाहविर्निवेद्याथ कर्तुर्वांच्छावशान्नयेत्
ताम्बूलं च निवेद्याथ धूपदीपं ददेद्गुरुः ४६
मूलमन्त्रं समुच्चार्य पंचविंशतिरर्चयेत्
सर्ववाद्यसमायुक्तं कुरवशब्दं समाचरेत् ४७
जयशब्दं समायुक्तं स्वस्तिमंगळवाचकैः
एवं प्रथमपूजां च द्वितीयां च ततः शृणु ४८
एकाक्षरं समुच्चार्य पंचविंशतिरर्चयेत्
द्वितीयपूजा कर्तव्या तृतीयं च निवेद्यके ४९
ह्रस्वबीजं समुच्चार्य सफलान्गृह्य योजयेत्
वस्त्रादिभिरलंकृत्य नीलोत्पलं च दापयेत् ५०
नैवेद्याद्युपचारान्तं पूर्ववत्परिकल्पयेत्
तृतीयपूजा कर्तव्या चतुर्थं च समाचरेत् ५१
बीजमुख्यमनुस्मृत्य तिलादिद्रव्ययोजयेत्
वस्त्रादिभिरलंकृत्य दान्तेनैव समर्चयेत् ५२
नैवेद्याद्युपचारान्तं पूर्ववत्सम्यगाचरेत्
पश्चात्पंचममारभ्य पतिमन्त्रमनुस्मरन् ५३
अपूपं पूजयेत्प्राग्वद्वस्त्रादिभिरलंकृतम्
कह्लारपुष्पैरभ्यर्च्य पूर्ववत्सम्यगाचरेत् ५४
एवं पंचममाख्यातं षष्ठस्य तु विधीयते
सर्वपुष्पं समादाय संपूर्णाच्छादनं कुरु ५५
मृदुवस्त्रेण संछाद्य सर्वगन्धं च योजयेत्
नैवेद्याद्युपचारान्तं पूर्वमेव क्रमेण तु ५६
सर्वमन्त्रं समुच्चार्य अर्चयेद्विघ्ननायकम्
प्रभूतहविषं दत्वा यथाशक्ति यथारुचि ५७
पूजां समाप्य विधिवच्छान्तिहोमयुतं तु वा
पूजाफलं च तत्सर्वं उदकेन प्रदापयेत् ५८

एतत्फलानि संगृह्य तत्फलं लभते नरः
आचार्यं पूजयेत्पश्चात्पूजाफलं च संगृहेत् ५९
छिन्नपूजाफलं प्राप्य सोऽन्ते सायुज्यमाप्नुयात्
पूजाद्रव्याणि सर्वाणि सायंकाले व्यपोह्य च ६०
भक्ष्यद्रव्याणि सर्वाणि बालानां च प्रदापयेत् ६१
इत्यंशुमति तन्त्रे छिन्नपूजाविधिपटलः षष्षष्टितमः

## शंखाभिषेकः

शंखाभिषेचनं वक्ष्ये श्रूयतां रविसत्तम
आयुः श्रीमृत्युजयदं व्याधिनाशं रिपुक्षयम् १
धर्मार्थकाममोक्षं च पुत्रपौत्रविवर्धनम्
शान्तिकं पौष्टिकं प्रोक्तं सर्वपापविनाशनम् २
तस्मात्सर्वप्रयत्नेन शंखतोयाभिषेचनम्
रोहिण्यां शनिसंयुक्ते गुरुपुष्ये तथैव च ३
आदित्यहस्तसंयुक्ते भृगुरेवतिसंयुते
कुजेश्वतिसमायुक्ते बुधानूराध एव च ४
सोमे वैष्णवसंयुक्ते यजमानानुकूलतः
अष्टम्यां च चतुर्दश्यां अमावास्यां च संक्रमे ५
यजमानस्य जन्मर्क्षे कुर्याच्छंखाभिषेचनम्
शंखं त्रिविधमित्युक्तं पुमान्नारी नपुंसकम् ६
मूलस्थूलं भवेन्नारी अग्रस्थूलं नपुंसकम्
अग्रमूलसमं चेत्तु पुल्लिंगमिति निश्चितम् ७
शंखं चतुर्विधं ज्ञेयं ब्रह्मणादिक्रमेण तु
लघुचालिकसद्भावदीर्घाश्रमवृतस्समम् ८
उदरं पूर्णयित्वा तु ब्रह्मशंखमिहोच्यते
क्षत्रियं शंखमेवं च जयी षट्पीतन्नदं तथा ९

मूलदीर्घं लघुश्चैव वैश्यशंखमिति स्मृतम्
शूद्रशंखं लघुश्चैव दीर्घाग्रं ह्रस्वपद्मकम् १०
शंखलक्षणमित्युक्तं शंखोद्भवमतः परम्
ताम्रपर्ण्युद्भवं शंखं उत्तमं चेति कीर्तितम् ११
गंगायां मध्यमं चैव नर्मदायां च कन्यसम्
एवं त्रिविधमित्युक्तं शंखोद्भवमिहोच्यते १२
दक्षिणावर्तकं शंखं जातिश्रेष्ठमिहोच्यते
तच्छंखं मध्यमे स्थाप्य आशां च परितो न्यसेत् १३
पूर्वोक्तलक्षणे चैव आढकेनैव पूरयेत्
तदर्धं मध्यमं चैव तदर्धमधमं भवेत् १४
दक्षिणावर्तकं शंखं स्वप्रमाणं विधीयते
पुच्छाग्रे हेमरत्नादिभूषितं चातिसुन्दरम् १५
सहस्रशंखं संस्नाप्य उत्तमं चेति कीर्तितम्
शंखं च शतसंख्या च स्थापनं च क्रमेण तु १६
संख्या एकोनपंचाशत् कन्यसं चैवमेव च
एवं क्रमेण विधिवत् स्नपनोक्तवदर्चयेत् १७
अथवान्यप्रकारेण शंखतोयाभिषेचनम्
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः १८
पंचगव्यं च संस्थाप्य पंचामृतं तथाचरेत्
स्नपनं कारयेद्धीमान् पूर्वोक्तविधिमाचरेत् १९
पाद्यमाचमनं चार्घ्यं पृथक्पात्रे च विन्यसेत्
जलभाण्डं तु संगृह्य जलेनापूरयेत्ततः २०
तद्द्रव्येणैव संयुक्तं सुगन्धकुसुमादिभिः
मुखं वस्त्रेण संवेष्ट्य स्थापयेत्तु विचक्षणः २१
शंखपूजाविधानार्थं शिवाग्रे स्थण्डिले न्यसेत्
गुरुर्विष्णुविरिंचौ च त्रिकोणाग्रे समर्चयेत् २२

शंखं चन्द्राधिदैवत्यं कुक्षिर्वरुणमेव च
पृष्ठे प्रजापतिख्याता पार्श्वे अश्विनिदेवता २३
रेखास्तु लक्ष्मीदेवी च शंखस्याग्रे सरस्वती
शंखस्य शुद्धिः कुक्षा च सप्तधारजलेन तु २४
ईशानादिशिरोऽन्तं च सप्तवारं च मन्त्रतः
पात्राधारं न्यसेन्मध्ये तस्याध्वें शंखकं न्यसेत् २५
नाडीसंधानमार्गेण तत्वत्रयं समर्चयेत्
रागो नियतिविद्या च कला च कालमोहिनी २६
विद्यादीश्वरसादाख्य शक्तिः शिव इति स्मृताः
शक्त्यादिशक्तिपर्यन्तं गन्धपुष्पैः समर्चयेत् २७
कूर्चं तन्मध्यमे स्थाप्य शिवगायत्रिमन्त्रतः
गन्धतोयेन संयोज्यं अष्टगन्धं च विन्यसेत् २८
चन्दनागरुकर्पूरतमालं जलकुंकुमम्
उशीरं कोष्ठसंयुक्तं शंखं गन्धाष्टकं न्यसेत् २९
गन्धद्वारेतिमन्त्रेण चन्दनं चैव विन्यसेत्
शिवगायत्रिमन्त्रेण अगरुं चैव विन्यसेत् ३०
शं नो देवीति मन्त्रेण आमं कर्पूरयोर्न्यसेत्
कितवासेतिमन्त्रेण मूलकं चैव विन्यसेत् ३१
तत्त्वायामीति मन्त्रेण जलं चैव तु विन्यसेत्
नाके सुपर्णमन्त्रेण कुंकुमं चैव विन्यसेत् ३२
भूमिर्भूम्नेति मन्त्रेण उशीरं चैव विन्यसेत्
कूर्चेन मथनं कृत्वा यद्वेदायेति मन्त्रतः ३३
न्यस्त्वा भागीरथीं मध्ये अर्धांगीं च तरंगिकाम्
कृतांजलिपुटो भूत्वा सर्वाभरणभूषिताम् ३४
तरंगवस्त्रसंयुक्तां पीनोरुजघनस्तनाम्
ध्यायेद्गंगां समावाह्य धूपदीपं समर्चयेत् ३५

शंखपूजावसाने तु जलपात्रं समर्चयेत्
शालिभिः स्थण्डिलं कृत्वा पद्ममष्टदलं लिखेत् ३६
त्रिपादीमध्यमे स्थाप्य तस्योर्ध्वे पात्रकं न्यसेत्
वस्त्रेण मुख्यमावेष्ट्य गन्धतोयेन पूरयेत् ३७
नवतीर्थं समावाह्य सुगन्धकुसुमादिभिः
धूपदीपं समभ्यर्च्य द्वारपूजार्चनं ततः ३८
स्थापयित्वा तु तद्द्रव्यं तैलाभ्यंगं तु कारयेत्
पिष्टमामलकं चैव रजनीं चैव दापयेत् ३९
स्नानतोयं च संस्नाप्य पंचगव्यामृतैरपि
गन्धतोयाभिषेकान्ते मन्त्रपुष्पं च दापयेत् ४०
पायसान्नं निवेद्यं च वस्त्रगन्धं च दापयेत्
शंखाभिषेचनं कुर्याद्रुद्रसूक्तेन मन्त्रतः ४१
चमकं पुरुषसूक्तं च श्रीसूक्तं पवमानकम्
आचार्यः शंखमुद्धृत्य लिंगाग्रे चतुरंगुलम् ४२
तज्जलं पूरयेद्धीमान् अन्यैश्च स्नापयेत्ततः
तत्तत्संख्यावसाने तु अर्चयेत्तु विशेषतः ४३
स्नानं वस्त्रं च गन्धं च पुष्पं दाम तथैव च
नैवेद्यं चैव ताम्बूलं धूपदीपं तथैव च ४४
षोडशैवोपचारान्तं सन्ध्यां प्रति समाचरेत्
शिवकुम्भं तु संगृह्य परिचारकमूर्धनि ४५
हर्म्यप्रदक्षिणं कुर्यात्सर्वालंकारसंयुतम्
गर्भगेहं प्रविश्याथ शिवाग्रे स्थण्डिलोपरि ४६
कुम्भाद्बीजं समादाय लिंगमध्ये तु विन्यसेत्
शक्तिबीजं च वर्धन्यां पिण्डिकां च विना न्यसेत् ४७
कुम्भोदैः स्नापयेल्लिंगं वर्धन्यद्भिस्तु पिण्डिकाम्
अनन्तादि शिखण्ड्यन्तात्क्रमाद्भिश्चैव विन्यसेत् ४८

मन्त्रपुष्पं ततो दत्वा मन्त्रान्नं च निवेदयेत्
एवं क्रमेण विधिवत् सन्ध्याशेषं समाचरेत् ४६
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इत्यंशुमति तन्त्रे शंखाभिषेकविधिपटलः सप्तषष्टितमः

## महाशान्तिः

महाशान्तिविधिं वक्ष्ये शृणुष्वैकाग्रमानसः
सहस्रलिंगमेकं यत्स्थापयेद्विधिपूर्वकम् १
स लिंगानां सहस्रस्य स्थापितस्य फलं भवेत्
वेदशास्त्रपुराणोक्तं धर्मं तेन कृतं भवेत् २
यः श्रद्धया सहस्राख्यं लिंगं यः स्थाप्य पूजयेत्
+++ किं लोके यं यं काममपेक्षते ३
तं तं काममनायासात्प्राप्नोतीशप्रसादतः
राज्यार्थी राज्यमाप्नोति भोगार्थी भोगमाप्नुयात् ४
पुत्रार्थी लभते पुत्रान् यशोऽर्थी लभते यशः
दुर्लभं सकलं तस्य सुलभं जायते क्षणात् ५
सर्वरोगा न बाधन्ते न च दुःखानि सन्ति हि
कालमृत्युरपि प्राप्तो नश्यन्ते चाखिलापदः ६
शिववत्सुचिरं कालं मोदते भुवि मानवः
मोक्षकामी स चेन्मोक्षं लभते मुनिदुर्लभम् ७
तस्मादेतत्समं पुण्यं न भूतं न भविष्यति
महाशान्त्यर्थलिंगाय सहस्रं वा तदर्धकम् ८
शिवधामस्य चैशान्ये चोत्तरे पश्चिमेऽपि वा
निर्ऋते च यथा योग्यं प्रतिष्ठां रत्नलिंगवत् ९
तस्य धामप्रमाणं च तत्पीठत्रिगुणं मतम्
तद्बाह्ये भित्तिविष्कम्भं चतुर्वर्गयुतं तु वा १०

स्थलोर्ध्वं भित्तिरुत्सेधं लिंगाद्द्विगुणमुत्तमम्
उत्तरान्तं तदुत्सेधतुलास्थं च न विद्यते ११
अब्दं प्रति विशेषेण महाशान्तिं समाचरेत्
विप्रक्षत्रियविट्छूद्रा दीक्षिताश्च प्रवेशकाः १२
सर्वमासेषु कर्तव्यं तत्तन्मासर्क्ष एव च
कर्तुर्जन्मदिने चैव यजमानेच्छया सह १३
महाशनिविनिश्चित्य अब्दं प्रति समाचरेत्
आढकार्धेन नैवेद्यं लिंगं प्रति पृथक्पृथक् १४
व्यंजनं तु चतुर्थांशं तत्समं फलमुच्यते
अष्ट्यंशं घृतसंयुक्तं तत्समं सूपमुच्यते १५
क्षीरादिरसवस्तूनि यथा लाभं प्रयोजयेत्
ताम्बूलं मुखवासं च गन्धतैलं च संगृहेत् १६
पिष्टमामलकं चैव रजनीमुद्गचूर्णकम्
अष्टगन्धं सुगन्धं च कर्पूरादींश्च संगृहेत् १७
पूजोपकरणद्रव्यान् सर्वं संपाद्य देशिकः
लिंगसंख्याक्रमेणैव कलशं चापि कल्पयेत् १८
नीलोत्पलादिपुष्पं च लिंगसंख्या क्रमेण तु
इतराण्यपि सर्वाणि संगृहेत्तु विचक्षणः १९
कलार्थमण्टपं कल्प्य अश्रकुण्डं प्रकल्पयेत्
निश्चित्य दिवसात्पूर्वे सायाह्नसमये बुधः २०
स्नानं कृत्वा विधानेन यजमानसमन्वितः
प्रपामण्टपमाविश्य भूतशुद्धिं समाचरेत् २१
सकळीकरणं कृत्वा प्रदक्षिणमथाचरेत्
पश्चात्प्रतिसरं बध्वा लिंगनाहसमं दृढम् २२
आचार्यदक्षिणे हस्ते कौतुकं बन्धयेत्ततः
यजमानकरे धीमान् रक्षासूत्रं तु बन्धयेत् २३

लिंगसंख्या जपेन्मूलं यजमानसमन्वितम्
मण्टपस्योत्तरे पार्श्वे शाययेत्सैकतोपरि २४
ब्राह्मे मुहूर्ते चोत्थाय पादप्रक्षाळनादिकम्
भस्मना तिलकं कृत्वा मूलमन्त्रं जपेत्ततः २५
यजमानसमोपेतं स्नानं कृत्वा यथाविधि
संध्याया वन्दनं कृत्वा नित्यकर्म समाप्य च २६
प्रपामण्टपमाविश्य सकळीकृतविग्रहः
विघ्नेशं पूजयेत्पूर्वं संकल्पमिति बुद्धिमान् २७
पुण्याहं वाचयित्वाथ पंचगव्यं च साधयेत्
पंचामृतं तु संस्थाप्य स्नानद्रव्याणि साधयेत् २८
कलशं मण्टपमाविश्य शोधयेद्भूमिलेपनम्
धूम्रन्यासं ततः कृत्वा स्थण्डिलं च पृथक्पृथक् २९
स्नपनोक्तक्रमेणैव द्रव्यदेवान्सुपूजयेत्
शान्तिहोमं ततः कृत्वा अभिषेकं समाचरेत् ३०
पुरोवाच्यजलैः प्रोक्ष्य गन्धतैलं च वर्जयेत्
पिष्टामलकरजन्यादिमर्दयेत्तु पृथक्पृथक् ३१
शुद्धतोयेन संस्नाप्य खण्डवस्त्रेण वेष्टयेत्
पंचगव्याभिषेकं तु गन्धतोयाभिषेचनम् ३२
संमृज्य शुद्धवस्त्रेण पंचामृताभिषेचयेत्
शुद्धतोयेनाभिषिच्य पयसाऽभ्यभिषेचयेत् ३३
खण्डवस्त्रेण संमृज्य शुद्धवस्त्रेण वेष्टयेत्
मार्जनं शुद्धवस्त्रेण स्थलमेवं प्रयत्नतः ३४
जलद्वारं निघट्याथ निश्छिद्रं सुषिरं कुरु
अष्टगन्धं समालिप्य लिंगं पीठं च लेपयेत् ३५
शुद्धवस्त्रेण संवेष्ट्य अष्टपुष्पं च दापयेत्
धूपदीपं तदन्ते तु कामानीराजनं चरेत् ३६

लिंगसंख्यासमं पुष्पं एकपात्रे तु चाश्रितम्
तत्पुष्पं धूपितं कार्यं संहितामभिमन्त्रयेत् ३७
कर्ता देशिकसंयुक्त अर्चनात्क्रममुच्यते
देशिकस्याज्ञया चैव कर्ता पीठे समर्चयेत् ३८
देशिको मूर्ध्नि विन्यस्य सहस्रपुष्पं पृथक्पृथक्
लिंगस्य मूलमन्त्रेण सहस्रनाममुच्चरन् ३९
भवादिमन्त्रे वा कुर्यात्प्रणवादि नमोऽन्तकैः
एवं मन्त्रं समुच्चार्य एककाले समर्चयेत् ४०
अर्चनान्ते समारभ्य हिमतोयाभिषेचनम्
गन्धतोयाभिषेकं च पुष्पोदैरभिषेचयेत् ४१
रत्नोदैश्च ततः पश्चात् मन्त्रपुष्पं समर्चयेत्
पायसं च निवेद्याथ नीराजनं च दापयेत् ४२
आर्द्रवस्त्रं त्यजेत्पश्चात् शुद्धवस्त्रेण वेष्टयेत्
स्थापनस्य क्रमेणैव कुम्भतोयाभिषेचयेत् ४३
तत्तदावरणान्तानि नववस्त्रेण वेष्टयेत्
गन्धपुष्पादिभिः पूज्य नैवेद्यं धूपदीपकम् ४४
एवमावरणान्तानि अभिषेकं क्रमान्नयेत्
शनैर्द्वारं च संखद्य यथानिर्व्रणमाचरेत् ४५
नीलोत्पलैर्वा कह्लारैः पद्मैर्वा श्वेतपंकजैः
अर्कैरारग्वधैर्वापि पद्मकैर्वा विचक्षणः ४६
रक्तैर्वा कनकैर्वाथ कर्पूरां शकलेन वा
मन्त्रपुष्पं समर्प्याथ मन्त्रान्नं च निवेदयेत् ४७
कर्पूरदीपमावर्त्य भुक्तिमुक्तिप्रदायकम्
कर्तुर्दक्षिणहस्तेन पीठं संस्पृश्य देशिकः ४८
अवगाहं नयेत्कार्यं घटिकापादमर्दकम्
जलद्वारं विसृज्याथ गोमुखाद्गृह्य तीर्थकम् ४९

सर्वभक्ताय दातव्यं स्नानमेवं विधीयते
द्वारबन्धं विसृज्याथ स्थलशुद्धिं प्रयत्नतः ५०
खण्डवस्त्रेण संमृज्य लिंगपीठस्थलं क्रमात्
आच्छाद्यपट्टवस्त्राद्यैः गन्धपुष्पस्त्रगादिभिः ५१
सर्ववाद्य समायुक्तं सर्वलीलासमन्वितम्
ज्वलद्दीपसमायुक्तं वितानाद्यैश्च शोभितम् ५२
लिंगाग्रे तु विशेषेण गोमयालेपनं कुरु
पिष्टचूर्णैरलंकृत्य तदूर्ध्वे वस्त्रपादिते ५३
कदळीपत्रं तदूर्ध्वे च अन्नमापूर्य बुद्धिमान्
लिंगं प्रत्याढकार्धेन नैवेद्यं परिकल्पयेत् ५४
त्रिमेखला समायुक्तं तन्मध्ये अवटं कुरु
परितो व्यंजनैः पूर्य पयश्शुष्कं च मध्यमे ५५
फलादिरसवस्तूनि तन्मध्ये तु विनिक्षिपेत्
स्थलिकामन्नमापूर्य व्यंजनादीनि पूरयेत् ५६
त्रिपाद्यूर्ध्वे तु विन्यस्य परितो विन्यसेत्ततः
नैवेद्यं कारयेद्धीमान् लिंगं प्रति निवेदयेत् ५७
धूपदीपं ततो दत्वा लिंगावरणमार्गतः
नृत्तान्तं पूजयेद्विद्वान् स्नानकाले जलं विशेषतः ५८
संकल्प्य लिंगपूजान्ते शिवमन्त्रशतं जपेत्
इष्टबन्धुजनैस्सार्धं यजमानेन देशिकः ५९
देवाग्रे विन्यसेद्धीमानुत्तराभिमुखः स्थितः
प्रथमं प्रणवन्यासं शृंखलान्यासमेव च ६०
भस्मना तिलकं कृत्वा अभीष्टं प्रार्थ्य देशिकः
सोऽपि पापैर्विनिर्मुक्तः शिवसायुज्यमाप्नुयात् ६१
महाशान्तिव्रतं दृष्ट्वा नत्वा लिंगसहस्त्रकम्
यः कुर्वञ्जीवलोकेऽपि शिवेन सह मोदते ६२

आचार्यं पूजयेत्तत्र गोभूमी कांचनादिकैः
तस्य व्रतोपकारीणां नववस्त्रं प्रदापयेत् ६३
लिंगसंख्या क्रमेणैव द्रव्यसंख्या क्रमेण तु
अयुतान्तक्रमेणैव तदूर्ध्वं न प्रशस्यते ६४
एवमेव क्रमेणैव महाशान्तिं समापयेत्
इत्यंशुमति तन्त्रे महाशान्तिपटलः अष्टषष्टितमः

## आर्द्राव्रतम्

अथ वक्ष्ये विशेषेण आर्द्राव्रतसुलक्षणम्
मार्गशीर्षकमासे तु आर्द्रायां पर्वसंयुते १
पर्वयुक्तो वियुक्तो वा चार्द्रायां व्रतमाचरेत्
दिनाधिके तथान्यूने तदृक्षे तु समाचरेत् २
आर्द्रायामष्टनाडीं वा अन्त्यर्क्षे व्रतमाचरेत्
अष्टनाडीं विना ऋक्षं पूर्वाह्ने व्रतमाचरेत् ३
यदृक्षमष्टनाड्यूनं तदृक्षं निष्फलं भवेत्
भोगं योगं च वीरं च शक्तिरेवं त्रिधा भवेत् ४
केवलं चैकशक्तिर्वा व्रतमेतत्समाचरेत्
ग्रामप्रदक्षिणं नेष्टे भोगशक्ते विशेषतः ५
सप्ताहे वाथ पंचाहे त्र्यहे वा तद्दिनेऽथ वा
अंकुराण्यर्पयित्वा तु पूर्वोक्तविधिना बुधः ६
सांकुरं वाथ हीनं वा कौतुकं बन्धयेत्ततः
पूजान्ते तु प्रकर्तव्यं स्थापयेत्परमेश्वरम् ७
गौरीं संस्नापयित्वा तु श्वेतवस्त्रेण वेष्टयेत्
सर्वाभरणैः संभूष्य सर्वपुष्पैरलंकृतम् ८
नववस्त्रधरोष्णीषं चोत्तरीयसमन्वितम्
उत्तराभिमुखो भूत्वा सकळीकृतविग्रहः ९

सामान्यार्घ्यं तु संसाद्य सर्वत्र प्रोक्षयेद्गुरुः
मण्टपे स्थण्डिलं कृत्वा चतुर्द्रोणैश्च शालिभिः १०
तण्डुलैस्तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत्
तन्मध्ये नववस्त्रोर्ध्वे गौरी संस्थापयेत्ततः ११
पूर्वस्यां दक्षिणस्यां वा गन्धपुष्पैस्समन्वितम्
विघ्नेशं पूजयेत्पूर्वं पुण्याहं वाचयेत्ततः १२
सुवर्णसूत्रैः पट्टोत्थैः कार्पासेन कृतं तु वा
स्थलिकाः पूजयित्वा तु तण्डुलैरुपसंनिभैः १३
चतुः प्रस्थं तदर्धं वा सूत्रं तस्योपरि न्यसेत्
गन्धादिना समभ्यर्च्य वासुकीमन्त्रमुच्चरन् १४
त्रियम्बकेन मन्त्रेण वामहस्ते तु बन्धयेत्
घृतसूक्तेन मन्त्रेण शिष्यो वा वाचयेत्ततः १५
अधिवासहुतं चेत्तु तदग्रे स्थण्डिलं कुरु
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत् १६
गौरीमिमायमन्त्रेण समिधाज्यान्तकैः सह
प्रत्येकमेकविंशद्भिः षोडशैर्वा समाचरेत् १७
सर्वद्रव्यसमायुक्तं हव्यवाहेन होमयेत्
जयादीनि ततो हुत्वा पूर्णान्तं सम्यगाचरेत् १८
नैवेद्यं दापयित्वा तु ताम्बूलं तु निवेदयेत्
धूपदीपसमायुक्तं पूजयेत्परमेश्वरीम् १९
पिधाय नववस्त्रैश्च तं प्रणम्य समाप्य च
अपरे दिवसे धीमान् प्रातस्संध्यावसानके २०
देवीं संस्नापयित्वा तु भूषणाद्यैरलंकृतः
कदळी गुळखण्डं वा क्षीरं वाथ निवेदयेत् २१
सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम्
ग्रामप्रदक्षिणं कृत्वा प्रासादभ्रमणं तु वा २२

तीर्थदेशं समागम्य तत्तीरे तु प्रपां कुरु
तन्मध्ये विन्यसेद्गौरीं सिंहयानादि विष्ठरे २३
पादाद्यैरर्चयित्वा तु चूर्णोत्सवमथाचरेत्
अथवा चूर्णयेद्विद्वान् प्रासादाग्रे विशेषतः २४
चूर्णोत्सवं ततः कुर्यात् अस्त्रराजसमन्वितम्
पूर्वोक्तेन विधानेन चूर्णं दत्वा यथाक्रमम् २५
तैलस्नानादिकं कृत्वा त्ववगाहनमारभेत्
रजनीर्वापिरेत्कन्यां सहैव स्नानमाचरेत् २६
कौतुकं तु विसृज्याथ स्नपनं कारयेत्ततः
नववस्त्रेण संवेष्ट्य सर्वाभरणसंयुताम् २७
सर्वमाल्यैरलंकृत्य गन्धपुष्पादिनार्चयेत्
सर्वालंकारसंयुक्तं स्वस्तिसूक्तसमन्वितम् २८
धूपदीपसमायुक्तं प्रासादं तु प्रवेशयेत्
प्रासादे वा प्रकर्तव्यं स्नानं वित्तानुसारतः २९
डोलाय मण्टपं कृत्वा कन्दं वापि प्रपां कुरु
देवालयस्य सम्बन्धात् देवीस्थानं प्रकल्पयेत् ३०
अन्तर्मण्डलमादिं स्यान्मध्यहारावसानकम्
प्राकारे तु प्रकर्तव्यं देव्यालयं समाश्रयेत् ३१
प्रासादस्याग्रतोधीशे दक्षिणे चोत्तरेऽपि वा
वीरं स्वतन्त्रालयं कृत्वा नित्योत्सवमथाचरेत् ३२
उत्सवान्तं प्रकर्तव्यं देवीं सम्यक्समारभेत्
तद्देव्यालयमग्रं तु मण्टपं तत्र शृंगकैः ३३
प्रथमादि पंचसाले वा देव्यालयाग्रकेऽथवा
त्रिहस्तं तु समारभ्य द्विद्विहस्तविवर्धनात् ३४
एकादशकान्तं तु मण्टपं चतुरश्रकम्
स्थलोच्चं चतुरंगुल्यं चतुर्द्वारयुतं न वा ३५

विस्तारसममुत्सेधं त्रिपादं वार्धमेव वा
त्रिपंचसप्तपंक्तिर्वा वितानाद्यैरलंकृता ३६
मराटपस्य त्रिभागैकचतुर्भागे त्रिभागिकम्
पंचभागेऽग्निभागं तु वेदिविस्तारमुच्यते ३७
द्वादशांगुलमुत्सेधं उपवेदीसमन्वितम्
क्रमुकं नाळिकेरं वा तालं वा कल्पयेद्बुधः ३८
त्रिहस्तं तु समारभ्य द्विद्विहस्तविवर्धनात्
एकादशकरान्तं तु उत्सेधं पञ्चधा भवेत् ३९
वृत्तं वा चतुरश्रं वा अष्टाश्रं षोडशं तु वा
हस्तमानं तु नाहं स्यात् षडंगुलविवर्धनात् ४०
एवं पंचविधं नाहं द्विहस्तान्तं क्रमेण तु
स्वभावनाहसंयुक्तं बहिः सारैर्विशेषतः ४१
वेदिकोर्ध्वेमिदं मानं ऊर्ध्वविष्ठरसंयुतम्
द्विहस्तं तु समारभ्य षडंगुलविवर्धनात् ४२
विशालं पंचधा प्रोक्तं त्रिहस्तान्तं क्रमेण तु
दराडनाहसमं नाहं वृत्तं वा चतुरश्रकम् ४३
सुषिरद्वयसंयुक्तं त्रिवृत्सूत्रसमन्वितम्
मध्यांगुलिपरीणाहं पट्टसूत्रादिनिर्मितम् ४४
कार्पासतन्तुसूत्रं वा नाळिकेरोत्थितं तु वा
त्रिवृता द्विवृतावर्ता दर्भमालादिसंयुता ४५
हस्तद्वयोर्ध्वे कर्तव्या शालाकृतिरथापि वा
लूपारोहादियुक्तं वा वितानं चित्रतैस्तु वा ४६
स्थूपित्रयसमायुक्तां एकस्थूपायतं न वा
लिकुचैर्नाळिकेराद्यैः नानाविधमलंकृता ४७
विस्तारे वाथ चोत्सेधे परिणाहेन वा ततः
पादुकास्थूपिपर्यन्तं उत्सेधं तु विधीयते ४८

विस्तारं होमबाह्ये तु परिणाहे गळेऽपि च
त्रिष्वेकं कल्पयेद्धीमान् ध्वजादिशुभयोनिजम् ४९
आयादिषट्कसंयुक्तं शुभाधिकमथापि वा
अधिष्ठानविधानेन उपपीठयुतं न वा ५०
वर्गान्ते कल्पयेद्धीमान् फलकायां तु विन्यसेत्
वृत्तं वा चतुरश्रं वा आयताश्रमथापि वा ५१
अष्टाश्रं षोडशाश्रं वा नवाश्रं वाथ कल्पयेत्
अंसं पूर्वे तु विन्यस्य पार्श्वे नळिनदण्डयुक् ५२
वेदिकोत्सेधमानेन सपादं सार्धमेव वा
त्रिपादं द्विगुणं वाथ चोत्सेधं तु चतुर्विधम् ५३
त्र्यंगुलं समारभ्य एकांगुलविवर्धनात्
नवांगुलावसाने तु विस्तारं सप्तधा भवेत् ५४
प्रासादपादवत्कुर्यात् सर्वालंकारसंयुतम्
तदूर्ध्वे तोरणोपेतं पत्राद्यैरलंकृतम् ५५
मृगपत्रादिशोभाढ्यं अन्तर्मानमथोच्यते
देवीपीठस्य विस्तारं द्विगुणं त्रिगुणं तु वा ५६
चतुष्पंचगुणं वाथ विस्तारं तु चतुर्विधम्
पीठपादमथारभ्य कटिसूत्रावसानकम् ५७
तयोर्मध्येऽष्टभागे तु नवधा पटमानकम्
यन्त्रनारा च संयुक्तं चतुष्कीलसमन्वितम् ५८
एतत्सर्वं समादद्यात् शुद्धिं कृत्वा विचक्षणः
बध्वा डोलां समालम्ब्य सूत्रेण स्तम्भमध्यमे ५९
भूमिशुद्धिं पुरा कृत्वा पिष्टचूर्णैरलंकृतम्
विघ्नेशं विधिवत्पूज्य पुण्याह प्रोक्षणं कुरु ६०
तद्दिनात्पूर्वरात्रौ तु अधिवासविधानतः
कृत्वा प्रतिसरं तत्र नृत्तेशं चोत्सवेश्वरम् ६१

ततः प्रभाते विमले स्नपनं कारयेत्ततः
शंखदुन्दुभिनिर्घोषैः स्तोत्रमंगळवाचकैः ६२
वेदध्वनिसमायुक्तं नृत्तगीतसमाकुलम्
मण्डपं पश्चिमे भागे स्थण्डिलं शालिना कुरु ६३
अष्टद्रोणैस्तदर्धैर्वा तदर्धैः कल्पयेत्क्रमात्
तदर्धैस्तण्डुलैश्चैव तदर्धैः प्लवणैस्ततः ६४
तदूर्ध्वे नववस्त्रैश्च दर्भैः पुष्पैः परिस्तरेत्
तदूर्ध्वे गौरीं संस्थित्वा तत्पूर्वाद्यष्टदिक्षु च ६५
स्थण्डिलं कारयित्वा तु चतुः प्रस्थं पृथक्पृथक्
तण्डुलैस्तिलदर्भैश्च पुष्पैश्चैव परिस्तरेत् ६६
व्रीहीश्च रजनी चैव शकृच्चूर्णं च तण्डुलम्
तिलं च लवणं चैव प्रतिप्रस्थं विशेषतः ६७
एकपात्रे गृहीत्वा तु पूर्वाभद्रां च संयुतम्
स्थण्डिले विन्यसेत्पूर्वे चाश्मानं शिशुसंयुतम् ६८
पिष्टचूर्णैरलंकृत्य वस्त्रेणैव तु वेष्टयेत्
तदग्रे स्थापयित्वा तु पायसापूपसंयुतम् ६९
ताम्बूलं क्रमुकं चैव किंचिदीशानदेशतः
पश्चिमाभिमुखं कार्यं तदग्रे पुस्तकं न्यसेत् ७०
उमासूक्तेन मन्त्रेण जपेयुर्ब्राह्मणास्तथा
विघ्नेशं दक्षिणेऽभ्यर्च्य दुर्गामुत्तरतो न्यसेत् ७१
अस्त्रराजं समभ्यर्च्य भक्तेशं पूजयेत्ततः
तदग्रे पुस्तकं पूज्य धर्माद्यैः कोणदेशके ७२
अश्मानं शिशुमभ्यर्च्य डोलास्तम्भद्वयेऽपि च
कल्पवल्लीं समभ्यर्च्य विष्टरे चन्द्रमर्चयेत् ७३
वासुकिं रज्जुके पूज्य गन्धपुष्पार्घ्यकादिभिः
शंखपद्मनिधी चैव पार्श्वे नळिनदण्डके ७४

तोरणे मध्यभागे तु महालक्ष्मीं प्रपूजयेत्
गंगा च यमुना चैव दक्षावामे समर्चयेत् ७५
हंसं पूर्वे तु संपूज्य मध्ये पद्मं समर्चयेत्
तदूर्ध्वे चलासनं पूज्य द्रव्याण्यपि च पूजयेत् ७६
उन्मादेव्यै समभ्यर्च्य वामादिशक्तिका न्यसेत्
गन्धपष्पादिनाभ्यर्च्य धूपदीपसमन्वितम् ७७
पश्चाद्द्रव्याणि संयोज्य मूर्ध्निपादान्तकं क्रमात्
गौरीगायत्रिमन्त्रेण भद्रां दूर्वां च योजयेत् ७८
लवणं कण्ठदेशे तु मूलमन्त्रमनुस्मरन्
रजनीं हृदयेनैव तन्मन्त्रेणैव देशिकः ७९
तण्डुलं वामदेवेन उदरे योजयेत्ततः
व्रीहिं तु नाभिदेशे तु प्रणवेन समन्वितम् ८०
तिलमूरू च विन्यस्य अघोरेणैव मन्त्रतः
सद्योजातेन मन्त्रेण शकृच्चूर्णं तु पादयोः ८१
एवं क्रमेण संयोज्य अर्घ्यं दत्वा विचक्षणः
श्रियश्चैव तु मंगल्यं प्रियं चान्यसमृद्धिदम् ८२
आयुष्यं रोगनाशार्थं फलमेवं क्रमेण तु
उमादेवी च हस्ताभ्यां पानीयं त्रिः प्रदक्षिणम् ८३
देशिकोऽपि करेणैव दद्यात्पुष्पांजलित्रयम्
आदित्यबिम्बमध्यस्थामीश्वरे योजयेत्ततः ८४
सकळे नाथ लिंगे वा योजयेत्तु विशेषतः
शिरसा वन्दनं कृत्वा जानुमण्डलसंयुतम् ८५
पश्चाद्दानकमानीय प्रोक्षयेच्छुद्धवारिणा
भस्म गन्धादिकं दत्वा पूर्ववत्सम्यगाचरेत् ८६
सुमुहूर्ते सुलग्ने तु डोलारोहं समाचरेत्
तस्योपरिन्यसेद्देवीं सर्वभक्तजनैस्सह ८७

जयशब्दसमायुक्तं स्वस्तिसूक्तसमन्वितम्
नृत्तगेयसमायुक्तं पंचशब्दमभावरम् ८८
गानयेद्धं स सूत्रेण पौराणिकविधानतः
डोलागानसमाप्ते तु प्रविश्यास्थानमण्टपे ८९
सिंहासनोपरि न्यस्य देवदेवीं समर्चयेत्
फलानि भक्ष्यद्रव्यं च दत्वा चाचमनीयकम् ९०
ताम्बूलं दापयित्वा तु धूपदीपसमन्वितम्
आरात्रिकसमायुक्तं दर्पणं छत्रचामरैः ९१
नृत्तगीतादिवाद्यं च विनोदार्थं तु कारयेत्
प्राकारे तु प्रदक्षिण्यां आलयं तु प्रवेशयेत् ९२
विशेषयजनं कृत्वा शेषं पूर्ववदाचरेत्
अथवा भोगशक्तिश्चेद् डोलान्ते तु विशेषतः ९३
आलयं तु प्रविश्याथ लिंगपूजां समारभेत्
आर्द्रायां रुद्रनक्षत्रे विशेषं स्नपनान्वितम् ९४
महाहविर्निवेद्याथ पायसादिपुरस्सरम्
अपूपादिसमायुक्तं शिवाभ्यां च निवेदयेत् ९५
सर्वोपचारैः संपूज्य दर्पणाद्यैर्विशेषतः
श्रावयेच्चतुरो वेदान् ससूत्रान्सपुराणकान् ९६
नृत्तगेयादिवाद्यैस्तु पूजयेत्पूर्ववद्बुधः
मध्यान्तात्परमं कृत्वा नृत्तेशस्य महोत्सवम् ९७
सर्वोपचारद्रव्यैश्च नृत्तमूर्तिं सुपूजयेत्
ग्रामप्रदक्षिणं कुर्यात् सायाह्नसमये ततः ९८
मंगळैः स्वस्तिवाचैश्च वाद्यघोषैः पृथग्विधैः
नानाध्वजसमोपेतैः नानादीपसमन्वितैः ९९
ग्रामप्रदक्षिणं कुर्याद् आलयं तु प्रविश्य च
मण्टपादीनि संवीक्ष्य यथाचित्रविचित्रितैः १००

पाद्याद्यैरुपचारैश्च पूजयित्वा समाप्य च
++ सं तु विना कार्यं यथावित्तानुसारतः १०१
आचार्यं पूजयेत्तत्र यागोपकरणान्वितम्
स्थण्डिलं च वितानाद्यैः दक्षिणां संप्रदाय च १०२
भक्तेशस्यापि नैवेद्यं भक्तानां दापयेत्ततः
अंजलीपायसं दद्याद्दासीनां च विशेषतः १०३
उत्सवोद्दिश्य शक्तिश्चेद्देव्यालयाग्नकेऽपि च
तत्पार्श्वे मण्टपे वाथ एतत्सर्वं समाचरेत् १०४
एवमार्द्राव्रतं कृत्वा पूरकर्मविधिं शृणु
इत्यंशुमति तन्त्रे आर्द्राव्रतपटलः एकोनसप्ततितमः

## देवीपूजाविधि

अथ प्रातः समुत्थाय भस्मना तिलकं कुरु
देवीं संचिन्तयेद्भक्त्या स्तोत्रं जप्त्वा यथेप्सितम् १
पश्चाद्ग्रामाद्बहिर्गत्वा विण्मूत्रे च विसर्जयेत्
शौचमाचमनं स्नानं तर्पणं विधिपूर्वकम् २
कृत्वा प्रविश्य हर्म्ये तु प्रदक्षिणमथाचरेत्
पादप्रक्षाळनं कृत्वा आचम्य विधिपूर्वकम् ३
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितम्
भस्मन्यासं ततः कृत्वा ब्रह्मांगं विन्यसेत्ततः ४
मातृकां विन्यसेत्पश्चात्सामान्यार्घ्यं च कल्पयेत्
पूजोपकरणद्रव्याण्यस्त्रेण प्रोक्ष्य देशिकः ५
शालिभिः स्थण्डिलं कुर्यात्पंचगव्यं तु साधयेत्
अन्यानि स्नानद्रव्याणि विन्यसेद्विधिपूर्वकम् ६
विघ्नेशं पूजयेद्धीमान् भक्ष्यादींश्च निवेदयेत्
द्वारमस्त्राम्बुना प्रोक्ष्य विघ्नेशं दक्षिणे यजेत् ७

दुर्गामुत्तरदेशे तु मध्यमे भुवनेश्वरम्
दक्षिणे ज्ञानशक्तिं च क्रियाशक्तिं च सौम्यके ८
वृषभं पूजयेदग्रे घण्टामस्त्रेण ताडयेत्
गर्भगेहं प्रविश्याथ पाद्यमाचमनं ददेत् ९
धूपदीपादिकं दत्वा पर्युषितं विसर्जयेत्
देवीमस्त्राम्भसा क्षाल्य स्थलं पीठं विशेषतः १०
आसनं कल्पयेद्विद्वान् तन्मध्ये परमेश्वरम्
द्विभुजां चोत्पलकरां वामहस्तप्रसारितम् ११
श्यामां घनस्तनतटां ध्यायेद्देवीं मनोन्मनीम्
पंचगव्यादिभिः स्नाप्य तद्ब्रह्मांगैश्च देशिकः १२
गन्धोदकेन संस्नाप्य उमामन्त्रेण देशिकः
मन्त्रपुष्पं ततो दद्यान्मन्त्रान्नं च निवेदयेत् १३
वस्त्रैराभरणैर्माल्यैरलंकृत्य विशेषतः
अभ्यर्च्य गन्धपुष्पाद्यैः पश्चादावरणं यजेत् १४
धूपदीपं ददेद्देव्या हविष्यं षड्रसैर्युतम्
पानीयाचमनं दत्वा नित्याग्निं कारयेत्ततः १५
कुण्डे हुताशनं स्थाप्य दीपयेदिन्धनैः सह
गौरीमावाह्य तन्मध्ये दर्भैश्चैव परिस्तरेत् १६
निरीक्षणादिभिः शोध्यं चोदनं च घृतप्लुतम्
पंचाशत्पंचविंशद्भिः जुहुयाद्देविमन्त्रतः १७
तेनैवाभ्यर्च्य देवेशीं आवाह्याग्निं विसर्जयेत्
सर्वालंकारसंयुक्तं बलिं बेरसमन्वितम् १८
पुष्पं निक्षिप्य देव्यग्रे प्रणम्यानुज्ञया सह
द्वारदक्षिणपार्श्वे तु ज्ञानशक्तिं प्रपूजयेत् १९
वामपार्श्वे क्रियाशक्तिं तदग्रे वृषभं यजेत्
श्रीदेवीं मातरं चैव मातंगीं जाह्नवीं तथा २०

धरादेवीं च मोहीं च शुचिसावित्रमेव च
गोपुरद्वारपाले तु शंखपद्मनिधिं वृषम् २१
अणिमा महिमा चैव लघिमा गरिमा तथा
ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमेव च २२
नैर्ऋतेऽरुन्धतीं यष्ट्वा ऐशान्ये चामृतेश्वरीम्
सोमशांकरयोर्मध्ये सुन्दरीमर्चयेत्ततः २३
महापीठाग्रदेशे तु देव्याग्रं संप्रपूजयेत्
अरिढनीं जम्भिनीं रौद्रीं शान्तिनिद्रा विकारिणीम् २४
स्तम्भिनीं च षडैतानि ऐन्द्रादिकर्णिकान्तकम्
बलिं दद्याद्विशेषेण स्वस्वनाम्ना च देशिकः २५
गीतवाद्यसमोपेतं जयशब्दसमन्वितम्
धामप्रदक्षिणं कृत्वा देवीं विन्यस्य मण्टपे २६
नीराजनं ततो दत्वा केवलं लोकशान्तये
ततो गौरीं समभ्यर्च्य धूपदीपादिकं ददेत् २७
सर्वोपचारैः संतोष्य प्रणिपत्य क्षमापयेत्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् २८
इत्यंशुमति तन्त्रे क्रियापादे देवीपूजाविधिपटलः
सप्ततितमः

## चतुर्द्वारपूजा

चतुर्द्वारार्चनं वक्ष्ये श्रूयतां रविसत्तम
राजराष्ट्रविवृध्यर्थं भुक्तिमुक्तिफलप्रदम् १
सर्वलोकहितार्थाय सर्वैश्वर्यप्रदायकम्
पूर्वे च दक्षिणे चैव पश्चिमे चोत्तरे तथा २
चतुर्द्वारं प्रकर्तव्यं फलमेवं प्रकीर्तितम्
प्राग्द्वारे शान्तिकं चैव पश्चिमे मोक्षसिद्धिदम् ३

दक्षिणे इष्टकाम्यं स्याद्धनधान्यं तथोत्तरे
पूर्ववत्कारयेद्द्वारं सर्वकर्मार्थसाधनम् ४
पूर्वस्याभिमुखं लिंगं पश्चिमाभिमुखं तथा
ईशानं मूर्ध्नि विन्यस्य तद्वक्त्रमीशगोचरे ५
पूर्वे तत्पुरुषं चैव अघोरं दक्षिणे यजेत्
वामदेवं तथा सौम्ये सद्यो जातं च पश्चिमे ६
हृदयं पावके पूज्य शिरस्वीशानगोचरे
शिखायां निर्ऋतिदेशे तु कवचं वायुदेशके ७
सोमईशानयोर्मध्ये नेत्रं चैव तु कल्पयेत्
अस्त्रं चैव चतुर्दिक्षु तत्तत्स्थाने च कल्पयेत् ८
पूर्वद्वारे च कर्तव्यं दक्षिणद्वारमेव च
ईशानं मूर्ध्नि विन्यस्य तद्वक्त्रमग्निगोचरे ९
दक्षिणे तत्पुरुषं चैव अघोरं पश्चिमे न्यसेत्
पूर्वे वाममुखं चैव सद्यो जातं तथोत्तरे १०
हृदयं नैर्ऋते देशे शिरसामग्निगोचरे
शिखायां वायुदेशे तु ऐशान्ये कवचं न्यसेत् ११
शक्रपावकयोर्मध्ये नेत्रं चैव समर्चयेत्
अस्त्रं चैव चतुर्दिक्षु तत्तत्स्थाने च कल्पयेत् १२
पंचवक्त्रं समभ्यर्च्य मूर्तिमीशानसंयजेत्
ऐशान्यां नैर्ऋते देशे अर्चनं परिकल्पयेत् १३
पश्चिमे तत्पुरुषं चैव अघोरमुत्तरे न्यसेत्
वामदक्षिणमेवोक्तं पूर्वे सद्यमुखं न्यसेत् १४
हृदयं वायुदेशे तु शिरसा नैर्ऋते न्यसेत्
शिखायामीशदेशे तु कवचं चाग्निदेशके १५
याम्यनैर्ऋतयोर्मध्ये नेत्रं विन्यस्य बुद्धिमान्
पश्चिमादिचतुर्दिक्षु अस्त्रं चैव तु विन्यसेत् १६

पश्चिमद्वारमेवोक्तं उत्तरद्वारमेव च
ईशानं मूर्ध्नि विन्यस्य तद्वक्त्रं वायुगोचरे १७
सौम्ये तत्पुरुषं चैवमिन्द्राग्नि विन्यसेत्
वामदेवं तु पश्चिम्यां सद्योजातं च दक्षिणे १८
हृदया ईशदिग्भागे शिरसा वर्यगोचरे
वरुणवायव्ययोर्मध्ये नेत्रं चैव तु विन्यसेत् १९
सौम्यादीनि चतुर्दिक्षु अस्त्रं चैव समर्चयेत्
ब्रह्मांगक्रममेवोक्तं द्वारार्चनक्रमं ततः २०
दिक्षु द्वाराणि चत्वारि तेषां विधिरिहोच्यते
यद्द्वारं यजनद्वारं तद्द्वाराभिमुखः शिवः २१
कुर्यात्तद्द्वारयजनं शिवस्याभिमुखस्ततः
शिवस्याभिमुखद्वारं द्वारस्याभिमुखं ततः २२
प्राङ्मुखः पश्चिमद्वारं पूर्वं प्रत्यङ्मुखं भवेत्
उदङ्मुखं दक्षिणद्वारं उदग्द्वारमवाङ्मुखम् २३
द्वारं यजनकाले तु भोगशक्तिक्रमं ततः
द्वारान्तदेवदेवस्य यायाद्रांशपूर्वपश्चिमाम् २४
तत्तद्वीरं प्रकुर्वीत देशिको यागवेश्मनः
तस्माद् द्वारं तु पूर्वं वा पश्चिमं वा प्रवेशयेत् २५
पूर्वद्वारा प्रविष्टं चेन्नैर्ऋत्यां वास्तुदेवतः
प्रविष्टं पश्चिमद्वारं ऐशान्यां वास्तु दैवतम् २६
मण्टपस्यार्चनं चैव चतुर्द्वारे विचक्षणः
मण्टपाराधनं चैव पूर्वमेवं समर्चयेत् २७
वेदिकां कुम्भमेवं च द्वारे चैव विन्यसेत्
पूर्वास्यं पश्चिमास्यं वा वेदिका कुम्भमेव च २८
पूर्वे च पश्चिमे चैव मातृणां दक्षदेशके
दक्षिणे चोत्तरे चैव मातृणां पश्चिमे न्यसेत् २९

पूर्वे तु पश्चिमे चैव दराडेशं चोत्तरे न्यसेत्
दक्षिरो चोत्तरे चैव चराडेशं पूर्वविन्यसेत्  ३०
पूर्वे च पश्चिमे चैव सौरं चेन्द्रस्य देशके
इन्द्रपावकयोर्मध्ये सौरं संपूजयेत्ततः  ३१
वामे वा दक्षिरो वापि वीरशक्तिं च विन्यसेत्
महेशं नैर्ऋते देशे पूर्वस्याननमेव च  ३२
नित्यमूर्त्यादिबेराणां उत्तरे दक्षिराननम्
पश्चिमे द्वारकर्तव्यं महेशं च विशेषतः  ३३
द्वारस्योत्तरे देशे महेशं पश्चिमाननम्
मराटपे दक्षदेशे तु नित्यमूर्त्यादि विन्यसेत्  ३४
पूर्वे च पश्चिमे देशे विघ्नेशं निर्ऋतिदेशके
स्कन्दं वै वायुदेशे तु क्षेत्रेशमीशदेशके  ३५
दक्षिराद्वारमेवं च उत्तरद्वारमेव च
दक्षद्वारस्य दक्षे तु महेशं दक्षिराननम्  ३६
मराटपस्योत्तरे देशे नित्यमूर्त्यादिबेरकम्
पूर्वस्याननमेवं च एवमेवं क्रमेरा तु  ३७
उत्तरद्वारदक्षे तु महेशं चैव विन्यसेत्
नित्यमूर्त्यादिबेरं च पश्चिमे दिशि विन्यसेत्  ३८
पूर्वादीनि चतुर्दिक्षु तत्तत्स्थाने समर्चयेत्
चतुर्द्वारार्चनं प्रोक्तं परिवारविधिं शृणु  ३९
एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात्
इत्यंशुमति तन्त्रे क्रियापादे चतुर्द्वारार्चनविधिपटलः
एकसप्ततितमः

## समकालविधि

समकालविधिं वक्ष्ये श्रूयतां रविसत्तम

श्रीकरं विजयं पुरायं सर्वाभीष्टफलप्रदम् १
सर्वशत्रुक्षयकरं सर्वपापविनाशनम्
सुस्थितं दुःस्थितं चैव द्विविधं यजनं स्मृतम् २
जीर्णादिदोषरहितं सुस्थितं चेति कीर्तितम्
प्रासादे स्फुटिते भिन्ने कूटशाला विहीनके ३
तत्कल्कशं कोशमानेन चिरकालेन पूजितम्
तल्लिंगं च विशेषेण पूजितं चेति कीर्तितम् ४
होमादिगळवर्गान्तः सर्वावयवसंयुतम्
शिरश्शिखाविहीनं चेदालयं प्राणवर्जितम् ५
तस्मात्सर्वप्रयत्नेन स्थूपिकीलं प्रतिष्ठितम्
स्थूपिसंस्थापनं चैव विमानस्थापनं ततः ६
शिवसंप्रोक्षणं चैव एकेकाले समाचरेत्
एकाचार्येण कर्तव्यं मेन्नत विधीयते ७
उत्तरायणकाले च अथवा दक्षिणायने
सुवारे च सुनक्षत्रे सुलग्ने शुभमासके ८
देवाग्रे स्विष्टदेशे वा मराटपं कारयेद्बुधः
वितानाद्यैरलंकृत्य चतुस्तोरणभूषितः ९
दर्भमालाभिरावेष्ट्य स्थलं समतलं कुरु
प्रागग्रं तु कलासूत्रं उदगग्रं तथैव च १०
मध्ये सूत्रपदं वेदी षट्पदं च चतुर्दिशि
आग्नेयादिषु कोणेषु वेदीयुगपदेषु च ११
मध्ये वेदीसमायाम तस्योन्नतमुदीरितम्
त्रिपादं दिक्षु वेदी स्यात् अर्धांशं च विदिक्षु च १२
तत्पूर्वे त्रिपदं ग्राह्य कुराडं कुर्यात्सलक्षणम्
एवं मराटपमापाद्य क्रियामेनां समाचरेत् १३
अंकुरं चाग्निकार्यं च वास्तुदेवार्चनं ततः

मराटपस्यार्चनं चैव एक एवं समाचरेत् १४
आचार्यं शिष्यसंयुक्तं पूर्ववत्स्नानमाचरेत्
भूतशुध्यादिकं कृत्वा सामार्धं च प्रकल्पयेत् १५
निर्दिष्टदिवसात्पूर्वे अंकुरार्पणमाचरेत्
विघ्नेश्वरं समभ्यर्च्य पुरायाहं वाचयेत्ततः १६
पंचगव्यं तु संकल्प्य प्रासादशुद्धिमाचरेत्
शुद्धैरुद्धेति मन्त्रेण दर्भैः सं देशिकम् १७
प्रासादाभ्यन्तरं बाह्यं प्रोक्षयेच्छुद्धतोयकैः
गव्येन प्रोक्षयेद्धीमान् होमादि इष्टकास्थलः १८
दीपैरामोदधूपैश्च धामस्याभ्यन्तरे क्षिपेत्
चतुर्दिक्षु चतुर्वक्त्रैः वेष्टयेच्छिखरेऽपि च १९
विघ्नेश्वरं समभ्यर्च्य पुरायाहं वाचयेत्ततः
विमानदेवतानां च अक्षिमोक्षरणमाचरेत् २०
पूर्वोक्तेनैव मार्गेण मध्वाज्यादीनि दर्शयेत्
पर्यग्निकरणं कुर्यात्प्रासादादीनि पूर्वशः २१
देशिकः शिष्यसंयुक्तो विधिना स्नानमाचरेत्
सायाह्नसमये चैव मराटपं तु समर्चयेत् २२
शालिभिस्थरिडलं कुर्यात्तद्वेदी परितो न्यसेत्
मध्यमे सितशालीं च रक्तशालीं च पूर्वके २३
दक्षिणे तु महाशालीं कृष्णाशालीं तु पश्चिमे
हेमशालीं च सौम्ये च आग्नेय्यामायुरं न्यसेत् २४
नीवारं चैव नैर्ऋत्यां ईषच्छालीं च वायवे
ऐशान्यां षष्टिकं चैव कथव सितशालिकम् २५
तन्मध्ये नळिनं लिख्य दर्भैः पुष्पैः परिस्तरेत्
इष्टकास्थूपिकीलं च पंचगव्याभिषेचयेत् २६
पृथिव्यादीनि बीजानि पूर्वाद्यदिष्टका न्यसेत्

शकारादिहकारान्तं स्थूपिकीलं चतुर्दिशेत् २७
गैरिकेनैव संलिख्य मूर्तिबीजं लिखेद्बुधः
रक्षाबन्धं ततः कृत्वा आग्नेयामिष्टका न्यसेत् २८
नैर्ऋत्यां स्थूपिकीलं च शयनोपरि विन्यसेत्
वितानदेवतानां च रक्षाबन्धं च कारयेत् २९
पश्चान्मण्टपमाविश्य पूर्व इन्द्रघटं न्यसेत्
दक्षिणे दक्षिणामूर्तिं पश्चिमे विष्णुकुम्भकम् ३०
उत्तरे तु विधातारं परिवारसमाहितम्
गन्धैः पुष्पैः समभ्यर्च्य मूलगेहं प्रवेशयेत् ३१
अष्टमृद्बिल्वपत्रैश्च घर्षयेन्मूलबेरतः
पंचगव्यामृतैः स्नाप्य गन्धतोयाभिषेचयेत् ३२
वस्त्रेणाच्छादयेद्बिम्बं चन्दनेनैव लेपयेत्
तदग्रे तु विशेषेण क्षारहोमं तु कारयेत् ३३
शिवाग्रे स्थण्डिलं कल्प्य तन्मध्ये नळिनं लिखेत्
नवकुंभान्समादाय वर्धनीं चैव विन्यसेत्
तन्मूर्तिं च समावाह्य कुंभमध्ये तु योजयेत् ३३-२
पीठाद्देवीं समावाह्य वर्धनीं मध्यमे न्यसेत्
अनन्तादि शिखण्ड्यन्तं पूर्वादीनि क्रमान्न्यसेत् ३३-३
कौतुकं बन्धयेद्धीमान् मुक्तपुष्पैस्समर्चयेत् ३४
वस्त्रेणैवावकुण्ठं च लिंगपीठावसानकम्
पश्चात्कुम्भं समुद्धृत्य मध्यवेद्युपरि न्यसेत् ३५
अभितः कलशानष्टौ परिवारं समर्चयेत्
ऋगाद्यध्ययनं कुर्याच्चतुर्दिक्षु विशेषतः ३६
अग्निकार्योक्तमार्गेण अग्निकार्यं समाचरेत्
समिधा सद्यमन्त्रेण आज्यं मूलेन होमयेत् ३७
अघोरेण चरुं हुत्वा लाजं तत्पुरुषेण तु

मुद्गमीशानमन्त्रेण हृदयेन यवं हुनेत् ३८
शिरसा च तिलं हुत्वा शिखया सर्षपं हुनेत्
कवचं माषमेवं च नाळिकेरं च नेत्रकम् ३९
कदळीफलमेवं च अस्त्रेणैव तु होमयेत्
द्रव्यं प्रति विशेषेण व्याहृत्याहुतिमाचरेत् ४०
शताष्टसंख्यया हुत्वा तदर्धं वा तदर्धकम्
द्रव्यं प्रति विशेषेण स्पर्शाहुतिमथाचरेत् ४१
विमानदेवतामत्ति आज्येनाष्टशताहुतिः
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ४२
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत्
यागमण्टपमाविश्य पूर्णाहुतिमथाचरेत् ४३
कुण्डे अग्निं विसृज्याथ कुम्भमध्ये तु योजयेत्
पश्चान्मूलगृहं गत्वा मुक्तपुष्पं विसृज्य च ४४
संस्नाप्य शुद्धतोयेन गन्धपुष्पादिनार्चयेत्
शिवकुंभं तु संग्राह्य इष्टकां स्थूपिकीलकः ४५
++ तत्तत्कुंभं च शिरसा धारयेत्ततः
धामप्रदक्षिणं कुर्यात्सर्वालंकारसंयुतम् ४६
तत्तत्स्थाने तु विन्यस्य तत्तत्कुंभं च विन्यसेत्
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः ४७
मुहूर्तं निरीक्ष्य दैवज्ञः दक्षिणां दापयेत्ततः
आचार्यं पूजयेत्पश्चात्पंचांगभूषणैस्सह ४८
इष्टकास्थूपिकीलं च ग्राहयेद्देशिकोत्तमः
पश्चाद्विमानमारोप्य स्थापयेत्तु विचक्षणः ४९
इष्टकास्थापनं कुर्यादंगन्यासं च कारयेत्
स्थूपीकीलं च संस्थाप्य प्रोक्षयेत्कलशोदकैः ५०
पश्चान्मण्टपमाविश्य इष्टकास्थूपिकीलकम्

तत्कुंभं धामकुंभं च इन्द्रादीनां च कुम्भकम् ५१
परिचारकमाहूय शिरसा धारयेत्ततः
धामप्रदक्षिणं कुर्यात् सर्वालंकारसंयुतम् ५२
शेषाश्च शिल्पिकर्माणि सुप्रसं कारयेत्ततः
वलग्नं च वटं नाळं पालिका गुणमेव च ५३
सुवर्णेनैव संयुक्तं सुधया चैवमेव वा
पश्चाच्छिल्पिनमुद्वास्य शुद्धैरुद्धेति मन्त्रतः ५४
प्रोक्षयेच्छुद्धतोयेन विमानस्थापनं कुरु
पश्चाद्विमानमारोप्य धामकुम्भाभिषेचयेत् ५५
शिवकुम्भं तु संग्राह्य शिरसा धारयेत्ततः
धामप्रदक्षिणं कृत्वा सर्वालंकारसंस्थितम् ५६
गर्भगेहं प्रविश्याथ शिवकुम्भं च विन्यसेत्
मन्त्रन्यासं ततः कुर्यादर्चयेत्तु विचक्षणः ५७
वेदपारगकुम्भैश्च स्थापयेच्छिवमूर्धनि
संप्रोक्षणार्थकलशैः स्नापयेल्लिंगमूर्धनि ५८
तत्तत्स्थानेषु विन्यस्य परिवारघटं ततः
पुष्पं मूर्धनि विन्यस्य मन्त्रान्नं च निवेदयेत् ५९
प्रायश्चित्तार्थकलशैः स्नापनैरभिषेचयेत्
वस्त्रेणैव तु संवेष्ट्य गन्धपुष्पैः समर्चयेत् ६०
सर्वालंकारसंयुक्तं सर्वाभरणभूषितम्
प्रभूतहविषं दद्यात् धूपदीपादिकं ददेत् ६१
वेदस्तोत्रं च संतोष ++++ परमेश्वरम्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ६२
इत्यंशुमति तन्त्रे समकालविधिपटलः द्वासप्ततितमः

## नित्योत्सवविधि

अथ वक्ष्ये विशेषेण नित्योत्सवविधिक्रमम्
होमान्ते चैव बेराणां वस्त्रपुष्पादिभूषणैः १
भेरिका जयघण्टा च ताडयेत्पारशैवकान्
त्रिपुरहरमारभ्य देवतानां प्रियावहम् २
पीठप्रक्षाळनं कृत्वा मद्दास्यां वा विशेषतः
परिचारकमाहूयसोष्णीषं सोत्तरीयकम् ३
रंगैर्वा शिबिकायां वा खेटके शिरसोऽपि वा
अर्घ्यगन्धं हविः पात्रं कूर्चं घण्टं तु चामरम् ४
छत्रं च दीपमुद्धारं द्वारादीनां बलिं ददेत्
नन्दिकालो वृषश्चैव भानुमुण्डनि मातरः ५
वीरभद्रो गणेशं च विघ्नेशं चार्चितं शिवम्
दुर्गां चण्डेश्वरं चैव वृषपृष्ठे ध्वजं क्रमात् ६
गोपुरद्वारपार्श्वे तु दण्डी भृंगी वृषेश्वरम्
इन्द्रानलौ यमश्चैव निर्ऋतिवरुणवायवः ७
कुबेरः क्षेत्रपालश्च ईशैर्विष्णुर्विरिंचकः
अमो प्रमोदसुमुखो दुर्मुखो विघ्ननायकः ८
बलिं दद्याद्विशेषेण अष्टादीनां तु नृत्तकम्
गीतवाद्यसमायुक्तं पादप्रक्षाळनं कुरु ९
तूष्णीं नीराजनं कृत्वा मूलबेरं समर्चयेत्
इत्यंशुमति तन्त्रे नित्योत्सवविधिपटलः त्रिसप्ततितमः

## क्रियासंख्याविधि

क्रियासंख्याक्रमं वक्ष्ये श्रूयतां रविसत्तम
विभवे निश्रयं पूर्वं द्वितीयं वास्तुनिर्णयम् १
स्थाननिर्णयं तृतीयं च चतुर्थं कालनिर्णयम्

निमित्तस्य परीक्षा च भूमिदर्शं च षष्ठकम् २
भूरूपं सप्तमं चैव अष्टमं भूपरीक्षणम्
जातिनिर्णयं नवमं दशमं मार्जनं तथा ३
एकादशं प्रोक्षणं च लेपनं द्वादशं तथा
त्रयोदशं क्षेत्रबलिः गोपरीक्षा चतुर्दश ४
पंचदशं वृषयागं यागलं षोडशं तथा
कर्षणं सप्तदशकं बीजवापं ततः परम् ५
कपिलार्चनं ततः प्रोक्तं गोनिवासं च विंशतिः
गोपरीक्षा एकविंशत् द्वाविंशतिश्च मार्जनम् ६
प्रोक्षणालेपनं चैव चतुर्विंशत्तथैव च
मण्टपस्यार्चनं चैव पंचविंशत्तथैव च ७
क्षेत्रशान्तिहुतत्रिंशत् क्षेत्रपालबलिं तथा
द्वात्रिंशदर्घ्यदानं च भूपरिग्रहणं तथा ८
तरुणालयं ततः प्रोक्तं चतुस्त्रिंशस्तथैव च
देशिकाराधनं चैव शिल्पिनं च तथैव च ९
शंकुमण्डलकं चैव चत्वारिंशतिसंख्यया
शंकुविन्यासमार्गं च दिक्परिच्छेदनं तथा १०
प्राचीननिर्णयं चैव त्रिचत्वारिंशत्संख्यया
चतुरश्रकल्पनं चैव प्रासादस्य च निर्णयम् ११
खननोद्धारणं चैव षट्चत्वारिंशत्संख्यया
वास्तुविन्यासमार्गं च पदविन्यासमेव च १२
वास्तुपूजाविधिं चैव पंचाशत्संख्यया तथा
पंचगव्यप्रतिष्ठा च शल्योद्धारणकं तथा १३
सिकतैः पूरणं चैव अस्ति पादक्रमं तथा
आलेपकल्पनं चैव पंचपंचाशसंख्यया १४
सूत्रविन्यासमार्गं च इष्टकासंग्रहं तथा

अघोरास्त्रासनं चैव कलाशस्य च सूचनम् १५
अग्निकार्यविधिं चैव षष्टिसंख्यस्तथैव च
यजमानार्चनं चैव इष्टकस्याधिवासनम् १६
ताम्रकुम्भविधिं चैव मन्त्रन्यासक्रमं तथा
निधिकुम्भप्रतिष्ठा च रत्नशान्तिक्रमं तथा १७
षष्षष्टिसंख्यया चैव पदविन्यासमेव च
भूताबलिविधानं च राक्षसस्य बलिं तथा १८
पिशाचस्य बलिं चैव तथा सप्ततिसंख्यया
प्रासादस्य बलिं चैव शान्तिं बलिविधानकम् १९
लिपिन्यासविधानं च मंत्रं जपविधिक्रमम्
प्रायश्चित्तार्थहोमं च पंचसप्ततिसंख्यया २०
आचार्ययजनं चैव शिल्पिनां च तथैव च
आद्येष्टकाग्रहं चैव शुभाशुभपरीक्षणम् २१
प्रायश्चित्तार्थकर्मं च अशीतिः संख्यया तथा
प्रासादकल्पनं चैव गर्भस्य भाजनं तथा २२
मण्टपाराधनं चैव गर्भाधिवासनं तथा
आचार्ययजनं चैव शिल्पिनां च तथैव च २३
गर्भसंस्थापनं चैव सप्ताशीतिश्च संख्यया
शिलापरीक्षा कर्तव्या शिलासंग्रहणं तथा २४
आयादिलक्षणं चैव षट्सूत्रस्य विधिक्रमम्
एवं षण्णवतिश्चैव संख्यायश्च तथैव च २५
क्रियासंख्या क्रमं प्रोक्तं विभवं निश्चयं शृणु
इत्यंशुमति तन्त्रे क्रियासंख्याविधि पटलः सप्तसप्ततितमः

## कर्षणविधि

कर्षणादिविधिं वक्ष्ये श्रूयतां रविसत्तम

अयने चोत्तरे श्रेष्ठं अथवा दक्षिणायने १
उत्तरायणकाले तु माघमासे विसर्जयेत्
दक्षिणायनकाले तु त्रिमासेषु विवर्जयेत् २
मार्गशीर्षकमाषाढं प्रोष्ठमासं विवर्जयेत्
उत्तरायणकाले तु लिंगस्थापनमुत्तमम् ३
दक्षिणायनमासे तु श्रावणे कर्षणादिकम्
सुमुहूर्ते सुलग्ने च आचार्यः शिल्पिभिस्सह ४
भूपरीक्षादि कर्तव्यं खात्वा हस्तप्रमाणतः
तन्मात्रं तु खनेद्भूमिं तन्मृदापूर्य चावटम् ५
उत्तमं त्वधिका भूमिः मध्यमं तत्समं भवेत्
अधमं न्यूनमेवं च तत्स्थाने तु विवर्जयेत् ६
मार्जनं प्रोक्षणं चैव लेपनं च क्रमेण तु
तत्स्थाने तु समाबाह्य भूतादीनां बलिं ददेत् ७
रक्तौ वा श्वेतकृष्णौ वा नांगहीनौ वृषौ तथा
हेमशृंगसमायुक्तं खुरौ स्वर्णसमन्वितम् ८
मुखे तु होमपट्टं च कर्णैव समन्वितम्
वस्त्रेण तु समावेष्ट्य ऋषभौ तु समन्ततः ९
एवं वृषभसंयुक्तं लांगलस्य विधिक्रमात्
प्रासादानां क्रमेणैव लांगलस्य विधीयते १०
प्रासादयोग्यं खदिरं पनसं विप्रयोग्यकम्
नृपस्य बकुलं चैव तिन्दुकं वैश्यजन्मनः ११
कृष्णतिन्दुकं शूद्राणां सर्वजाती शमी तथा
अत्र वृक्षं समाख्यातं ग्रामस्य नगरस्य च १२
एवं वृक्षं समाख्यातं शङ्कुनामथ उच्यते
देवानां ब्राह्मणादीनां सर्वेषां जातिभेदतः १३
ग्रामस्य नगरस्यैव शंकुवृक्ष उदीरितः

दन्तश्च गन्दनं चैव बिल्वक्षदेवतानि च १४
प्रासादशंकुवृक्षाश्च ब्राह्मणादिक्रमेण तु
पलाशं ब्राह्मणस्योक्तं अश्वत्थं स्यान्नृपस्य तु १५
खदिरं वैश्यजातैस्तु शूद्रस्य तु मधूककम्
शमी च वटवृक्षं च सर्वेषां च प्रकीर्तिताः १६
ग्रामस्य नगरस्यैव श्वेतकृष्णौ च तिन्दुकौ
शंकुद्यक्षसमाख्याता एवमेव क्रमेण तु १७
हलस्य लांगलो मुष्टिनीलकं शृंगमेव च
चतुर्वितस्ति दैर्घ्यं स्यात्तथा मूलस्य नाहकम् १८
अग्रे तु चतुरंगुल्यां लांगलस्य विधीयते
हलदैर्घ्यसमामुष्टिस्त्रिद्व्यंगुलघनान्वितम् १९
घनद्विगुणविस्तारा पताका ध्वजयष्टिवत्
द्विवितस्त्यायतस्याग्रे वितस्ति परिणाहकम् २०
मध्ये त्रिसप्तमात्रेण राहोवृत्तनिभो युगः
चतुर्वितस्ति दैर्घ्यं च एकांगुलविशालतः २१
शम्यं शम्यान्तरं शम्यक् वितस्तिश्च विधीयते
मध्ये कीलोब्धिमात्रं स्यान्मध्यवामे तु मध्यमम् २२
वासुगर्भं च तत्तुल्यं मयोमयमिहोच्यते
भिरक्तरत्नदं चैव प्रासादानां विधीयते २३
राजतं द्विजभूपानां लोहकं वैश्यशूद्रयोः
यद्वा हलादिकं धातुतदर्धे वसुभाजिते २४
एकभागं समारभ्य चतुर्भागावसानकम्
न्यूनं वाप्यधिकं वापि कारयेत्कर्तुनिश्चया २५
रज्जुके चर्मजावापि मौञ्जी तालस्य वत्कला
नाळिकेरकृता वापि रज्जुना बन्धयेत्ततः २६
सु स्नातसकळीकृत्य सोष्णीषस्सोत्तरीयकम्

पंचगव्यं तु संप्रोक्ष्य वृषमन्त्रेण पूजयेत् २७
स्वयं चादौ तु संस्पृश्य कर्षयेद्देशिकोत्तमः
कर्षकं तु समानीय वस्त्रं दत्वा तु शूद्रकम् २८
चन्दनेन समालिप्य दामं कृत्वा शिरोपरि
द्वात्रिंशद्वारमित्युक्तं देवाग्रजमहीभृतः २९
दशपंचाधिकं ख्यातं वैश्यशूद्रस्तु सप्तकम्
सर्वेषां सप्तवारं वा पंचवारमथापि वा ३०
प्राङ्मुखोदङ्मुखो वापि कर्षकर्म समारभेत्
तिलसर्षपमुद्गांश्च माषं व्रीहिमनुक्रमात् ३१
पयसा क्षाळयित्वा तु वापयेन्नेत्रमन्त्रतः
जलेन सेचयेद्धीमान् त्रिरात्रं पंचरात्रकम् ३२
अथवा सप्तरात्रं वा गोनिवासमतः परम्
त्रिरात्रं पंचरात्रं वा सप्तरात्रं तु वासयेत् ३३
गवां सवृषवत्सानां पुरीषप्रसृचोक्षणैः
खुरसंघुट्टनाघ्राणपरिक्रमणगोष्पदैः ३४
रोमन्थोद्गारिभिश्चैव फेनैर्वत्साननोद्गतैः
पवित्रीकृतभूमध्ये देवाद्यं परिकल्पयेत् ३५
इत्यंशुमति तन्त्रे कर्षणविधिपटलः अष्टसप्ततितमः

भूपरीक्षाविधि

अथ प्रभाते स्वीकारं कुर्यात्स्नातो विशेषतः
वसानो नूतनं वस्त्रं उत्तरीयसमन्वितम् १
सुप्रलिप्तमही मध्ये सर्वधान्योपरिस्थितः
सितचन्दनलिप्तांगलूताश्वत्थदळाननम् २
सर्वरत्नोषधीगर्भनिम्नगार्हप्रपूरितम्
सितवस्त्रसमायुक्तं सितसूत्रेण वेष्टितम् ३

पूजयित्वा विशेषेण गन्धपुष्पाक्षतैर्गुरुः
ततः कुंभी समुत्क्षिप्य दिशि मूर्धनि धापयेत् ४
वेदातोद्य कुलस्त्रीणां प्रशस्तध्वनिभिस्ततः
ततः करकनिर्गच्छदच्छिन्नजलधारया ५
जात्वा प्रजाहितं क्षिप्त्वा परिषिंचेत्प्रदक्षिणम्
नयेत्तु पूर्वसीमान्तं किंचिदत्र विलम्ब्य च ६
तस्मादग्नेः पलाशस्य प्राणेशायनयोस्तथा
शीघ्रं नीत्वा ततः प्राचीं नयेद्भूमिं परिग्रहेत् ७
देशाध्यक्षो दशे क्षिप्रं यजमानकरे ततः
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः ८
भूपरीक्षाविधिः प्रोक्तो जातिनिर्णयविधिं शृणु
इत्यंशुमति तन्त्रे भूपरीक्षाविधिपटलः एकोनाशीतितमः

## देवीस्थापनम्

देव्याश्च स्थापनं वक्ष्ये श्रूयतां रविसत्तम
आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम् १
सर्वपापहरं चैव पुत्रपौत्रविवर्धनम्
स्वतन्त्रं केवलं चेति द्विविधं परिकीर्तितम् २
स्वतन्त्रं वीरमित्युक्तं परिवारादिभिर्युतम्
परिवारादिहीनं यत्केवलं चेति कथ्यते ३
द्वितीयावरणं चैव तृतीयावरणं तथा
स्वतन्त्रं स्थानमेवोक्तं माश्चालयविधिं शृणु ४
प्रथमावरणे चैव दिग्विदिक्ष्वन्तराळके
वामे वा दक्षिणे वापि देव्यालयं प्रकल्पयेत् ५
आयादिशुभसंयुक्तं बेरमानं प्रकल्पयेत्
द्विहस्ता च द्विनेत्रा च किरीटमकुटान्विता ६

नीलोत्पलं दक्षहस्ते वामहस्ते प्रसादिता
गौरीरूपमिदं प्रोक्तं श्रीमानाविशतः क्रमात् ७
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
शुभवारादिभिर्युक्ते प्रतिष्ठां सम्यगाचरेत् ८
संकल्प्य दिवसात्पूर्वे नवाहे वाथ सप्तमे
पंचाहे च त्र्यहे वापि कारयेदंकुरार्पणम् ९
ततस्तक्षकमाहूय देशिकानुज्ञय सह
भ्रूरेखा पक्ष्मरेखा च शिल्पं कुर्यात्सलक्षणम् १०
हेमांगुळीयवस्त्रादीन् दत्वा शिल्पिं विसर्जयेत्
स्थण्डिलं कारयित्वा तु पद्ममष्टदळं लिखेत् ११
तन्मध्ये विन्यसेद्देवीं वस्त्रेणैव तु विन्यसेत्
पुण्याहं वाचयित्वा तु नेत्रमोक्षं समाचरेत् १२
बेरशुद्धिं ततः कृत्वा शुद्धतोयाभिषेचयेत्
पंचमृत्पंचगव्यैश्च गन्धोदैरभिषेचयेत् १३
वस्त्रैराभरणैर्माल्यैः अलंकृत्य विशेषतः
ग्रामप्रदक्षिणं कृत्वा सर्वालंकारसंयुतम् १४
जलाधिवासनं कृत्वा पूर्वोक्तविधिमाचरेत्
पूर्वे वा चोत्तरे वापि मण्टपं कारयेद्बुधः १५
मण्टपं नवधा भज्य मध्ये वेदीं प्रकल्पयेत्
कुण्डानि परितः कल्प्य पद्मकुण्डं चतुर्दिशि १६
पावकादिषु कोणेषु योन्याकाराणि कल्पयेत्
इन्द्रईशानयोर्मध्ये प्रधानं वृत्तकं कुरु १७
मण्टपं भूषयेत्पश्चात् पर्यग्निकरणं कुरु
लेपयेद्गोमयेनैव पुनः पुण्याहमाचरेत् १८
स्थण्डिलं वेदिकामध्ये चतुर्द्रोणैश्च शालिभिः
तदर्धैस्तुण्डलैश्चैव तदर्धैश्च तिलैरपि १९

तदर्धैर्लाजमित्युक्तं दर्भैः पुष्पैः परिस्तरेत्
तन्मध्ये नळिनं कल्प्य साष्टपत्रं सकल्पयेत् २०
मण्टपस्यार्चनं कृत्वा पूर्वोक्तविधिमाचरेत्
वेदिकोर्ध्वे तु संस्थाप्य कलशस्थापनोक्तवत् २१
जलादुत्तीर्य बिम्बं च शुद्धिं कुर्याद्विचक्षणः
लेपयेत् हिमतोयेन गन्धपुष्पैः समर्चयेत् २२
रक्षाबन्धं ततः कृत्वा नववस्त्रेण वेष्टयेत्
वेदिकोत्तरपार्श्वे तु चर्मजाद्यैरनुक्रमात् २३
प्राक्शिरश्चोर्ध्ववक्त्रं स्याच्छयनं कल्पयेत्ततः
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत् २४
समिदाज्य चरुं लाजान् सर्षपांश्च यवांस्तिलान्
अश्वत्थोदुम्बरप्लक्षवटं पूर्वादिषु क्रमात् २५
अपामार्गं चार्कबिल्वं खादिरं पावकादिषु
प्रधानकुण्डमेवं तु पलाशसमिधं हुनेत् २६
न तत्परिधयः सर्वे अलाभे तु पलाशकैः
समिदाहुतिं मूलेन आज्यमस्त्रेण हूयते २७
चरुं वै घोरमन्त्रेण लाजं वामेन हूयते
सर्षपं सद्यमन्त्रेण हृदयेन यवाहुतिः
शिरसा च तिलं हुत्वा स्पर्शयेद्वेरवर्धनीम् २८
नाडीसंधानमार्गेण होमं कृत्वा विचक्षणः
रात्रौ जागरणं कृत्वा प्रभाते स्नानमाचरेत् २९
पूर्णाहुतिं ततः कृत्वा मूलमन्त्रमनुस्मरन्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः ३०
शयनाद्बिम्बमुद्धृत्य तत्स्थाने दक्षिणे न्यसेत्
मुहूर्तं निरीक्ष्य दैवज्ञं गन्धपुष्पाक्षतार्चयेत् ३१
दक्षिणां दापयेद्धीमान् रत्नन्यासं च विन्यसेत्

देव्याश्च स्थापयेद्धीमान् तन्मूलेनैव देशिकः ३२
कुंभाद्बीजं समादाय बेरस्य हृदि विन्यसेत्
तज्जलेनाभिषेकं तु मकुटे हृदयेन तु ३३
परिवारघटानष्टौ तत्तोयेनाभिषेचयेत्
मन्त्रपुष्पं ततो दत्वा पायसान्नं निवेदयेत् ३४
वस्त्रगन्धं च माल्यं च नैवेद्यं धूपदीपकम्
अष्टबन्धं ततः कृत्वा पक्वं वा पक्वमेव वा ३५
तद्दिने वाथ कर्तव्यं अपरे त्रिदिनेऽपि वा
चन्दनागरुकर्पूर उशीरं कुंकुमं तथा ३६
हिमतोयेन संयुक्तं लेपयेत्तु विचक्षणः
सुगन्धकुसुमैर्युक्तं नववस्त्रेण वेष्टयेत् ३७
संपूज्य गन्धपुष्पाद्यैः मूलेनैव समर्चयेत्
चतुर्थदिवसे चैव संप्रोक्षणमथाचरेत् ३८
स्नपनोक्तक्रमेणैव कलशस्थापनं कुरु
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमार्गतः ३९
द्वारपूजां ततः कृत्वा गर्भगेहं प्रविश्य च
आच्छाद्यवस्त्रमुद्वास्य शुद्धोदैरभिषेचयेत् ४०
पंचगव्यामृतैः स्नाप्य नाळिकेरोदकैर्जलैः
स्नपनोप्य महादेवीं सुगन्धेनैव लेपयेत् ४१
कुम्भमृत्थापयेत्पश्चात्कृत्वा धामप्रदक्षिणम्
सर्वातोद्यसमायुक्तं स्वस्ति वाचनसंयुतम् ४२
देव्यग्रे स्थण्डिलं कल्प्य तन्मध्ये नळिनं लिखेत्
परिवारघटानष्टौ तन्मध्ये ब्रह्मवर्धनीम् ४३
देवीं संपूज्य गन्धाद्यैः कलान्यासं समाचरेत्
जीवन्यासं ततः कृत्वा हृदये सोपदेशके ४४
वर्धन्या बीजमादाय देवी हृन्मध्यमे न्यसेत्

परिवारघटानष्टौ तत्तत्स्थाने न्यसेद्बुधः ४५
तज्जलेनैव संस्नाप्य मन्त्रान्नं च निवेदयेत्
वस्त्रैराभरणैर्माल्यैः अलंकृत्य विशेषतः ४६
नैवेद्यं दापयेद्धीमान् षड्रसेन समन्वितम्
पानीयाचमनं दत्वा नित्याग्निं संप्रकल्पयेत् ४७
नित्याग्नियजनं कृत्वा नित्योत्सवमथाचरेत्
एवं क्रमेण विधिवत् नित्यपूजां समाचरेत् ४८
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
देव्याश्च स्थापनं प्रोक्तं लेपयेत्तु विचक्षणः ४९
इत्यंशुमति तन्त्रे देवीस्थापनपटलः अशीतितमः

## वारपूजाविधि

वारपूजाविधिं वक्ष्ये श्रूयतां रविसत्तम
अपमृत्युविनाशार्थं महामारीविनाशनम् १
वर्षार्थं च ग्रहार्थं च ग्रहपीडा विनाशनम्
ग्रामशान्तिकरं प्रोक्तं नृपाणां विजयं भवेत् २
कर्तुर्वांछांफलं चैव वारपूजाफलं त्विदम्
सौरवारे समारभ्य मन्दवारान्तमाचरेत् ३
प्रातस्संध्यार्चनान्ते तु कर्तव्यं वारपूजनम्
विघ्नेशयजनं पूर्वं संकल्पं च यथाक्रमम् ४
पुण्याहं वाचयेत्तत्र पंचगव्यं तु साधयेत्
पंचामृतेन संस्नाप्य पंचविंशद्धटोदकैः ५
शान्तिहोमं ततः कृत्वा वारपूजां समारभेत्
गर्भगेहं प्रविश्याथ निर्माल्यं तु विसर्जयेत् ६
तैलमामलकं चैव रजनीं चैव दापयेत्
पंचगव्यामृतैः स्नाप्य फलसारं तथैव च ७

यथाक्रमेण संस्नाप्य पश्चात्कुंभाभिषेचयेत्
मन्त्रपुष्पं ततो दत्वा मन्त्रान्नं तु निवेदयेत् ८
वस्त्रं गन्धं च माल्यं च भूषणं पुष्पमेव च
दापयित्वा विशेषेण सौरादिपुष्पकं शृणु ९
श्वेताब्जं चैव पुंनागं रक्ताब्जं पाटली तथा
चम्पकं जातिपुष्पं च नीलोत्पलं यथाक्रमम् १०
सौरादिशनिवारान्तं अर्चयित्वा विचक्षणः
दूर्वा च बिल्वपत्रं च धातकी तुळसी तथा ११
दान्तं च दाडिमीपत्रं विष्णुक्रान्तिस्तथैव च
एते सौरादिनाभ्यर्च्य रक्तचन्दनमेव च १२
श्वेतचन्दनकर्पूरं कुंकुमं चागरुं तथा
कृष्णागरुं च कस्तूरी हिमतोयैश्च मर्दयेत् १३
सौरमारादिमभ्यर्च्य नैवेद्यं पायसादिभिः
पायसान्नं च शुद्धान्नं मुद्गान्नं च हरिद्रकम् १४
गुळान्नं चैव शुद्धान्नं तिलान्नं च यथाक्रमम्
नैवेद्यं दापयेत्पश्चात् ताम्बूलं तु निवेदयेत् १५
धूपदीपसमायुक्तं दर्पणाद्यैर्विशेषतः
एवं संपूज्य विधिवत् चण्डपूजां समाचरेत् १६
एकाहे वाथ कर्तव्यं सौरवारे तु पूजयेत्
पूर्ववामान्तमारभ्य उदयान्तं समाचरेत् १७
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इत्यंशुमति तन्त्रे वारपूजाविधिपटलः एकाशीतितमः

## शिवदीक्षाविधि

जप्त्वाचाष्टोत्तरशतं स्वप्नशांतिकरं भवेत्
पूर्वयामे विशेषेण स्वप्नो यदि भविष्यति १

संवत्सरे तु संधिं स्यात् द्वितीय्ये यामके सति
षरामासेनैव संधिं स्यात् तृतीये यामके सति २
मासेनैव तु संधिं स्यात् चतुर्थे यामके सति
स्वप्न दृष्ट्वा ततः शीघ्रं लभेत्सत्यं न संशयः ३
चन्द्राक्षी तारकं ग्राह्यं स्वयमंगे विलेपनम्
भक्षणं जायते तेषां राज्यं संप्राप्नुयान्नृपः ४
श्वेतपुष्पं जपो माला धवळानां च पक्षिणाम्
सौवर्णानां गदानां च दर्शनाल्लभते श्रियम् ५
गन्धर्वनगरं वादेवगन्धर्वयोषितः
दर्शनात्प्रापणात्स्वप्ने विपुलां श्रियमाप्नुयात् ६
जातरूपमयं छत्रं श्वेतमालाविभूषितम्
चूतपुष्पविशेषाणां सफलानां च दर्शनम् ७
तेषामारोहणं शस्तं शैलहर्म्यं च हस्तिनाम्
गोसिह्मवृषभाणां च भक्षणाद्रोहणादिके ८
सिह्मासनं च शिबिकारोहणं तथा
++++++++++++++ ९
शुद्धिविन्यासं ++ वास्तु होमं तु निक्षिपेत्
पर्यग्निकरणं कृत्वा पुरायाहं वाचयेत्तदा १०
पूर्वोक्तविधिनास्थाप्य घटानां कलशान्यपि
पूर्वादिसोमपर्यन्तं ++ तोरणकल्पनम् ११
मराडपे वैशदिग्भागे मराडलं चतुरश्रकम्
दर्भपुष्पपरिस्तीर्य पत्रमध्ये तु विन्यसेत् १२
शिवकुंभेऽष्टवर्धन्यां स्थापयेत्पद्ममद्यके
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं चकृद्दिशि १३
पुष्पे कुशोदकं चैव गंधोदकं तु विकल्पके
विदिक्षु स्थापयेत्तत्र क्रमेणैव तु देशिकः १४

शिवकुंभे शिवं पूज्य वर्धन्यां तु मनोन्मनी
विद्येशाष्टं तु संपूज्य स्थापयित्वादनुक्रमात् १५
देशिको मुक्तिपैस्सार्धं स्नात्वा वस्त्रेण वेष्टयेत्
आत्मार्थविधिमभ्यर्च्य विशेषं कल्पयेद्गुरुः १६
तर्पणांत ++ त् + संपूजयेत् मण्डपं हृदा
निवृत्तिं च प्रतिष्टा च विद्याशांति चतुर्दश १७
मृत्या बलं तु चारोग्यं शांतिक्योत्तोरणादिषु
नन्दिकाले तथा गंगा यमुनेन्द्रेषु पूजयेत् १८
इन्द्रे वह्निस्तु तन्मध्ये सौरदेवं प्रपूजयेत्
अग्निकुंभस्तथा चाग्निं डिण्डिमुण्डी च दक्षिणे १९
मूर्तौ तु यममित्युक्तं पूजयेत्सहमोदके
नैर्ऋते निर्ऋतिं पूज्य वृषभस्थं तु पश्चिमे २०
तथैव वरुणं पूज्य वायुकुंभे च वायु च
उत्तरे तु यजं सोमं देवी चण्डौ तथैव च २१
ऐशे विष्णुं च रुद्रं च निर्ऋतौ ब्रह्मकल्पयेत्
धूपदीपं हुता दत्वा गंधपुष्पादिभिर्यजेत् २२
स्वनामदेवसंपूज्य नमोन्तेन्वाचकं क्रमात्
स्वाहान्तं तं हुता प्रोक्तं नैवेद्यादि निवेदयेत् २३
शिवकुंभे शिवं पूज्य वर्धन्यां तु मनोन्मनीम्
विद्येशाष्ट समापूज्य स्थाना येन्नैव देशिकः २४
मण्डलान् सर्वदेवत्य पूजयेत् गंधपुष्पकैः
ईशादि सद्यपर्यन्तं लिंगमेतत्प्रकीर्तितम् २५
विद्येशाष्टेशसंपूज्यं अष्टलिंगेशमेलता
चतुष्टयं चैव लिंगेषु चतुः पङ्कजमेव हि २६
वामादि शक्तयश्याष्टौ पूजयेत् गंधपुष्पकैः
लिंगे ष्ट च तथाण्डे च सवौ नाग ++++ षकौ २७

बिन्द्यप्यूहे चतुर्दिक्षु चतुर्वेदप्रपूजयेत्
मराडपान् पूजयेत्तत्र विद्यादेहान् दृढा सुधीः   २८
धूपदीपं हृदा दत्वा मुद्रायां शंखसंनिभौ
साक्षी तु मराडले कर्म कलशौ रशू कूर्चकौ  २९
आप्लाव्य प्लवमाप्नोति पूजयेन्मराडलं हृदा
यवाक् संपूज्य विधिवत् विधिवन्मन्त्रमेनकम्  ३०
पूजान्ते शिष्यमावाह्य स्नानं वस्त्रे व्यपोह्यकम्
प्रविशेन्मराडपे द्वारे पादप्रक्षाळनं कुरु  ३१
भस्मलेपनसर्वाङ्गं मराडपं तु प्रवेशयेत्
होमकुंडं समाश्रित्य देशिकैः मूर्तिपैस्सह  ३२
आज्यस्थालीं चरुं गृह्यव्यपोह्यकम्
प्रविशेन्मराडपे द्वारे पादप्रक्षाळनं कुरु  ३३
भस्म लेपनसर्वाङ्गं मराडपं तु प्रवेशयेत्
होमकुराडं समाश्रित्य देशिको मूर्तिपैस्सह  ३४
आज्यस्थालीं चरुं गृह्य कुराठदक्षिणसंस्थितौ
गुरोरभिमुखो +++++मेव ह  ३५
मराडपं वापरे वापि पादं प्रक्षाळनं क्रमात्
प्रविशेन्मराडपे मध्ये उद्धूळनं भस्मनो गुरुः  ३६
पूजयेत्पूर्वमर्थार्थं विशेषं अर्चनं शिवम्
हविर्निवेद्य तांबूलं नित्यनैमित्तिकं तथा  ३७
पूजांते तु जपेन्मूलं दापयेत् पञ्चपञ्च च
त + गावैरथसर्वा च पादप्रक्षाळनं कुरु  ३८
भस्मानुलेपयेत् सांगं प्रविशेन्मराडपालये
मराडपे स्थरिाडलं चैव मराडपादि प्रपूजयेत्  ३९
आचार्यो मूर्तिपैस्सार्धं सर्वगंधानुलेपयेत्
पंचांगभूषरौर्युक्तं गंधमालैरलंकृतम्  ४०

नववस्त्रपरीधानं उष्णीषं चोत्तरीयकम्
प्रोक्षयेत्कुशतोयेन पुनः पुण्याहमाचरेत् ४१
अग्निकार्योक्तमार्गौ तु देशिक ++ मुपैः सदा
समिदाज्य चरून् लाजान् सर्षपांश्च यवांस्तिलान् ४२
निष्पावं शिवमेवोक्तं सक्तुकं वेणुमेव च
गुळं मधुमपूपं च कंदं च कदळीफलम् ४३
अपामार्गन्तु नीवारं कारयेत्तु ततो हुनेत्
पलाशवटलश्वत्थं शिवमायूरखादिरं ४४
प्लक्षोदुंबरबिल्वं च पञ्चविंशति हूयते
समिधं मूलमन्त्रेण आज्यं तत्पुरुषेण तु ४५
गायत्रीं च चरूं हुत्वा लाजाघारेण होमयेत्
माषं वै वामदेवेन कूदळीनां सद्यमेव च ४६
यवमीशानमंत्रेण हृदयेषु च सर्षपम्
शिरसाहुतिमाहुत्वा शिखामंत्रेण मुद्गकम् ४७
कवचेन तु निष्पावं नेत्रेणैव तु संक्षकम्
गुळमस्त्रेणमित्याहुः मधुचैव सदाशिवः ४८
ब्रह्मजज्ञानमंत्रेण अपूपं च हुताशने
शुद्धं शुद्धेति मंत्रेण कदळीफलमेव च ४९
वाममंत्रमपामार्गं नीवारं सोममंत्रकम्
द्रव्यं द्रव्यं पृथक् योऽपि होमयेत्तु शताहुतिम् ५०
शिष्यहेतुश्च कर्तव्यं होमं वापि पदैरपि
++++++++++++++++++ ककम् ५१
समुखे वृषशृंगे च नन्दितीरे तथैव च
दर्भमालामृदं ग्राह्य पूरयेदवदेन तु ५२
पूर्वेत्वंबुज ++ कस्यादाक्रमादकम्
पाशौ चोत्पलकं चैव सौगंधिकमथोत्तरे ५३

पूर्ववत्सप्तबीजानि स्थापयेत्तस्य मध्यमे
वेळापात्रसमादाय सर्वालंकारसंयुतम् ५४
धामप्रदक्षिणं कुर्यात् गर्भस्थानं समाविशेत्
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्पुरुषेण तु ५५
प्रासादबीजमुच्चार्य गर्भं दधेति यापयेत्
गंधपुष्पादिभिः पूज्य गंधपुष्पेण देशिकः ५६
संस्थाप्य कुंभधापेन गर्भश्याग्रे निवेशयेत्
गंधपुष्पादिनाभ्यर्च्य +++++ ५७
अतः परं प्रवक्ष्यामि शिवदीक्षा विधिक्रमम्
नराणां मोक्षसिध्यर्थं सर्वपापहरं परम् ५८
सर्वरोगविनाशार्थं सर्वरोगविना ++
++ शिशुकं शिवं द्वंद्वं मुख्यैराचार्यप्रकीर्तितम् ५९
अखलं खलमित्युक्तं खैरवमेति शोच्यते
अखिलं ऋषिगर्भं स्यात् +++ दम् ६०
भिक्षा +++ तत्काले कलां च शिवगर्भिताम्
तत्कालेनातिगर्भा च रुद्रस्य गणिकं भवेत् ६१
अखलं गर्भ ++++ गर्भसंततम्
समयं च विशेषश्च निर्वाणश्च क्रिया स्मृता ६२
निर्वाणदीक्षा द्विविधा शिवधर्मादिभेदतः
प्रथमालोक +++ धर्मिणी ६३
एताभ्यां दीक्षयेच्छिष्यं कुण्डमण्डलपूर्विका
बुभुक्षुर्वा मुमुक्षुर्वा दीक्षयेच्छिवधर्मिणीम् ६४
ग्रहि +++ चेदर्घ्यं लोकधर्मिणीम्
अन्येषां चैव कर्तव्यमधिकं सर्वतो मुखम् ६५
तिथिवारेषु नक्षत्रे सुमुहूर्ते सुलग्नके
++++++++++++ ६६

देवालये गुरोर्गेहेऽभवा शिष्यगेहके
दीक्षा स्थाने तु कर्तव्यं मराडपं च प्रकल्पयेत् ६७
नवाग्निं चैव ++ या प्रकल्पयेत्
एकाहुतिपदं कृत्वा मध्यभागे तु वेदिका ६८
तत्पूर्वे कारयेत्कुराडं हस्तमात्रप्रकल्पितम्
+++ च तु तोरणभूषितम् ६९
मध्ये तु मराडलं कल्प्य ब्रह्ममंत्रैः समावहेत्
पूर्वं सूर्यं समाराध्य मराडपेशान +++ ७०
++ कल्प्य गव्यं च शिवहस्तं प्रकल्पयेत्
अग्निकार्योक्तमार्गेण अग्निकार्यं समाचरेत् ७१
स्थालीपाकं प्रकल्प्याथ +++ बरैः
पञ्च ब्रह्मादिमंत्रं च उपदिश्य यथाक्रमम् ७२
विशेष दीक्षाकर्तव्या निर्वाणं च ततः परम्
कलाशोधन ++ षु न ध्वगैः ७३
लोकय + दीक्षायां शिखाच्छेदं न कारयेत्
शिवयाभि दीक्षायां यावदुन्मील्य तच्छिखाम् ७४
अस्त्रेण म +++++ षडंतादि मंत्रतः
यागं समाप्य विधिवत् कल्पयेत्प्रणवासनम् ७५
अभिषिञ्चेत्ततो शिष्यं ईशानादि प्रपूजितैः
कुंभैः ++++ पंचांग भूषणम् ७६
स्रुक् स्रुवादीन् ततो दद्यात् ईशवद्भावयेच्चतम्
गुरौ मानुषबुद्धिं च नैव कार्यं प्रमादतः ७७
इत्थं आहुतिपटलः

## भस्मन्यासविधि

विभूतिधारणं वक्ष्ये श्रूयतां रविसत्तम १

कल्पं चैवातिकल्पं च उपकल्पादि भेदतः
विभूतिस्सर्वदेवानां कर्ता नारायणश्च सः २
स भूतिः सर्वरुद्रश्च विभूतिश्च महेश्वरः
सदा शिवमयं भूतिः सत्यं सत्यं दिवाकर ३
स्पर्शनाद्दर्शनाच्चैव दर्शनाद्भूतिकामुहुः
अश्वमेधसहस्रानि वाजपेय शतानि च ४
वाराणस्यां च वसतिः कोटिकल्पफलं लभेत्
ब्रह्महत्यां च गोहत्यां स्तेयं हेमस्य पापकम् ५
महापापोपपापानि नश्यन्ते भूतिधारणात्
तिस्रः कोट्यश्च कोटी च तीर्थानि भुवनत्रये ६
विभूति स्नानमात्रेण तत्फलं भवति ध्रुवम्
यज्ञकाले तपः काले पूजाकाले जपे तथा ७
दाने चैव जपे ध्याने विभूति स्नानमाचरेत्
त्रिपुण्ड्रेन विना श्राद्धं त्रिपुण्ड्रेन विना हुतम् ८
त्रिपुण्ड्रेन विना दानं राक्षसं तत्प्रकीर्तितम्
जन्मांतरकृतं पापं वर्तते यस्य कस्यचित् ९
तत्क्षणादेव ते सद्यः विभूतिस्पर्शनात्प्रिये
ते यद्वर्षशतं कोटि एकपादस्थिरो नर १०
विभूतिधारणात्पुण्यं कलान्निर्हन्तिषोडशि
विभूति शिवलिंगञ्च रुद्राक्षजपमालिकाम् ११
पञ्चाक्षराद्यवदनं ++ मि पार्वति
विभूति धारणाद्देवी अन्यो वाचि द्विजो भवेत् १२
विभूतिं विना चतुर्वेदी चण्डालो भवति ध्रुवम्
गुरुद्रोही शिवद्रोही पातकीप्युपपादकी १३
विभूतिधारणं प्रोक्तं मुक्तो नान्यथा भवति
अणीमादि महासिद्धिर्बलद्वारप्रवेशनः १४

अंजनं गुळिकासिद्धि खड्गभस्तिं च लभ्यते
विभूति धारणात्तस्य भुक्तिमुक्तिं च विंदति १५
विनायकग्रहस्तारा ये चान्ये क्षुद्रजंतवः
त्रिपुण्ड्रं धारयेत् दृष्ट्वा पलायंते न संशयः १६
हसितं धूम्रवर्णं च रक्तं पीतं च वर्जितम्
धारयेद्धसितं श्वेतं सर्वपुण्यफलप्रदम् १७
अंगहीने कुष्टजने +++
अकृष्णं रोगहरं प्रोक्तं रक्तं कीर्तिहरं भवेत् १८
धूम्रमायुः क्षयं चैव पीतं संपद्विनाशनम्
दुर्जनानां निरीक्ष्ये तु असत्ये दुर्जने स्थले १९
तन्त्री चन्द्रकुटीष्वेव मद्यपानी निरीक्षणे
दुर्भोजने दुरालापे दुष्टस्त्रीसंगमेषु च २०
पिशुनानां च संस्पर्शे दोषशांतिकरं परम्
भस्मधारणमात्रेण सर्वपापैर्विमुच्यते २१
दावानलाच्च संजात ++ त्राणांतरे
खनने पर्वताग्रेषु वज्रान्निर्दहनं च तत् २२
सर्वशुद्धा भवेत्तत्र शिवमंत्रान्न शोधयेत्
तद्भस्मं सर्वदा मुख्यं शिवमंत्रं विना न तत् २३
अन्यहस्तेष्वनिक्षित्य प्रेषयन् चतुभस्म तत्
सदा न दार्यमनिशं महापापकरं भवेत् २४
गुरुमातापिताभ्राता स्वसाचार्य भवामिनी
एषां गृहीत्वा हस्ते तु भस्म संज्ञं बलात्मकम् २५
आशीर्वादपुरस्सर्वं ब्राह्मणैर्वेदवेदिभिः
ज्ञानिभिर्विबुधैशास्त्रमंत्रज्ञैश्चतु यज्वनः २६
एभिस्सन्धार्यते भूतिः शिवहस्तसमं भवेत्
हीनचण्डालपिशुन मद्यपानी चिकित्करे २७

अंगहीने कुष्टजने दुराचारास्त्रियार्भके
एषां हस्तोन्नयनदुत्तं भस्म तद्दोषजं भवेत् २८
स्नाने दाने तथा श्राद्धे वैश्वदेवसुरार्चने
धृतये चैव भूतात्मा मृत्युञ्जयति मानवं २९
मार्गे याते जनः कश्चित्तिष्ठन् भूतिं न धारयेत्
धृत्वा चेन्नरकं याति सत्यमेव न संशयः ३०
एकहस्ते न पुण्ड्रं स्यात् अधोमुखविलेपनम्
श्वानयोनिगतं प्राप्य रौरवं नरकं यजेत् ३१
द्विहस्ते त्रिपुण्ड्रं स्यात् ऊर्ध्वमुखं विलेपयेत्
अनेन विधिना साक्षी शिवसायुज्यमाप्नुयात् ३२
रात्रौ भस्मिनि वत्तोयं क्षिपेत्सततमद्रवे
रेणुसंख्यानि ++ षरे करसंयुते ३३
शुद्धि उच्छिष्टे तु स्मशाने तु सूतकस्य तु मंदिरे
तांबूलचर्षेणे कालेप्यशुद्धे सुरतस्थले ३४
भूतिं न स्पर्श इत्येव स्पर्शेत् सोपातकी भवेत्
शुद्धस्सुखी सुहृदयं सुमुखी सत्यभाषणम् ३५
दुर्गोष्टी रहितः प्रीती धारयेद्भूतिमद्रवे
भस्मोद्भवविधिः प्रोक्तं पञ्चाक्षरविधिं शृणु ३६
भस्मन्यासक्रमं कृत्वा श्रूयतां शृणु सत्तम
स्नानकर्मविधिः प्रोक्तं संधिद्वयविधिं क्रमात् ३७
ततो देवालयं गत्वा प्रदक्षिणमथाचरेत्
पादप्रक्षाळनं कृत्वाऽचम्य विधिना बुधः ३८
मण्डपांते प्रविश्याथ शिवाग्रे मण्डपे स्थितं
परिचारकमाहूय आसनस्य च गृह्यताम् ३९
तदासनं न्यसेद्धीमान् पूर्वाग्रं चोत्तराग्रकम्
उग्रभूतपिशाचा ये रक्षका भूमिपालकाः ४०

एतेषामविरोधेन शिवकर्मसमाचरेत्
पृथ्वि त्वया धृता देवी देवित्वं विष्णुना धृता ४१
मां च धारय देवित्वं पवित्रं कुरुचासनम्
कूर्मासनोक्तमेवं च रुचिरासनसुस्थितः ४२
द्वयोर्जानत्वया कृत्वा तु पादाग्रं चैव संपुटम्
ईषभासांग्रं तु देहदीर्घन्तु तत्रजम् ४३
दक्षपादोर्ध्वमेवं च रुचिरासनमेव च
मेरुपृष्ट ++ षं चैव सुतश्चंद एव च ४४
कूर्मं च देवतां चैव श्रीं ह्रीं क्लीं स्मरेत्ततः
आसनस्य विधिं प्रोक्तं भस्मन्यासविधिं ततः ४५
पूर्वोक्तविधिना चैव भस्म संगृह्यदेशिकः
ललाटनयनोत्पत्ति रक्षार्थं किं प्रयोजनं ४६
सर्वद्रव्यहुतं वह्नि भस्मोद्भव उच्यते
भकारं भव विच्छेदं स्मकारं मरणं तथा ४७
भवस्मरणसंसर्गात् भस्ममित्यधीयते
तर्जनी च कनिष्टा च प्रसृता चैवमेव च ४८
मध्यमानामिकांगुल्यामंगुष्टाग्रेण बंधयेत्
अधोमुखं भस्म संगृह्य शिवमंत्रं समुच्चरन् ४९
तद्भस्मं सामहस्तस्य तिमलं मध्ये विनिक्षिपेत्
षोमशस्यैकभागं तु अथवा तिलमानतः ५०
अंगुष्टानामिकायुक्तं मि++ धुरां संत्यजेत्ततः
तद्भस्मं नृतिदेशे तु राजसंभूतिमाचरेत् ५१
कर्तृमंत्रं समुच्चार्य तद्भस्तं च जलं स्पृशेत्
एकवक्त्रं त्रिणेत्रं च शुद्धवर्णं चतुर्भुजम् ५२
निरीक्षणं हृदेनैव प्रोक्षणं त्वीशमंत्रतः
दिग्बंधं चास्त्रमंत्रेण वर्मणा चावकुण्ठनम् ५३

कलाभिमंत्रेण +++ पञ्चसंस्कार उच्यते
तर्जनीं मध्यमांगुळ्य संश्लिष्टाः प्रभृतोद्यतः ५४
कनिष्ठाप्रसृतं चैव प्रसृतोद्धसस्तथैव च
अंगुळ्याभिमुखं चैव चक्षुर्निर्मलदर्शयेत् ५५
दक्षवामे च नेत्रे च द्व्यंगुळं दर्शयेत्ततः
अधोभागांगुलं चैव दक्षपाद्यांबरौरवम् ५६
तर्जन्यादिकनिष्टां तं संश्लिष्टां चैव बंधयेत्
अंगुष्टकुंचितं चैव तलमध्ये तु योजयेत् ५७
अंगुलीमध्यमे चैव जले चैव तु संग्रहेत्
जलेनाधोमुखं प्रोक्ष्य दिग्बंधं चैवमेव च ५८
मध्यमादि त्रयं तुल्यं तलमध्ये तु बंधयेत्
अंगुष्ठपार्श्वसंस्पृष्ट्वा तर्जनी नखपृष्ठयोः ५९
विसर्जनीयं ततः कृत्वा दशदिग्बन्धनं क्रमात्
मध्यमादि त्रयं तुल्यं तलमध्ये तु योजयेत् ६०
मध्यमांगुळिपृष्ठे तु अंगुष्टेन तु बंधयेत्
तर्जनी भ्रममेवं च अधोमुखं चावकुण्ठनम् ६१
निवृत्तिं च प्रतिष्टा च विद्याशांतिस्तथैव च
शांत्यातीत कला चैव अभिमंत्रेण योजयेत् ६२
ब्रह्मतीर्थांगुलाग्रांत तलमध्ये पिधानकम्
अंगुष्टतर्जनीमूलं तदंगुली प्रसृताय च ६३
मध्यमा नामिकांगुळ्यं कनिष्टाश्लिष्टसंवृतम्
वक्त्रेणैव तदंगुल्यं मर्दयेज्ञीवमंत्रतः ६४
हस्तयोरुभयोर्बध्वा समपीड्यैव च मर्दयेत्
अंगुष्टादि कनिष्टांतं लग्नाच्चैव धनुर्मतः ६५
पञ्चांगुलाग्रसंयुक्तं तलमध्ये सुयोजयेत्
शिरोमध्ये न्यसेद्धीमान् शिवमन्त्रमनुस्मरन् ६६

अनामिका ब्रह्मदैवत्यं विष्णुश्च मध्यमांगुलम्
तर्जनी रुद्रदैवत्यं अंगुलीनां तु देवताः ६७
ललाटे नामिकावृत्तं मध्यमं तु ततः परम्
तदूर्ध्वे तर्जनीयुक्तं ललाटे तु प्रकल्पयेत् ६८
दक्षपार्श्वावसानं च वामपार्श्वावसानकम्
तदंगुष्टोत्तरांतं च तत्तद्रेखा पुनर्भवेत् ६९
ललाटे तु ललाटांतं शिरोमंत्रेण संयुतम्
सव्येन दक्षिणे कर्णेऽनामिकेन तु विन्यसेत् ७०
वामकर्णे तथांगुळ्यं वामदेवेन मंत्रतः
अघोरेण तु कर्णे च मध्यमांगुळिना स्पृशेत् ७१
स्तनं स्तनांतरायामं विस्तारं च त्रियंगुळम्
तदूर्ध्वे हृदयेनैव अंगुळैस्त्रिभिरेव च ७२
वामहस्तं तदंगुल्यं दक्षबाहुं शिखान्यसेत्
वामं बाहुं तदंगुल्यं कवचेन त्रियंगुळम् ७३
चतुरंगुलमायामं विस्तारं च त्रियंगुलम्
नाह ++++++ सव्यजानुनी ७४
वामजानु न्यसेत्सद्यं पृष्टोर्ध्वे चास्त्रमंत्रतः
कटिदेशे समायुक्तं स्थानमध्य विधीयते ७५
तुर्यस्थानक्रमं चैव त्रियंगुळेनैव योजयेत्
द्व्यंगुळं च समायुक्तं तदंगुळं चैव विस्तृतम् ७६
त्रिपुण्ड्रं च क्रमं प्रोक्तं मध्यच्छिद्रं प्रकल्पयेत्
अस्त्रेणैव समावृत्तं खण्डनं समयोजयेत् ७७
हस्तौ प्रक्षाळनं कृत्वा तज्जलेनैव योजयेत्
ब्रह्माविष्णुश्च रुद्रश्च पुण्ड्रस्याधिदेवताः ७८
शिरो मध्ये शिवं चैव ललाटे मध्यमोन्मनी
दक्षकर्णे गणेशश्च स्कंदं वै वामकर्णके ७९

कर्णौ च वृष्टि दैवत्यं हृदये वरुणदैवतम्
दक्षबाहु महेशं च वामबाहुस्तथेन्द्रकम् ८०
नाभौ प्रजापतिश्चैव जानुनोश्चाश्विदैवतम्
पृष्टे पृथिवी दैवत्यं स्थानानामधिदैवताः ८१
आमध्याह्नजलेप्युक्तामपरे जलवर्जितम्
अंभसा भस्मवृत्तं चेत् प्रातः काले श्रियावहम् ८२
आश्रियै चांभसा रात्रौ केव++++ धारयेत्
शिवकर्मसुकार्याणां देशिकश्शिष्य एव च ८३
जलेन मिश्रितं भस्म त्रिकालं च त्रिपुण्ड्रकम्
ब्राह्मणादिषु वर्णेषु दीक्षावृत्तं विशेषतः ८४
त्रिकालमुदकेमिश्च भस्मशांतिस्तमेव च
वैदिकानां तु सर्वेषां सायाह्ने जलवर्जितम् ८५
भस्मन्यासक्रमं प्रोक्तं भूतन्यासक्रमं शृणु
तर्जनी आलसं लग्नकुंचितांगुष्टको भवेत् ८६
मध्यमादित्रियंगुल्यं संश्लिष्ट प्र+++
तर्जनी कुञ्चितं चैव स्थलमध्ये जलं ग्रहेत् ८७
अपसर्पन्तु ये भूता ये भूता भुविसंस्थिताः
ये भूतां विघ्नकर्तारः ते नश्यं तु शिवाज्ञया ८८
असुरोच्चाटनार्थं च अभ्युक्षणं तथैव च
प्रणवं मंत्रमुच्चार्य तज्जलं भूगतं ददेत् ८९
अभ्युक्षणं पुरा कृत्वा पार्ष्णिघातं तथैव च
दक्षिणाग्रे पार्ष्णि देशे चतुरंगुळमुन्नतम् ९०
भूमौ त्रिताडनं कृत्वा पार्ष्णिघातं विधीयते
अंगुष्टाद्यंगुळी चैव संश्लिष्ट प्रश्रिता कुरु ९१
वामहस्ततले चैव दक्षहस्तेन नाडयेत्
अथवा मणिबंधं च संयोज्य हस्तयोरपि ९२

ताडनं च क्रियां कृत्वा ताळत्रयमिति स्मृतम्
नाभौ हृदिललाटे तु पुरतः ताडयेत्क्रमात् ९३
भूम्यन्तरिक्षस्वर्गेषु निर्विघ्नत्वं तु ताडयेत्
विसर्जनीयं ततः कृत्वा दशदिग्बंधनं क्रमात् ९४
मध्यमादित्रियंगुळ्यं तलमध्ये तु कुञ्चितम्
मध्यमांगुळिपृष्ठे तु अंगुष्ठेन तु बंधयेत् ९५
तर्ज ++ क्रममेवं च अवकुण्ठनमेव च
तर्जन्यादि कनिष्ठांतं तलमध्ये तु कुञ्चितम् ९६
उभयोर्हस्तयोश्चैव अंगुष्ठप्रसृतास्ततः
अंगुळी पृष्टमध्येन शिरोपार्श्वे विशेषतः ९७
दक्षिणे वाम पार्श्वे तु ललाटोर्ध्वे च संस्थितः
विघ्नेश्वरप्रियार्थं च ताडनं च त्रिधा भवेत् ९८
ब्रह्मस्थानौ तु संयोज्य हस्तांगुळ्योर्ध्वकं क्रमात्
निपीड्य हस्तसंयुक्तं नमस्काराख्य मुद्रया ९९
गुरुवंदनं ततः कृत्वा शिरसाचांजलि त्रयम्
दक्षपार्श्वे महालक्ष्मीं वामपार्श्वे सरस्वती १००
वामपार्श्वे तु दुर्गायां क्षेत्रपालं तु वामके
आधारशक्तिमूले तु परमात्मा हरिन्यसेत् १०१
अंगुष्टादि कनिष्टांतं संश्लिष्टाः प्रसृताः कुरु
हस्तयोः उभयोश्चैव उत्तारं वामहस्तके १०२
चतुरंगुळमध्येन शोधयेत्तु तलांगुळीः
दक्षिणेन करेणैव वामहस्तं विशोधयेत् १०३
शोधयेदस्त्रमन्त्रेण स्थलीकौ हस्तपृष्टके
एवं संशोध्यवामेन उत्थानं दक्षहस्तके १०४
वरुणाञ्चास्त्रमंत्रेण हस्तस्य तलपृष्टके
वामहस्तं समुद्धृत्य दक्षहस्तेकसंस्पृशेत् १०५

वामहस्तं जलेनैव दक्षहस्तेन वह्निना
अग्निना मलसंशोध्य करशुद्धिरिहोच्यते १०६
ईशानांगुष्टिकौ न्यस्य तर्जन्योः पुरुषं न्यसेत्
अघोरं मध्यमांगुळ्यौ वामदेवं तु नामिकौ १०७
सद्योजातं कनिष्टौ च हृदिन्यासमुदाहृतम्
मध्यांगुळि हृदि न्यस्य शिरसेनामिकांगुलिः १०८
कनिष्टिकां शिखां न्यस्य कवचांगुष्टके न्यसेत्
अंगुष्टाग्रेण संयुक्तं नेत्रं हस्ततले न्यसेत् १०९
कनिष्टा नामिका मध्ये तन्मूलेनैव विन्यसेत्
तर्जन्यांगुलि चास्त्रेण न्यासक्रममुदाहृतम् ११०
शिरो मध्ये न्यसेद्धीमान् ईशानं मंत्रमुच्चरन्
तर्जन्यादि त्र्यंगुल्यं तलमध्ये तु वक्त्रतः १११
कनिष्टा कुंचितं चैव अंगुष्टाधोमुखं न्यसेत्
मध्यमादित्रयंगुळ्यं अंगुष्टा प्रसृता ततः ११२
अंगुष्टं तर्जनी युक्तं गोजिमध्ये नरं न्यसेत्
तर्जनीनामिका चैव कनिष्टा प्रसृता ततः ११३
अंगुष्टमध्यमांगुळ्यमघोरं हृदि विन्यसेत्
तर्जनी मध्यमांगुल्यं कनिष्टा प्रसृता ततः ११४
अंगुष्टतर्जनी युक्तं वामदेवं तु गुह्यके
तर्जन्यादि त्रयंगुळ्यं संश्लिष्टाश्चैव बंधयेत् ११५
अंगुष्टकनिष्टिका युक्तं हस्तयोरुभयोरपि
वामहस्तमधो कृत्वा दक्षहस्तोर्ध्वमेव च ११६
सद्योजातं समुच्चार्य जानुद्वयं च विन्यसेत्
मध्यमादि त्रयंगुळ्यं संश्लिष्टाः प्रसृता ततः ११७
अंगुष्टतर्जनी युक्तं हृदये हृदये न्यसेत्
ललाटोर्ध्वशिरन्यस्य शिखास्थाने शिखा न्यसेत् ११८

अंगुष्टकनिष्टिका वृत्रं प्रसृतं चैव विन्यसेत्
तर्जन्यादि त्रयंगुळ्यं वक्रते ++ चैवमेव च ११९
हस्तस्वस्तिकसंवृत्तं कवचं स्तनमध्यतः
तर्जन्यादि त्रयंगुळ्य संश्लिष्टाः प्रसृतोद्धृतः १२०
अंगुष्टकनिष्टिकायुक्तं नेत्रमन्त्रं न्यसेत्ततः
तलमध्ये सनं चैव मध्यमांगुळिवक्त्रतः १२१
मध्यमादित्रयंगुळ्यं प्रसृताश्चैवमेव च
अंगुष्ठतर्जनी युक्तं पार्श्वद्वौ च विसर्जयेत् १२२
अस्त्रमंत्रं समुच्चार्य अंगन्यासक्रमेण तु
इत्यंशुमान् तंत्रे भस्मन्यासविधिपटलः

## आत्मार्थयजनम्

आत्मार्थयजनं वक्ष्ये श्रूयतां रविसत्तम
महापातकदोषघ्नं सर्वपापनिकृन्तनम् १
आयुः श्रीकीर्तिविजयं भोगमोक्षफलप्रदम्
सर्वयज्ञतपोदानतीर्थदेशे च यत्फलम् २
तत्फलं कोटिगुणितं शिवलिंगार्चनात्फलम्
शिवविप्रेण कर्तव्यं आत्मार्थं च परार्थकम् ३
विप्रक्षत्रिय वैश्यां च शूद्राश्चैव कीर्तिताः
आत्मार्थमर्चनं कुर्युः न कुर्युः च परार्थकम् ४
चातुर्वर्णभवस्त्रीणां अर्चनं च विशेषतः
यजनं त्रिविधं प्रोक्तं उत्तमामध्यमाधमाः ५
केवलं शिवमंत्रैस्तु यजनं चोत्तमं भवेत्
वैदिकैः शिवमंत्रैस्तु यजनं मध्यमं भवेत् ६
केवलं वैदिकैर्मन्त्रैः यजनं चाधमं भवेत्
केवलं शैविकैः मंत्रैः यजेदात्मार्थमुत्तमम् ७

आत्मार्थं षड्विधं प्रोक्तं चललिंगादि भेदतः
चलं च क्षणिकं चित्रं मण्डलं स्थण्डिलं तथा ८
कौतुकं चैव निर्दिष्टं गुरुमार्गेण कल्पयेत्
तेषां वै चोत्तमं ज्ञेयं शैलजं चललिंगकम् ९
शैलजाद्बाणलिंगं तु श्रेष्टमित्युच्यते बुधैः
बाणं जलमिति प्रोक्तं तस्मिन्नुद्धारणं तु तान् १०
बाणलिंगा इति खाता लिंगाश्च त्रिधामताः
यल्लिंगफलकाव्यक्तं उत्तमं त्विति कीर्तितम् ११
यल्लिंगं सव्यमौन्नत्यं मध्यमं लिंगमुच्यते
यल्लिंगं चाममौन्नत्यं अधमं लिंगमुच्यते १२
श्रेष्टमध्यमलिंगेऽष्मिन् यजेत्स्त्रीभोगदायकम्
अधमं लिंगमभ्यर्च्य केवलं मोक्ष्यमुच्यते १३
बाणलिंगं यजेल्लिंगं मध्यमं रक्तकं तथा
अधमं स्वर्णलिंगं तु तेषां भेदमिहोच्यते १४
उत्तमं विश्वतोनिस्स्यात् मध्यमं स्वर्णवीक्षणम्
अधमं रोप्य पीठा स्यात्तदभावे तु ताम्रजम् १५
तेषां अभावे शैलं स्यात् रक्तपीठादि पीठिका
चललिंगमिति प्रोक्तं क्षणलिंगं इति शृणु १६
सिकतं मुक्तिदं प्रोक्तं तण्डुलं मुक्तिदायकम्
नदी मृच्चात्मशुद्धिस्स्यात् अन्नमायुष्य वर्धनम् १७
गोमयं रोगनाशार्थं नवनीतं सुखप्रदम्
रुद्राक्षं रुद्ररूपत्वं पिष्टं पुष्टिप्रदायकम् १८
गंधं दीप्तकरञ्चैव कूर्चं सौभाग्यमेव च
पुष्पं भोगार्थमेवं तु जलं सायुज्यमेव च १९
सर्वपापहरं भस्मं गुळं प्रीतिप्रदं भवेत्
फलं चाभीष्टसिध्यर्थं पल्लवं सद्गुणप्रदम् २०

क्षणिकानां तु लिंगानां फलमेवं प्रकीर्तितम्
क्षणलिंगमिति प्रोक्तं चित्रलिंगफलं शृणु २१
चित्रं चैवार्धचंद्रं च पाचित्रं च क्रमेण तु
सौधजं चित्रबेरं स्यात् अर्धचित्रं तु भित्तिकम् २२
पटे तु पटचित्रं स्यात् त्रिविधं लिंगमर्चयेत्
सौधजं सुखमाप्नोति सौन्दर्यं भित्तिचित्रके २३
पटचित्रे श्रियं चैव चित्रलिंगार्चनात्फलम्
मण्डलं द्विविधं प्रोक्तं पत्रं वा लिंगमेव वा २४
पत्रे तु श्रियमाप्नोति लिंगे वा सर्वकामदम्
स्थण्डिले भूप्रदे प्रोक्तं कौतुके त्विष्टकामदम् २५
क्षणलिंगादि भेदानां फलमेवं प्रकीर्तिदम्
तेषु भेदेषु लिंगेषु चललिंगो विशिष्यते २६
मानसा मण्डलं श्रेष्ठं मण्डलात्क्षणिकं भवेत्
क्षणिकात्फलमुत्कृष्टं पटञ्चैव ततः परम् २७
पटादाहा द्युत्कृष्टमाभासात् बिंबमुच्यते
बिंबाद्दै लिंगमृत्कृष्टं लिंगाद्दै निष्कळं परम् २८
केवलं सहजं मिश्रं यजनं त्रिविधं भवेत्
केवलं लिंगमेकं स्यात् सहजं पञ्चबेरकम् २९
महेश्वरादि बेराणां सहितं मिश्र उच्यते
गणेशं स्कंदबेरं च शक्तिं च वृषभं तथा ३०
लिंगेनैव समायुक्तं सहजं चेति कीर्तिदम्
सहजेन समायुक्तं महेशं नृत्तमूर्तिकम् ३१
काम्यार्थयोनिबेराणि सहितं मिश्र उच्यते
क्षणिकं सिकतादिं च पूजयेत्तु विधानतः ३२
स्मरणावाहनां चेति सर्वं मानसकल्पनम्
अर्चनान्ते विसृज्याथ न प्रमाणं न च स्थिरम् ३३

रुद्राक्षं क्षाळनाच्छुद्धिरन्येषां परिवर्जयेत्
क्षणिकार्चनमेवं स्यात् उरुमार्गेण दृश्यते  ३४
एवं क्रमेण विधिवत् मरणांतं यजेत्ततः
इति ज्ञात्वा तु यत्नेन पूजनीयः सदाशिवः  ३५
सूतके प्रेतकाशौचे चात्मार्थे च विशेषतः
पूजा लोपो न कर्तव्यः सूतके प्रेतकेऽपि च  ३६
शिवमंत्रेण कर्तव्यः स्नानमात्रेण शुध्यति
आशौचं न भवेत्तत्र पद्मपत्रमिवांभसा  ३७
पूजांते प्रविशेच्चेदं आशौचं तु विशेषतः
एवं लिंगार्चनं कुर्यात् काम्यानुष्टानहीनकम्  ३८
आशौचांते च कर्तव्यं नित्यं काम्यमनुष्टितम्
काम्यानुष्टानहीने तु तद्दिनं द्विगुणं यजेत्  ३९
एवं वै शुद्धशैवानां विप्रादीनां तु कथ्यते
विप्रक्षत्रियवैश्यां मुद्राश्चैव तथैव च  ४०
चातुर्वर्णभवस्त्रीणां अर्चनं च विशेषतः
सूतके प्रेतके कुर्यान्न स्वयं लिंगपूजनम्  ४१
स्वकर्मानुष्टितं चैव जलहीनं तु भस्मकम्
मानसं च यजेद्धीमान् सर्वं मानसकल्पनम्  ४२
तल्लिंगमर्चयित्वा तु गुरूणां वा स्वजातिना
अन्ये नैवार्चनं कुर्यादन्ते पुष्पांजलित्रयम्  ४३
आशौचांते च कर्तव्यं पूर्वभागे यजेत्ततः
यथा पुष्पवती नारी अर्चनं च विशेषतः  ४४
अन्तर्यागं प्रकर्तव्यं तथा पूर्वदिनत्रये
चतुर्थदिवसे स्नानं गव्यं प्राश्य यजेत्ततः  ४५
अन्तर्यागं प्रकर्तव्यं तथा पूर्वदिनत्रये
चतुर्थदिवसे स्नानं गव्यं प्राश्य यजेत्ततः  ४६

जनिते चित्तसंतापे व्याधिभिर्निहिते सति
कार्यातिपातसंरोधं व्याद्युपद्रवणादिषु ४७
स्नानहीनं तथा चैव पादप्रक्षाळनं ततः
भस्मनोद्धूलनकं कृत्वा अर्चयेत्तु विशेषतः ४८
अर्चनायामशक्तश्चेत् स्पर्शनं वापि कारयेत्
पुष्पं तु मस्तके न्यस्य मूलमंत्रमनुस्मरन् ४९
स्पर्शने वाप्यशक्तश्चेत् लिंगदर्शनमेव च
चोरै लिंगं गृहीतश्चेत् मनसा तु यजेत्ततः ५०
चत्वारिंशद्दिनं चैव उपवासं तथैव च
नाळीकेरोदकेनैव क्षीरेणैव फलादिना ५१
आत्मानं रक्षयेद्धीमान् शिवध्यानपरायणम्
तस्मात् सर्वप्रयत्नेन तल्लिंगं ग्राह्यमुच्यते ५२
लिंगशुद्धिक्रमं कृत्वा पूजयेत्पूर्ववद्बुधः
तल्लिंगं च विहीनं चेत् नवलिंगं तु संगृहेत् ५३
स्वगुरो लिंगमादाय पूजयेत्पूर्वमागतः
दृष्टं चेत् पूर्वलिंगं तु द्वयं संपूजयेत्ततः ५४
तस्मात्सर्वप्रयत्नेन मरणांतं यजेत्ततः
यथा संगवकाले तु यथा संभवनाधिकम् ५५
कालातिक्रमणं चैव प्रायश्चित्तं न कारयेत्
त्रिकालं वा द्विकालं वा एककालमथापि वा ५६
आत्मार्थं पूजयेद्विद्वान् यथाशक्त्यनुरूपकम्
द्वारादि चंद्रपर्यन्तं यजनं चोत्तमं भवेत् ५७
सर्वोपचारं कर्तव्यं विशेषं किंचिदस्ति हि
नित्योत्सवं च भोगांगं सायरक्षाविधानकम् ५८
उपसंधिं विना कुर्यात् आत्मार्थयजनं क्रमात्
पूजाविधानमेवोक्तं क्रिया संख्याक्रमं शृणु ५९

प्रातःकालसमुत्थाय शिवं संचिंतयेत्क्रमात्
आवश्यकरणं चैव शौचमाचमनं ततः ६०
स्नानक्रमविधानं च संधिद्वयविधिक्रमम्
पूजागारप्रवेशं च स्नानशुद्धिक्रमं ततः ६१
प्रासादकल्पनं चैव द्रव्यसंक्रमणं ततः
सौरपूजाविधानं च पादप्रक्षाळनं ततः ६२
स्वासनस्यार्चनं चैव भस्मन्यासक्रमं ततः
पाद्यादिक्रममेवं च विशेषार्घ्यं ततः परम् ६३
खेटकालं कृतञ्चैव द्वारार्चनमतः परम्
बेराणामासनं चैव बेरविन्यासमेव च ६४
लिंगं स्नानार्थमादाय स्नानवेद्युपरि न्यसेत्
वक्त्रन्यासार्थमेवं च निर्माल्यञ्च विसर्जयेत् ६५
चण्डेशार्थं प्रकल्प्याथ अभ्यंगादिविशेषतः
शोधनं लिंगपीठस्य आसनार्चनमेव च ६६
विद्या देहञ्च संकल्प्य स्नानमार्गक्रमं ततः
पश्चान्निवेद्य तल्लिंगं पद्मासनं ततोपरि ६७
पश्चात्स्थिरासनं कल्प्य पञ्चासनक्रमं ततः
आवाहनाद्युपचारं च मानसं स्नानमेव च ६८
मंत्रपुष्पं च मंत्रान्नं गंधपुष्पं सृगादिकम्
भोगांगार्चनमेवं च गुरूणामर्चनमेव च ६९
धूपदीपं ततः पश्चात् नैवेद्यं बहिर्होमकम्
नित्यं पवित्रमेवञ्च धूपदीपमतः परम् ७०
आरात्या भसितं चैव तांबूलं दर्पणं ततः
छत्रं च चामरं चैव व्यजनं तालवृन्तकम् ७१
वैदैः पुराणमेवं च पञ्चनांगश्रवणं ततः
स्तोत्रनृत्तं च गीतं च वाद्यध्वनिसमायुतम् ७२

अक्षमालाजपञ्चैव तज्जपं तु समर्पयेत्
लयांगं पूजयेत्पश्चात् शिवैक्यं भावयेत्ततः ७३
चुळुकोदकप्रदानं च पश्चात्तू पूजां विशेषतः
शिवतत्वपरैस्सूक्ष्मे कुर्यात्तल्लयभावनः ७४
स्तोत्रपाठं ततः पश्चात् चण्डेशार्चनमेव च
गुरोराराधनं पश्चात् विद्यापीठार्चनं ततः ७५
परार्थालयं प्रविश्याथ लिंगदर्शनमेव च
प्रदक्षिणनमस्कारं यथासंख्यापिधानतः ७६
धर्मसंकीर्तनं पश्चात् पुराणश्रवणं ततः
एवं नित्यक्रियाकाण्डं यथाशास्त्रोक्तमार्गतः ७७
एवं नित्यं प्रकर्तव्यं पूजकः सर्वमाचरेत्
क्रियासंख्या क्रमं प्रोक्तं यजनक्रममुच्यते ७८
आत्मार्थयजनार्थं तु प्रासादं पूर्ववद्बुधः
गृहे शिलक्रिया वापि इष्टदेशे मनोरमे ७९
प्रासादं मनसा कल्प्य वेदिका मानमेव च
गर्भवेश्मेकतालं च तत्समञ्चार्धमण्डपम् ८०
तत्समं विस्मृतं चैव पञ्चांगुळं ततोन्नतः
पञ्चतालं यताग्रञ्चतुर्यतालं च विस्तृतम् ८१
विद्यांगुलोन्नतं चैव निजोन्नतविवर्धितम्
बेरमण्डपमाख्यातं अथवास्मतलं ततः ८२
गोमया लेपनं कृत्वा वामदेवेन मंत्रवित्
गर्भार्धमण्डपं चैव द्वितालं चैव संख्यया ८३
तत्समं विस्तृतं चैव चतुरश्रसमन्वितम्
पञ्चतालयताग्रं च विद्यातालं च विस्तृतम् ८४
बेरमण्डपमाख्यातं तन्मध्ये तु दळं क्षिपेत्
स्थण्डिलं पात्रहीनं चेत् असुराणां प्रवेशनम् ८५

ग्रस्त्रमंत्रं समुच्चार्य पत्रं तत्रैवविन्यसेत्
स्वर्णरजतताम्रैर्वा दारुणा चैव निर्मितम् ८६
चतुरश्रायताग्रं च चेटका कृतिमेव च
ग्रथवा नृत्तमेवञ्च गर्भगेहे च विन्यसेत् ८७
बेरमराडपमध्ये तु गंधिकं चैव विन्यसेत्
प्रभामराडलसंयुक्तं धामाधारं च विन्यसेत् ८८
प्रभामराडलपार्श्वे तु चित्रवस्त्रैरलंकृतम्
यजनद्रव्यमेवं तु संगृह्य परिचारकैः ८९
वामभागे तु संस्थाप्य दक्षिणे जलपात्रकम्
पूजास्थलं प्रविश्याथ भृंगारकजलैर्युतम् ९०
पादप्रक्षाळनं कृत्वा तच्छेषं वर्जयेज्ञलम्
पुनर्जलं समाधाय ग्राचम्य विधिना पुनः ९१
मराडपांते प्रविश्याथ सौरपूजां समारभेत्
ग्रादित्यं च शिवं विद्याच्छिवमादित्यरूपकम् ९२
उभयोरन्तरं नास्ति ग्रादित्यस्य शिवस्य च
देहस्थं सकळं विद्यात् न्निष्कळादेववर्जिता ९३
सकळं सूर्यमेवं तु निष्कळं शिवमेव च
देहस्थं पूर्वमाराद्य पश्चात्तद्देहिनं यजेत् ९४
तस्मात्सौरं पुरोऽभ्यर्च्य सूर्यांगैस्सकळीकृतम्
इन्द्रः पूलृवेऽमरावत्या तेजोवत्याहुताशनः ९५
तयोः मध्ये लोकसाक्षी भानुमत्या दिवाकरः
तस्मादिन्द्राग्नियोर्मध्ये शिवसूर्यं समर्चयेत् ९६
सौरबिंबे प्रतिबिंबे वा चक्रे वामपि समर्चयेत्
स्थरिडले पद्मलिख्ये वा यथापूर्वोक्तमार्गतः ९७
पादप्रक्षाळनं वापि पादाभुक्षणमेव च
तत्वत्रयं समाचम्य श्रोत्राचम्यमथापि वा ९८

खेटका दक्षदेशे तु स्वासीनो देशिकोत्तमः
मानयुक्ता यदाग्रञ्च सौभाग्यं दारुवासनम् ९९
वस्त्रासने व्याधिनाशनं कांचने मृत्युनाशनम्
कृष्णाजिने ज्ञानसिद्धिः मोक्षकृद्व्याघ्रचर्मणि १००
संपुटीकृत्य जानुकं पादाग्रं दक्षिणं परम्
अतः सर्पं प्रकुर्वीत रुचिरासनसंज्ञकम् १०१
रुचिरासनमाख्यातं आसीनं चासनोपरि
उग्रभूतपिशाचा ये राक्षसा भूमिपालकाः १०२
एतेषामविरोधेन शिवकर्म समाचरेत्
न प्राच्यामग्रतः शंभोः नोत्तरे योषिदाश्रये १०३
न प्रतीच्या युतः पृष्टः तत्तदोक्षो भीममर्चयेत्
एवं मृदु च शीतं च पतन्ति दहते यथा १०४
तथा घोरं प्रशांतोऽपि पापनिर्दाहकारकम्
महानपि यथा दन्ती यन्तारमनुवर्तते १०५
तस्मादघोरहृदयं तद्गतः सकळेन्द्रियम्
तस्मादाप्तेन वचसा उत्तराभिमुखो यजेत् १०६
भस्मन्यासक्रमं चैव करशुद्धिक्रमं ततः
प्रनवार्घविधानं च भूतशुद्धिक्रमं ततः १०७
न्यासक्रमविधानं च अन्तर्यागक्रमं ततः
खेटके पश्चिमे देशे द्वारं संप्रोक्ष्य देशिकः १०८
पूर्वद्वारे गृहस्थस्य भोगमोक्षफलप्रदम्
तत्पूर्वमुखं यत्तु द्वारं तत्पूर्वमिष्यते १०९
निंगस्य वक्त्रनिर्माणं यथा द्वारस्य निर्गमम्
मुखद्वारप्रधानं स्यात् लिंगस्यार्च्चनविद्बुधः ११०
लिंगार्चनानां कार्याणां मुखप्राची प्रशंसयेत्
द्वारमंत्रेण संप्रोक्ष्य द्वारपालान् समर्चयेत् १११

द्वारस्योदुंबरौ ध्वे तु दक्षिणे गणपं यजेत्
वामे सरस्वतीं पूज्य महालक्ष्मीं च मध्यमे ११२
द्वारस्य दक्षिणे पार्श्वे नंदी गंगा समर्चयेत्
गोनं बलं च यमुनां वामपार्श्वे समर्चयेत् ११३
पतंगं च भुवंगं च ऊर्ध्वायस्थं प्रपूजयेत्
पूर्वद्वारार्चनाये तु विशेषं किंचिदस्ति हि ११४
द्वारस्योदुंबरेर्ध्वे तु वामे तु गणपं यजेत्
सरस्वतीं तु संपूज्य महालक्ष्मीं च मध्यमे ११५
द्वारस्य वामपार्श्वे तु नंदीगंगा समर्चयेत्
महाकाळं च यमुनां दक्षपार्श्वे समर्चयेत् ११६
तदग्रे वृषभं पूज्य तत्तध्यानपुरस्सरम्
तं ++ त्रैस्संपूज्य गन्धपुष्पसमन्वितम् ११७
अभावे द्वारपालानां एकत्रैव तु मध्यमे
सर्वेभ्यो द्वारपालेभ्यो नम इत्यर्चयेद्बुधः ११८
विघ्नत्रयं तु निस्सार्य पार्ष्णिग्राहत्रयेण तु
ताळत्रयं तु संताड्य ऊर्ध्वे पुष्पं विसर्जयेत् ११९
देहळीमर्चयेद्धीमान् प्रविशेदर्धमण्डपम्
तन्मण्डपे तु नैर्ऋत्यां वास्तोष्पतिं समर्चयेत् १२०
गर्भगेहं प्रविश्याथ विमानोद्घाटनं ततः
गर्भाग्रे भीमरुद्रं च स्थितं चैव समन्वितम् १२१
चतुर्भुजं द्विनेत्रं च वरदाभयसंयुतम्
पिञ्चचामरसंयुक्तं भीमरुद्रं समर्चयेत् १२२
निशाशरान्तकं देवदेवेशयजनार्थकम्
शुद्धद्वारस्य सव्ये तु गच्छत्वं हि प्रसीद मे १२३
एवं क्रमेण विधिवत् सर्वं मानसकल्पनम्
तत्स्थानान्निर्गमं चैव बेरमण्डपमाविशेत् १२४

खेटके नैर्ऋते देशे गरोशस्यासनं ततः
एवं क्रमेण विधिवत् सर्वमासनकल्पनम् १२५
तत्स्थानान्निर्गमं चैव बेरमरडपं ग्राविशेत्
खेटके नैर्ऋते देशे गरोशस्यासनं ततः १२६
सर्वबेरासनम् चैव तत्तत्स्थाने समर्चयेत्
ऐशान्ये गुरूपपत्तिञ्च स्वस्वमंत्रैर्समर्चयेत् १२७
पेटकात्सर्वबेराणां पृथक्ग्राह्यं विचक्षणैः
ग्राच्छाद्य वस्त्रगळितं प्रोक्षयेदस्त्रवारिणा १२८
निमील्यं तु विसृज्याथ मानसं स्नानमाचरेत्
गरोशं नैर्ऋते न्यस्य स्कंदं वै वायुदेशके १२९
महेश्वरं दक्षिणे देशे पूर्वाभिमुखमेव च
नृत्तमूर्त्यादिबेराणां उत्तरे दक्षिणा नव १३०
चक्रं तु दक्षिणे न्यस्य भस्मधाराक्षमालिकाम्
भस्मधारे तु मायाख्यं भसिते लकुलीश्वरम् १३१
वासुकी चैव सूत्रे तु गन्धपुष्पैस्समर्चयेत्
लिंगाग्रे वृषभस्य पश्चिमाननमेव च १३२
पीठस्य वामभागे तु भोगशक्तिं च विन्यसेत्
मूर्तिमावाहयेद्धीमान् तत्तन्मन्त्रमनुस्मरन् १३३
पाद्यमाचमनं चार्घ्यमंत्रमंत्रेण दापयेत्
वस्त्रं गन्धं ++ पुष्पं मूर्ध्निविन्यसेत् १३४
बेरार्चनं क्रमं चैव गर्भग्रहं प्रवेशयेत्
ग्रों नमो देवदेवेश सर्वलोकैकनायक १३५
उत्तिष्टस्नानकर्मार्थं ग्रात्मरक्षार्थमेव च
कंसं च दारजन्नैव प्रतारकमनंतरुम् १३६
नाळं च पादसहितं तन्मध्ये चोन्नतं ततः
स्नानार्थलिंगमादाय स्नानवेद्यं परिन्यसेत् १३७

लिंगं संग्राह्य मतिमान् वस्त्रेणैव +++
ईशानादीनि सद्यांतं वक्त्रन्यासं क्रमं ततः १३८
तर्जन्यादि त्रयंगुल्यं तलमध्ये तु वक्त्रतः
कनिष्टा कुञ्चितं चैव अंगुष्ट प्रसृतां ततः १३९
अंगुष्टाधोमुखं चैव ईशवक्त्रे च विन्यसेत्
वक्त्रन्यासं च अर्घ्यं च स्वमूर्ध्वसु १४०
मध्यमानामिकां गुल्यं अंगुष्टाग्रेण योजयेत्
ईशानादीनि सद्यांतं अर्घ्यं चैव तु दापयेत् १४१
अंगुष्टानामिका मध्ये अष्टपुष्पं च विन्यसेत्
अंगुष्टतर्जनीयुक्तं उपर्युषितं च विसर्जयेत् १४२
विसर्जने तु तत्काले पुष्पं मूर्धनि विन्यसेत्
निर्माल्यं तु विसृज्याथ खेरकेशानदेशके १४३
चण्डेशायेति निक्षिप्य पश्चात्तस्मै च दापयेत्
अभ्यंगोद्वर्तनं चैव शिरोमंत्रमनुस्मरन् १४४
शालितण्डुलचूर्णेन मृदं चूर्णेन शोधयेत्
जलद्रोण्या जलं ग्राह्य कुण्डकेनाभिषेचयेत् १४५
क्षाळयेल्लिंगमस्त्रेण ++ ओं पाशुपतेन तु
आळिकामंत्रमुच्चार्य गड्डुकेनैव शोधयेत् १४६
शतमष्टोत्तरं देयं लड्डुकानां क्रमेण तु
वामहस्ते जलं कृत्वा गड्डुकं लिंगम++ त् १४७
जलं देयं लिंगमूर्ध्नि पश्चाच्चेद्यां विनिक्षिपेत्
शुद्धतोयाभिषेकं च पुष्पं मूर्धनि विन्यसेत् १४८
अनंतमासनं कल्प्यं पूर्ववद्देशिकोत्तमः
विद्यादेवासनं चैव विद्या ++ हमनोरचम् १४९
विदज्ञान इति ज्ञेयं विद्यादेहं प्रकल्पयेत्
विद्या देहं समावाह्य गन्धपुष्पैस्समर्चयेत् १५०

पञ्चगव्यामृतैस्स्नाप्य जलेनैवाभिषेचयेत्
अस्त्रमंत्रं समुच्चार्य पुष्पं मूर्धनि विन्यसेत्  १५१
स्नानद्रव्यं विशेषेण तत्तन्मंत्रजलैर्युतम्
क्षीरं दधिघृतं चैव क्षौद्रं चैवान्नमेव च  १५२
नालीकेरोदकं चैव इक्षुसारफलं तथा
गंधोदकेन संस्नाप्य शंखतोयाभिषेचनम्  १५३
अर्घ्योदकेन संस्नाप्य पुष्पं मूर्धनिविन्यसेत्
गंधं च लेपनं चैव हिमतोयाभिषेचयेत्  १५४
पञ्चब्रह्मषडंगैश्च बीजमुख्येन मंत्रतः
शिवगायत्रिमंत्रेण सहस्त्रधाराभिषेचनम्  १५५
स्नानद्रव्येप्यलब्धे तु एतेनैवाभिषेचयेत्
सर्वद्रव्येऽप्यलब्धे तु शुद्धतोयाभिषेचयेत्  १५६
अस्त्रमंत्रं समुच्चार्य पुष्पं मूर्धनि विन्यसेत्
खण्डवस्त्रेण संमार्ज्य पुष्पं मूर्धनि निक्षिपेत्  १५७
शिवमंत्रमनुस्मृत्य पद्मपीठोपरि न्यसेत्
आपीठोपरिन्यसेत् ++++ च्य च  १५८
तस्मादग्नेः पलाशस्य प्राणेशाय नयेत्तथा
शीघ्रं नीत्वा ततः प्राचीं दयेत्भूमि परिग्रहेत्  १५९
देशाध्यक्षो दशेत् क्षिप्रं यजमानस्य करे ततः
आचार्यं ++++ वस्त्रहेमांगुलीयकैः  १६०
इत्यंशुमान् तंत्रे परिग्रहपटलः

## शिवदीक्षाविधि

अथ शिवदीक्षाविधिक्रमः  १
अतः परं प्रवक्ष्यामि शिवदीक्षाविधिक्रमम्
नराणां मोक्षसिध्यर्थं सर्वपापहरं परम्  २

सर्वरोगविनार्थं धनधान्यसमृद्धिदम्
शुद्धशिवं चैमं मुख्यैराचार्यस्य प्रकीर्तितम्  ३
अखलंखं बिंबमित्युक्तं शैवमेति शिवोच्यते
अखलं ऋषिगर्भं स्यात् खलं वै शिवगर्भितम्  ४
भिक्ष ++++ तत्काले कलां च शिवगर्भिताम्
तत्काले नारिगर्भा च रुद्रस्य गणिका भवेत्  ५
अखलं गर्भते वापि बोधान्योगबसंतकम्
श्रेष्टं श्रेष्टखलं चैव अथवा च खलस्व ++म्  ६
+++ विप्रस्यमुद्धृत्य पारम्यं क्वलमेव च
पञ्चैतेति प्रकर्तव्यं भूतमेवोति तोच्यते  ७
विप्रक्षत्रियवैश्यं स्यात् शूद्रजातिस्तु दीक्षपेत्
एते चतुर्विधे जाते +++ रिक्षयेत्  ८
अखलो चत्रसंचैव कालाश्चैवोपदेशतः
अन्येषां चैव कर्तव्यं अधिकं सर्वतो मुखम्  ९
तिथिवारेषु नक्षत्रे सुमुहूर्ते सुलग्नके
देवालये ++++ च गुरुशिष्यगृहस्तथा  १०
दीक्षास्थाने तु कर्तव्यं मण्डपं च प्रकल्पयेत्
नवाग्निं चैव पञ्चाग्निं एकाग्निं वा प्रकल्पयेत्  ११
यतव्यमग्निदेशन्तु सुप्रमाणं सुलक्षणम्
+++ स्तदेपि विस्तारं उत्सेदार्धन्तु मेव वा  १२
वेदिविस्तारमेवं तु सलक्षणप्रकल्पितम्
चतुर्धारसमायुक्तं चतुस्तोरणभूषितम्  १३
दर्भमालाभिरावेष्टं मुक्तासृक्दामभूषितम्
++ त् पञ्चगव्येन पुण्याहं वाचयेत्ततः  १४
प्रोक्षयेदस्त्रतोयेन नारा च मुद्रया सह
शालिपिष्टमयं तद्वत् पदविन्यासमुच्यते  १५

षट्त्रिंशत् सूत्रं विन्यस्य पूर्व +++ ग्रं चोत्रस
नन्दि नन्दि पदे मध्ये पदाकारं समालिखेत् १६
तद्बाह्ये पदसंयुक्तं पदमेकं परित्यजेत्
चतुर्धारात्मतारूपं प++ ञ्चद ++ त्यजेत् १७
द्वारपार्श्वद्वये चैव लिंगं चै +++ री
मध्ये श्वेतमयं पद्मं श्यामवर्णं विधिक्रमम् १८
द्वारं द्वारे तु विन्यस्य नानावर्णविचित्रके
हेमकृष्णसुरक्तं च सितवर्णमयं तथा १९
लिंगवर्णं प्रकुर्वीत विचित्रेण समालिखेत्
अर्ध++ द्याष्टं तु वर्णभेदं विधीयते २०
कोणकोणविधा प्रोक्तं श्वेताब्जं तु विधीयते
प्रोक्षयेत्कुशतोयेन शंखशंनिसमुद्रया २१
मण्डलं तु प्रमाणं तु लिंगाबं च त उच्यते
तस्य पूर्वमुखं सौम्य कपोलस्थलशोभितम् २२
जांबूनदप्रतीकाशं कल्पयेत्तु भुजद्वयम्
दक्षहस्तेऽक्षसूत्रं तु वामे वै बीजपूरकम् २३
पूर्वास्स्यात् ध्यानमेवोक्तं दक्षिजाननमेव च
दक्षमंजनसंकाशं भीषणं विप्रतास्यकम् २४
व्याळबद्धजटाजूट कपोलदळमंडितम्
तुङ्गश्मश्रुसमायुक्तं शूलघण्टाकरादयम् २५
एवं दक्षाननं प्रोक्तं उत्तराननमेव च
उत्तरं वामवक्त्रं च दाडिमी कुसुमप्रभम् २६
भूषणं प्रचुरं वक्त्रं योषिदाश्रितभागिकम्
भुजद्वयसमायुक्तां स साध्येककरान्वितम् २७
पद्महस्तधरं चैव वामदेवसमन्वितम्
एवं ध्यात्वा विशेषेण पश्चिमं रजतप्रभम् २८

बालवेषसमायुक्तं त्रिणेत्रं पुण्डरीक्षणम्
वरदाभयहस्तं च ध्यानसक्तमिवस्थितम्  २९
कुर्यात्सदाशिवं देहं वक्त्ररूपमिहोच्यते
हृदयं चाग्निदेशे तु गोक्षीरधवळप्रभम्  ३०
श्रिरः पीतं युवाकारं यजेदीशानदेशके
शिखां सिन्धूरवर्णाभां कुर्यभारनतां शुभाम्  ३१
यजैन्नैर्ऋते देशे तु नानारत्नविभूषितम्
दंष्ट्राकराळकवचं पीन भ्रमर भासुरम्  ३२
यजेद्वायव्यदेशे तु तत्तत्स्थाने समर्चयेत्
नेत्रं चैव सम्भ्यर्च्य सोमेशाने तु मध्यमे  ३३
पूर्वादीनि चतुर्दिक्षु अस्त्रं चैव समर्चयेत्
अंगान्येतानि सर्वाणि दिव्यभूतशतानि च  ३४
गंधपुष्पैस्समभ्यर्च्य भोगांगं च यजेत्ततः
भोगांगयजनं प्रोक्तं पाद्यामाचमनार्घ्यकम्  ३५
ईशानमूर्तिरूपेण पञ्चावरमर्चयेत्
अथवान्यप्रकारेण एकावरणमर्चयेत्  ३६
पाद्यमाचमनं चार्घ्यं गंधपुष्पैस्समर्चयेत्
नैवेद्यक्रममेवं च आत्मार्थं च विशेषतः  ३७
उत्तमं द्व्याढकं प्रोक्तं षट्प्रस्थं मध्यमं भवेत्
अधमं चाढकं चैव नैवेद्यं त्रिविधं भवेत्  ३८
अथवान्यप्रकारेण आढकं चोत्तमं भवेत्
उत्तमादि त्रयं चैव कुडुंबान्तं तदुच्यते  ३९
प्रशस्थस्यार्धफलं चैव कुडुंबार्धया घृतं तथा
तदर्धार्धघृतं चैव पुष्पेणैव तु योजयेत्  ४०
आज्य हीनं तु नैवेद्यं असुराणां निवेद्यकम्
तस्मात्सर्वप्रयत्नेन आज्ययुक्तं निवेदयेत्  ४१

काम्यार्थं तराडुलं चैव नैवेद्यं स्वेच्छया ततः
क्षणिकादि निवेद्यं च पृथुकं गुळमुद्गकम् ४२
फलादिञ्चैव नैवेद्यं एवमेव क्रमेण तु
धूपदीपं ततः कृत्वा दिग्बंधं चावकुराठनम् ४३
धेनुमुद्रां प्रविश्याथ पूर्वपत्रं विसर्जयेत्
परिषिच्यास्त्रमन्त्रेण आपोशं हृदयेन तु ४४
मध्यमानामिका चैव अंगुष्टाग्रेण योजयेत्
पुष्पहस्ते हविर्दद्यात् मूलमंत्रं समुच्चरन् ४५
तत्पुष्पं तु समारोप्य नैवेद्यं दापयेत्ततः
तन्मंत्रेण समुच्चार्य गणेशस्य निवेदयेत् ४६
तत्पुष्पं तु विसृज्याथ हस्तप्रक्षाळनं कुरु
तत्परं लिंगनैवेद्यं पञ्चावारं त्रिवारकम् ४७
गणेश्वरादिबेराणां लिंगेनैव तु योजयेत्
अथवा शाकपात्रं च ओदनेनैव पूरयेत् ४८
नैवेद्यं दापयेच्छंभोः हृदयेन तु मंत्रतः
निर्माल्यं तु विसृज्याथ स्थलशुद्धिं च कारयेत् ४९
तदग्रे बलिदानं च मराडपं चतुरश्रकम्
पाद्यमाचमनं चार्घ्यं गन्धपुष्पैस्समर्चयेत् ५०
रुद्रेभ्यः पूर्वतो दद्यात् मातृभ्यां दक्षिणे तथा
गणेभ्यः पश्चिमे भागे रक्षोभ्यश्चोत्तरे बलिम् ५१
गृहेभ्यश्चासुरेभ्यश्च राक्षसेभ्यस्तथैव च
नागेभ्यश्च बलिं दद्यादाग्नेयादि विचक्षणः ५२
मराडलस्य तु तन्मध्ये तु क्षेत्रपालं बलिं ददेत्
दिग्विदिक्षु क्षेत्रपालं च त्रिवारं च बलिं ददेत् ५३
सर्वमंत्रं समूह्याथ एकवारं बलिं ददेत्
बलिदानावसाने तु अग्निकार्यं समाचरेत् ५४

कुण्डे वा स्थण्डिले वाथ अग्निं कार्यं समाचरेत्
पञ्चसंस्कारमेवं च कुण्डशोधनमेव च ५५
क्षाळनं शोषणं चैव पाचनं प्रोक्षणं तथा
सद्यादीशानपर्यन्तं मन्त्रमेवं समाचरेत् ५६
कुण्डसंस्कारमेवोक्तं स्थण्डिलं च विशेषतः
गोमयालेपनं कृत्वा चतुरश्र समन्वितम् ५७
द्विगजैश्चैव संगृह्य आमूलाग्रसमन्वितम्
निकुट्टनं पञ्चसंख्या अस्त्रमन्त्रसमन्वितम् ५८
तद्दर्भं वर्जयित्वा तु जलोपरूपनं ततः
सिकतैः स्थण्डिलं कृत्वा चतुरश्रसमन्वितम् ५९
हृदयाद्यस्त्रपर्यन्तं उल्लेखनक्रमं ततः
शरावेणाग्निमादाय क्रव्यादांशं परित्यजेत् ६०
संप्रोक्ष्याघोरमंत्रेण हृदा पुष्पं समर्चयेत्
वर्मणाचावकुण्ठं च इन्धनं निक्षिपेत्ततः ६१
स्थण्डिले कूर्चविन्यासं वागिवागीश्वरं न्यसेत्
गन्धपुष्पैस्समावाह्य तन्मन्त्रेण समर्चयेत् ६२
एकवारं भ्रमेदग्निमग्निबीजं न्यसेद्बुधः
दर्भैः इन्धनं क्षिप्त्वा शिरोमंत्रेण देशिकः ६३
गन्धपुष्पाक्षतैश्चैवार्चयेत् हृदयेन तु
+++ च दक्षिणे चैव पश्चिमे चोत्तरे तथा ६४
शिखयाद्यस्त्रपर्यन्तं दर्भेणैव परिस्तरेत्
आज्यपात्रं समादाय मध्ये कूर्चन्तु विन्यसेत् ६५
घृतेनापूर्यचास्त्रेण त्रिरुत्प्लवनकं ततः
ग्रन्थिं विसृज्य चास्त्रेण जलोपस्पर्शनं ततः ६६
अग्नौ विनिक्षिपेद्दर्भं अस्त्रमंत्रं समुच्चरन्
ईशानादीनि वामान्तं परिषेचनमाचरेत् ६७

अग्निमध्ये तु तद्ध्यात्वा अग्निरूपं विचिन्तयेत्
अग्निं ध्यात्वा श्रीबीजं च गंधपुष्पैस्समर्चयेत् ६८
अग्निं हृदयमध्ये तु वृद्धानि धानमेव च
पाद्यमाचमनं चार्घ्यं गन्धपुष्पैस्समर्चयेत् ६९
अनंतादि शिखराड्यंतं तत्तत्स्थाने समर्चयेत्
ईशानाद्यस्त्रपर्यन्तं आज्येनैव हुनेत्क्रमात् ७०
घृतेन मिश्रचरुणा तन्मंत्रेणैव होमयेत्
पञ्च संख्यास्त्रमंत्रेण प्रायश्चित्तं हुनेत्क्रमात् ७१
परिषेचनं ततः कृत्वा तन्मन्त्रेणैव देशिकः
परिस्तरणमादाय अग्निमध्ये विनिक्षिपेत् ७२
तद्भस्म तु ललाटे च नेत्रमस्त्रेण विन्यसेत्
तदेवं तु समावाह्य लिंगेनैव समर्चयेत् ७३
अथवान्यप्रकारेण जपमेवं समाचरेत्
होमोपकरणवैकल्यादशक्तो वा तदन्यथा ७४
होमसंख्यानि तंत्राणि जप्त्वा दशगुणं तथा
तज्जपं वरहस्ते तु तत्पुष्पं तु समर्चयेत् ७५
अर्घ्यं दत्वा विशेषेण शिवमंत्रमनुस्मरन्
दत्वा नित्यपवित्रं च दूर्वाक्षतसमन्वितम् ७६
तत्वत्रयं समुच्चार्य लिंगमूर्धनि विन्यसेत्
धूपदीपं ततः कृत्वा आरार्तिकं च दापयेत् ७७
महेशप्रतिमादीनां धूपदीपं विसर्जयेत्
भस्म चैव तु तांबूलं हृदयं चास्त्रमंत्रतः ७८
जलोपस्पर्शनं कृत्वा दर्पणं दर्शयेत्ततः
दर्पणं चामरं चैव व्यजनं ताळवृन्तकम् ७९
पञ्चब्रह्ममनुस्मृत्य योजयेत्तु क्रमेण तु
वेदैः पुराणमेवं च पञ्चांगश्रवणं ततः ८०

स्तोत्रनृत्तं च गीतं च वाद्यध्वनिसमायुतम्
नृत्तांतं चावसाने तु जपमेवं समाचरेत् ८१
अक्षमालं समाधाय वामहस्ते च विन्यसेत्
निरीक्षणं हृदयेनैव प्रोक्षणं त्वीशमंत्रतः ८२
दिग्बंधनं चास्त्रमंत्रेण कवचेनावकुण्ठनम्
कलामंत्राभिमंत्रेण पञ्चसंस्कारसंयुतम् ८३
मध्यादित्र्यंगुळं चैव कुञ्चितं चैवमेव च
तर्जनीकुञ्चितं चैव अंगुष्टप्रसृता ततः ८४
मोक्षार्थं मध्यमांगुळ्यं अंगुळी मध्यमे न्यसेत्
कनिष्टानामिका मूले पुष्पसंगृह्य देशिकः ८५
उत्तानं वामहस्तं तु वामजानूपरिन्यसेत्
अक्षमाला जपं चैव परदृष्टिर्न दर्शयेत् ८६
आच्छाद्य वाससा सक्तो हृदये च स्थितिर्भवेत्
प्रणवादि नमो मंत्रं शिखायेति नमस्ततः ८७
ओष्टस्पर्शनमात्रेण उपांशुश्च जपेत्ततः
पुल्लिंगांगुष्टबंधञ्च शक्त्यांगुळं च तर्जनी ८८
उभयोरंगुळीयुक्तं चरुद्राक्षचलनं ततः
अष्टोत्तरशतं चैव पञ्चाशच्चाष्टविंशतिः ८९
गुह्यादि गुह्यगोप्तं हि गृहाणास्मद्कृतं जपम्
सिद्धिर्भवतु मे देवत्वत्प्रसात्तदीश्वरम् ९०
तत्पुष्पं वरहस्ते तु तन्मंत्रं तु समर्पयेत्
लयांगयजनं कृत्वा पराङ्मुखार्घ्यं ददेद्बुधः ९१
सद्यादीशांतमभ्यर्च्य व्युत्क्रमेणैव योजयेत्
सद्योवाममघोरं च पुरुषेशानकं क्रमात् ९२
अस्त्रादि हृदयांतं च अंगान्यंगे तु योजयेत्
चतुर्दिक्ष्वस्त्रमभ्यर्च्य सोमादिन्द्रान्तमेव च ९३

नेत्रं सौमे समभ्यर्च्य कवचं वायुदेशके
नैर्ऋते तु शिखाञ्चैव शिरस्त्वीशानदेशके ९४
आग्नेय्यां हृदयं चैव अर्चयेत्तु लयांगकम्
मध्यमा नामिकांगुष्टमथै मुखाध्यं ददेत् बुधः ९५
पूजा समाप्तिं विज्ञाप्य क्षमस्वेति प्रणम्य च
सर्पं च दक्षिणं हस्तं कुञ्चितं चतुरंगुलम् ९६
पुष्पं वारि गृहीत्वा तु शिवाग्रे देशिकोत्तमः
तज्जलं भूगतं दत्वा कनिष्टां श्रावयेत्ततः ९७
गुह्यादिगुह्यगोप्तारं प्रणतोऽस्मत्कृतं ततः
सिद्धिर्भवतु मे देवत्वत्प्रसादात्तदीश्वरम् ९८
यत्किंचित्कर्मदेहे वा यदा सुकृतदुष्कृतम्
तन्मे शिवपदं तस्य प्रणामं शिवशंकरम् ९९
तत्पुष्पमस्त्रमंत्रेण सव्यपादे समर्चयेत्
चुळुकोदकमाख्यातं पूजांते तु प्रदापयेत् १००
आसनार्चनमंत्राणि पीठेनैव तु योजयेत्
आचार्यहृदयेनैव शिवमावाहयेत्ततः १०१
सौरं संचिंतयेद्धीमान् पूजयेत्तु समर्पयेत्
दक्षिणे मणिबंधं च वामहस्तं तदूर्ध्वतः १०२
मध्यमादित्रयंगुळ्यं तलमध्ये तु योजयेत्
अंगुष्टतर्जनीयुक्तं पुष्पद्वयं विसर्जयेत् १०३
तत्पुष्पं वर्जयित्वा तु अनिरोधेन मुद्रया
एवं विसर्जनी मुद्रा शिरस्यं जलिमाचरेत् १०४
हस्तप्रक्षाळनं कृत्वा अस्त्रमंत्रमनुस्मरन्
प्रत्येकं वस्त्रमादाय पुष्पेणैव तु विन्यसेत् १०५
गणेश्वरादि बेराणां वस्त्रेणैव विधानकम्
पेटकस्येव पार्श्वे तु विन्यसेदस्त्रमंत्रतः १०६

शिवमन्त्रमनुस्मृत्य लिंगं संग्राह्य देशिकः
चित्रवस्त्रेण संवेष्ट्य पेटका मध्यमे न्यसेत् १०७
अपि धानं तु संयोज्य भीमरुद्रं स्मरेत्ततः
पूजां समर्प्य देशेशं नमस्कारस्य मुद्रया १०८
ऐशान्यां गोमयालिप्य टंकागं चार्धचन्द्रकम्
मण्डले चण्डमावाह्य तद्रूपं भावयेत्ततः १०९
द्विनेत्रं चतुर्भुजं चैव शुक्लवस्त्रसमन्वितम्
जटामकुटसंयुक्तं चन्द्रार्ध +++++ ११०
+++++++++++++++++++++

इत्यंशुमान् तंत्रे शिवदीक्षाविधि

## आत्मार्थयजनम्

++++++++ यिनां कारयेद्बुधः
गुरौ निरीक्षणौ शिष्यौ ज्ञानं दृष्ट्वा विलोकयन् १
उष्णीषश्चोत्तरीयं तु परिचारक्रमाचरेत्
तद्धस्ते कुंभवर्धन्यौ मण्डपं तु प्रदक्षिणम् २
स्थण्डिलोपरि संस्थित्वा होम कर्मसमाचरेत्
वागेश्वरेण वागीशीं पूजयेत् क्षण्डमध्यमे ३
अष्टदिक् पालमित्युक्तं कुण्डेनैव तु पूजयेत्
समिदाज्य चरून् लाजान् सर्षपश्चायवांस्तिलान् ४
वेणुमुद्गतथा माष निष्पावं शिवमालकीन्
समिधं मूलमंत्रेण आज्यं गायत्रिमंत्रकम् ५
अघोरेण चरू हुत्वा लाजं वामेन होमयेत्
सर्षपं कवचेनैव सक्तुकं पुरुषेण तु ६
तिलमीशानमंत्रेण वेणुं सद्येन होमयेत्
मुद्गं तु शिरसा मंत्रं माषं चैव शिखा भवेत् ७

शिवं वै हृदयेनैव ग्राढकीनेत्रमुच्चरन्
न्निष्पावं तु हुनेत्पश्चात् त्रियंबकमथाचरेत् ८
शतमर्धं तदर्धं वा जुहुयात्क्रमशः पुनः
धूपदीपं हृदा दत्वा कुण्डस्योर्ध्वे बलिं क्षिपेत् ९
चक्रादिलोकपालांश्चासनामेनैव देशिकः
कुण्डदक्षिणपार्श्वे तु मण्डलद्वितयेषु च १०
ग्रंतर्बहिर्बली दत्वा पूर्वोक्तविधिना चरेत्
धूपदीपं समादाय चुळुकोदकमादिशेत् ११
तिष्यां तिष्ठन्ति तत्काले गोमये मण्डले स्थिते
प्रोक्षयेदस्त्रमन्त्रेण धूपदीपं ददेत्क्रमात् १२
मलमायां दिवाराणां विशे ++ द्धक्रियतेऽथवा
ज्ञानं च मंदिते शिष्ये कारयेद्देशिकोत्तमः १३
पाशच्छेदेऽपि कर्तव्यं हुंफट् पाशुपदास्त्रकम्
ग्राहुतित्रिपदं दद्यात् गायत्रीणां च होमयेत् १४
धूपदीपं हृदा दत्वा पुण्याहं वाचयेत्तथा
ज्ञानखड्गं समुत्थाय नासिसंधानमात्मनि १५
ग्राहुती पञ्चधा हुत्वा पञ्चब्रह्मेण होमयेत्
देशिकोंगं प्रकर्तव्यं शिष्योपांगप्रकीर्तितम् १६
बीजमुख्यसुमंत्रेण स्पर्शाहन्तु विभावयेत्
धूपदीपं हृदा दत्वा शिष्यं हृदयसंशयम् १७
क्षाळयेत् शिष्यहस्तं तु तण्डुलं समपूरितम्
पांगुष्ठशिरो दृश्य शिष्यं सम्मुखमेव हि १८
त्र्यंबकेन मंत्रेण शिष्यं कौतुकबंधकम्
धूपदीपं हृदा दत्वा भस्मचंदनदापयेत् १९
होमशेषं चतुर्भागं ++++ निवेद्यकाम्
एकबाकं बलं प्रोक्तं गुरोर्वै एकभागकम् २०

एक भागं तु शिष्याणां प्राशयेद्धर्मदेवता
गुरोर्मण्डपशाले च गुरुः पादेव शिष्यवत्  २१
शयने स्वप्नवाक्काये शुभकर्मविलेप्य च
दुस्वप्नशयने पञ्च प्रायश्चित्ताहुतिर्भवेत्  २२
पञ्च पञ्चाहुतिर्दत्वा पञ्चब्रह्मषडंगकैः
द्वितीये दिवसे चैव गुरुशिष्ये विधीयते  २३
वल्मीके तु शकृत् मृण्म ++ त्रय भस्मना
जले जले वने देहं स्नपयेच्छिष्य देशिकः  २४
स्नापयेच्छन्दसर्वांगं गुह्योप्सीत् द्वयसिद्धयेत्
तर्पयेद्विलिवत्पूर्वं +++++++  २५
विशेषं तर्पणं प्रोक्तं मध्यादित्ये बलिं क्षिपेत्
चुलुकोदकं स्त्रावयेद्धीमान् नागादिभ्यो निवेदयेत्  २६
परिषेचनं ततः कृत्वा अन्नं ++++ संस्पृशेत्
अमृतोपस्तथा चैव एवमाहु +++ शनं ततः  २७
तर्जनी मध्यमांगुष्टैः प्राणस्यैवाहुतिर्भवेत्
मध्यमानामिकांगुष्टैः व्यानस्य तदनंतरम्  २८
कनिष्टतर्जन्यंगुष्टैः उदाने चाहुतिं क्षिपेत्
सर्वैस्समानमुद्धृत्य सदाचैवाहुतिर्भवेत्  २९
आस्य कुण्डांतरज्वाला मध्ये प्राणव्यवस्थितः
एकैकाहुति दत्तान् अस्पृशन् तर्पयेत्ततः  ३०
मनस्तृप्यवसानं तु यावद्भुञ्जीत वाग्यतः
आपोशनाभिधानं च तच्छेषं भूगतं सृजेत्  ३१
आस्यं च जलपात्रं च भृंगारकजलैर्युतम्
हस्तप्रक्षाळनं कृत्वा आस्य मार्जनमेव च  ३२
कुलस्थपुण्ड्रसंमिश्र अथवा मुद्गचूर्णकम्
पादप्रक्षाळनं कृत्वा तच्छेषं वर्जयेज्जलम्  ३३

पुनर्जलं च संग्राह्य आचम्य विधिना बुधः
यावन्त्यन्नानि पिण्डानि तावत्पापेन लिप्यते ३४
अल्पमेव ततो नीयात् प्राणरक्षणमात्रकम्
तत्पापस्य विशुध्यर्थं दक्षपादनखाग्रके ३५
कालाग्निरुद्रहृन्मन्त्री सव्यांगुष्टेन सेचयेत्
आरोप्य वामहस्तस्य कनिष्टानाभिमण्डले ३६
तामेव दक्षहस्तस्य वामांगुष्टेन योजयेत्
विततौ च करं कृत्वा दक्षांगुष्टे न्यसेन्मुखे ३७
परिज्ञेयं समाख्याता दुष्टाहारविनाशिनी
चुळुकोदकमेतत् स्यात् स्वात्मनः पादमूलतः ३८
प्राणाग्निहोत्रमित्येवं नित्यमेवमुदाहृतम्
शिवमंत्रमनुस्मृत्य नाभिवामेन संस्पृशेत् ३९
धर्मसंकीर्तनं चैव पुराणश्रवणं ततः
नित्याचारं समाख्यातं यावज्जीवांतमाचरेत् ४०
इत्यंशुमान् तंत्रे आत्मार्थपूजाविधिः पटलः

## सायरक्षाविधि

अथ सायरक्षाविधिः पटलः १
सायं रक्षाविधिं वक्ष्ये श्रूयतां रविसत्तम
आयुरारोग्यं जयदं पुत्रश्रीकीर्तिवर्धनम् २
देवानां प्रीतिजननं सर्वसंहारभेषजम्
चंद्रपूजावसाने तु शंम्वग्रे नृत्यवाद्यकम् ३
नृत्तमूर्ते विशेषेण वाद्यकानां विचक्षणः
वादयेद्वादकश्चैव ताडयेत्तालविक्रमात् ४
विघ्नेश्वरं समभ्यर्च्य धूपदीपं समाचरेत्
आरार्तिकं तदन्ते च हसितं दापयेत्ततः ५

मण्डपेत्विष्टदेशे वा स्थण्डिलं स्थालिना कुरु
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्पुरुषेण तु ६
पात्राधारं न्यसेन्मध्ये तस्योर्ध्वे स्थलिकान्यसेत्
स्थलिपिष्टमये नैव बाणनाळं सकर्णिकम् ७
पूर्णचंद्रवदाकारं कल्पयेत् स्थण्डिलोपरि
अस्त्रमंत्रेण संप्रोक्ष्य गजपुष्पादिनार्चयेत् ८
कनिष्टांगुलिना हस्तु कल्प्य कार्पासवर्तिभिः
बहुरूपमनुस्मृत्य दीपानारोप्य देशिकः ९
पञ्च शक्तीन् समभ्यर्च्य धूपदीपं ददेत्ततः
पञ्चलिंगादिकं कृत्वा पाद्यमाचमनं ददेत् १०
धूपदीपं ददेद्धीमान् नृत्तत्रयसमन्वितम्
पुष्पेणैव समभ्यर्च्य अस्त्रमन्त्रमनुस्मरन् ११
द्रिक्षणमूर्तिं विन्यस्य दिग्बंधं चावकुण्ठनम्
शूलमुद्रन्ददेद्धीमान् हृदयाञ्जलिमुद्रया १२
एवं दीपं समादाय भ्रामयेद्देशिकोत्तमः
ईशानादीनि सद्यान्तं दीपं दद्याद्विशेषतः १३
पुरतः पीठशक्तिः स्यात् तदन्ते भोगशक्तितः
दद्दीपं नृत्तसंयुक्तं वृत्तान्ते च विहीनकम् १४
अर्घ्यं दद्याद्विशेषेण लिंगमूर्धनि विन्यसेत्
पुष्पेणैव समभ्यर्च्य दिग्बंधन्धेनुमुद्रया १५
धूपं दद्याद्विशेषेण पुरात्रं चैव संग्रहेत्
पश्चादारार्तिकं दद्यात् नृत्तं चैव लक्षणम् १६
आरार्तिकं परिभ्राम्य मूर्ध्निपादावसानकम्
श्येनवत् ग्रामवच्चैव त्रिधान्यधा चैव कारयेत् १७
कार्पासबीजलवणं तिलं वै निंबपत्रवत्
सर्षपञ्चैतपञ्चैव +++++ र्धनि १८

निक्षिप्यारार्तिको मध्ये तदन्ते भसितं ददेत्
सायं काले तु कर्तव्यं धूपादौ नृत्तमाचरेत् १९
अन्यसंदिष्टकालेषु धूप ++++++
++++++ तिविशेषेण आरात्रं नृत्तसंयुतम् २०
राजोपचारवत् सर्वं महेशाग्रे समाचरेत्
देवोपचारवत्सर्वं देव्याश्चापि समाचरेत् २१
+++++ व्गास्वैव ++रेततः
तद्दीपं क्षाळनं हीनं प्रतिमादि समाचरेत् २२
आरार्तिकं ददेद्दीमान् क्षाळयेत्तु पुनः पुनः
+++++ पात्रमुत्थापयेच्चैव वाद्यघोषसमन्वितम् २३
पीठाग्रे गोपुराग्रे वा तद्द्रव्यं दहनं ततः
पादप्रक्षाळनं कृत्वा मण्डपांते +++++ २४
+++++ कुर्यात् सायरक्षाविधिक्रमम्
सायरक्षाक्रमं प्रोक्तं उपचारक्रमं शृणु २५
इत्यंशुमान् तंत्रे सायरक्षाविधिपटलः

## उद्वाहविधि

अथ भवानीपतेः उद्वाहविधिपटलः १
भवानी वाथ उद्वाहं वक्ष्येऽहं त्वं रवे शृणु
विप्राणां च तपो वृद्धिः तथा विद्या प्रदायकम् २
पुत्रपौत्रसमृध्यर्थं सर्वयज्ञफलप्रदम्
क्षत्रियाणां जयञ्चैव शत्रूणां च विनाशनम् ३
लोके दुर्भिक्षनाशं च महामारि विमोचनम्
धर्मार्थकाममोक्षं च पुत्रपौत्रविवर्धनम् ४
वैश्यानां धनसंपत्तिव्याधिनाशं रिपुक्षयम्
शूद्राणां कृषिलाथं च +++ रोगविनाशनम् ५

सर्वदोषहरं पुण्यं सर्वतीर्थफलप्रदम्
सर्वकल्याणफलदं भुक्तिमुक्तिप्रदायकम् ६
अपमृत्यु विनाशार्थं ++ मुक्तिदं नृणाम्
किमत्र बहुनोक्तेन सर्वकामार्थसिद्धिदम् ७
तस्मात्सर्वप्रयत्नेन शिवकल्याणमाचरेत्
सुदिने सुमुहूर्ते तु तद्दिने द्वित्रिपञ्चमे ८
महेश्वरस्य वैवाह्यं प्रत्यब्धं वा समाचरेत्
निश्चित्य दिवसात् पूर्वे ब्राह्मणान् भोजयेत्ततः ९
तद्दिनस्य त्रिरात्रौ तु अंकुराण्यर्पयेद्बुधः
प्रातः संध्यावसाने तु नदीतीरे प्रवेशयेत् १०
सर्वमंगळदायै च तीर्थेषु स्नानमाचरेत्
देव्यालयं प्रविश्याथ पुरकर्म समाचरेत् ११
सायाह्नस्यापरार्धे तु कौतुकं विधिवत्कुरु
कदलीफलं च तांबूलं कल्हारं नारिकेलकम् १२
चंदनं कुंकुमं भस्म चित्रवस्त्रं च भूषणम्
पृथक्पात्रे तु विन्यस्य महेशं पूजयेत्क्रमात् १३
द्रव्यास्त्रेण तु संप्रोक्ष्य तरेणैवाभिमंत्रयेत्
कूरवश्शब्दसंयुक्तं सर्ववाद्यसमन्वितम् १४
स्वस्तिवाचकसंयुक्तैर्विप्रैश्च दासिभिस्सह
आचार्यश्शिष्यसंयुक्तो देव्या वा संप्रवेशयेत् १५
पात्रेषु सर्वद्रव्याणि न्यसेद्देव्यग्रके गुरुः
शिवगायत्रिमंत्रेण भस्मसंगृह्य देशिकः १६
ललाटे हृद्गळे न्यस्य प्रणवेनाभिमंत्रयेत्
गौरी बीजेन द्रव्याणि देविहस्ते ददेद्गुरुः १७
मंगळे अंबिके गौरी सर्वकारुण्य वारिधे
धर्मार्थकाममोक्षाय शिवदेवी भविष्यसि १८

कल्याणदेवीमित्युक्त्वा नमस्कृत्य गुरूत्तमः
प्रदक्षिणत्रयं कृत्वा महेशाग्रे विवेशयेत् १९
देवीधामस्य पूर्वे वा दक्षिणे चोत्तरे वापि वा
उद्वाहमण्डपं कृत्वा इष्टदेशे मनोरमे २०
ततो महेश्वरं पूज्य जयशब्दसमन्वितम्
गब्लिके शिबिके वापि देवमारोपयेत्ततः २१
स्वस्तिवाचकसंयुक्तैर्ब्रह्मघोषसमन्वितैः
वाद्यघोषसमायुक्तैः नृत्तगेयसमन्वितैः २२
छत्रचामरसंयुक्तैः ज्वालादीपसमन्वितैः
शनैः प्रदक्षिणं कृत्वा देव्या धामप्रवेशयेत् २३
देवद्वारे ++ जाग्रे वा गोमयेनानुलेपयेत्
पिष्टचूर्णैरलंकृत्य स्त्रीरूपं द्वयमालिखेत् २४
धूम्रवर्णां महाभोगां सुविकीर्णालकान्विताम्
सर्वशृंगारवेषाढ्यां यक्षिणी यजनं कुरु २५
पुण्याहं वाचयेत्तत्र कूर्चद्वयं च विन्यसेत्
गंधं पुष्पं च धूपं च दध्यन्नं फलसंयुतम् २६
ते सूनवादिमंत्राभ्यां बलिं दद्याद्विचक्षणः
पादप्रक्षाळनं कृत्वा मण्डपं तु प्रवेशयेत् २७
रत्नसिंह्मासने मध्ये देवञ्च स्थापयेत्ततः
तस्य दक्षिणपार्श्वे तु पार्वतीं स्थापयेद्बुधः २८
विघ्नेशं पूजयेत्तत्र पुण्याहं वाचयेत्ततः
वर्धनीं कुंभमादाय क्षाळयेदस्त्रमंत्रतः २९
तन्तुना वेष्ट्य धूपेन भस्मनां पूरयेद्धृदा
वस्त्रेणाच्छाद्यतद्वस्त्रं विश्वेत्तातेति बन्धयेत् ३०
अष्टमृद्गृह्य लाक्षं वा विन्यसेद्ग्रन्थिमध्यमे
जप्त्वा वृषभगायत्रीं कृत्वा वृषभलांछनम् ३१

स्थण्डिलोपरि वस्त्रं च श्वेततण्डुलद्रोणके
कुंभं तु वर्धनीं स्थाप्य शिवहस्तसमन्वितम्  ३२
चित्रवस्त्रैरलंकृत्य पुष्पाभरणभूषितम्
पूजयेत्पुष्पगन्धाद्यैः तयोर्मूलेन देशिकः  ३३
तत्र स्थण्डिलयोर्मध्ये वालुकैर्हस्तविस्तृतम्
पुर्वोक्तलक्षणोपेतं स्थापयेद्वह्निमूर्तिनम्  ३४
विष्णुमुत्तरतो वह्नेः स्थापयेद्दक्षिणाननम्
सर्वोपचारैः संपूज्य पूर्ववद्यजनं कुरु  ३५
स्थण्डिलेऽग्निं विनिक्षिप्य आदिशैवोत्तराननः
अग्निकार्यविधिं सर्वं यथोक्तेन समाचरेत्  ३६
वयं सोमेति मंत्रेण सद्येन समिधो हुनेत्
घृतं मिमिक्षेतिमंत्रेण वामेनाज्येन होमयेत्  ३७
देवस्सवितमंत्रेण अघोरेण चरुं हुनेत्
एषामीशेति मंत्रेण लाजं तत्पुरुषेण तु  ३८
तत्वायामीति मंत्रेण एषामीशेन होमयेत्
+++++++++मुद्गं हृदयेन होमयेत्  ३९
शन्नो देवीति मंत्रेण यवञ्च शिरसा हुनेत्
एषामीशेति मंत्रेण तिलं च शिखया हुनेत्  ४०
आवो राजानमंत्रेण प्रत्येकं षोडशं हुनेत्
पूर्णाहुतिं ततो हुत्वा सर्वद्रव्यसमन्वितम्  ४१
इन्द्रं विश्वेति मंत्रेण नेत्रेण नाळिकेरकम्
यासां देवेति मंत्रेण मूलमंत्रेण होमयेत्  ४२
द्रव्यं प्रतिविशेषेण प्रत्येकं षोडशं हुनेत्
पूर्णाहुतिं ततो हुत्वा सर्वद्रव्यसमन्वितम्  ४३
प्रसुग्मन्तादि मंत्रौ च तयोरग्रे जपेद्गुरुः
मधु दुग्धाज्यकदळी इक्षुखण्डसमन्वितम्  ४४

स्वर्णे रजतपात्रे वा योजयेत्तु विचक्षणः
देवस्य पादौ प्रक्षाल्य आपः पादेति मंत्रतः ४५
मयि महो इति मंत्रेण गुरुहस्तौ शिवं स्मरन्
जलं स्पृष्ट्वा ततो धीमान् मयि इन्द्रं हृदये स्मरन् ४६
आम आगादि मंत्रैस्तु मधुपर्कं जपेत्ततः
वीरा समुद्रमंत्राभ्यां शिवहस्ते जलं ददेत् ४७
त्रयैर्देवस्य यातेति मंत्राद्यैस्स्पर्शयन् जपेत्
यन्मधुनो इति मंत्रेण मधुपर्कं हृदा ददेत् ४८
+++++ इति मंत्रेण दत्वा शिवस्य गामधिः
सुभूतमिति मंत्रेण अपूपं तु निवेदयेत् ४९
विराडसीति मंत्रेण मुद्गान्नं दापयेद्गुरुः
मधुपर्काद्यवशिष्टं देशिकाय प्रदापयेत् ५०
पाद्यमाचमनं चार्घ्यं धूपं चैव तु दीपकम्
आदिशैवकुले जातो पुत्रभ्रातृकळत्रकः ५१
पञ्चांगभूषणोपेतो विजदेहं तुषारवत्
इत्थं अनादिगोत्राय सर्वज्ञानप्रबोधक ५२
सर्वलोकहितार्थाय स्थित्युत्पत्तिलयेशक
अद्रिराजस्य तनयां द्वात्रिंशद्धर्मवर्धनीम् ५३
आदिगोत्रामुमां देवीं सर्वाभरणभूषिताम्
प्रजापतिरिर्मन्त्रैः रुद्रकेन गुरूत्तमः ५४
दास्यामिशंभवे तुभ्यं शिवलोकजिगीषया
चतुर्दशं हस्तयामं तच्चतुर्थांशविस्तृतम् ५५
मन्त्रवस्त्रमिति प्रोक्तं क्षौमं कार्पासकं तु वा
परित्वा इति मंत्रेण मंत्रे वस्त्रेण वेष्टयेत् ५६
कुञ्चषोडशमारभ्य त्रिंशत् कुञ्चांतमेव वा
शिवलिंगाकृतिं गर्भ पार्श्वे सुषिरसंयुतम् ५७

बीजपञ्चकसंयुक्तं गृहेमंगल्यकांचनम्
सुमंगळीति मंत्रेण पुरुहूतेत्यनुस्मरन् ५८
बध्वा मांगळ्य सूत्रं च तयोर्मूलेन देशिकः
आवाह्ये करकेऽभ्यर्च्य सर्वालंकारसंयुतम् ५९
गन्धद्वारेति मंत्रेण पुष्पावतीति मंत्रतः
गंधपुष्पादिना यष्ट्वा पार्वतीं परमेश्वरम् ६०
अभ्रातृघ्नीति मंत्रेण वधूर्वौषडितीक्षते
अघोरं चक्षुमंत्रेण वरः समीक्षते वधूम् ६१
इदमिति भ्रुवोर्मध्ये दर्भेणैव लिखेद्बुधः
तद्दर्भं पश्चिमे न्यस्य जलं स्पृष्ट्वाविचक्षणः ६२
साधकौ द्विद्विहस्ताभ्यां दर्धनीं कुंभमुद्धरेत्
वधूदक्षिणहस्तं च संग्राह्य तु महेश्वरः ६३
मित्रोऽसीति अथैनां च होमस्थानेनयेत्सह
एकमिषेति मंत्रेण पञ्चब्रह्ममनुस्मरन् ६४
सप्तपदं प्रकर्तव्यं सखायेति पदं अृशन्
देवाग्रे स्थण्डिलं कृत्वा सुश्वेतैः द्रोणतण्डुलैः ६५
मध्ये पंकजमालिख्य त्रिपादीं विन्यसेद्बुधः
पार्वती हृत्प्रदेशे तु मम हृदये तु मंत्रतः ६६
कवचेन स्पृशेन्मंत्री ततो दक्षिणकर्णके
मान्तेऽपि बीजमुख्यं च जपेदाचार्यभक्तितः ६७
गौरी दक्षिणहस्तस्य ते सुप्रजेति मंत्रतः
अग्निं कनिष्टकां गृह्य परित्वेति प्रदक्षिणम् ६८
वर्धनी वामकुंभं च विन्यसेत्पूर्वदिङ्मुखौ
शिवहस्तसमोपेतं देवीहस्तं तु योजयेत् ६९
विष्णुमंत्रैस्समभ्यर्च्य श्रीकण्ठं गौरिसंयुतम्
धूपदीपं तु भस्मानि दापयेत्तु विचक्षणः ७०

पुरायाहं वाचयित्वा तु समित्सद्येन षोडश
ततो व्याहृतीनां हुत्वा +++ न मंत्रतः ७१
क्रमात् षोडशकं हुत्वा ग्राज्याहुतिमथाचरेत्
रुद्रसूक्तं विष्णुसूक्तं ब्रह्मसूकं हुनेत्ततः ७२
ग्रग्नेः श्रद्धादिभिः मंत्रैः ग्रप्रजांतैः हुनेत्क्रमात्
ततो तत्र विशेषेरा कूश्मारडाहुतिमाचरेत् ७३
पुरायाहं वाचयेत्तत्र पादुकाराधनार्थकम्
ग्रग्नेरुत्तरपार्श्वे च गोमयालेप्तभूतले ७४
ग्रश्मानं स्थापयेद्धीमान् प्रोक्षयेदस्त्रवारिणा
धर्मासनं समभ्यर्च्य चंदनोदैश्च लेपनम् ७५
ग्रातिष्टेमेति मंत्रेरा गौरीबीजमनुस्मरन्
ग्रश्मोपरि समारोप्य गौरी दक्षेपदांबुजम् ७६
ततः शिष्यं समाहूय ग्राहयेद्देविपादुकौ
त्रयंबिकेति तुरयामिति प्रदक्षिणोऽग्निं समाचरेत् ७७
स्वस्थाने पादुकौ न्यस्य धूपदीपं नयेद्गुरुः
ग्रादिशैवकुले जातो पट्टनं धयुतः ततः ७८
सांगुळियकराभ्यां च लाजान् संगृह्य देशिकः
तयोरुभयहस्तेन इयं नारीति मंत्रतः ७९
लाजं हुत्वा तु ईशेन पूर्वमार्गेरा पूजयेत्
गौरिगायत्रिमंत्रेरा पुनः प++जपेद्गुरुः ८०
तथैव लाजं हुत्वा तु यजनं पूर्ववद्बुधः
विश्वा उदेति मंत्रेरा प्रदक्षिरामथाचरेत् ८१
पूर्ववद्यजनं कृत्वा तथालाजं हुनेत् क्रमात्
व्याहृतीभिः हुनेदाज्यं शतं मूलेन मंत्रतः ८२
संपातपातद्रव्येरा स्विष्टकृद्धोममाचरेत्
मेक्षरोन समायुक्तं एकीकृत्य विशेषतः ८३

द्रव्यञ्च बहुरूपेण हव्यवाहेन होमयेत्
अनुयाजाख्यसमिधं होमयेदस्त्रतः ततः ८४
जयादिरभ्याधानं च क्रमाद्राष्ट्रभृतं हुनेत्
रुद्रः पञ्चानामिति मंत्रेण पुष्करं चैव संस्पृशेत् ८५
स्वस्तिनो इति मंत्रांते अस्त्रमंत्रं शतं हुनेत्
मिन्दाहुतिं च जुहुयात् व्याहृतीभिश्च होमयेत् ८६
यदस्येति च मंत्रेण व्याहृत्यं ते च हूयते
स्त्रुवं स्त्रुचं च संगृह्य हस्ताभ्यां तु विशेषतः ८७
आप्यायतामित्यस्त्रेण स्त्रुवमाज्येन पूरयेत्
स्त्रुचि दक्षिणहस्तस्थं स्त्रुवञ्चाधोमुखं नयेत् ८८
ततः उत्थायविधिवत् आसनात् सुस्थले स्थितः
वसुभ्यो इति मंत्रेण वक्त्रैकीकरणं ततः ८९
एवं मंत्रं समुच्चार्य स्त्रावयेदग्निमध्यमे
ततो प्रभूतहविषं ददेद्धूपं च दीपकम् ९०
शंभोर्दत्वा तु भस्मानि तांबूलं च निवेदयेत्
वीथिसंमार्जनं कृत्वा प्रोक्षयेत् शुद्धवारिणा ९१
चित्रवस्त्रैश्च गंधैश्च फलैः पूर्णकुंभकैः
कदळीक्रमुकैश्चैव कन्दुकैः हिमतोयकैः ९२
दर्पणं केशशोधं च कल्पयेज्ञातिचंपकैः
उशिरैर्हरिभेषं च ++++++ ९३
++++++ दीपं च गृहद्वारं प्रति प्रति
महेशं वीरशक्तिं च रंगे वा गब्धिकेऽपि वा ९४
शिबिके रोपयेत्तत्र ततो वलयसंयुतम्
तन्तुना बंधयेद्धीमान् दृढवत्परिचारकः ९५
वस्त्रेण गंधमाल्यादि भूषणाद्यैरलंकृतम्
नानादीपसमायुक्तं नानाभक्तजनैर्युतम् ९६

नाना छत्रसमायुक्तं नानाध्वजसमन्वितम्
नानापिञ्छसमायुक्तं नानावाद्यसमन्वितम् ९७
चामरं ताळवृन्तं दासीहस्ते समर्पयेत्
महाशैवो तदन्ते तु तदन्ते भूसुरास्तथा ९८
तदंते रुद्रगणिका सर्वालंकारसंयुताः
तदन्ते गायकाः प्रोक्ताः तदंते नृत्तगा व्रजेत् ९९
तदन्ते क्षत्रियाश्चैव तदन्ते वैश्यशूद्रकाः
महेशदक्षिणे पार्श्वे वीरशक्तिः समाचरेत् १००
पृष्टपार्श्वे विशेषेण चण्डेश्वरसमन्वितः
चातुर्वर्णोद्भवाभक्ताः व्रजेच्चानुक्रमेण तु १०१
तयोः पृष्टप्रदेशे च प्रतिप्रयाणमंत्रितान्
ये वध्वश्चन्द्रमित्यादि स्वस्तिदांतं शनैः क्रमात् १०२
पञ्चांगभूषणोपेतो आचार्यो मूर्तिपैर्जपेत्
उद्वाहाग्निं समादाय देवस्याग्रे नयेत्सह १०३
पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः
कृत्वा प्रदक्षिणं ह्येवं आलयं तु समाविशेत् १०४
औपासनाग्निमारभ्य चतुर्थदिवसांतिकम्
सद्येन समिधो हुत्वा वामेनाज्यं हुनेत्क्रमात् १०५
अघोरेण चरुं हुत्वा प्रत्येकं पञ्चविंशतिः
द्रव्यं प्रतिविशेषेण व्याहृत्याहुतिमाचरेत् १०६
अग्नेर्वृतपतेर्मन्त्रं वायोर्वृतपते इति
आदित्यव्रतपते मन्त्रं व्रतानां व्रतपते जपेत् १०७
औदुंबरं च चण्डं च गन्धानुलिप्तवाससम्
एवं गृहीत्वा दण्डं च शयने स्थापयेत्ततः १०८
विशेच्छय्यागृहे रम्ये भौ++स्थापयेद्गुरुः
प्रातः काले समारभ्य सायं प्रातः हुनेत्ततः १०९

इत्थं चोभौ त्रिरात्रं च डोलारोहणमाचरेत्
चतुर्थदिवसे रात्रौ वह्निकार्यं क्रमात्कुरु ११०
यस्त्वा हृदादिमंत्रेण अग्ने प्राय इति स्ततः
वायो प्रायेण आदित्य प्रजापते हुनेत्क्रमात् १११
समे षोडशमूलेन पञ्चब्रह्मषडंगकैः
विद्यांगैः मूलमंत्रेण पाशुपतेन मंत्रतः ११२
अस्त्रमंत्रेण आज्येन प्रत्येकं तु शताहुतिम्
देव +++ ति मंत्रेण जुहुयात्तच्चरुं ततः ११३
हिरण्यं पार्वती मूर्ध्नि निधायक्रमशस्ततः
व्याहृतीभिश्च मंत्रैस्तु प्रणवेन हुनेत् गुरुः ११४
अर्यम्नो इति मंत्रेण प्रदक्षिणोऽग्निं समाचरेत्
जयादिरभ्याधानं च क्रमाद्राष्ट्रभृतं हुनेत् ११५
++++ सा उद्वाहाग्निं प्रपूजयेत्
अग्निर्वायुरादित्य व्रता इति वदेद्गुरुः ११६
ऊर्जेति दण्डमुत्थाप्य प्रजावानिति प्रक्षिपेत्
निवेद्यधूपदीपञ्च तांबूलं तु निवेदयेत् ११७
स्नपनं कारयेत् देवं देवीं च परिपूजयेत्
शयने विन्यसेद्देवीं गौरी युक्तं तु वर्मणा ११८
भक्ष्यं भोज्यं च तांबूलं दापयेत्तु विचक्षणः
पञ्चमे दिवसे चैव चूर्णोत्सवमथाचरेत् ११९
महेशं शिबिकारूढं गब्लिके वीरशक्तिकाम्
सर्ववाद्यसमायुक्तं तीर्थतीरं समाविशेत् १२०
तीर्थतीरे प्रपामध्ये स्थापयेत्तु विचक्षणः
स तैलं रजनीं दत्वा दूर्वाग्रं बिंबमूर्धनि १२१
पश्चाद्भक्तजनैभ्यर्च्य दत्वा तैलं हरिद्रकम्
ततो औदुंबरं प्राप्य पुण्याहं वाचयेत्ततः १२२

नववस्त्रेण संवेष्ट्य गंधपुष्पैस्समर्चयेत्
भक्ष्यं भोज्यं च पेयं च ऊर्जस्वेति निवेदयेत् १२३
धूपदीपं हृदा दत्वा पाद्यमाचमनार्घ्यकम्
यथार्थ इति मंत्रेण प्रदक्षिणमथाचरेत् १२४
जायापती जानुदघ्नं उदकेऽवतीर्य च
उदक्प्रदेशे वा प्राचीने आहतेन तु वाससा १२५
मत्स्यान् गृहीत्वा विधिवत् औदुंबरं समाविशेत्
बृहती फलं वा मत्स्यं वा दीर्घायुत्वायुवर्चसा १२६
इति मंत्रेण मतिमान् बकानां प्रक्षिपेत्बलिम्
महेश्वराय देव्यैश्च दत्वा धूपदीपकम् १२७
गंगां गोदावरीं सिन्धुं ताम्रपर्णां सरस्वतीम्
नर्मदां चैव यमुनां कावेरीं चैव गोमतीम् १२८
आवाह्य चैक कुंभे तु गंधतोयप्रपूरिते
गणमष्टादशानां तु त्रयस्त्रिंशाधिदैवताः १२९
इन्द्रादिलोकपालांश्च आहूयेच्छिवसंनिधौ
त्यक्त्वा सूत्रं प्रतियुतो शाखायां योजयेद्बुधः १३०
नवतीर्थं समादाय वारिमध्ये नयेद्गुरुः
महेश्वराय देव्यै च तीर्थेषु स्नानमाचरेत् १३१
आचार्योक्तं तु संस्थाप्य तीर्थमुद्वास्य तान्बुधः
सर्वालंकारसंयुक्तं नैवेद्यं धूपदीपकृत् १३२
पूजयित्वा यथान्यायं ततो मंगळवाचकैः
नानाछत्रसमायुक्तैः वाद्यघोषसमन्वितैः १३३
नानादीपसमायुक्तैः नानापिञ्छसमन्वितैः
वीथि प्रदक्षिणं कृत्वा आलयं तु प्रवेशयेत् १३४
आस्थानमण्डपे तत्र रत्नसिह्मासनेऽपि च
प्रभामध्ये स्थिते देवौ सर्वाभरणभूषितौ १३५

तत्पावकं समादाय तत्र मध्ये नयेद्गुरुः
विघ्नेशयजनं कुर्यात् पुण्याहं वाचयेत्ततः १३६
अग्निकार्यविधिं कृत्वा अग्निमूर्धादिमंत्रतः
मूलेन चाज्यं हुत्वा तु ++ रेण शताहुतिः १३७
पूर्णाहुतिं तु मूलेन वसुभ्यो इति मंत्रतः
जयादिरभ्याथानं च क्रमाद्राष्ट्रभृतं हुनेत् १३८
महेश्वरस्य हृदये उद्वाहाग्निं नियोजयेत्
गंधपुष्पैस्समभ्यर्च्य नैवेद्यं दापयेत्ततः १३९
पाद्यमाचमनं चार्घ्यं धूपदीपं ददेद्गुरुः
नीराजनं ततः कृत्वा भस्मतांबूलमाचरेत् १४०
तण्डुलं रजनीयुक्तं हिमतोयेन सेवितम्
आयुष्मंतेति मंत्रेण देवस्य मकुटे न्यसेत् १४१
स्वस्तिनो इति मंत्रेण पुष्पं दत्वा विचक्षणः
ततो गर्भगृहं गत्वा स्नापयेत्परमेश्वरम् १४२
प्रभूतहविषं दत्वा भोगांगं संप्रपूजयेत्
विपरीतक्रिया चैव आभिचारा भवंति ते १४३
उत्तमं दशनिष्कं तु मध्यमं तु तदर्धकम्
तदूर्ध्वं कन्यसं चैव गृहोपकरणानि च १४४
भृत्यगोभूमिधान्यानि देशिकाय प्रदापयेत्
जप्तॄणां परिचाराणां यथा शक्त्या तु दक्षिणा १४५
आयुः श्रीकीर्तिसंयुक्तो आसप्तकुलजैर्युतः
इह लोके सुखं प्राप्य सोऽन्ते सायुज्यमाप्नुयात् १४६
उद्वाहस्य क्रमं प्रोक्तं महा पूजा विधिं शृणु

इत्यंशुमान् तंत्रे उद्वाहविधिपटलः पूर्णः

# महापूजाविधि

अथ महापूजाविधिः आरभ्यते
महापूजाविधिं वक्ष्ये श्रूयतं रविसत्तम
सर्वरोगविनाशार्थं सर्वशत्रुविनाशनम् १
सर्वपापप्रशमनं महापातकनाशनम्
ब्रह्महत्यादिदोषघ्नं राष्ट्रदुर्भिक्षनाशनम् २
पुत्रपौत्रप्रवृध्यर्थं धनधान्यविवर्धनम्
एवं फलप्रदानार्थं महापूजाविधिक्रमम् ३
राजाभिषेकसमये तस्य जन्म दिनेऽपि वा
युद्धारंभे च तत्काले मासनक्षत्रकेऽपि च ४
आर्द्रजक्षे विशेषेण नैवेद्यस्य विधिक्रमम्
सितशाली रक्तशाली सौगंधिचमथोत्तमः ५
शालीनामुत्तमं ++++क्तं यववेणुविमिश्रितम्
अन्येषां व्रीहिरथवा पक्षीणामपरित्यजेत् ६
शतद्वयं पञ्चविंशत् व्रीहयः शक्तिरुच्यते
शक्तिद्वयं तलं प्रोक्तं प्रकृच्छ्रं स्यात्तलद्वयम् ७
तद्वयं प्रसृतिं प्रोक्तं तद्वयं कुडुबं भवेत्
कुडुबस्य चतुर्थं स्यात् प्रस्थमित्यभिधीयते ८
तद्वयं चरुरित्युक्तं पात्रमित्यभिधीयते
असनं तद्वयं प्रोक्तं तद्वयं शिवमुच्यते ९
तद्वयं द्रोणमित्युक्तं खारि तद्वयमुच्यते
खारित्रयं तु भारं स्यात् देवं स्यात्परिमाणकम् १०
भारादि नवभारांतमधमादि त्रयं त्रयम्
नैमित्तिके तु नैवेद्यं नवयासमुदाहृतम् ११
प्रस्थस्य द्विफलं प्रोक्तं माद्रं वापत्वमेव वा
नवणेन समायुक्तं मरीची जीरकैर्युतम् १२

सिताचलचणं चैव आम्रेणैव समाचरेत्
इक्षुखण्डसमायुक्तं शर्करेण विमिश्रितम्  १३
तक्रेणैव समायुक्तं योजयेत्तु विशेषतः
इक्षुखण्डसमायुक्तं शर्करेण विमिश्रितम्  १४
एवं पक्त्वा तु धूपं तु नाळिकेरसमन्वितम्
द्वात्रिंशदंशमेवं स्यात् गोघृतं तु परिग्रहेत्  १५
द्वादशांसं पयस्यैव तत्समं गुळसंयुतम्
तध्यष्टांशकमेवस्स्यात् गुल्माष्टं तु कलांशकम्  १६
पनसस्य फलांश्चैव परिपक्वाश्च वै फलाः
कदळी फलमेवं स्यात् यथेष्टं तु समन्वितम्  १७
पचनालयक्रमं प्रोक्तं पूजयेत्तु समाचरेत्
आचार्यशिष्यसंयुक्तं पूर्ववत्स्नानमाचरेत्  १८
भस्मन्यासादिकं कृत्वा विघ्नेश्वरं समर्चयेत्
पुण्याहं वाचयेद्धीमान् शंखपूजांसमाचरेत्  १९
पञ्चगव्यसमायुक्तं पञ्चामृतसमन्वितम्
अष्टोत्तरशतं चैव स्नपनं तु समाचरेत्  २०
कलशद्रव्याणि संयुक्तं पूर्वोक्तविधिना सह
वल्कलोदकं प्रोक्तं गन्धोदकं तथैव च  २१
धौकूदकमिति प्रोक्तं बीजोदकं तथैव च
मार्जनोदकमिति प्रोक्तं परिमार्जनमुच्यते  २२
कषायमूलमित्युक्तं फलोदकमितिस्मृतम्
दत्तद्रव्यमिति प्रोक्तं पूर्वोक्तविधिना सह  २३
नीराजनसमायुक्तं तण्डुलं नारिकेळकम्
घृतेनैव विशेषेण ग्रामयेत्तु सदाशिवः  २४
स्नानां तु हुतं कुर्यात् पूर्णाहुतिमथाचरेत्
कुंभे शंभुं समभ्यर्च्य महाभिषेकं समाचरेत्  २५

नित्यसत्यावसाने तु स्नानकर्मविधीयते
गंधतैलं समभ्यर्च्य शंखध्वनि समन्वितम् २६
पुण्याहं वाचयेद्धीमान् गंधतैलाभिषेचनम्
भस्मना तु समालिप्य बिल्वपत्रैश्च मर्दयेत् २७
मृदोदकेन संस्नाप्य पिष्टैरामलकेन तु
आलिप्य देवदेवेशं गंधतोयाभिषेचयेत् २८
धूपं दत्वा हृदा मंत्री पञ्चगव्याभिषेचनम्
शुद्धोदकेन संस्नाप्य पुष्पं मूर्धनि दापयेत् २९
पञ्चामृतादि संयुक्तं स्नापयेत्पूर्ववद्बुधः
शुद्धतोयेन संस्नाप्य गंधपुष्पैः समर्चयेत् ३०
वल्कलोदकसंस्नाप्य शुद्धतोयाभिषेचयेत्
वस्त्रैराभरणैर्माल्यैरलंकृत्य विशेषतः ३१
शिवकुंभं समुद्धृत्य प्रथमावरणान्वितम्
सर्वालंकारसंयुक्तं गर्भगेहं समाविशेत् ३२
धूपदीपादिकं दत्वा संस्नाप्य कलशोदकैः
मंत्रपुष्पं ततो दत्वा पायसान्नं निवेदयेत् ३३
स्थापितस्य क्रमेणैव तोयस्नानांतरांतके
क्षीरं दधिघृतं चैव स्नापयेत्परमेश्वरम् ३४
द्वितीयावरणं चैव कलशैस्नापयेत्क्रमात्
पुष्पं मूर्धनि विन्यस्य कृसरान्नं निवेदयेत् ३५
धूपदीपं ततो दत्वा आरार्तिकमथाचरेत्
फलेनापूर्य देवेशं क्षौद्रेणैव तु सेचयेत् ३६
धूपदीपं ततो दत्वा नाळिकेर रसेन च
शुद्धोदकेन संस्नाप्य पुष्पं मूर्धनि दापयेत् ३७
तृतीयावरणं चैव कलशेन स्नापयेत्क्रमात्
संस्नाप्य देवदेवेशं गुळान्नं च निवेदयेत् ३८

धूपदीपं हृदा दत्वा ग्रारार्तिकमथाचरेत्
शर्करेण समालिप्य नालिकेरञ्च विन्यसेत् ३९
धूपदीपं ततो दत्वा इक्षोदैरभिषेचयेत्
शुद्धोदकेन संस्नाप्य चतुर्थावरणोदकैः ४०
संस्नाप्य देवदेवेशं मुद्गान्नं तु निवेदयेत्
धूपदीपं हृदा दत्वा ग्रारार्तिकं ग्रथाचरेत् ४१
चंदनेन समालिप्य हिमतोयाभिषेचनम्
पञ्चमावरणं चैव कलशैस्स्नापयेत्क्रमात् ४२
मंत्रपुष्पं ततो दत्वा मंत्रान्नं च निवेदयेत्
सर्वालंकारसंयुक्तं भूषयेद्भूषणार्हकैः ४३
व्रीहीन् सम्यक्परिस्तीर्य वस्त्रेण परिच्छादयेत्
तस्योर्ध्वे कदलीपत्रं पूर्वाग्रंचोत्तरा भृशम् ४४
तस्योर्ध्वे तु विशेषेण घृतेनैव तु सेचयेत्
उर्व्यालक्षणसंयुक्तं पत्रमन्नेन पूरयेत् ४५
त्रिमेखलसमायुक्तं उपदंशं समाचरेत्
मध्ये तटाकसंयुक्तं पायसादि विशेषतः ४६
देवस्यत्वेति मंत्रेण नैवेद्यं दापयेत्ततः
पानीयाचमनं दत्वा मुखवासं समाचरेत् ४७
मध्ये तटाकसंयुक्तं पायसादि विशेषतः
नित्याग्नियजनं कुर्यात् मूलबिंबं समर्चयेत् ४८
वैश्वदेवाग्निनः कुर्यात् पूर्वोक्तविधिना सह
ग्रयुतं लक्षसाहस्त्रं संख्यादीनि विशेषतः ४९
डोमांते भूतबलिं दत्वा सन्ध्या शेषं समाचरेत्
नित्याग्नियजनं कुर्यात् मूलबिंबे समर्चयेत् ५०
एवं यः कुरुते मर्त्यः स पुरयां गतिमाप्नुयात्
इहैव धनवान् श्रीमान् सोऽन्ते सायुज्यमाप्नुयात् ५१

इत्यंशुमान् तंत्रे महापूजाविधिपटलः

## अर्धेशार्चनविधि

अथ अर्धेशार्चनपटलः प्रारभ्यते १
अर्धेशार्चनं वक्ष्ये शृणुष्व रविसत्तम
आयुः श्रीकीर्तिसिद्धिं च विजयं च सुखप्रदम् २
पञ्चपातकनाशार्थं पूजयेदंबिकेश्वरम्
अर्चनं द्विविधं प्रोक्तं स्थूलं सूक्ष्ममिति स्मृतम् ३
स्थूलं द्विविधमित्याहुः भोगांगं च लयांगकम्
सूक्ष्ममष्टविधं प्रोक्तं द्विविधं तमुदाहृतम् ४
ग्रामे वा नगरे वापि पत्तने राजधानिके
स्थूप्यस्थूलमिति प्रोक्तं सूक्ष्मं स्वस्वगृहार्चनम् ५
स्थूलं लौकिकमार्गेण सूक्ष्मं शांभवमार्गतः
अर्चयेदर्धनारीशं स्थूलं सूक्ष्म विधानतः ६
शैलजे लोहजे वापि परे वा भित्तिचित्रके
स्थूलं वा सूक्ष्मबिंबं वा कल्पयेत्कल्पवित्तमः ७
चित्रबिंबे विशेषोऽस्ति कर्मार्चप्रतिमान्वितम्
कन्यैश्च प्रतिमादीनां कर्मार्जनविवर्जितम् ८
एवं क्रमेण संस्थाप्य अर्धदत्तांबिकेश्वरम्
ब्राह्मे मुहूर्ते चोत्थाय गुरुस्मरणपूर्वकम् ९
हृदयांबुजमध्ये तु स्थाप्य दधांबिकेश्वरम्
अभ्यर्च्य पुष्पं गंधाद्यैः मनसा कल्पदेशिकः १०
पश्चाद्ग्रामाद्बहिर्गत्वा विण्मूत्रं तु विसर्जयेत्
पादप्रक्षाळनं कृत्वा आचम्य विधिना बुधः ११
दन्तसंशोनादीनि पूर्वोक्तविधिना कुरु
पश्चात्स्नानत्रयं कृत्वा आर्द्रवस्त्रं विसर्जयेत् १२

धौतवस्त्रेण संवेष्ट्य संधिद्वयमथाचरेत्
पादप्रक्षाळनं कृत्वा पुष्पं संगृह्य पाणिना १३
हर्म्यप्रदक्षिणं कृत्वा पुष्पं दत्वा कृतांजलिम्
उत्तराभिमुखो भूत्वा कच्छपासनचोर्मतः १४
रुचिरासनसंयुक्तं भस्मन्यासं समाचरेत्
प्रणवार्घ्यं तु संकल्प्य पार्ष्णीपादत्रयं कुरु १५
भूतशुद्धिं पुरा कृत्वा सकळी करणं कुरु
करन्यासांगुलिन्यासमंगन्यासमतः परम् १६
शृंखलं मातृकान्यासं गोळका कुंकुमा न्यसेत्
अष्टत्रिंशत् कलान्यासं पञ्चविंशत्कलान्यसेत् १७
श्रीकण्ठादि क्रमं न्यस्त्वा अन्तर्यागमथाचरेत्
स्वदेहमर्धनारीशं सोऽहं भावेन पूजयेत् १८
देहशुद्धमिति प्रोक्तं स्थानशुद्धिं ततः शृणु
भूतलं हस्तमात्रेण गोमयेनानुलेपयेत् १९
निरीक्ष्य प्रेक्ष्य हृदि नाम ध्यात्वा धारिणीं यजेत्
भूमि पुत्रेति मंत्रेण पश्चात्संप्रोक्ष्य भूतले २०
स्थानशुद्धिरिति प्रोक्तं द्रव्यशुद्धिरतः परम्
क्षाळनं शंखपात्रादि हृदयेन तु मंत्रतः २१
अन्यैश्च यजनैः द्रव्यैः निरीक्ष्य प्रोक्ष्य मंत्रतः
द्रव्यशुद्धिरिति प्रोक्तं पुण्याहं वाचयेत्ततः २२
पञ्चगव्यं तु संकल्प्य पञ्चामृतं तथैव च
अन्यैश्च स्नपन द्रव्यैः विधिनास्थाप्य देशिकः २३
पश्चाद्दिनकरं पूज्य पूर्वोक्तविधिना कुरु
यजेत्सौरादि चण्डांतं लयांगमिति विद्यते २४
द्वारादि चण्डपर्यन्तं भोगांगमिति विद्यते
विघ्नेश्वरं समभ्यर्च्य फलभक्ष्यादिकं ददेत् २५

अपर्णातनयस्तुभ्यं संततं भक्षणप्रिय
उमार्धेशार्चनान्ते यन्निर्विघ्नत्वं प्रसीद मे २६
पृष्टहं पूजयेत्पश्चात् गंधपुष्पादिभिः क्रमात्
द्वारपूजां ततः कृत्वा जयंतं चण्डरूपिणीम् २७
द्वारस्योभयपार्श्वे तु अर्चयेत्तु स्वनामतः
अन्यैश्च द्वारदेशांश्च द्वारं पूर्वोक्तवद्यजेत् २८
घण्टापार्ष्णिं च पुष्पैश्च त्रैविघ्नोत्साद्य देशिकः
महास्त्रं पुरतोऽभ्यर्च्य कवाटोद्घाटनं कुरु २९
निरीक्ष्य हृदयेनैव प्रविशेदर्धमण्डपम्
शुद्धद्वारस्य मध्ये तु +++++ ३०
मंत्रं समुच्चार्य गर्भगेहं विशेद्गुरुः
देवाग्रे भीमरुद्रं तु गंधपुष्पादिनार्चयेत् ३१
निशाचरांतको देव देवेशं यजनार्थकम्
शुद्धद्वारस्य वामे तु गच्छत्वं हि प्रसीद तु ३२
नवपुष्पं तु संगृह्य बिंबमध्ये तु निक्षिपेत्
निर्माल्यं तु विसृज्याथ चण्डेशार्थं प्रवेशयेत् ३३
बिंबशुद्धिं ततः कृत्वा स्थलशुद्धिं ततः कुरु
आवाहनादिस्नानांतं कल्पयेद्विमलासनम् ३४
अर्चनादि निवेद्यांतं कल्पयेत्पद्मासनम्
सव्ये नागार्कपुष्पं च वामे त्रिचूडमेव च ३५
कपालशूलं सव्ये तु वामे पाशोत्पलो घृतम्
व्याघ्रचर्मांबरं सव्ये वामे पीतांबरान्वितम् ३६
दक्षिणा कुंचितं पादं वामपादं तु सुस्थितम्
हरार्धं रक्तवर्णं तु उमार्धं श्यामवर्णकम् ३७
पत्रं तु वामकर्णे तु दक्षिणेनात्र कुण्डलम्
एवं ध्यायेदुमार्धेशं मंत्रं वक्ष्ये यथाक्रमम् ३८

वह्निबीजं समुद्धृत्य सोमस्याध्यक्षरैर्युतम्
अष्टवर्षं द्वितीयं तु भांतवर्णसमन्वितम् ३९
पुनवह्निसमायुक्तं वायुबीजसमन्वितम्
षष्टस्वरसमायुक्तं बीजनादसमन्वितम् ४०
सर्वसिद्धिप्रदं ह्येतत् मंत्रं शक्तिशिवात्मकम्
ऋषिकाश्यपसंयुक्तं छंदोऽनुष्टथैव च ४१
देवताश्च उमार्धेश ऋषिच्छंदाधिदेवताः
उमार्धेशाथ विद्महे रुचोत्पलाय धीमहि ४१
तन्नो मार्धपदैर्युक्तः प्रचोदयादिति स्मृतम्
एवं मंत्रैः समभ्यर्च्य ब्रह्मांगं संप्रकल्पयेत् ४२
मंत्रैराद्यक्षरेणैव ह्रस्वदीर्घं च कल्पयेत्
मूर्ध्निवक्त्रं च हृदयं गुह्यं पादस्तथैव च ४३
नमोऽन्तैश्च समायुक्तं पञ्चब्रह्मप्रकल्पयेत्
हृत् शिरश्च शिखा वर्म नेत्रास्त्रेणैव बुद्धिमान् ४४
नमस्वाहा वषट् वौषट् हुंफडांतांगकल्पयेत्
एतन्मंत्रैस्समभ्यर्च्य कल्पयेद्विमलासनम् ४५
तस्योर्ध्वे चार्धनारीशं पूजयेत् तत्स्वनामतः
धूपदीपादिकं दत्वा स्नानांगैरभिषेचयेत् ४६
वस्त्रखण्डेन संमृज्य पुष्पं मूर्ध्नौ विनिक्षिपेत्
चित्रवस्त्रैरलंकृत्य भूषयेद्भूषणार्हकैः ४७
गंधमाल्यैरलंकृत्य पद्मासनमथार्चयेत्
तस्योर्ध्वे मूर्तिमावाह्य धूपदीपादिकं ददेत् ४८
लक्ष्मी श्रुतिस्मृतिर्मेधा प्रज्ञाशांति पराजिता
पूर्वादीशानपर्यन्तमर्च्चयेत् तत्स्वनामतः ४९
अनंतादि शिखण्ड्यंतं अन्तराळैस्समर्चयेत्
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ५०

इन्द्रादिलोकपालांतं +++++
+++++ चैव शृंगिणी ५१
वादिनी ह्लादिनी चैव वज्रिणी पुष्पधारिणी
श्रियगश्वादिनी चैव इन्द्रादिष्वंतराळके ५२
द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु
वज्रादि पद्मपर्यन्तं अर्चयेत्तत्स्वनामतः ५३
प्रसन्नामंगळा चैव गोपात्मा च गुणात्मना
विकृती विश्वरूपी च जंभिनी स्तंभिनी तथा ५४
शांतिनी मोहिनी चैव वज्रादिष्वंतराळके
स्वनाममंत्रैरभ्यर्च्य धूपदीपादिकं ददेत् ५५
तृतीयावरणं प्रोक्तं अभ्यर्च्य वरणत्रयम्
नैवेद्यं दापयेत्पश्चात् मुखवासं ददेत्प्रभोः ५६
पश्चात्तीर्थाग्निकर्मा च पूर्वोक्तविधिना कुरु
अत्र किंचिद्विशेषोऽस्ति वह्निमध्ये शिवासनम् ५७
संकल्पस्य च नारीशं परिवारसमन्वितम्
अभ्यच्य गंधपुष्पाद्यैः होमं पूर्ववदाचरेत् ५८
मूलबिंबे तु संयोज्य नित्योत्सवमथाचरेत्
यदर्थं मूलबिंबं स्यात् तद्रूपं बलिमूर्तिनम् ५९
कुर्यादुत्सवमूर्तिं च ++++++++++
इतः परं प्रति एकपत्रिका नास्ति - ग्रन्थांतरम् ६०
इत्यंशुमान् तंत्रे अर्धेशार्चनविधि पटलः

## बलिविधानविधि

मध्ये बलिविधानं च सर्वशांतिकरं नृणाम् १
आयुष्करं पुष्टिकरं श्रीकरं रोगनाशनम्
सर्वशत्रुक्षयकरं सर्वाभीष्टफलप्रदम् २

ग्रहपीडाविनाशार्थं भूतादिग्रहनाशनम्
अष्टकर्मावसाने तु शांत्यर्थं बलिमाचरेत्  ३
देवाग्रे मण्डपं कृत्वा पूर्वोक्तविधिना सह
गोमयालेपनं कृत्वा प्रोक्षयेदस्त्रमंत्रतः  ४
मण्डपस्य तु मध्ये तु कल्पयेद्बलिमण्डपम्
तस्य दक्षिणभागे तु षट्कोणं होममण्डलम्  ५
षट्कोणं वृतमग्रं वा पञ्चवर्णैरलंकृतम्
कोणाग्रं रक्तवर्णाभं मध्येऽग्रं समवर्णकम्  ६
नवकोष्ठं तु संकल्प्य पत्रमष्टदळान्वितम्
कर्णिका सितवर्णेन केसरं हेमवर्णकम्  ७
दळं वै रत्नवर्णाभं तद्बाह्ये कृष्णमण्डलम्
तद्बाह्ये चतुरश्रं तु पञ्चवर्णैरलंकृतम्  ८
एवमष्टदळं पद्मं कृत्वा कोष्टं प्रति प्रति
व्योमस्यापि पदेनेव दळं प्रति समर्चयेत्  ९
बलिहोममण्डलांतं तु साध्यस्थानमुदाहृतम्
वस्वस्त्रमण्डलं कल्प्य कोणरक्तनिभं भवेत्  १०
चतुरश्रसमोपेतं पञ्चचूर्णैरलंकृतम्
तस्योर्ध्वे श्चासनं न्यस्त्वा स्वासनं प्राङ्मुखाननम्  ११
शिवमंत्रं शतं जप्त्वा शिवध्यानपरायणः
ब्राह्मणान् रुद्रसंख्या च त्र्यंबकमनुं जपेत्  १२
खारित्रयं तदर्धं वा +++ येत् +यतण्डुलैः
लिंगं प्रति विशेषेण द्विप्रस्थं तण्डुलोदनम्  १३
द्वादशांगुळविस्तारं उत्सेधं चैव तत्समम्
अग्रमग्न्यंगुलं प्रोक्तं लिंगस्याकृतिवत्कुरु  १४
अतिरिक्तमयं लिंगं रक्तपुष्पैस्समर्चयेत्
यष्टि दीपसमोपेतं लिंगमूर्ध्नीति विन्यसेत्  १५

एकाशीति पदे मध्ये स्थापयेत्तु महाशिवम्
सदाशिवं यजेद्विद्वान् अतिरिक्तनिभान्वितम् १६
पश्चात्क्षुद्रशिवार्थं च तण्डुलं कुडुपं पचेत्
लिंगस्याकृतिवत् कृत्वा यष्टिदीपसमन्वितम् १७
शालिपिष्टे मयेनैव प्रतिरूपं तु कारयेत्
द्वादशांगुलमायामं अथवा षोडशांगुलम् १८
तदायामं तदंशं तु गुल्फजानुगळं शिरम्
एकांशेनैव कर्तव्यं पद्मं हृन्नाभिमंत्रकम् १९
युगांशेनैव कर्तव्यं ऊरुमानद्वयंशकम्
जंघाचोरुसमं चैव बाहूरुद्वयदीर्घकम् २०
शेषं युक्त्या प्रकर्तव्यं सर्वावयवसंयुतम्
पञ्चवर्णैरलंकृत्य उक्तस्थानेषु बुद्धिमान् २१
एवं क्रमेण संपाद्य पश्चात्कर्मसमाचरेत्
सकळीकरणं कृत्वा सामान्यं चार्घ्यकल्पयेत् २२
मण्डलं तु समभ्यर्च्य व्योमव्यापिपदेन तु
मध्यकोष्टस्य मध्ये तु विन्यसेत्तु महाशिवम् २३
दळेष्वल्पशिवं न्यस्त्वा वामाक्षिपरितो यजेत्
कालघ्नं कामदहनं दक्षेशं गजनिग्रहम् २४
त्रिपुरघ्नमघोरं च वृषारूढं सुखासनम्
बाह्याष्टपद्ममध्ये तु मूर्त्यष्टौ संप्रपूजयेत् २५
विद्येशाश्च गणेशाश्च लोकपालाष्टमूर्तयः
वसवश्चैव भूतानां नागाश्चैव तथैव च २६
दळैश्चाष्टांबुजैस्स्थाप्य गंधपुष्पैस्समर्चयेत्
प्रतिरूपं समादाय स्थापयेदष्टदिक्षु च २७
रक्तकुंभसमोपेतं तद्वग्रे विन्यसेच्छिवम्
अर्चयेद्गन्धपुष्पैश्च दुर्गामात्र समन्वितम् २८

प्रतिरूपाष्टकं यष्ट्वा यजन्तविजयं यथा
उग्रो मधुकरो भीमं मांस भक्षो बलिप्रियः २९
रक्तपानप्रियं चाष्ट भूतनाथे समर्चयेत्
स्थापयेत् पूर्वदेशे तु मंत्रखड्गं समर्चयेत् ३०
ध्यात्वा पाशुपतं देवं अर्चयेन्मूलमंत्रतः
वह्निं संपूज्य विधिवत् अर्चयेत्तु सदाशिवम् ३१
नित्यं होमविधानेन होमं कुर्याद्विचक्षणः
समिदाज्येन चरुणा हुत्वा तन्मूलमंत्रतः ३२
अभ्यर्च्य देवदेवेशं पश्चान्नीराजनं ददेत्
मूलेन भसितं दद्यात् बलिं विज्ञाप्य देशिकः ३३
पश्चात् साध्यं समालोक्य स्वासीनश्चोत्तराननः
भस्मेन व्यापकं कुर्यात् अंगन्यासं तु कारयेत् ३४
शिवमंत्रं शतं जप्त्वा दिग्बंधं चास्त्रमंत्रतः
ज्वल ++ पेतं शिवं संग्राह्य पाणिना ३५
बहुरूपमनुस्मृत्य साध्यस्य शिरसोपरि
त्रिधा संभ्रामयेद्विद्वान् पुष्पैर्नाराजनं ददेत् ३६
वह्निबीजमनुस्मृत्य शिवाग्नौ तु विनिक्षिपेत्
मध्यादीशानपर्यन्तं मण्डलस्थं शिवं प्रति ३७
बहुरूपमनुस्मृत्य वह्निमध्ये विनिक्षिपेत्
भ्रामयेद्रक्ततोयेन वह्निमण्डलबाह्यतः ३८
पश्चात्साध्यस्य परितः स्त्रावयेद्रक्ततोयकैः
अघोरमनुना जप्त्वा दिग्बंधं चास्त्रमंत्रतः ३९
रक्तकुंभसमोपेतं प्रतिरूपं शिवाष्टकम्
ज्वलद्दीपसमोपेतं साध्यस्य शिरसोपरि ४०
त्रिधा संभ्रामयेद्धीमान् रक्तपुष्पैस्समर्चयेत्
रक्तोदनं बलिं दद्यात् अजं शस्त्रेण संहरेत् ४१

भूतादि सर्वदेवाय बलिं गृह्यामिदं पठेत्
पश्चात्साध्यसमीपे तु प्रविशेदुत्तरदिङ्मुखः ४२
भस्मेनावापकं कुर्यात् बृहत्सामेति मंत्रतः
त्र्यंबकेन मंत्रेण भस्मना तिलकं कुरु ४३
एवमुक्तप्रकारेण बलिं दत्वा तु यो नरः
इह लोके सुखं प्राप्य सोऽन्ते सायुज्यमाप्नुयात् ४४
आचार्यं पूजयेत्तत्र वस्त्रकाञ्चन भूषणैः
तत्र कर्मकरास्सर्वे दक्षिणां संप्रदाय च ४५
शान्तिबलिविधिप्रोक्तं लिपिन्यासविधिं शृणु
इत्यंशुमत्तन्त्रे शांतिबलिविधानविधिपटलः

## अथ ऋषिस्थापक्रमः

ऋषिस्थापनं वक्ष्ये श्रूयतां रविसत्तम
शान्त्यर्थं पुष्टिदञ्चैव आयुरारोग्यवर्धनम् १
विद्यालाभं धनं सौख्यं ऋषीणां स्थापनं फलम्
ऋषेः द्वादशसंख्या वा ऋषयः सप्तमेऽपि वा २
अन्तर्हारे च कर्तव्यं मध्याहारेऽथापि वा
वितथस्य पदारभ्य गन्धर्वस्य पदान्तकः ३
कर्तृस्थापनं प्रोक्तं भृत्यत्यरममण्डपे
मण्डपाकृति यत्कुर्यात् शालाकृतिरसापि वा ४
ऋषीणां स्थापनं कुर्यात् नामधेयः क्रमं शृणु
वासिष्टकाश्यपश्चैव भारद्वाजश्च गौतमः ५
भृगुरत्रिः क्रतुश्चैव जमदग्नी प्रचेतसः
विश्वामित्रश्च दुर्वासा ईशानो ऋषयः क्रमात् ६
एते द्वादशनामाश्च एकत्र स्थापनं क्रमात्
अथवा ऋषयश्चैव काश्यपाद्याः क्रमेण तु ७

काश्यपः कौशिकश्चैव पराशरांगिरास्तथा
भारद्वाजत्रिशृंगश्च रोमजस्सप्तमस्तथा ८
अथ पौराणिकं नाम ऋषयः प्रासकालतः
तत्तन्नाम्ना ऋषीणां तु तत्र तत्र प्रतिष्ठितम् ९
तत्तन्नाम्ना समायुक्तं ऋषीणां स्थापनं शृणु
प्रासादपूर्वदिग्भागे दक्षिणे चोत्तरेऽपि वा १०
ऐशान्ये पावके वापि मण्डपं चतुरश्रकम्
विकारस्तंभसंयुक्तं चतुस्तोरणभूषितम् ११
विचित्रतोरणे रम्ये वितानोपरिशोभिते
दिग्ध्वजैः पुष्पमालाभिः धूपदीपैस्समन्वितम्
तन्मध्ये कल्पयेद्वेदिं विधिवत्कारयेद्बुधः १२
पवनं चैककुण्डानि दिशासु विदिशासु च
चतुरश्रं चतुर्दिक्षु विदिक्षु च सुवृत्तकम् १३
एवं मण्डपनिर्माणं अंकुरादीनि पूर्ववत्
शैलजं लोहजं चैव सौवर्णं राजतं तथा १४
ऋषीणां प्रतिमानां तु कारयेल्लक्षणोक्तवत्
नेत्रद्वययुते ऋक्षे कारयेदृषिमोक्षणम् १५
शिल्पिकर्मावसाने तु बेरशुद्धिं समाचरेत्
जलाधिवासनं कृत्वा मण्डपाराधनं क्रमात् १६
वेद्यूर्ध्वे स्थण्डिलं कल्प्य पद्माष्टदळं लिखेत्
परितः कलशां स्थाप्य गन्धतोयेन पूरयेत् १७
सकूर्चान् पल्लवोपेतान् नालिकेरफलैर्युतान्
सवस्त्रान् सपिधानांश्च स्वनामाद्यक्षरैर्युतान् १८
जलादुत्थाप्य बिंबानि मण्डपं तु प्रवेशयेत्
रक्षाबंधं ततः कृत्वा शयनं कल्पयेद्बुधः १९
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिमाचरेत्

कृत्वाधिवासयेद्धीमान् प्रभाते स्नानमाचरेत् २०
सकळीकरणं कृत्वा मन्त्रन्यासाधिकं कुरु
मणटपं तु प्रविश्याथ द्वारादीन् कलशान् यजेत् २१
ततो होमं प्रकर्तव्यं पुणयांतं सम्यगाचरेत्
धामप्रदक्षिणं कृत्वा सूत्रन्यासादिकं शृणु २२
कुंभानुद्धृत्य शिरसा बिंबानुत्थाप्य कल्पवित्
स्वस्तिमंत्रं जपित्वा तु सर्वालंकारसंयुतम् २३
धामप्रदक्षिणं कृत्वा स्थणिडले विन्यसेद्बुधः
आचार्यं पूजयेत्पश्चात् वस्त्रहेमांगुळीयकैः २४
मुहुर्निरीक्ष्य देवज्ञं दक्षिणां दापयेत्ततः
रत्नन्यासं ततः कृत्वा प्रतिष्टां कारयेद्बुधः २५
स्वनामाध्यक्षरोद्धृत्य मायानलसमन्वितम्
बिन्दुनादसमायुक्तं मुनीनां मंत्रमुद्धरेत् २६
तत्तन्मंत्रसमायुक्तं जपन्यासं समाचरेत्
कुंभात् बीजं समादाय तत्तन्मूर्ध्नि हृदिन्यसेत् २७
तत्तत्कुंभस्य तोयैश्च स्नापयेत्तदनंतरम्
मन्त्रपुष्पं तदन्ते तु मंत्रान्नं च निवेदयेत् २८
महाहविर्निवेद्याथ धूपदीपं समाचरेत्
एवं यः कुरुते मर्त्यः स पुणयां गतिमाप्नुयात् २९
ऋषीणां स्थापनं प्रोक्तं भक्तस्थापनकं शृणु
इत्यंशुमत्तंत्रे ऋषिस्थापनविधिपटलः

अथ भक्तस्थापनपटलारंभः

दीपस्यारोहणं वक्ष्ये श्रूयतां रविसत्तम १
कृत्तिके चाग्निनक्षत्रे दीपारोहणमुत्तमम्
तद् ऋक्षपूर्वरात्रौ तु दीपञ्चैवाधिवासयेत् २

शिवं संपूज्य विधिवत् नैवेद्यांतं विशेषतः
मण्डपे स्विष्टदेशे वा स्थण्डिलं शालिना कुरु ३
लाजैः पुष्पैः तिलैस्सार्धं दर्भैश्चैव परिस्तरेत्
विघ्नेश्वरं समभ्यर्च्य विज्ञाप्य परमेश्वरम् ४
पुण्याहं वाचयेत्तत्र दीपपात्रं तु संगृहेत्
प्रक्षाल्य हृदयेनैव स्थापयेत्स्थण्डिलोपरि ५
घृतं मिक्षेति मंत्रेण पात्रेणैव प्रपूरयेत्
वाससा वर्तिभिः कुर्यात् पात्रमध्ये विनिक्षिपेत् ६
वामादि परितं चाष्ट शक्तिं संपूज्य देशिकः
मध्ये सदाशिवं पूज्यं गंधपुष्पादिनार्चयेत् ७
वह्निबीजमनुस्मृत्य दीपानारोपयेद्बुधः
गंधपुष्पैस्समयभ्यर्च्य नैवेद्यं धूपदीपकः ८
तांबूलं दापयेद्विद्वान् शिवमंत्रेण देशिकः
पश्चान्नित्याग्निकार्यादि संध्याशेषं समाचरेत् ९
ततः प्रभातसमये दण्डसंस्थापनं कुरु
वैणवंशाखमसनं मधूकं क्रमुकं तथा १०
नाळीकेरं च तांबूलं वा तिलकं वार्जुनं तथा
चंपकं खादिरं वापि दीपदण्डं विधीयते ११
चतुर्विंशांगुळं नाहं अधमं प्रविधीयते
अष्टत्रिंशतिनाहं स्यात् मध्यमभ्विति विद्यते १२
चतुश्चत्वारिकांगुल्यं उत्तमं नाहमुच्यते
देवाग्रे वा वृषपृष्टे वा बलिपीठस्य पृष्ठतः १२
खानयेत् पृथिवीं तत्र चतुस्तालप्रमाणतः
तन्मूले वेदिकां कुर्यात् समञ्चतुरश्रकम् १३
विस्तारार्धसमुत्सेधं मेखलत्रयसंयुतम्
गोमयालेपनं कृत्वा पञ्चचूर्णैरलंकृतम् १४

स्नपनं कारयेच्छंभोः सायाह्नसमये बुधः
वस्त्रैराभरणैर्माल्यैः अलंकृत्य विशेषतः १५
नैवेद्यं दापयेच्छंभोः तांबूलं दापयेत्ततः
विघ्नेशं पूजयेद्विद्वान् भक्ष्यापूर्णादिकं ददेत् १६
पुण्याहं वाचयेत्तत्र महेशं चास्त्रमूर्तिनम्
अभ्यर्च्य गंधपुष्पाद्यैः नानावाद्यसमन्वितम् १७
पिञ्चचामरसंयुक्तं पताकाद्युभशोभितम्
नानाभक्तजनैस्सार्धं रथाद्यारोहितेन च १८
हर्म्यप्रदक्षिणं कुर्यात् दीपदण्डादिकं विशेत्
महेश रहितं वाथ शास्त्रराजं विशेषतः १९
शास्त्रराजं विना चेत्तु स्थण्डिले तु समर्चयेत्
पुण्याहं वाचयेत्तत्र दण्डशुद्धिं समाचरेत् २०
ब्रह्मचारी गृहस्थो वा शीघ्रमारोपयेत्सुधीः
उत्तराभिमुखो मौनी शिवगायत्रिया बुधः २१
पात्रं तु निक्षिपेदूर्ध्वे प्रस्तरं तु विनिक्षिपेत्
गोघृतं वा सुतैलैर्वा त्रिप्रस्थं चोत्तमं भवेत् २२
द्विप्रस्थं मध्यमं प्रोक्तं सपादप्रस्थकन्यसम्
बहुरूपेण मंत्रेण पात्रेणैव प्रपूरयेत् २३
अध्यास्य दीपमांतीयमुष्णेणारोपयेत्तदा
वह्निबीजमनुस्मृत्य दीपमारोपयेत्ततः २४
दीपारोहणकाले तु शंखघोषसमन्वितम्
दीपरोहणकर्तारं उद्वास्य च विशेषतः २५
गंधपुष्पैस्समभ्यर्च्य दीपदण्डैस्सदाशिवम्
अनंतादि शिखण्ड्यंतान् प्रागादिष्वष्टपात्रके २६
स्वनाममंत्रैः समभ्यर्च्य दीपमारोपयेत्सुधीः
गंधपुष्पैश्च धूपैश्च दीपैरर्घ्यैश्च पूजयेत् २७

वेदादि वाद्यैः संतोष्य अभीष्टफलदायकम्
प्रार्थयेद्देवदेवेशं प्रदक्षिणक्रमं नयेत् २८
गोपुरं मालिका चैव देवाग्रं मण्डपादिकम्
दीर्घाना +++++++++ २९
इत्यंशुमत्तंत्रे भक्तस्थापनं पटलः

## घृतस्नानम्

स्नानशुद्धिं पुरा कृत्वा दर्भानास्तीर्यबुद्धिमान्
नवभाण्डानि संगृह्य तन्तुनावेष्टयेद्बुधः १
क्षाळयेद्विधिनामंत्री साधयेत्तु विचक्षणः
अर्चनोक्तक्रमेणैव पूजयेत्तदनन्तरम् २
उद्धृत्य प्रणवेनैव शिवकुंभञ्च वर्धनीम्
स्थण्डिलोपरि संस्थाप्य सर्वतोद्य समन्वितम् ३
धूपदीपं हृदा दत्वा पायसान्नं निवेदयेत्
पानीयाचमनं दत्वा तांबूलं दापयेद्बुधः ४
ऋृगादध्ययनं कुर्यात् चत्वारो वेदपारगाः
अष्टदिग्वष्टकुण्डानि चतुरश्राणि होमयेत् ५
शिखाग्निं कल्पयेत्तत्र पूर्वोक्तविधिना सह
समिदाज्यन्न लाजाद्यैः होमयेद्विधिपूर्वकम् ६
एवं जागरकं रात्रौ प्रातरेवोत्थितं शुचिः
देहशुद्धिं पुरा कृत्वा त्रिपुण्ड्रं भस्मनोद्धृतम् ७
ततो गर्भगृहं गत्वा लिंगशुद्धिं समाचरेत्
वस्त्रेणोद्वर्तनं कुर्यात् तैलादीनभिषेचयेत् ८
लिंगवस्त्रेण संवेष्ट्य गंधमाल्यैरलंकृतम्
पाद्यमाचमनं चार्घ्यं पायसान्नं निवेदयेत् ९
धूपदीपं हृदा दत्वा तांबूलं तु निवेदयेत्

पुरायाहं वाचयेत्तत्र कुंभारोहणमाचरेत् १०
पुष्पेण सुषिर संयुक्तं हेमनाळसमन्वितम्
स्नावयेदभिषेकांतं अविच्छिन्नाग्र धारयेत् ११
उपकुंभं तदन्ते तु वस्त्रहेमादि संयुतम्
पुष्टरज्रद्विहीनं तु पूर्ववत्स्थरिडले स्थितः १२
आसनं च ततः कृत्वा मूर्तिमावाहयेद्घटे
ब्रह्मभिश्च कलोपेतं विद्यादेहं प्रकल्पयेत् १३
प्राणवत् शिवमावाह्य गन्धाद्यैस्सम्यगर्च्चयेत्
शतमष्टोत्तरं वापि तदर्धं चार्धमेव वा १४
नव पञ्चैक वा कुर्यात् समिदाज्यान्नसंयुतम्
ध्यात्वानृतघृतं मूलं उच्चरन् वौषडन्तकम् १५
पश्चात् शंखध्वनोपेतं शिवकुंभं विनिक्षिपेत्
यामं प्रति विशेषेण उष्णोदकाभिषेचयेत् १६
उष्णतोयाभिषेकांते तत्तद्वर्णाहविर्ददेत्
एवं विधिं समालोक्य दिवसंप्रत्यहं निशि १७
मासं वाप्यर्धमासं वा चतुर्दद्दिनं तु वा
नवाहं वाथ सप्ताहं पञ्चाहं त्र्यहन्तु वा १८
एकाहं वार्धयामं वा याममात्रमथापि वा
यजमाने च्छया कुर्यात् घृतधारां समाचरेत् १९
दिवा रात्रं शिवं मूर्ध्नि स्नावयेच्छिवमंत्रतः
मध्ये विच्छिन्नधारा चेत् राजादुर्जयमाप्नुयात् २०
सहस्त्रं मूलमंत्रेण जप्त्वा विज्ञापयेत् प्रभोः
पूर्वोक्तविधिनाऽनेन स्नावयेल्लिंगमूर्धनि २१
नित्यकर्म विशेषेण काले काले विचक्षणः
स्नानाध्यंतरयोर्मध्ये अर्चनोंतेऽथ मध्यमे २२
निवेद्यांते हुतांते च बलिदानावसानके

धूपदीपावसाने च स्तोत्रपादावसानके २३
नृत्तगीतावसानांते तयोर्मध्येऽथवा पुनः
अर्धयामावसानांते पादुकाराधनांतके २४
चण्डपूजावसाने तु प्रतिकुंभविधानतः
निक्षिपेदुत्तरस्यां तु धाराकुंभस्य मध्यमे २५
तत्तन्मन्त्रं समुच्चार्य ध्यात्वाचामृतधारणा
एवं विधिं समालोक्य पूजयेत्तु दिनेदिने २६
स्नानं घृताधिवासं च नैवेद्यं सौख्यदर्शनम्
साध्यस्याभिमुखं पञ्च वक्त्राभावमिहोच्यते २७
ईशानादि सद्यांतं कलानाध्यवसानकम्
कुंभावरोहणं यावत्तावद्धोमं समाचरेत् २८
द्विगुणं पूजयेत्तत्र ब्राह्मणान् भोजयेत्ततः
कुंभावरोहणं कुर्युः तदंते स्नपनादिकम् २९
विंशत् सूत्रं प्रकर्तव्यं प्राङ्मुखोदङ्मुखः क्रमात्
सप्त सप्तपदं मध्ये परितो द्विपदं त्यजेत् ३०
परितः सन्त्यजेदेकं द्वाराष्टकसमन्वितम्
चतुर्दिक्षु चतुर्द्वारं पदत्रयविलोकनात् ३१
द्वारपार्श्वे विशेषेण द्विपदं तु परित्यजेत्
दिशासु द्वादशपदं विदिशासु नवं भवेत् ३२
त्रीणि बाह्यंतरे त्यक्त्वा चतुर्दिक् द्वारसंयुतम्
आग्नेयादीशकोणेषु मध्ये युगपदं नवम् ३३
एवं कृते पदे सम्यक् शताष्टकलशोऽधिकम्
स्थण्डिलं कारयेत्तत्र चतुस्त्रिद्व्येकसंख्यया ३४
यवार्धं तण्डुलं प्रोक्तं तस्यार्धतिलमेव च
तिलार्धं लाजमित्युक्तं कलशानां पृथक्पृथक् ३५
द्रोणं वापि तदर्धं वा तदर्धार्धमथापि वा

स्थरिडलं कारयेन्मध्ये शिवकुंभार्धवर्धनी ३६
सूत्रं वस्त्रं सुवर्णांबुकूर्चं पल्लवसंयुतम्
एलालवंगकर्पूरं कस्तूरी कुंकुमं मुरम् ३७
हिमांभेन समायुक्तं जलभाराडेन योजयेत्
धूम्रादिबंधरुद्रांतं पूजयेत्तां पृथक्पृथक् ३८
पूर्णाहुतिं ततो हुत्वा शिवमंत्रेण देशिकः
कुंभावरोहणं कुर्यात् ततः स्नपनमाचरेत् ३९
अथार्चनोक्तमभ्यर्च्य देवदेवं विशेषतः
पञ्चवर्णाहविं दत्वा तांबूलं दापयेत्ततः ४०
अत्र नुंतंतू यत्सर्वं शीतकुंभविधानवत्
आचार्यं पूजयेत् पश्चात् गोभूमिकां च नादिभिः ४१
भक्तानां परिचाराणां यथा शक्त्या सुदक्षिणा
एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात् ४२
घृतस्नानमिदं प्रोक्तं भद्रपूजाविधिं शृणु
इत्यंशुमत्तन्त्रे घृतधाराविधिपटलः

## सोमवारव्रतविधि

सोमवारव्रतं वक्ष्ये श्रूयतां रविसत्तम
श्रीकरं विजयं पुरायं आयुरारोग्यवर्धनम् १
सर्वरोगविनाशार्थं सर्वैश्वर्यप्रदायकम्
यजनं त्रिविधं प्रोक्तं श्रेष्टमध्यमकन्यसम् २
पुष्यमासादिमारभ्य धनुष्यन्तं वितंचरेत्
पूर्वाह्ने तर्पणं कुर्यात् मध्याह्ने तु प्रदक्षिणम् ३
सायाह्ने च जपं कुर्यात् रात्रौ पूजां समारभेत्
ग्रहे शिवालये वापि इष्टदेशे मनोरमे ४
मराडपं भूषयेद्विद्वान् पूर्वयामे विशेषतः

आत्मार्थं पूजयेद्धीमान् पूर्वोक्तविधिना सह ५
पञ्चगव्यामृते स्नाप्य तैलपिष्टामलादिना
क्षीरं दधिघृतं चैव क्षौद्रञ्च कदळी फलम् ६
शर्करा नाळीकेरं च इक्षुसारं तथैव च
ब्रह्मांगेनैव मंत्रेण स्नापयेत्तु विशेषतः ७
तत्तद्रव्यांतके धीमान् शुद्धतोयाभिषेचयेत्
गंधोदकेन संस्नाप्य शिवगायत्र्या बुधः ८
मूलमंत्रमनुस्मृत्य पुष्पं मूर्ध्नि विधापयेत्
पद्मासने समभ्यर्च्य गन्धपुष्पसृगादिभिः ९
श्वेतार्कं रत्नपद्मं च नन्द्यावर्तं च पाटली
सिन्धूरं करवीरं च तुलसी बिल्वपत्रकम् १०
जातीनीलोत्पलं चैव द्रोणदूर्वाक्षतं तथा
पञ्चब्रह्मषडंगैश्च मूलेनैव समर्चयेत् ११
अथ द्वादशभिर्दूर्वा बिल्वपत्रैस्समर्चयेत्
अपूपं इक्षुखण्डं च पायसान्नन्निवेदयेत् १२
सर्वोपचारैः सन्तोष्य प्रणिपत्य क्षमापयेत्
भोजनं तु ततः कृत्वा शाययैरतिवर्जितम् १३
एवं व्रतं समापाद्य धनुष्यंते विशेषतः
सोमवारे तु तद्रात्रिं ऋतुसंख्याविभाजिते १४
स्नानद्रव्यं च पुष्पं च संध्यां प्रतिसमाचरेत्
पायसं कृसरं गौळं मुद्गान्नं च हरिद्रकम् १५
यामं प्रति विशेषेण नैवेद्यं दापयेद्बुदा
धूपदीपादिकं दत्वा तांबूलं च निवेदयेत् १६
तस्यैव चोत्तरे भागे स्थण्डिलं शालिना कुरु
तन्मध्ये विन्यसेत् कुंभं शिवमावाहयेत्ततः १७
तदग्रे स्थण्डिलं कृत्वा पद्मं वा स्वस्तिकं तु वा

तस्योर्ध्वे शिवमावाह्य धूपदीपादिकं ददेत् १८
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत्
भूतशुद्धिं ततः कृत्वा पर्युषितं विसर्जयेत् १९
पश्चात्कुंभं समाधाय स्नापयेद्वृषभेश्वरम्
दूर्वाक्षतैश्च बिल्वैश्च शृंगमध्ये समर्चयेत् २०
इतः परं मातृका नास्ति
इत्यंशुमत्तंत्रे सोमवारव्रतविधि

गौर्यर्चनविधि

गौर्यार्चनविधिं वक्ष्ये श्रूयतां रविसत्तम
एकैव शिवभक्तिस्तु मूर्तिभेदादनेकधा १
मूर्तिभेदात्क्रमेणैव शक्तयः त्रिविधाः स्मृताः
शक्तिं मनोन्मनीं गौरी भवानी च त्रिधा इपः २
नि++ मिश्र शक्तिस्तु मिश्रास्तु सकळाकृतिः
सकळाच्छक्तिभेदश्च तत्तन्मूर्त्तेस्वनामके ३
लिंगं पीठं क्रिया शक्तिस्सा शक्तिः मिश्ररूपिणी
लिंगवामे स्थिता शक्तिः सकळा सामनोन्मनी ४
द्विभेदनोन्मनीरूपं द्विभुजा च चतुर्भुजा
समवेताश्शवश्शक्तिः योगं पीठाकृतिर्भवेत् ५
दक्षिणे चोत्तमांगस्यादुत्तरे पादपंकजौ
तन्मध्ये योनिरूपस्स्यात् कृतवारि भुजद्वयम् ६
तच्छेषावयवं भाव्य रूपं सकळनिष्कळम्
सकळा तस्य वामे तु स्थितं वाचासनां तु वा ७
शुक्लवर्णाद्विनेत्रा च किरीटमकुटान्विता
सर्वाभरणसंयुक्ता द्विभुजा पंकजासना ८
उत्पलं सव्यहस्ते तु वामहस्तप्रसारिता

एवं मनोन्मनी रूपं चतुर्हस्तमथापि वा ९
त्रिणेत्रा शुक्लवर्णास्स्यात् जटामकुटमंडिताम्
सर्वाभरणसंयुक्तां चतुर्भुजसमन्विताम् १०
एकं तु सौम्यास्य वाळीशा कर्णपुष्पकम्
अभयं पङ्कजं दक्षे वामे वरदमुत्पलम् ११
मनोन्मनीरूपमाख्यातं गौरीरूपमिहोच्यते
श्यामवर्णां द्विनेत्रां च गौरीं दक्षकरोत्पलम् १२
लंबितं वामहस्तं तु सर्वाभरणसंयुता
गौरीरूपमिदं प्रोक्तं भवान्याकृतिमुच्यते १३
गौरीलक्षणवत्सर्वं आसीनं वा स्थितं तु वा
महेशं मूर्तिभेदानां वामभागे स्थिता भवेत् १४
द्विनेत्रा द्विभुजा श्यामा किरीटमकुटान्विता
योगं भोगं च वीरं च शक्तिरेवं त्रिधा भवेत् १५
योगं पीठाकृतिं प्रोक्तं भोगं वामे तु पूजिताम्
वीरशक्तिं स्वतंत्रं च त्रिधा भेदमिहोच्यते १६
समवेता क्रियाशक्तिः समकाले समं यजेत्
भोगशक्तिस्तत्तदन्ते क्रियामेनां समाचरेत् १७
++ शक्तिः स्वकाले तु तत्तद्भेदं रवे शृणु
देवस्यालयपार्श्वे तु वामे वामे समाश्रिते १८
अन्तर्हारान्तसत्मेषु वीरशक्तिस्थिता भवेत्
स्नानांते स्नानकार्यं तु हविष्यंते हविर्ददेत् १९
नित्यहोमं तदन्ते तु द्वारादिबलिरुच्यते
द्वारादिबलिदेवानां तत्तच्छक्तिस्वनामके २०
बलिस्सर्वत्र दातव्यं शक्तिहीनमथापि वा
अश्रालयं च शक्तिस्थैश्च दर्भितश्चेकदेशिकः २१
एकत्र द्रव्यशुद्धिः स्यात् एकत्रञ्चाग्निकार्यकम्

तथैव बलिकार्यं स्यादेकस्मिन्नेककालके २२
सर्वोपचारं कर्तव्यं तत्तदन्ते समाचरेत्
एवमादिषु सर्वेषु पृथक्कार्यं स्वतन्त्रके २३
क्रिया भेदं विशेषोऽस्ति स्वतंत्राराधनं शृणु
मध्याह्ना रात्रिकालेषु स्वतंत्रं तत्प्रधानकम् २४
नित्यार्चनादि सर्वेषु स्वस्वकाले समाचरेत्
भोगांगाराधनांतं यत् स्वतंत्रे नित्यमाचरेत् २५
द्वारपूजादि बल्यंतं यावत्संध्याविधिं कुरु
एवं विधेषु तंत्रज्ञः शक्तिमाराधयेत्सुधीः २६
प्रातरुत्थाय मनसा देवीं संचिन्तयेद्बुधः
तद्ग्रामाद्बहिनिर्गम्य विण्मूत्रं च विसर्जयेत् २७
शौचमाचमनस्नानं संध्यावंदनतर्पणम्
भूतशुद्धि++ मं कृत्वा शोषदह्यामृतप्रभम् २८
आत्मानं स्वहृदिव्याप्त तत्वतत्वेश्वरान्यसेत्
ब्रह्मांगादि कलान्यासं मातृकान्यासमाचरेत् २९
स्वान्तस्थां शक्तिमारभ्य सोऽहं भावेन भावयेत्
सर्वशाक्तमयं भावं स्थानशुद्धिं समाचरेत् ३०
तत्स्थाने तु रमां पूज्य गंधपुष्पाक्षतान्वितम्
स्थानशुद्धिक्रमं कृत्वा द्रव्यशुद्धिं समाचरेत् ३१
सामान्यार्घ्यं च संकल्प्य पात्रशुद्धिं हृदाबुधः
शालिभिः स्थण्डिलं कुर्यात् पुण्याहं वाचयेत्ततः ३२
गव्यं पञ्चामृतं स्थाप्य स्नानद्रव्याणि सर्वशः
वस्त्रं गन्धं च माल्यं च शाक्तब्रह्मांगमंत्रकैः ३३
स्वदेहं मंत्र तनुं भाव्य ललाटे तिलकं कुरु
शाक्तरूपं स्वमात्मानमर्चयेत् भाव्यमंत्रकैः ३४
गुरुत्रयं समाराध्य लब्ध्वानुज्ञः समारभेत्

विघ्नेशयजनं कृत्वा भक्ष्यादीनि निवेदयेत् ३५
नाळिकेरफलं दद्यात् निर्विघ्नत्वं प्रसीद मे
गंधपुष्पादिनाभ्यर्च्य धूपदीपसमन्वितम् ३६
द्वारमस्त्रांबुनाक्षाळ्य द्वारोर्ध्वे दुंबरोपरि
विघ्नेशं दक्षिणेऽभ्यर्च्य दुर्गामुत्तरदेशके ३७
गंधपुष्पैस्समभ्यर्च्य तन्मध्ये भुवनेश्वरीम्
द्वारस्य दक्षिणे भागे गंगां च योगिनीं तकः ३८
द्वारस्य वामपार्श्वे तु कालिन्दी चैव डागिनी
विबलं च सुबाहुं च ग्रर्चयेत्तु कवाटयोः ३९
तत्कन्दपट्टिका मध्ये कागिनीं सभ्यगर्चयेत्
वृषभं पूजयेदग्रे गंधपुष्पैस्वनामभिः ४०
पार्ष्णि घातास्त्रघण्टां च पुष्पक्षेपत्रयं कुरु
दक्षशाखां समाश्रित्य प्रविशेदर्धमण्डपे ४१
देहळीमध्यदेशे तु शक्त्यस्त्रं सम्यगर्चयेत्
प्रच्छन्नपटमावेष्ट्य मायाशक्तिं समर्चयेत् ४२
गर्भगेहं प्रविश्याथ पीठाग्रे तु विशेषतः
नीलरौद्री समर्प्याथ धूपदीपं समाचरेत् ४३
पूजां संप्रार्थ्य गौर्यास्तु पाद्यमाचमनार्घ्यकम्
कृत्वा पर्युषितं पूजा निर्माल्यं तु विसर्जयेत् ४४
चण्डेशः पूजनं कृत्वा ऐशान्यं संगृहेद्बुधः
ग्रस्त्रांबुना प्रसंक्षाळ्य पीठं देवीं विशेषतः ४५
शुक्लवस्त्रेण निष्पीड्य शुद्धतैलेन सेचयेत्
पिष्टामलकतोयैश्च स्नापयेत्परमेश्वरीम् ४६
गव्यैः पञ्चामृतैस्नाप्य पञ्चामृतजलैरपि
शीतगंधोदकैस्स्नाप्य रजनीमिश्रतोयकैः ४७
उ+++ सूक्तं च भूसूक्तं श्रीसूक्तं पञ्चशांतिकम्

दुर्गासूक्तं च चमकं शन्नवर्गं जपेद्विजाः ४८
देवीमावाह्य संपूज्य गंधोदैरभिषेचयेत्
मन्त्रपुष्पं तु मंत्रान्नं तत्काले दापयेद्बुधः ४९
सूक्ष्मांबरेण संमृज्य देवी देहजलार्द्रकम्
चित्रवस्त्रैरलंकृत्य मकुटादीनि भूषितम् ४०
स्वर्णरत्नैश्च संयुक्तैः सर्वांगं योग्यभूषणैः
अलंकृत्य विशेषेण गंधपुष्पसृगादिभिः ४१
पाद्यमाचमनं चार्घ्यं तत्तन्मंत्रेण दापयेत्
पीठार्चनक्रमं कृत्वा पत्रस्थां शक्तिमर्चयेत् ४२
आधारशक्तिमभ्यर्च्य तस्योर्ध्वेऽनंतमासनम्
धर्माधर्मादिस्त्रीरूपाश्चाणिमाद्यष्टशक्तयः ४३
तत्कन्दं पृथिवी तत्वं कालतत्वांतनाळकम्
माया तत्वमतग्रन्थिं शुद्धमाधोर्ध्वपत्रकम् ४४
वामादिशक्तयश्चाष्टौ दळमूलेन संयजेत्
दळाग्रे केसराग्रे च कर्णिकाग्रे त्रिवृत्तके ४५
आदित्यां चांशुमालां च चन्द्रज्योत्स्नासमन्वितम्
अग्निं च ज्वालिनीं शक्तिं मण्डलत्रयमर्चयेत् ४६
सरस्वती श्री च रौद्रीं च अर्चयेन्मण्डलाधिपाः
कुण्डलिं कर्णिका मध्ये ज्ञानशक्तिस्वरूपिणीम् ४७
इच्छाशक्तिर्दक्षभागे क्रियाशक्तिस्तु वामके
तदूर्ध्वे शकळां शक्तिं द्विभुजां चैव वक्त्रिकाम् ४८
उत्पलं दक्षिणे हस्ते वामहस्तप्रलंबिता
सर्वाभरणसंयुक्तां किरीटमकुटान्विताम् ४९
श्यामवर्णां द्विनेत्रां च गौरीरूपं विभावयेत्
आधराद्ब्रह्मरंध्रांतं द्वादशांताद्धृदिस्थितम् ५०
मन्त्रसंपुटयोगेन ललाटात् प्रापचारिणीम्

तन्मन्त्रं मुकुळी हस्ते पुष्पयुक् शक्तिबीजकम्  ५१
लक्ष्यमूर्तेः समावाह्य पाद्यं पादतलौ न्यसेत्
मुखेष्वाचमनं दद्यात् अर्घ्यं शिरसि विन्यसेत्  ५२
तन्मूर्ध्नि पुष्पमभ्यर्च्य गंधं सर्वांगलेपनम्
पुष्पाञ्जलित्रयं दत्वा देवीं संप्रार्थयेत्सुधीः  ५३
ईशाद्यावरणं देव्यां पूजयामि तवाज्ञया
कुरु पुत्रेत्यनुज्ञात शक्तेरावरणं यजेत्  ५४
ईशानी पूरणी घोरी वामदेवी तथैव च
सद्योजातेति पञ्चैते शाक्तब्रह्मांगपूर्ववत्  ५५
सर्वज्ञता च तृप्तिश्च अनाबीधस्स्वतंत्रता
सुनित्या लुप्तशक्ती च आनंदा चास्त्रमंत्रकम्  ५६
एते षडंगसंयुक्ता पूर्ववत्सभ्यगाचरेत्
प्रथमावरणं ह्येवं द्वितीयावरणं शृणु  ५७
धारिका दीपिका चैव उग्रा ज्योत्स्ना सुचेतना
बलोत्कटा च धात्री च भीमरूपाष्टशक्तयः  ५८
पूर्वादीशानपर्यन्तं क्रमेणैव स्वनामतः
द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु  ५९
वृषाणी च सुभद्रा च देवयानीय कुंदळी
भृंगिणी पुष्पगंधी च बृह्मादी सौन्दरी तथा  ६०
दिवि दिक्षु क्रमेणैव स्वस्वनाम्ना समर्चयेत्
तृतीयावरणं प्रोक्तं चतुर्थावरणं शृणु  ६१
शची सुधा च नीली च जातरी हर्षिणी तथा
शीघ्रवेगिनी शिशी च ईशानी +++ शक्तयः  ६२
धात्री च भ्रमिदेवी च चतुर्थावरणे यजेत्
वध्री शक्ती च दण्डी च खड्गी पांगी तथांकुशी  ६३
गदा त्रिशूली चक्री च पद्मा चेत्यस्त्रशक्तयः

पञ्चमावरणं ह्येवं क्रमेणैव यजेत्सुधीः ६४
तृतीयावरणं वापि चैकावरणमथापि वा
आवाह्याद्युपचाराणि प्रत्येकं पूजयेद्बुधः ६५
मूलमंत्रेण संपूज्य गंधपुष्पसमन्वितम्
पाद्यमाचमनीयार्घ्यं धूपं दीपं हृदा ददेत् ६६
तत्काले ताडयेद्घण्टां पटं तत्रैव निक्षिपेत्
नैवेद्योत्थापने काले शंखध्वनिसमन्वितम् ६७
सर्वव्यञ्जनसंयुक्तं देव्यग्रे स्थापयेद्बुधः
स्वर्णादि स्थलिकां क्षाल्य त्रिपाद्युपरि विन्यसेत् ६८
उपस्तीर्य हविः पूर्य फलदध्युपदंशकैः
संपूर्य घृतसंसिध्य पानीयं पात्रपूरितम् ६९
धूपदीपं हृदा दत्वा वर्मणा परिषिच्य च
पुष्पं वारि गृहीत्वा तु हृदयेन निवेदयेत् ७०
पानीयं दापयेत्पश्चात् पुनराचमनं ददेत्
निर्माल्यं तु विसृज्याथ होमांते वा विसर्जयेत् ७१
स्थलशुद्धिं पुरा कृत्वा पाद्यमाचमने ददेत्
विज्ञापयेत्तु होमार्थं लब्ध्वानुज्ञां तु देशिकः ७२
गत्वा कुण्डसमीपे तु पचनालयदेशके
नित्याग्निं कारयेद्धीमान् पूर्वोक्तविधिना ततः ७३
अन्तर्बलिविधानं च दद्याद्घण्टां तु ताडयेत्
देवीं पुष्पेण संपूज्याचमनीयं ददेद्बुधः ७४
परिवाराय बल्यर्थं संप्रार्थ्य ज्ञापयेत्तथा
बलिबेरं समभ्यर्च्य गंधमाल्यैरलंकृतम् ७५
गंधपुष्पेण संयुक्तं अर्घ्यपात्रसमन्वितम्
आचार्यं शिष्यसंयुक्तौ घण्टारवसमन्वितम् ७६
गन्धपुष्पहविः पात्रं बलिबेरयुतं तु वा

शक्त्यस्त्र सहितं वापि भेरीघोषसमन्वितम् ७७
द्वारादि बलिपीठांतं स्वस्वनाम्ना मनुस्मरन्
द्वारस्य दक्षिणे वामे गंगां च यमुना क्रमात् ७८
अग्रेषु वृषभं यष्ट्वा चाग्नेय्याममृतेश्वरीम्
श्रीदेवीं दक्षिणेऽभ्यर्च्य तद्देशे सप्तमातृकाः ७९
मातंगीं चन्द्रतौ देशे देवयानीं च वारुणे
वायव्यां मोहिनीं चैव चण्डेशीं च तथोत्तरे ८०
भैरवीं च तथेशान्यां अग्रे च सर्वतो मुखीम्
प्रथमावरणं ह्येवं शोभाद्वारस्य पा+बकौ ८१
सव्ये शंखनिधींश्चैव वामे पद्मनिधां तथा
वृषेन्द्रमग्निपीठे तु द्वारपालबलिं क्षिपेत् ८२
इन्द्राणी च स्वधा देवीं काळकण्ठीं सुकेशिनीम्
हर्षिणीं माहिषीं चैव धान्यरूपीं च शूलिनीं ८३
लक्ष्मीं च निर्ऋतौ देशे सावित्रीमीशदेशके
सोमशांकरयोर्मध्ये सुंदरेशीं बलिस्तु वा ८४
द्वितीये च महापीठे तदग्रेऽस्त्र बलिं क्षिपेत्
वज्रिणीं शंखिनीं दण्डीं खड्गिनीं पाशरूपिणीम् ८५
अंकुशीं दण्डधारीं च शूलधारीं च चक्रिणीम्
पद्मिनीं शांकरे देशे महापीठावृतं बलिम् ८६
उग्ररूपीं सिह्मवर्णीं शुष्कोदरभयावहीम्
विभीषिणीं घोररूपीं विश्वधात्रीं च शांकरीम् ८७
अथवा पञ्च पक्षे तु आमोदीं पूर्वदिग्दळे
प्रमोदीं दक्षिणे चैव वसुमुखीं पश्चिमे दळे ८८
दुर्मुखीं चोत्तरे पात्रे विघ्नकर्त्रीं च शांकरे
कर्णिकोर्ध्वे महावक्त्रीं महापीठाधिदेवताः ८९
एवं बलिक्रमं प्रोक्तं विशेषमधुनोच्यते

द्वारादिपीठपर्यन्तं शौचकन्त्विति विद्यते ९०
वज्राण्याद्याविना चेत् शांतिकं प्रविधीयते
इन्द्राण्या विना सौख्यं शैविकं प्रथमं विना ९१
द्वारादि वाहनांतं च संध्यां प्रतिबलिं क्षिपेत्
द्वितीयावरणं हीनं प्रथमावरणे बलिम् ९२
द्वारात् भैरवपीठांतं प्रथमे बलिमाचरेत्
मातृणां बलिपीठेषु द्वितीये च बलिं क्षिपेत् ९३
प्रथमे च महापीठे बलिं दद्याद्विशेषतः
अंधिनीं जंभिनीं रौद्रीं शांतिनीं द्रवकारिणीं ९४
पूर्वादीशानपर्यन्तं दळं मूले बलिं क्षिपेत्
स्वस्वनाम्ना बलिं दद्यात् कर्णिके सर्वतोमुखीं ९५
त्रितये सोपचाराणि स्तोत्रनृत्तं च गीतकम्
वाद्यभेदक्रमं श्रुत्वा परिवेषत्रयं क्रमात् ९६
द्वारदेशीं समानीय पादौ पाद्यं हृदा ददेत्
पूर्वस्थाने निवेद्याथ आरार्तिकं तु दापयेत् ९७
तच्छक्तिं मूलबेरे तु तत्मंत्रेण सुयोजयेत्
पाद्यमाचमनं चार्घ्यं पुष्पं दद्याद्विशेषतः ९८
फलानि निवेद्याथ तांबूलं दापयेत्क्रमात्
धूपदीपं ददेत्पश्चात् आरार्तिकं ददेद्धृदा ९९
भस्मदक्षिणछत्रं च चामरं वृजिनं तथा
देवश्रवणपञ्चांग द्राविडस्तोत्रपाठकम् १००
नृत्तगीतं च वाद्यं च शुद्धनृत्तांतमाचरेत्
जपस्तोत्रनमस्कारं पुष्पाञ्जलिं ददेत् पुनः १०१
चुलुकोदकप्रदानांतं क्रमात्पूजां समाचरेत्
अत्र किंचिद्विशेषोऽस्ति वर्तमानं दिने दिने १०२
मूललिंगे तु या सन्ध्यां तावद्गौर्यां समाचरेत्

यानि तान्युपचाराणि मूललिंगे समाचरेत् १०३
तानि भेदोपचाराणि गौर्यायां सम्यगर्चयेत्
यावन्नैमित्तिकं कार्यं तावत्सर्वं समाचरेत् १०४
काम्यं तत्कर्तुरिच्छावाकाम्यपूजाविशेषतः
सन्ध्योपसंधिमूलेन तत्संधि स्वस्वकालके १०५
एवं सर्वं समाराध्य गौरीपूजां समाचरेत्
गौर्यार्चन विधिप्रोक्तं नित्यनैमित्तिकं शृणु १०६
इत्यंशुमान् तंत्रे गौर्यार्चनविधिपटलः

अथ उत्सवविधिपटलः आरभ्यते
ध्वजपटाधिवासनविधि

उत्सवस्य विधिं वक्ष्ये श्रूयतां रविसत्तम
कीर्तिदं विजयं पुण्यं आयुरारोग्य वर्धनम् १
भुक्तिमुक्तिप्रदातव्यं सर्वकामार्थसाधनम्
विमलं पावनं कान्तं मंगलं च चतुर्विधम् २
ध्वजारोहादि तीर्थान्तं साकल्यं च प्रकीर्तितम्
ध्वजमेकं विना कुर्यात् शेषं पूर्ववदेव हि ३
पावनं च बहुख्यातिं शांतिकं च ततः शृणु
बलिहोमादिकं हित्वा केवलं भ्रामणं तु वा ४
सायाह्ने वोत्सवं कुर्यात् शांतिकं त्विति विद्यते
यजमानं च या कुर्यात् तत्काले च शिवोत्सवम् ५
मांगल्यं त्विति विख्याता तत्काले द्विजिना शृणु
पावनं चन्द्रनक्षत्रं सौरं चैव चतुर्विधः ६
एतच्चतुर्विधे मासे चोत्सवं संप्रकल्पयेत्
सौरमासे विधेयं स्यात् साकल्यं पावनोत्सवम् ७
पावने चंद्रनक्षत्रे मासे शांतिकमंगळम्

उत्सवं कारयेद्धीमान् सर्वे सर्वोत्सवं कुरु ८
सावधाने चांद्रनक्षत्रे साकल्यं पावनं विना
पुष्यमासे तु पुष्यांतं माघमासे मघांतकम् ९
फाल्गुने चोत्तरांते तु चैत्रेचित्रांतमुच्यते
वैशाखे विशाखांतं मूलांतं ज्येष्टमासके १०
आषाढे चोत्तराषाढं श्रावणे श्रावणांतकम्
पूर्वाषाढं हि तन्मासे चाश्वयुजे चाश्वयुजांतकम् ११
कार्तिके कृत्तिकांतं हि शिखांतं मार्गशीर्षके
पूर्णचंद्रेण युक्तं वां वियुक्तं वा समाचरेत् १२
चतुर्दश्यां अमावास्यां षष्ट्याष्टम्यांतमुत्सवम्
राजाभिषेकजन्मर्क्षे युद्धारंभावसानके १३
++ स्यात् पुण्यदिनांतेषु चोत्सवं संप्रकीर्तितम्
एकमासे द्विनक्षत्रे संप्राप्ते तु परस्परम् १४
नेष्टं प्रथमऋक्षं स्यात् अन्त्यर्क्षे तीर्थमाचरेत्
द्विवारे क्येकनक्षत्रे संप्राप्ते तु विशेषतः १५
तत्स्यादधिकनक्षत्रे तद्दिने तीर्थमाचरेत्
शैवं च सात्विकं चैव पार्थिवं श्रीकरं तथा १६
सौख्यं च पैतृकं चैव ++++++
++++ चैतद्भवं चैव शोभनं च इहोच्यते १७
शैवमेकाहमित्युक्तं सात्विकं च त्र्यहं तथा
पञ्चाहः पार्थिवं चैव सप्ताहं ++++++ १८
++++ सौख्यमेवं च द्वादशं पैतृकं तथा
पञ्चादशाको भ्यारस्स्यात् स्थितिं चैव सुभद्रकम् १९
मंगळं त्वेति विंशच्च चतुर्विंश +++++
++++ हनं सप्तविंशच्च उत्सवं कथितं मया २०
शैवादि शोभनांतं च दिनसंख्या क्रमेण तु

एताश्च विधिसूत्रांतं विद्यांतं षड +++ २१
+++ द्यादि च विद्यांतं ग्रन्त्यादि च विचक्षणः
सूत्रांतं पञ्चधा चैव तुर्यां च विवृद्धितः २२
सप्तविंशद्दिनांतं च उत्सवं रुद्रसंख्यया
विजयं पुष्कलं सौख्यं बलिसंख्या त्रिधा मतः २३
मोक्षकोलकलोकेश भानुर्विकारसंख्यया
द्वाविंशच्चाष्टविंशच्च चतुर्विंशच्च संख्यया २४
चत्वारिं चैव संख्या च षट्चत्वारिंशच्च संख्यया
पञ्चाधिकं च पञ्चाशद्द्विजस्य बलिक्रमम् २५
ग्रशिनी चैव कर्माङ्गं प्रादुर्भावं मनुस्तथा
दशाष्टाविंश संख्या त्रिंशत् षट्त्रिंशसंख्यया २६
कोलकाधिकचत्वारि मूर्तिचत्वारिसंख्यया
तुर्याधिकं च पञ्चाशत् पुष्करस्य बलिक्रमम् २७
कर्मांगाधिक पञ्चाशत् पञ्चाशत्तुर्यसंख्यया
+++ धिकपञ्चाशत् विद्या च बलिसंख्यया २८
वेदादि भानु संख्या च कालविंशति संख्यया
षड्विंशद्वात्रिंश संख्या च षड्त्रिंशति संख्यया २९
चतुश्चत्वारिंसंख्या च पञ्चाशत्संख्यया तथा
कर्मांगाधिकपञ्चाशत्सौख्यस्ते बलिविक्रमम् ३०
उत्सवं त्रिविधं प्रोक्तं ध्वजभेर्यंकुरादिकम्
ग्रादौ तु ध्वजमारोप्य पश्चाद्भेरीं तु ताडयेत् ३१
ग्रंकुरागयर्पयेत्पश्चात् ध्वजारोहणपूर्वकम्
ग्रादौ भेरीं समुत्ताड्य ध्वजमारोपयेत्ततः ३२
ग्रंकुरागयर्पयेत्पश्चात् भेरीताडनपूर्वकम्
केत्वंकुरं तु प्रथमं द्वितीयं ++++++ ३३
++++++ णं तृतीयं स्यात् चतुर्थं दगडशुद्धिदम्

पञ्चकं केतुकर्मं च कलशं स्नानषट्ककम् ३४
सप्तमं वास्तुपूजां च अष्टमं चाष्त्रपूजकम्
+++++ यागं च दशमं देवताह ++ वयम् ३५
एकादशं बलिं दद्यात् द्वादशं चोत्सवाङ्कुरम्
त्रयोदशं कौतुकारं भं चतुर्दशास्तयागकम् ३६
पञ्चादशं बलिं चैव षोडशं यागमेव वा
यात्रार्थस्नपनं पश्चात्तत्परं मृगयात्रकम् ३७
तीर्थार्थमंकुशं पश्चात् तत्परं तीर्थकौतुकम्
तीर्थाधिवासनं पश्चात् द्वाविंशच्चूर्णकर्मकम् ३८
तीर्थकर्म त्रयोविंशत् यागकुंभाभिषेचनम्
आचार्यदक्षिणां दद्यात्पश्चात्केत्ववरोहणम् ३९
पैशाचाय बलिं कुर्यात् प्रायश्चित्तार्थपूजनम्
अष्टाविंशति भेदेन चोत्सवं परिकीर्तितम् ४०
तीर्थमादौ विनिश्चित्य तत्पूर्वदिवसे पुनः
यावदुत्सवसंख्यार्थं दिनसंकल्प्य तत्पुरा ४१
ध्वजारोहदिनात् पूर्वं रात्रिके त्वंकुरं कुरु
तद्दिने वृषयागं स्यात् ध्वजारोहणपूर्वके ४२
न्निर्द्दिष्टदिवसाद्रात्रिमारभ्योत्सवमाचरेत्
निर्द्दिष्टदिवसात्पूर्वं रात्रोत्सवं कुरु ४३
सौख्यक्रममिदं प्रोक्तं विजयादि समाचरेत्
शुक्लं कृष्णं तथा सूक्ष्मं छिन्नभिन्नादिवर्जितम् ४४
रंध्राष्टसप्तहस्तं तु तत्पटं द्विगुणीकृतम्
तत्रिभागैकभागं तु पटविस्तारमुच्यते ४५
मध्यवेत्रसमायुक्तं वलयद्वयसंयुतम्
तन्तुनाबंधयेद्धीमान् सुधयालिप्य सर्वशः ४६
तत्पटं गणथा भज्य मध्यभागे वृषं लिखेत्

वृषभं श्वेतवर्णाभं वृषलक्ष्मणवर्त्मना ४७
आस्य शृंगौ तु कर्णन्तु +++ रारत्ननिभास्मृता
वालाग्रं तु कृष्णवर्णं तु भ्रुवं तद्वर्णसंयुतम् ४८
धूम्रवर्णमयं चाक्षि मध्यमे कृष्णमण्डलम्
आसनं श्यामवर्णं तु तन्मध्ये रत्नपद्मकम् ४९
कर्णिकां पीतवर्णां तु भ्रुवं तद्वर्णसंयुतम्
तद्वर्णं केसराणि तु । आसनायतवृत्तं तु परितः ५०
चतुरश्रकम् । पञ्चवर्णेन संलिख्य पुष्पैः रक्तैः समृद्धिदम्
स्फिक्सूत्रमुरसूत्रं च पादाधारस्य सूत्रकम् ५१
पट्टाकारेण संलिख्य पञ्चवर्णेन बुद्धिमान्
घण्टाञ्च हेमवर्णाभां रज्जुरक्तनिभं भवेत्
पुष्परक्तैश्च संलिख्य गळभूषणसंयुतम् ५२
एवं लक्षणसंयुक्तं स्थित्वा तु वृषभं लिखेत्
शेषमंगळरूपाणि लेखयेत्परितः क्रमात् ५३
अधो भागेऽबुजं लिख्य सितवर्णेन संवृतः
दर्पणं सितवर्णाभं पूर्णकुंभ हरीतकम् ५४
चामरं शुक्लवर्णाभं नाळं पीतवर्णकम्
नाळाग्रे चोत्पलाकारं रक्तं पीतदळांतरम् ५५
श्रीवत्समरुणाभं च स्वस्तिकं पिंगळं भवेत्
शंखं वै सितवर्णं तु पुञ्चाग्रे पीतसंयुतम् ५६
दीपं वै काञ्चनाभासं दीपाकारं तथैव हि
धूपं पिशंगवर्णं स्यात् घण्टा रजतसंनिभम् ५७
मध्यभागादधोभागे पूर्णकुंभं समालिखेत्
मध्यभागोर्ध्वभागे तु श्वेतच्छत्रं प्रकल्पयेत् ५८
धूपघण्टागळाधस्तात् दीपं तत्कुंभपार्श्वयोः
वृषाग्रे दर्पणं पृष्टे श्रीवत्सं चोत्तरांशके ५९

शंखं पीठसमायुक्तं पादयोरंतरं लिखेत्
श्वेतच्छत्रस्य पार्श्वे तु चामरद्वयमालिखेत् ६०
तयोरंतरदेशे तु पद्ममष्टदळं लिखेत्
पटस्योभयपार्श्वे तु तत्तदंगं समालिखेत् ६१
एवं ध्वजक्रमं प्रोक्तं तस्य यागविधिं शृणु
इति श्री अंशुमान् तंत्रे ध्वजपटलक्षणविधिः

महोत्सवविधौ ध्वजारोहणविधि

संपूज्य देवदेवेशं श्रीवेद्यांतं समाचरेत्
गणेशं पूजयेत् पश्चात् पायसान्नं निवेदयेत् १
शिवं प्रणम्य विधिवत् विज्ञाप्योत्सवमुत्तमम्
भूषणाद्यैरलंकृत्य सुमता देशिकोत्तमः २
अंगन्यासकरण्यासं पूर्वोक्तविधिना कुरु
स्थण्डिलं कारयेद्विद्वान् सुश्वेतद्रोणशालिना ३
आलिख्य मध्यमे पद्ममष्टपत्रं सकर्णिकम्
रत्नकुंभान् समादाय त्रिसूत्रेणैव वेष्टयेत् ४
विन्यसेत्कलशेनैव पूरयेद्गन्धतोयकम्
वृषकुंभं न्यसेन्मध्ये तस्य वामे तु वर्धिनीम् ५
अभितः कलशानष्टौ वारुणादीनि विन्यसेत्
स कूर्चौ सापिधानौ च वस्त्रपल्लवसंयुतौ ६
श्यामदूर्वा समायुक्तौ ।
पुण्याहं वाचयेत्पश्चात् प्रोक्षयेत्कलशानपि ७
अभ्यर्च्य गंधपुष्पाद्यैः वृषस्थानं समाविशेत्
पाद्यमाचमनं चार्घ्यं दत्वा तन्मूलमंत्रतः ८
पञ्चगव्यामृतेनैव स्नापयेच्छुद्धतोयकैः
वृषगायत्रिमंत्रेण स्नापयेन्माषकुंभकम् ९

वर्धनादीशपर्यन्तं स्नापयेत्स्वस्वमंत्रकैः
गंधादिभिः समभ्यर्च्य मुद्गान्नं दापयेत्ततः १०
धूपदीपं ततो दत्वा आरार्तिं दापयेत्ततः
तांबूलं दापयेत्पश्चात् वृषाग्रे स्थण्डिलं कुरु ११
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्पुरुषेण तु
वृषकुंभस्य वर्धन्यां स्थापयेत्तण्डिलोपरि १२
सकूर्चानुदकोपेतान् फलपल्लवसंयुतान्
तस्य मध्यांबुजं ध्यात्वा संकल्प्य वृषभासनम् १३
वृषेश्वरं समभ्यर्च्य उत्सवं श्रावयेद्बुधः
नमो धर्मस्वरूपाय देवदेवाय गोपते १४
शंकरोत्सवसेवार्थं ध्वजेऽस्मिन् संनिधिं कुरु
वृषेन्द्राग्रे तु विज्ञाप्य कुंभे चावाहनं कुरु १५
तस्य वामे तु वर्धन्यां पूजयेद्विधिना सह
चलासनं तु संकल्प्य कुंभमुत्थापयेत् बुधः १६
प्रासादेष्विष्टदेशे वा मनोरम्येऽथवा पुनः
स्थण्डिलं कारयेत्तत्र स्थापयेत्कुंभवर्धनीम् १७
स्थिरासनं तु संपूज्य अभितोष्टभटान्यसेत्
वृषभं मध्यमेऽभ्यर्च्य उक्षाणमीशगोचरे १८
उक्षं च श्रृंगिणी नंदी वेदपादं च गोपतिम्
उग्रशृंगं वृषं नाथं वृषे परमधाष्टकम् १९
वरुणादि निर्ऋत्यन्तं अर्चयेत्स्वस्वनामतः
तस्याग्रे स्थण्डिलं कृत्वा साष्टपत्रसकर्णिकम् २०
दर्भैः पुष्पैः तिलैर्लाजैः पञ्चचूर्णैः विचित्रितम्
ततः तक्षकमाहूय पदं संगृह्य देशिकः २१
तत्पटं हृदयेनैव स्थण्डिलं स्थापयेद्बुधः
गौर्धेनुभव्या मंत्रेण पटालोकनमारभेत् २२

वृषभाय त्रिधा पश्चात् प्रोक्षयेदर्घ्यवारिणा
सम्मार्ज्य द्विकुशेनैव वृषमूलमनुस्मरन् २३
तद्वर्णकुलिकायुक्तं द्विकुशाग्रेण देशिकः
तदक्षिमोचनं कुर्यात् सूर्यसोमाधिदैवतम् २४
जलाधिवासनार्थाय वृषगायत्रिया बुधः
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन् २५
गोपतेरंबिका नाथ दर्शनात् भक्तवत्सल
सर्वानुकूल संभोग वृषेन्द्राश्शयितो भवेत् २६
पुष्पाञ्जलित्रयं दत्वा वृषेन्द्रं शयितं त्विति
मनसा भावयेद्विद्वान् मन्त्रन्यासं समाचरेत् २७
मूर्धादि गळपर्यन्तं शिवतत्वं प्रकल्पयेत्
गळादि नाभिपर्यन्तं विद्यातत्वं प्रकल्पयेत् २८
नाभ्यादि खुरपर्यन्तं आत्मतत्वं प्रकल्पयेत्
तत्व तत्वेश्वरान् न्यस्त्वा गंधपुष्पादिनार्चयेत् २९
अन्यायतनमासाद्य अग्निकार्यं समाचरेत्
पटकुंभद्वयोर्मध्ये अग्नेरायतनं कुरु ३०
तन्मध्ये वृषमावाह्य पश्चाद्धोमं समाचरेत्
समिदाज्य चरून् लाजान् सर्षपांश्च यवांस्तिलान् ३१
होमद्रव्याणि सप्तैते विधिनाग्नौ तु होमयेत्
शतमर्धं तदर्धं वा प्रत्येकं होममाचरेत् ३२
द्रव्यं प्रतिविशेषेण हुत्वांते स्पर्शयेद्धटम्
द्रव्यं प्रतिदिशांशेन हुनेत् स्पृष्ट्वा तु तद्धटम् ३३
होमसंख्या जपं कुर्यात् प्रोक्षयेदस्त्रमंत्रतः
ध्वजकुंभांतरे विद्वान् वास्तु नाथां बलिं क्षिपेत् ३४
तुभ्यं नमोऽस्तु देवेश वास्तुनाथ वरप्रभो
एतद्बलिं समादाय रक्षयेद्यागमंदिरम् ३५

इति विज्ञापयेद्विद्वान् शत्रौ जागरमाचरेत्
इति अंशुमान् तंत्रे पटाधिवासनविधिपटलः

महोत्सवविधौ ध्वजारोहणविधि
क्रमुकं चंदनं वापि खदिरं नाळिकेरकम्
मधूकमसरं शाखं तालं चंपकमेव च १
खकूसारमितस्सारं च संगृह्यदेशिकोत्तमः
अन्य मूलोक्तवृक्षाणां अवक्रं निर्घृणं ऋजुम् २
प्रासादस्य समोत्सेधं उक्षस्थलसमं तु वा
तद्वासद्विगुणोत्सेधं गोपुरोदयमानकम् ३
एवमुत्सेधमाख्यातं मानांगुलेन कारयेत्
षोडशांगुलमारभ्य त्रित्रियंगुलविवर्धनात् ४
अष्टादशांगुलं यावद्दण्डमूलस्य नाहकम्
एकद्वित्र्यंगुळं क्षीणमामूलाग्रं क्रमात्कुशम् ५
तदग्रे योजये धराम्रतालप्रमाणतः
षट्सप्त यवतालेन ध्वजयष्टिस्तुदैर्घ्यकम् ६
स्कन्दत्रयं तु दण्डाग्रे योजयित्वा विशेषतः
ध्वजयष्टिसमाख्यातं त्रिपादं वार्धदैर्घ्यकम् ७
एकद्वित्र्यंगुळं तस्य घनमित्युच्यते बुधः
तदायाम त्रिधा कृत्वा अकांशं चतुरश्रकम् ८
समाश्रं कल्पयेद्धीमान् नृत्तं वै चाटुकाकृतिः
शेषं दर्व्याकृतिं कुर्यात् नानालंकारसंयुतम् ९
सुषिरद्वयसंयुक्तं मध्यच्छिद्रमथैकशः
यष्टेर्दक्षिणभागे तु एकयंत्रं निवेशयेत् १०
तन्मध्ये रज्जुसंबंधात् द्विगुणं मूलमाश्रितम्
दण्डाग्रे वृषभं न्यस्त्वा लोहं दारुमयेन वा ११

प्रासादाभिमुखं स्कन्धमयः पट्टेन वेष्टयेत्
पीठगोपुरयोर्मध्ये वृषपीठाग्रकेऽपि वा १२
स्थापयेद्विधिवद्विद्वान् तन्मूले वेदिकां कुरु
गोमयालेपनं कृत्वा पिष्टचूर्णैरलंकृतम् १३
दराडशुद्धिं ततः कृत्वा गंधपुष्पादिनार्चयेत्
ततः प्रभातसमये सकळीकरणं कुरु १४
पश्चात् संपूज्य गंधाद्यैः पटकुंभं यथाक्रमम्
जयादिरभ्याथानं च राष्टभृच्च क्रमाद्धुनेत् १५
पूर्णाहुतिं ततो हुत्वा सर्वमंगळसंयुतम्
परिचारकमाहूय सोष्णीषः सोत्तरीयकः १६
पटं समुद्धृते धीमान् वृषकुंभं च वर्धनीम्
अ इत्रेशं मूर्तिनं कृत्वा आचार्यं युक्तमाचरेत् १७
छत्रचामरसंयुक्तं सर्वातो++ समन्वितम्
ग्रामप्रदक्षिणं कृत्वा ध्वजस्थानं समाविशेत् १८
पुरायाहं वाचयेत्तत्र वृषकुंभं च तत्पटम्
स्थापयेद्विधिना विद्वान् पूजयेत्तु विशेषतः १९
पटं पुच्छस्य यद्वापि दर्पणोपरि विन्यसेत्
पञ्चगव्याभिषेकं तु वृषकुंभाभिषेचयेत् २०
वर्धनीं चैव विन्यस्य वृषपीठे न्यसेत्क्रमात्
विज्ञाप्य देवदेवेशं प्रणम्याभ्यर्च्य देशिकः २१
भूसुराणां समाहूय पूजयेद्दक्षिणाय च
सुमुहूर्ते सुलग्ने च आचार्यस्य भूसुरान् २२
रज्जुना बंधयेत्पश्चात् वृषगायत्रिमंत्रतः
दर्भमालासमायुक्तां क्षुद्रघराटा समन्वितम् २३
दराडस्य दक्षिणे भागे आचार्यस्य स्थितिर्भवेत्
आरोपयेत्ततो मंत्री बहुरूपमनुस्मरन् २४

पटस्य दर्भमाला च आचार्यं मूर्तिपैस्सह
ग्रन्थिं पश्चिमभागे तु शीघ्रं वा शिष्यावरोहकम्  २५
दण्डे सव्यक्रमेणैव कुशैर्मालेन बंधयेत्
प्रक्षाळ्य दण्डमूलं तु पञ्चगव्याभिषेचयेत्  २६
वृषविघ्नेशकुंभैश्च वेद्यूर्ध्वे चाभिषेचयेत्
वरुणादि निर्ऋत्यं तं पूजयेत्तु विशेषतः  २७
गंधपुष्पादिनाभ्यर्च्य मुद्गान्नं दापयेत्ततः
पानीयाचमनं दत्वा धूपदीपादिकं ददेत्  २८
तांबूलं भसितं दद्यात् दर्पणं छत्रचामरम्
वेदस्तोत्रसमायुक्तं नृत्तगीतं च वाद्यकम्  २९
आचार्यो वाथ शिष्यो वा आशिषो वा स्तुतिं पठेत्
सर्वोपचारैस्संतोष्य प्रणिपत्य क्षमापयेत्  ३०
महेशश्यास्त्रिमूर्तिश्च स्वस्थानं चैव विन्यसेत्
एवं क्रमेण विधिवत् संध्याशेषं समाचरेत्  ३१
सौख्य संध्यावसाने तु मम भक्तैरलंकृतम्
स्तोत्रपाठकमाहूय गन्धदामञ्च दापयेत्  ३२
भक्तिवैराग्य संतोषी तपस्वी मुण्डितस्ततः
कौपीनदण्डसंयुक्तं उत्तरीयकमण्डलुम्  ३३
शालितण्डुलपुष्येन भिक्षापात्रेण संयुतम्
तपस्विनां च दातव्यं मम प्रीतिकरं भवेत्  ३४
क्रीडाखनित्रं संगृह्य वीथिशुद्धिं च कारयेत्
वीथिसंमार्जनं कृत्वा वालुकेनैव पूरयेत्  ३५
सर्वातोद्य समायुक्तं भक्तोत्सवमथाचरेत्
ग्रामप्रदक्षिणं कृत्वा स्वस्थाने चैव विन्यसेत्  ३६
यात्रार्थस्नपनं पश्चात् वास्तुहोमं तु कारयेत्
प्राकारमण्डपे चैव ग्रामाभ्यन्तरवीथिके  ३७

पर्यग्निकरणं कुर्यात् सायरक्षां समाचरेत्
इत्यंशुमान् तंत्रे ध्वजारोहणविधिपटलः

अथ भेरीताडनम्

आचार्यः शिष्यसंयुक्तो विधिना स्नानमाचरेत्
स्थण्डिलत्रितयं कल्प्य मध्ये पश्चिमपूर्वयोः १
अस्त्रेण संवेष्ट्य सोष्णीषः सोत्तरीयकम्
देवाग्रे ध्वजमूले वा देवतास्थानमाचरेत् २
स्थण्डिलत्रितयं कल्प्य मध्ये पश्चिमपूर्वयोः
अस्त्रेशं पश्चिमे स्थाप्य पूर्वे भेरीं च स्थापयेत् ३
तयोर्मध्ये च पुण्याहं वाचयेद्देशिकोत्तमः
अस्त्रेश्वरं समभ्यर्च्य नैवेद्यं दापयेत्ततः ३
तांबूलं दापयेत्पश्चात् धूपदीपादिकं ददेत्
मध्यपात्रे भवेद्रुद्रो ब्रह्मा दक्षिणपात्रके ४
वामे विष्णु समाख्यातं फलकायां तु पार्वती
सेनानी कुंभदेशे तु तदास्ये विघ्ननायकम् ५
दण्डाग्रे + दनोज्ञेयो भास्करो दासमध्यमे
दण्डमूले तु चण्डेशो लक्ष्मीः पूर्वदळाग्रके ६
मातरः सप्तदक्षे तु ज्येष्टा पश्चिमदिग्दळे
कात्यायनी कुबेरास्स्यात् शूलमूलामता इमे ७
इत्येवं शूलमभ्यर्च्य भेरीं संताडयेत्ततः
भेरीं वस्त्रेण संवेष्ट्य गंधपुष्पादिनार्चयेत् ८
नैवेद्यं दापयेत्पश्चात् तांबूलं दीपधूपकम्
आरार्तिं दापयेत्पश्चात् भेरीमध्ये महेश्वरम् ९
ब्रह्माणं दक्षिणेऽभ्यर्च्य वामे विष्णुं समर्चयेत्
वलये दक्षिणे सूर्ये मितिरे चंद्रमर्चयेत् १०

सप्तकीले तु मातृश्च नवकीले नवग्रहान्
प्रहरेत्स्कंदमभ्यर्च्य मस्तकेभ्यर्चयेत्क्रमात्  ११
नंदीशं मनसा ध्यात्वा प्राङ्मुखो वाप्युदङ्मुखः
जपघण्टारवोपेतं वाद्यकर्ता च ताडयेत्  १२
ब्रह्मजज्ञानमंत्रेण पूर्वकोणेक ताडयेत्
इदं विष्विति मंत्रेण द्वितीयं द्विप्रकारतः  १३
एवं क्रमेण संताड्य पश्चादाहूय वाद्यकान्
शुद्धतोयेन संप्रोक्ष्य उपवीतं तु दापयेत्  १४
तद्धस्ते कुसुमं दद्यात् नन्दिमंत्रमनुस्मरन्
तत्पुष्पं निक्षिपेत् भेर्यां नमस्कृत्वा तु वाद्यकः  १५
भेरीं स्कन्दे समारोप्य वाद्यकर्ता च ताडयेत्
जयघण्टारवोपेतं प्रेष्यकं चैव ताडयेत्  १६
देवताह्वानवाद्यैश्च वादयेत्ताडनं क्रमात्
पश्चाद्देवान् समाहूय देशिकः शिष्य एव वा  १७
शंकरोत्सवसेवार्थं श्रावयेदुत्सवांतकम्
इन्द्रादिलोकपालांश्च रुद्राश्च वसवाश्विनौ  १८
आदित्याष्टादशगणैः पुष्पेणावाह्य देशिकः
अस्त्रेणावाहयेद्धीमान् अर्चयेच्च स्वनामतः  १९
ग्रामस्याभ्यंतरे विश्य देवस्याग्रे स्थितो बुधः
देवस्य देवता स्थानं संनिवेद्य चोत्सवम्  २०
अस्त्रेशं बलिमूर्तिं च अन्नलिंगं च पादुकम्
छत्रचामरसंयुक्तं दीपज्वालासमायुतम्  २१
सर्वालंकारसंयुक्तं सर्वातोद्य समन्वितम्
वृषादि परिवाराणां बलिं दद्यात्स्वनामतः  २२
इन्द्रादीशानपर्यन्तं नित्यवत्सर्वमाचरेत्
ध्वजेत् ब्रह्मादिभिर्वापि इन्द्रादीनामथापि वा  २३

सिद्धदेवान् समावाह्य बलिमेवं समाचरेत्
एवमावाह्य देवांश्च प्रविशेदालयं प्रति २४
पादप्रक्षाळनं कृत्वा भूतपीठे बलिर्ददेत्
उत्सवं कारयेद्धीमान् ततः कौतुकबंधनम् २५
इत्यंशुमत्तन्त्रे भेरीताडनविधिपटलः

महोत्सवविधौ कौतुकबन्धनविधि

महेशाग्रे विशेषेण स्थण्डिलं शलिना कुरु
पुण्याहं वाचयेत्तत्र कौतुकं प्रोक्षयेत्ततः
स्थलिकां तण्डुलैः पूर्य दर्भैः पुष्पैः समन्वितम् १
क्रमुकं फलसंयुक्तं नागवल्लीदळैर्युतम्
भस्म धारन्यसेपादिन्मध्ये कौतुकं भस्म संयुतम् २
सौवर्णं रजतं वापि क्षौमं कार्पासकं तु वा
नवांबरसमायुक्तं पुष्पमालासमायुतम् ३
स्थलिकोर्ध्वेव विन्यस्य रक्षसूक्तमनुं जपेत्
पश्चात् कौतुकमुद्धृत्य महेशाग्रे तु विन्यसेत् ४
पश्चात् संस्नाप्य यागेशं शुद्धतोयेन देशिकः
अभ्यर्च्य गंधपुष्पाद्यैः धूपदीपादिकं ददेत् ५
युवा वस्त्रेण मंत्रेण वस्त्रेणाच्छादयेत्प्रभोः
त्रियंबकेन मंत्रेण सूत्रं संसिच्य भस्मना ६
तण्डुलं दापयेद्धस्ते ओं नमो ब्रह्मणेत्यपि
देवस्य दक्षिणे हस्ते देव्या वामकरे बुधः ७
बृहत्सामेति मंत्रेण कौतुकं बन्धयेद्धृदा
यो ब्रह्मण इतीत्यादौ मंत्रेण भसितं ददेत् ८
दूर्वाक्षतेन विप्राणां आशिषो वाचमब्रुवन्
देशिकस्य करे दत्वा गृहीत्वा मूलमंत्रतः ९

यत्तेरग्नेति मंत्रेण बिंबमूर्ध्नौ विनिक्षिपेत्
उत्सवोद्दिश्य देवानां कौतुकं बंधयेद्बुधः १०
शूलस्य मध्य पत्रे तु कौतुकं बंधयेद्बुदा
कौतुकस्य क्रमं प्रोक्तं मण्डपाराधनं शृणु ११
इत्यंशुमान् तंत्रे कौतुकबंधनविधिपटलः

## महोत्सवविधौ बलिक्रमविधि

हर्म्यस्य पूर्वदिग्भागे ऐशान्ये पावकेऽथवा १
पूर्वोक्तलक्षणोपेतं मण्डपं कारयेद्बुधः
गोमयालेपनं कृत्वा पिष्टचूर्णैरलंकृतम् २
यागशालां प्रविश्याथ सकळीकृतविग्रहः
पुण्याहं वाचयेत्तत्र प्रोक्षयेद्यागमण्डपम् ३
सौरादि गुरुपर्यन्तं मण्डपं संप्रपूजयेत्
वेद्यूर्ध्वे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिना ४
तण्डुलैः तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत्
ससूत्रान् सापिधानांश्च सवस्त्रान् वारिपूरितान् ५
सकूर्चान् पल्लवोपेतान् सरत्नान् फलसंयुतान्
वेद्यूर्ध्वे स्थापितान् कुंभान् मध्यकुंभैः सदाशिवम् ६
अभ्यर्च्य गंधपुष्पाद्यैस्तस्य वामे मनोन्मनीम्
परितश्चाष्टकुंभांश्च विद्येशान् संप्रपूजयेत् ७
महेशं चास्त्रमूर्तिं च बलिमूर्ति दिशायुतम्
आनीय यागशालायां इष्टदेशे मनोरमे ८
प्रतिमां स्थापयेद्विद्वान् पूजयेत्तु यथाविधि
ततः कुण्डांतिकं गत्वा होमकर्मसमाचरेत् ९
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
समिदाज्य चरून् लाजान् मुद्गशालियवं तथा १०

सद्यादीशानपर्यन्तं प्रत्येकं षोडशं हुनेत्
मूलेन जुहुयादाज्यं ग्रष्टोत्तरशतं सुधीः ११
जयादिरभ्याथानं च राष्ट्रभृच्च क्रमाद्धुनेत्
पुरायाहुतिं च शिरसा होमांते पूजयेद्धटम् १२
ततस्तु देशिको वापि ध्वजं संपूजयेत्ततः
नन्दिमंत्रमनुस्मृत्य भेरीं संपूज्य देशिकः १३
ग्रस्त्रयागमिदं प्रोक्तं बलिदानविधिं शृणु
इत्यंशुमान् तंत्रे मराडपयजनविधिपटलः

होमांते तु बलिं दद्यात् सायं प्रातः क्रमेण तु
कटाहं स्थलिका वापि ग्रथवा लभ्यपात्रके १४
बल्यन्तं तु विनिक्षिप्य दधिमद्धृतसंयुतम्
पाचयेदन्नलिंगार्थं तराडुलं पात्रसंख्यकम् १५
स्थरिडलाभ्यंतरे क्षिप्त्वा फलोदधिसमायुतम्
द्वादशांगुळमायामं तन्नाहं द्विगुणं भवेत् १६
ग्रग्रमग्न्यंगुलं प्रोक्तं ग्रामूलाग्रं क्रमात्कुशम्
लिंगं कृत्वा तु तच्छेषं मञ्चमप्सु विनिक्षिपेत् १७
तल्लिंगस्य तु मध्ये तु रौद्रं पाशुपदं यजेत्
परियष्टिं समाहूय सोष्णीषं सोत्तरीयकम् १८
शिरसावाह्य इत्या तु वस्त्रेणैव विधाय च
मूर्ध्नोपरिस्थिता देवान् सोष्णीषः सोत्तरीयकः १९
गळोपरि स्थितान् देवान् सोष्णीषादिकवर्जितम्
पादुकं चान्नलिंगं च बलिपात्र समन्वितम् २०
ग्रस्त्रेशं बलिमूर्तिं च ग्राहयेत्परिचारकान्
ग्राचार्य सकळीकृत्य सोष्णीषः सोत्तरीयकः २१
ग्रस्त्रेणार्घ्यं गृहीत्वा तु मराडपांते प्रविश्य च

बलिं विज्ञाप्य देवेशं द्वारपालान् बलिं क्षिपेत् २२
वृषादि परिवाराणां बलिं दद्यात्तु पूर्ववत्
द्वारपालबलिं दद्यात् बलिबेरसमायुतम् २३
ध्वजं प्रदक्षिणीकृत्य एकं वापि त्रयं तु वा
दिव्यन्तरिक्षभूमिस्थं देवता तृप्तिकारणम् २४
इन्द्रादि पद्मपर्यन्तं नित्यवद्बलिमाचरेत्
प्रासादान्निर्गमद्वार देशे द्वारबलिं ददेत् २५
प्रवेशस्योत्तरे भागे कुर्यात्कुंभोदरं बलिम्
तस्य दक्षिणभागे तु बलिं दत्वा महोदरम् २६
द्वयोर्मध्ये महावेदिं बलिं दद्याद्विशेषतः
पश्चाद्ग्रामबलिं दद्यात् ग्रामशांतिकरं भवेत् २७
नानालंकारसंयुक्तं नानावाट्यसमन्वितम्
नानाध्वजसमायुक्तं नानाछत्रसमन्वितम् २८
पिञ्चचामरसंयुक्तं नानादीपसमन्वितम्
नानाभक्तजनैस्सार्धं बलिं दद्याद्विशेषतः २९
ब्रह्मस्थानस्थितो वापि इन्द्रस्थानादितः क्रमात्
इष्टकां वा मृदं वापि कारयेद्बलिपीठकम् ३०
गोमयालेपनं कृत्वा प्रोक्षयेत् पञ्चगव्यकैः
ज्वालाजिह्वा ज्वलत्केशं महाक्रोधो महाबलः ३१
मर्त्याश्रनं चण्डवेगो वास्तुपालो बलिप्रियः
महाभूतं च विज्ञेयं नवस्थानाधिपान् यजेत् ३२
पुष्पं त्यक्त्वाधिदेवांश्च इन्द्रस्थानादितो बलिम्
एवं भूतबलिं दद्यात् ग्रामशांतिकरं भवेत् ३३
गणेशभूतगंधर्व ऋषिसोमहुताशनः
विष्णुश्चेन्द्रपिशाचैश्च पार्वती च दिवाकरः ३४
नागराजपितृब्रह्मराक्षसश्चैवमेव च

रुद्रश्चैव महेशं च ईशकाळिस्तथैव च ३५
स्कन्दज्येष्टा च दुर्गा च शास्ता भैरवमेव च
मुण्डिनी क्षेत्रपालं च चण्डेश्वरः तथैव च ३६
दिनदेवबलिं दद्यात् दिनं प्रतिबलिद्वयम्
दिनदेवांश्च देवानां ईशपीठे च वामतः ३७
सर्वदेवांश्च तृप्त्यर्थं ईशोऽस्त्राय बलिं ददेत्
पाद्यमाचमनं चार्घ्यं गंधं पुष्पं च धूपकम् ३८
दीपं बलिप्रदानं च बलिमुद्राप्रदर्शनम्
अर्घ्यदाननमस्कार स्तोत्रं वै भेरिघोषणम् ३९
नृत्तं संगीतवाद्यं च घोषशैवोपचारकम्
मेघराजाब्जवर्तं तु ब्रह्मताळसमन्वितम् ४०
गानं मल्लरिसंयुक्तं ब्रह्मदेव प्रियार्थकम्
गांधारस्वरसंयुक्तं पुष्पाञ्जलिस्तु जंभटा ४१
वराटिस्त्विंद्रदेशे तु देवताप्रीतिकारणम्
कोल्लिस्वरसमायुक्तं प्रत्यल्लीडं च मट्टयम् ४२
प्रवासगिरिगानञ्च अग्निदेशप्रयार्थकम्
नट्टभाषाभुजंगं च ताळं चर्पुटन्तथा ४३
वसन्तगानसंयुक्तं याम्यदेशप्रियार्थकम्
कौशिकं मंगलावर्तं एकतालसमन्वितम् ४४
गानं दिशि गिरिर्युक्तं नैर्ऋृत्यां तु समाचरेत्
श्रीकामरं स्वधावर्तं तालं चाचपुटं तथा ४५
गानं सोमगिरिर्युक्तं वारुण्यां तु समाचरेत्
शीकामरं स्वधावर्तं ताळं चाचपुटं तथा ४६
नागं सोमगिरिर्युक्तं वारुणां तु समाचरेत्
तक्केशी भुजगालीढं बलिताळसमन्वितम् ४७
गानं मंगळसंयुक्तं वायुः प्रीतिकरं भवेत्

पञ्चमोद्धट्टितं चैव कुंभताळसमन्वितम् ४८
गानं मंगळसंयुक्तं वायुः प्रीतिकरं भवेत्
पञ्चमोद्धट्टितं चैव कुंभताळसमन्वितम् ४९
शुद्धगौढसमायुक्तं सौम्यदेशप्रियार्थकम्
ऐशान्ये चैन्दळं प्रोक्तं कुञ्चितं वामताळकम् ५०
छायागौढसमायुक्तमीशदेशप्रियार्थकम्
प्रविश्य भवनं पश्चात् पादप्रक्षाळनं कुरु ५१
भूतपीठबलिं दत्वा पश्चान्नित्यवदर्चयेत्
इत्यंशुमान् तंत्रे बलिक्रमविधिपटलः

## महोत्सवविधौ यानक्रमविधि

ततो यानं प्रकर्तव्यं वीथितोरणसंयुतम्
दर्भमालासमायुक्तं नानाश्चर्यसमन्वितम् १
वीथी संमार्जनं कृत्वा प्रोक्षयेच्छुद्धवारिभिः
कदळी क्रमुकैश्चैव सफलैः पूर्णकुंभकैः २
चित्रवस्त्रं च गंधं च कौतुकं हिमतोयकम्
दर्पणं केशशोधं च कृष्णगंधं च सांजनम् ३
उशीरं हिरिबेरं च कल्हारं जाति चंपकम्
शतपुष्पं च दीपं च गृहद्वारं प्रति प्रति ४
पाद्यार्थमुदकं दद्यात् महेशाग्रे विशेषतः
गणेशं स्कन्दमेवं च त्रिपुरांते वृषारुहम् ५
इन्दुशेखरमूर्तिं च गजहारीन्नटेश्वरम्
सोमास्कन्दञ्च वैवाह्यं सुखासनकपादकम् ६
कालारिं कामनाशं च चण्डेशानुग्रहं तथा
गंगाधरस्वरूपञ्च किरातं वीरभद्रकम् ७
भिक्षाटनं च कंकाळं हरिरर्धार्धनारिकम्

उमासखस्वरूपं च दक्षिणामूर्तिमेव च ८
विषापहरणं चैव चक्रदानस्वरूपकम्
लिंगोद्भवं महेशं च प्रतिमाणं दिनं प्रति ९
तत्तद्देवेषु योग्यानां वाहनं संप्रकीर्तितम्
प्रथममासु वाहनं च द्वितीयं पिञ्जिवाहनम् १०
तृतीयं भूतभावं च चतुर्थं वृषवाहनम्
पञ्चमं शांतिवैकल्यं षष्टमंगजवाहनम् ११
सप्तमं नृत्तयानञ्च अष्टकं मृगायात्रकम्
नवमं सिह्मवाहं च दशमं महिषं तथा १२
एकादशञ्च सारंगं द्वादशीं कदळीं तथा
त्रयोदशं च वेताळं चतुर्दशं कृष्णसारगम् १३
पञ्चादशं पिशाचञ्च षोडशं ग्रन्थुकं तथा
सप्तदशं पदञ्च अष्टादशं मृगं तथा १४
नवदशव्याघ्रमेवं च विंशन्मृगेन्द्रमेव च
उक्षणं त्वेकविंशच्च द्वाविंशं मकरन्तथा १५
त्रयोविंशान्नमेवञ्च चतुर्विंशति नागकम्
पञ्चविंशति पञ्चास्यं षड्विंशं मौक्तिकप्रभम् १६
सप्तविंशद्रथञ्चैव शैवादि शोभनांतकम्
यावदुत्सवसंख्यांते रथमारोपयेत्ततः १७
देवानां मध्यभागे तु आरूढं चंद्रशेखरम्
महेशं वीरशक्तिं च रंगे वा शिबिकेऽपि वा १८
नानादीपसमायुक्तं नानाभक्तजनैर्युतम्
शिबिकैरोपयेत्तत्र ततो वलयसंयुतम् १९
तन्तुना बंधयेद्धीमान् दृढवत् परिचारकः
वस्त्रगंधञ्च दामञ्च भूषणाद्यैरलंकृतम् २०
महेश्वरादि बिंबानां यानैर्भक्तजनैर्युतम्

नानाछत्रसमायुक्तं नानाध्वजसमन्वितम्  २१
नानापिञ्चसमायुक्तं नानावाद्यसमन्वितम्
चामरं ताळवृत्तं च दासिकैश्च प्रदापयेत्  २२
समर्थैः परिचारैश्च खड्गखेटसमन्वितम्
अष्टादशायुधं चैव महेशाग्रैः प्रदापयेत्  २३
महाशैवास्तदन्ते तु तदन्ते भूसुरास्तथा
तदन्ते रुद्रगणिकाः सर्वालंकारसंयुतम्  २४
तदन्ते रुद्रगणिकाः सर्वालंकारसंयुतम्
तदन्ते तु तपस्वी च तदन्ते नृपपत्नयः  २५
महेशं दक्षिणे पार्श्वे वीरशक्तिं समाचरेत्
आचार्यं मूर्तिपैश्चैव दक्षपार्श्वे च वर्तिना  २६
पृष्ठपार्श्वे विशेषेण चण्डेश्वरसमन्वितम्
तत्पार्श्वे सर्वभक्ताश्च सेवार्थं वा विशेषतः  २७
वीथिमध्ये तदन्ते तु भक्त्यादीनि प्रदर्शयेत्
कदळीनाळिकेरञ्च मातुळिंगेक्षुखण्डकम्  २८
तांबूलं दर्शयेत्तत्र अपूप्यदि विवर्जयेत्
नृत्तमूर्ते विशेषेण धूपदीपादिकं ददेत्  २९
मूषिकादि रथांतं च वीथिमध्ये विशेषतः
फलभक्ष्यादिकं चैव धूपदीपं विवर्जयेत्  ३०
कृत्वा प्रदक्षिणं चैव प्रविश्यास्थानमण्डपम्
इत्यंशुमान् तंत्रे यानक्रमविधिपटलः

महोत्सवविधौ परिवेषविधि

प्रपामध्ये स्थितं देवं रत्नसिह्मासनेऽपि च
पाद्यमाचमनं दद्यात् प्रोक्षयेत्तु विशेषतः  १
भक्ष्यापूपादिकं दद्यात् पानीयं दापयेत्ततः

तांबूलं दापयेत्पश्चात् क्रमुकादिफलैर्युतम् २
धूपदीपं ततो दत्वा नीराजनमथाचरेत्
शुद्धनृत्तावसाने तु बहुरूपं समाचरेत् ३
राजोपचारवत्सर्वं राजधानीति चोच्यते
चित्रालंकारसंयुक्तं मद्दासिभिः प्रकल्पयेत् ४
नानादेशयथा वाक्यैः धर्मबुध्यादि दर्शनैः
विनोदवाक्यैरन्यैश्च महालाजादि दर्शनैः ५
वीणावेणुमृदंगादि वाद्यैरन्यैश्च शोभितम्
आचार्यः सर्वभागे तु आसीनो वामके नृपः ६
तयोः पृष्टप्रदेशे तु शिष्यभृत्याश्च संस्थिताः
गायको वंशकश्चैव सव्यभागे तु संस्थितम् ७
पार्श्वयोरुभयोश्चैव रुद्रस्य गणिका स्थितः
शैवानां भूसुराणां च वामभागे तु संथितः ८
महेशाग्रे विशेषेण बहुरूपं समाचरेत्
छात्रार्थस्नपनं कुर्यात् संध्याशेषं समाचरेत् ९
इत्यंशुमान् तंत्रे परिवेषविधिक्रमपटलः

महोत्सवविधौ क्षणणवादनविधि

पञ्चाहे निशिबल्यन्ते वैकल्यार्थं समाचरेत् १
पुष्पैदामैरलंकृत्य विन्यसेच्चन्द्रशेखरम्
तच्छक्तिं चैवमेवोक्तं यानमेवं तथैव च २
महेशं शिबिकारोप्य गब्लिके वीरशक्तिकम्
सर्वालंकारसंयुक्तं सर्वतोद्यसमन्वितम् ३
ग्रामप्रदक्षिणं कृत्वा वीथि मध्ये स्थितं भवेत्
वीथ्यग्रे चैव देवस्य वीथ्यादौ सर्वशक्तिकाम् ४
मध्ये स्थाने स्थितं चैव महेशं वीरशक्तिकम्

देवं देवीं समालोक्य गौरी संपादमेव च ५
देवीपार्श्वे स्थिताश्चैव देवदास्योर्विशेषतः
यौवनाकृतियुक्ताश्च चित्रवस्त्रैरलंकृतम् ६
केशबंधसमायुक्ताः सर्वाभरणसंयुतम्
मोचापात्रं च मध्यं च दासी हस्ते च संग्रहेत् ७
ममशक्तिविवादस्य संधानं कल्पयेत्क्रमात्
कर्मी च समयी चैव स्तोत्रपाठकलेखकौ ८
चण्डेश्वरसमायुक्तं गतागतं चैव कारयेत्
वस्त्रमेवं समादाय वेष्टयेच्छिरसोपरि ९
देवाग्रे देशिकश्चैव शक्त्यग्रे देशिकं ततः
देशिकं वचनं ज्ञात्वा कर्माणाश्च संगृह्यताम् १०
गौर्यग्रे चैव देवाग्रे सन्धानं कल्पयेत्ततः
देव्यग्रे देशिकश्चैव देवीवचनमब्रवीत् ११
देवदासी प्रहारं च कर्म्यादीनां च सिद्धयेत्
देवीवचनसंग्राह्य कर्माणां च प्रदापयेत् १२
देशिकं चैव विज्ञाप्य एवं विज्ञापयेत्ततः
सर्वद्रव्यं समादाय गौर्याश्चैव समापयेत् १३
सल्लापं चैवमेवोक्तं देवदेवीञ्च संयुतम्
ममदेवी विनोदं च भक्तानां हितमेव च १४
पाद्यमाचमनं दद्यात् नाळिकेरं फलं ददेत्
तांबूलं दापयेत्पश्चात् धूपदीपादिकं ददेत् १५
शेषं प्रदक्षिणं चैव कुर्यादास्थानमण्डपे
यात्रार्थस्नपनं पश्चात् भोगांगयजनं ततः १६
षट् दिने नित्यसिद्धांते यानमेवं समाचरेत्
क्षपणं द्वेषिणो मूर्तिं शिबिके यानमाचरेत् १७
शक्त्यालये प्रवेश्याथ क्षीरान्नं च समर्पयेत्

स्तोत्रपाठकमाहूय द्राविडं चैवमाचरेत् १८
त क्षीरमेवमेवञ्च दापयेत्स्तोत्रपाठकैः
सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम् १९
ग्रामप्रदक्षिणं कुर्यात् महेशाग्रे विशेषतः
ज्ञानवैराग्य संतोषैः भक्तैश्चापि समावृतम् २०
स्तोत्रपाठकमाहूय पुराणं श्रावयेत्ततः
भक्ताग्रे संस्थितञ्चैव वस्त्रगंधं च दापयेत् २१
पुराणं श्रावयेत्पश्चात् द्राविडस्तोत्रपाठकः
स्तोत्रांते चैव कर्तव्यं क्षपणानां तु निग्रहः २२
मद्भक्तानां विशेषेण भस्ममेवं प्रदापयेत्
मद्देशप्रतिमादीनां शिवाग्रे च स्थितिर्भवेत् २३
भक्तबेरं शनैर्याथ भक्तैश्चापि समावृतम्
गीतवाद्य समायुक्तं पदं प्रदिपदं प्रति २४
महेशाग्रे विशेषेण स्तोत्रनृत्तं च संयुतम्
यानप्रदक्षिणं कुर्यात् स्वस्थाने चैव विन्यसेत् २५
फलादीनां च दातव्यं धूपदीपादिकं ददेत्
यात्रार्थस्नपनं पश्चात् सौख्यसंध्यार्चनं क्रमात् २६
इत्यंशुमान् तंत्रे क्षपणवादनविधिपटलः

## महोत्सवविधौ नटेशोत्सवविधि

तद्दिने दिशिहोमांते नृत्तमूर्त्यादि वासयेत् १
नटेश्वरञ्च शक्तिं च कौतुकं बन्धयेद्बुधः
गब्लिगोर्ध्वे समारोप्य कृत्वा धामप्रदक्षिणम् २
पश्चिमे चोत्तरे वापि ऐशान्ये मण्डपं कुरु
मण्डपं कारयेद्धीमान् एकविंशकरायतम् ३
विस्तारं सप्तहस्तं स्यात् तद्व्यासं पञ्चपञ्चकम्

आयाममिति संख्या च पञ्चतिमानमिहोच्यते ४
व्यासे त्रिपञ्चति विस्तारमेकपंचति प्रकल्पयेत्
परितः पञ्चति मानं च पालिका कृतिवत् कुरु ५
उद्वास्य शिल्पिनं पश्चात् गोमयेनोपलेपयेत्
दुकूलं पट्टदेवांगैः तरंगोऽत्र वेष्टनैः ६
वितानैश्च ध्वजैश्चैव मुक्तादामैश्च दर्पणैः
पुष्पैर्नानाविधैश्चित्रैः क्रमुकैर्यत्र पक्षिभिः ७
नानाश्चर्यसमोपेतं मण्डपं भूषयेत्क्रमात्
पुण्याहं वाचयित्वा तु प्रोक्षयेत्पञ्चगव्यकैः ८
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु
सर्वातोद्य समायुक्तं नृत्तमण्डपमाविशेत् ९
तत्स्थाने यागगेहे वा स्थण्डिलं शालिना कुरु
नवकोष्टं समालिख्य दर्भैश्चैव परिस्तरेत् १०
पृथक्पात्रे विशेषेण स्थण्डिलोपरिन्यसेत्
वेश्यानां च समाहूय कृष्णागंधं समाहरेत् ११
मध्यपात्रे तु कर्तव्यं कृष्णागंधं न्यसेत्ततः
कर्पूरं पूर्वतो न्यस्य कुंकुमं दक्षिणे न्यसेत् १२
पश्चिमे मृगमंदस्य उत्तरे हिमतोयकम्
गन्धमाग्नेय दिग्भावे रोचनं नैर्ऋतिन्न्यसेत् १३
कस्तूरि वायुदेशे तु ऐशान्ये चाष्टगंधकम्
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः १४
ईशादि कवचांतं च द्रव्यमेतत् समर्चयेत्
वस्त्रमाच्छादनं कृत्वा तदूर्ध्वे दर्भसंस्थितम् १५
अधिवासनहोमं च पूर्ववद्देशिकोत्तमः
पद्यमाचमनं दद्यात् नैवेद्यं दापयेत्ततः १६
तांबूलं दापयेत्पश्चात् धूपदीपादिकं ददेत्

प्रच्छन्नपटमावेष्ट्य संध्याशेषं समाचरेत् १७
ततः प्रभातसमये नित्यसंध्यावसनके
पञ्चगव्यामृतैः स्नाप्य स्नपनैरभिषेचयेत् १८
वस्त्रमाल्यं च गंधं च नैवेद्यं दापयेत्ततः
तांबूलं दापयेद्धीमान् धूपदीपादिकं ददेत् १९
सर्वोपचारैस्संतोष्य प्रणिपत्य क्षमापयेत्
एवं कृत्वा विशेषेण संध्याशेषं समाचरेत् २०
तद्रात्रावेव कर्तव्यं नित्यसंध्यावसनके
चित्रवस्त्रसमायुक्तं चित्रमाल्यैरलंकृतम् २१
आचक्रा च प्रभां कृत्वा नानालंकारशोभितम्
आचार्यः शिष्यसंयुक्तो सोष्णीषः सोत्तरीयकम् २२
कृष्णगंधं समादाय पूर्वादिद्रव्यमाहरेत्
धामप्रदक्षिणं कृत्वा नटेशाग्रे तु विन्यसेत् २३
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः
मुहूर्तं निरीक्ष्य देवज्ञ शंखघोषसमन्वितम् २४
दक्षिणे बाहुके चैव मूर्ध्नि चैव ललाटके
कर्णे च हृदये चैव अपस्मारं तु पादयोः २५
कृष्णगंधं न्यसेद्धीमान् हृदयाद्यस्त्रमंत्रतः
पूर्वादिद्रव्यमादाय ईशानेन तु पादयेत् २६
भक्तानामंधकाराणां मोचनार्थं विशेषतः
तस्मात्सर्वप्रयत्नेन कृष्णगंधं तु दापयेत् २७
नाळिकेरफलादींश्च दापयेत्तु विचक्षणः
तांबूलं दापयित्वा तु धूपदीपादिकं ददेत् २८
भक्तानां च समाहूय कृष्णगंधं तु दापयेत्
रथे वा गब्लिके वापि यानमेवं समाचरेत् २९
नटेशं शक्तिसंयुक्तं गब्लिगोर्ध्वे तु विन्यसेत्

ततो वलयसंयुक्तं बन्धयेद्दृढवद्बुधः ३०
सामान्यार्घ्यं तु संकल्प्य सोष्णीषं सोत्तरीयकः
नृत्तेशं दक्षिणे भागे स्वासीनं देशिकोत्तमः ३१
आचार्यं नृत्तमूर्तिं च नान्तरागमनं भवेत्
तस्मात्सर्वप्रयत्नेन एकासनसमन्वितम् ३२
ग्रामप्रदक्षिणं कृत्वा सर्वालंकारसंयुतम्
गीतवाद्यसमायुक्तं नृत्तमण्डपमाविशेत् ३३
पाद्यमाचमनं दत्वा फलादीनि निवेदयेत्
तांबूलं दापयेत्पश्चात् धूपदीपादिकं ददेत् ३४
वाद्यकर्तारमाहूय मृदंगमभिवादयेत्
काहळैस्ताळशंखैश्च वीणावेणुरवैस्सह ३५
भरतोक्तक्रमेणैव घोषयेत् पृष्टभागतः
नृत्तशिक्षितभावं च यौवनं पात्रमेव च ३६
रुद्रकन्यां समाहूय नृत्तं कृत्वा सलक्षणम्
आनंदताण्डवं चैव पुष्पाञ्जलिक्रमेण तु ३७
भरतोक्तक्रमेणैव ताण्डवं तु समाचरेत् ३८
वस्त्रमाभरणं चैव गंधमाल्यावरोपयेत्
आचार्यः शिष्यसंयुक्तः स्नानं कृत्वा समाचरेत् ३९
स्नानमण्डपमाविश्य स्नपनैरभिषेचयेत्
नैवेद्यं दापयेत्पश्चात् भोगांगं पूजयेत्ततः ४०
ततः प्रभातसमये उषासंध्यावसानके
शुक्लवस्त्रेण संवेष्ट्य शुक्लमाल्येनशोभितम् ४१
चंदनेन समालिप्य हिमतोयेन संयुतम्
कर्पूरशकलेनैव लेपयेत्तु विशेषतः ४२
श्वेतार्कश्वेतपद्मं च नंद्यावर्तञ्च धत्तुरम्
बकपुष्पकृतञ्चैव राजतेन समन्वितम् ४३

मौक्तिका भरणं चैव मौक्तिकज्ञोपवीतकम्
स्वर्णेन पद्मपुष्पं च मध्यमाणीक्यमे न्यसेत्  ४४
प्रभामण्डलमेवं च बन्धयेत्तु विचक्षणः
सर्वालंकारसंयुक्तं पाद्यमाचमनं ददेत्  ४५
पिष्टञ्च नाळिकेरञ्च कदळी फलमेव च
आज्येन स्नावयेद्धीमान् दापयेत्तु विशेषतः  ४६
तांबूलं च निवेद्याथ धूपदीपादिकं ददेत्
नटेशं शक्तिसंयुक्तं गब्लिकोपरि विन्यसेत्  ४७
तन्तुनाबंधयेद्धीमान् पूर्ववत्परिचारकैः
हेमांगुळीयकटक हारकुण्डलसंयुतम्  ४८
हेमयज्ञोपवीतञ्च मुक्तायज्ञोपवीतकम्
अक्षमालासमायुक्तं सोष्णीषस्सोत्तरीयकम्  ४९
सामान्यार्घ्यं च संकल्प्य एकासनसमन्वितम्
नटेशं दक्षिणे भागे स्वासीनं देशिकोत्तमः  ५०
सर्वालंकारसंयुक्तं यानमेवं समाचरेत्
स्तोत्रध्वनिसमायुक्तं मंदभावेन चार्चयेत्  ५१
चक्रप्रदक्षिणं कृत्वा मृदुगत्या विशेषतः
वाद्यध्वनिसमायुक्तं शुद्धनृत्तं समाचरेत्  ५२
नानावाद्य समायुक्तं नानाबीजसमन्वितम्
नानाछत्रसमायुक्तं नानाभक्तजनैर्युतम्  ५३
ग्रामप्रदक्षिणं कृत्वा वीथ्यग्रे वाथ मध्यमे
सन्यासी च जटाधारी मठद्वारे विशेषतः  ५४
नृपवेशगृहे वाथ आचार्यगृहमेव च
गृहद्वारे विशेषेण धिष्णयं कृत्वा विचक्षणः  ५५
चित्रवस्त्रैरलंकृत्य दीपज्वालासमन्वितम्
पार्श्विद्वयसमायुक्तं कदळीस्तंभसंयुतम्  ५६

शालितण्डुलचूर्णेन चित्रालंकारसंयुतम्
नाळीकेरफलादींश्च धिष्ण्यमध्ये तु विन्यसेत् ५७
ग्रहकर्ताविशेषेण पाद्यं दत्वा शिवाग्रके
नमस्कृत्वा तु विधिवत् हस्तप्रक्षाळनं कुरु ५८
सर्वद्रव्यं समादाय गब्लिकोर्ध्वे तु विन्यसेत्
वस्त्रं च गंधमाल्यं च अलंकृत्य विचक्षणः ५९
फलमाचमनं दद्यात् फलादीन् स्पर्शयेत्ततः
धूपदीपादिकं दत्वा तांबूलं च निवेदयेत् ६०
स्तोत्रं च गीतवाद्यं च नृत्तं चैव विशेषतः
एवं क्रमेण विधिवत् तत्तत्स्थाने समाचरेत् ६१
मद्भक्ताश्च विशेषेण कृताञ्जलि समन्वितम्
एवं प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति ६२
आस्थानमण्डपे चैव स्वस्थाने चैव विन्यसेत्
पाद्यमाचमनं दत्वा नाळिकेरं निवेदयेत् ६३
पश्चाद्धूपदीपादिकं ददेत् ॥
भस्मानि दापयेत्पश्चात् भक्तानां चैव दापयेत् ६४
वस्त्रमाभरणं चैव गंधमाल्यं समर्पयेत्
स्नपनं कारयेद्धीमान् नैवेद्यं दापयेत्ततः ६५
एवं कृत्वा विशेषेण संध्याशेषं समाचरेत्
इत्यंशुमान् तंत्रे नटेशोत्सवविधिपटलः

महोत्सवविधौ मृगयात्राविधि

बल्यंते यानमेवं स्यात् मृगयात्रां समाचरेत्
तुरगं तु समाहूय सोमास्कंदं ततोपरि १
महेशं शिबिकारूढं किरातवेषसमन्वितम्
केचित्कुंदधराश्चैव केचित्पाशधरास्तथा २

केचित्खड्गधराश्चैव केचिद्दण्डधरास्तथा
केचिद्बाणधराश्चैव केचिच्छूलधरास्तथा ३
सर्वालंकारसंयुक्तं सर्वाभरणभूषितम्
वीथ्यग्रे वीथिबाह्ये वा युद्धोपक्रमरूपिणे ४
शिष्टानां पालनं चैव दुष्टानां निग्रहं तथा
नानाविनोदसंयुक्तं नानाश्चर्यसमन्वितम् ५
तुरगं वनमध्ये च खेसुंश्चैवेव संग्रहेत्
महेशाग्रे विशेषेण सोमास्कंदेश्वरं तथा ६
द्राविडैस्तोत्रपाठैश्च भक्ताश्चैव विशेषतः
वटैश्चानुग्रहं चैव वस्त्रं चैव तु दापयेत् ७
परिकर्मिं समाहूय मृगं शास्त्रस्य संहरेत्
शीघ्रयानं ततः कृत्वा पश्चाद्बास्तु प्रदापयेत् ८
वीरशक्तिं समादाय गब्लिके यानमाचरेत्
शेषं प्रदक्षिणं कृत्वा कुर्यादास्थानमण्डपे ९
फलादीनां च दातव्यं धूपदीपादिकं ददेत्
यात्रार्थस्नपनं पश्चात् सन्ध्या शेषं समाचरेत् १०
ततः प्रभातसमये रात्र्यांताराधनांतके
तुरगे बिंबमारोप्य सर्वालंकारसंयुतम् ११
छत्रसामरसंयुक्तं महावाध्यस्य घोषकम्
मृगयात्रस्य देशे तु शीघ्रं गत्वा समाविशेत् १२
तत्स्थानं दर्शयेद्धीमान् पश्चाद्बास्तु प्रदक्षिणम्
आस्थानमण्डपे विश्य स्नपनं कारयेत्ततः १३
पाचयेद्मुद्गसारं तु तस्योदकसमन्वितम्
गुळं च नारिकेळं च कदळी फलसमन्वितम् १४
निवेदयेद्मुद्गपाचो धूपदीपादिकं ददेत्
स्वस्थाने बिंबमारोप्य संध्याशेषं समाचरेत् १५

# इत्यंशुमान् तंत्रे मृगयात्राविधिपटलः

## महोत्सवविधौ रथारोहणविधि

रथारोहदिनात्पूर्वे सायरक्षावसानके १
तीर्थार्थमंकुरं कुर्यात् पूर्वोक्तविधिना कुरु
तीर्थाह्नः पूर्वदिवसे रथमारोपयेत्ततः २
तद्दिने नित्यसंध्यान्ते रथशुद्धिं समाचरेत्
चक्रादि रथपीठांतं तैलेनैव तु मर्दयेत् ३
चित्रवस्त्रैर्वितानैश्च चामरैरुभशोभितम्
बध्वा च स्वर्णदामैश्च रक्तदामैः प्रलंबयेत् ४
नानापुष्पैः फलैः पत्रैः कदल्यादीनि शोभितम्
रजतार्धशशीं भूष्य ध्वजैश्चित्रैश्च भूषयेत् ५
रथस्य पश्चिमे भागे मण्डपं संप्रकल्पयेत्
गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत् ६
महेशं शिबिकारोप्य सर्वालंकारसंयुतम्
सर्वातोद्य समायुक्तं रथमण्डपमाविशेत् ७
महेशाग्रे विशेषेण स्थण्डिलं शालिना कुरु
विघ्नेशं पूजयेद्धीमान् पुण्याहं वाचयेत्ततः ८
पञ्चगव्यं तु संकल्प्य नवकं संप्रकल्पयेत्
नवग्रहं यजेद्धीमान् नवकुंभे सुयोजयेत् ९
गंधपुष्पादिनाभ्यर्च्य रथोर्ध्वे रोपयेत्ततः
रथपीठे समभ्यर्च्य पञ्चगव्याभिषेचयेत् १०
शुद्धतोयाभिषेकञ्च रथदेवान् समर्चयेत्
चक्रे दण्डादिना नाथौ हरिवज्री द्विदण्डके ११
परितः पट्टिका जाले शतरुद्राः प्रकीर्तिताः
गोत्रेषु गात्रबंधेषु धर्माद्याद्येतिकं क्रमात् १२

गात्रात् गात्रांतरे वायु शैत्यादि गुणसंयुतम्
रथप्रसादके चोर्ध्वे स्थूपिकायां सदाशिवम् १३
स्कन्देन्द्रदक्षिणे मूर्तिं विष्णुं ब्राह्मं तथैव च
रथप्रांतं समाश्रित्य लोकपालान् व्यवस्थितः १४
रज्जुदेवान् समभ्यर्च्य चतुर्दिक्षु धरोरगान्
स्वनाममंत्रैरभ्यर्च्य गंधपुष्पं तु धूपकम् १५
तस्मात्कुंभं समुद्धृत्य रथोर्ध्वे स्थापयेत्ततः
कुंभात् बीजं समादाय वीरपीठे समर्चयेत् १६
परितो लोकपालानां तत्तत्स्थानेऽभिषेचयेत्
गंधपुष्पादिनाऽभ्यर्च्य पायसान्नं निवेदयेत् १७
तांबूलं च निवेद्याथ धूपदीपादिकं ददेत्
मुहूर्तं निरीक्ष्य देवज्ञं रथोर्ध्वे रोपयेत्ततः १८
रथपीठोपरि स्थाप्य सोळा सिह्मासने शिवे
ततो वलयसंयुक्तं तन्तुना बंधयेद्बुधः १९
चित्रवस्त्रैरलंकृत्य गंधमाल्यादि भूषणैः
पाद्यमाचमनं दत्वा फलादीनि निवेदयेत् २०
धूपदीपादिकं दत्वा तांबूलं दापयेत्ततः
महेशं दक्षिणे भागे स्वासीनं देशिकोत्तमः २१
षट्सप्तपरि कर्मीणां रोपयेत्तु तथोपरि
घण्टारवसमायुक्तं दीपं ज्वालासमन्वितम् २२
रथाग्रे च विशेषेण स्रजं शस्त्रस्य संहरेत्
रथमाश्रित्य देवानां प्रीतिमाप्नोति सर्वशः २३
मद्भक्तानां समाहूय रथमारोपणं प्रभुः
नानावाद्यस्य घोषं च रथाग्रे चैव संगमम् २४
तदंगे तु विशेषेण यन्त्रस्यारोहणं ततः
मत्कन्यां वाथ मद्दासीं सर्वालंकारसंयुतम् २५

चित्रवस्त्रसमायुक्तं सर्वाभरणभूषितम्
पञ्चाभिस्सप्तनवभिः एकविंशतिरेव च २६
द्वात्रिंशत्संख्यया चैव यंत्रस्यारोहणं ततः
चोळनस्य चलनं कृत्वा मम प्रीतिकरं भवेत् २७
तदन्ते विघ्नराजं च मूषिके च रथेऽपि वा
उमादेवी रथं चैव तदंते चैव संगमम्
ग्रामप्रदक्षिणं कुर्यात् पूर्वस्थाने स्थितं भवेत् २८
महेशं शिबिकारोप्य कुर्यादास्थानमण्टपे
फलादीनां च दातव्यं धूपदीपादिकं ददेत् २९
यात्रार्थस्नपनं कुर्यात् संध्याशेषं समाचरेत् ३०
इत्यंशुमान् तंत्रे रथारोहणविधिपटलः

महोत्सवविधौ स्नानविधि

रात्रौ होमावसाने तु महातीर्थं समाह्वयेत्
महेशं वीरशक्तिं च अस्त्रमूर्तिं तथैव च १
कौतुकं बंधयेद्धीमान् पूर्वोक्तविधिना सह
शिवाग्रे मण्डपे वापि यागगेहे प्रकल्पयेत् २
स्थण्डिलद्वितयं कल्प्य शूरार्थं कारकार्थकम्
पश्चिमे स्थापयेच्छूलं तदग्रे करकं न्यसेत् ३
ससूत्रान् सापिधानांश्च सकूर्चान् वस्त्रवेष्टिवान्
सोदकान् पल्लवोपेतान् वर्धनीं नवसंख्यया ४
स्थण्डिपरि विन्यस्तान् विघ्नेशं पूजयेत्ततः
पुण्याहं वाचयेत्तत्र अस्त्रेशं पूजयेत्ततः ५
मध्ये मनोन्मनीं पूज्य पूर्वादीनाममंत्रकम्
गंगा च यमुना चैव नर्मदा च सरस्वती ६
सिन्धुगोदावरी चैव कावेरी ताम्रवर्णिका

गंधपुष्पादिनाभ्यर्च्य स्वस्वनाम्नैश्च देशिकः ७
नैवेद्यं दापयेद्धीमान् धूपदीपादिकं ददेत्
दशास्त्रं परितोऽभ्यर्च्य कवचेन तु रक्षयेत् ८
वस्त्रमाच्छादनं कृत्वा सन्ध्याशेषं समाचरेत् ९
इत्यंशुमान् तंत्रे स्नानकर्मविधिपटलः

महोत्सवविधौ चूर्णोत्सवविधि

अपरे दिवसे चैव चूर्णोत्सवमथाचरेत्
बलिदानोत्सवं यानं कृत्वा चूर्णोत्सवं तथा १
देवाग्रे च सभा स्थाने तीर्थतीरे मनोरमे
गोमयालेपनं कृत्वा पिष्टचूर्णैरलंकृतम् २
स्थण्डिलं कल्पयेत्कोणे मध्ये पूर्वे च पश्चिमे
दक्षिणे कल्पयेद्विद्वान् साष्टपत्रं सकर्णिकम् ३
मध्यमे लूखलं न्यस्त्वा वस्त्रेणैव तु वेष्टयेत्
विघ्नेश्वरं समभ्यर्च्य नाळिकेरन्निवेदयेत् ४
दक्षिणे स्थण्डिले मध्ये पुण्याहं वाचयेत्ततः
वरुणे स्थण्डिले मध्ये चास्त्रमूर्तिं समर्चयेत् ५
जीवशक्त्यग्निदेशे तु विघ्नेशं यजेन्निर्ऋतौ
स्वाहाशक्ती च वनिलौ समांबास्त्वीशगोचरे ६
स्वनाममंत्रैरभ्यर्च्य धूपं दत्वा समाचरेत्
भेरीं वस्त्रेण संवेष्ट्य अभ्यर्च्य पूर्वमण्डले ७
धूपं दत्वा विशेषेण भेरीताडनकं विना
वस्त्रेणावेष्ट्य मुसलं कूर्चं बध्वाथ तद्वयोः ८
मुसलं रुद्रदेवत्यं लूखलं विष्णुदैवतम्
शूर्पं वै ब्रह्मदैवत्यं अर्चयेत्तत्स्वनामतः ९
घृतं शिरोर्पणं कुर्यात् पूर्वोक्तविधिना सह

द्रोणार्द्धं वा तदर्धा वा शुष्कराजनिकां ततः १०
सुशुष्कां रजनिं दत्वा अर्चयेन्मूलमंत्रतः
निक्षिप्य लूखले मध्ये चूर्णयेद्देशिकोत्तमः ११
अस्त्रेणैव तु मंत्रेण कुट्टयेन्मुसलेन तु
पश्चादाहूय गणिका भक्त्यादिस्तोत्रपाठकान् १२
गन्धपुष्पं च दातव्यं वस्त्रं दत्वाऽथ तद्वयोः
तयोर्मुसलमुद्धृत्य चूर्णगानसमन्वितम् १३
कुट्टयेत्तान् विशेषेण शंखध्वनिसमन्वितम्
स्तोत्रपाठकमाहूय दक्षिणां दापयेद्बुधः १४
तच्चूर्णन्तु समुद्धृत्य हृदिना देशिकोत्तमः
चूर्णं सतैलसंमिश्रं दूर्वाङ्कुरसमन्वितम् १५
पञ्चभागं तु सङ्कल्प्य लिङ्गार्थं प्रतिमार्थकम्
उत्सवप्रतिमार्थं च त्रिशूलार्थं विशेषतः १६
परिवारार्थमेकं च तत्तन्मूलेन दापयेत्
धूपदीपादिकं दत्वा चूर्णं दत्वा भरो जनः १७
चूर्णोत्सवमिदं प्रोक्तं तीर्थस्नानं समाचरेत् १८
इत्यंशुमान् तंत्रे चूर्णोत्सवविधिपटलः

## महोत्सवविधौ यागकुम्भाभिषेचनविधि

परियष्टिं समाहूय सोष्णीषः सोत्तरीयकः
संग्राह्य तीर्थवर्धन्यां त्रिशूलेन समन्वितम् १
महेशं शिबिका रूढं गब्लिके वीरशक्तिकम्
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम् २
गच्छेत् भक्तजनैस्सार्धं तीर्थस्नानं समाविशेत्
तीर्थतीरे प्रपामध्ये महेशं वीरशक्तिकम् ३
पाद्यमाचमनं दत्वा फलादीनि निवेदयेत्

तांबूलं च निवेद्याथ धूपदीपादिकं ददेत् ४
तस्य पश्चिमभागे तु स्नानार्थं संप्रकल्पयेत्
शूलं च तीर्थवर्धन्यां स्थापयेत्तराडुलोपरि ५
विघ्नेशं पूजयेद्धीमान् पुरायाहं वाचयेत्ततः
पञ्चगव्यं तु संकल्प्य नवकंसं प्रकल्पयेत् ६
तीर्थाधिवासवर्धन्यां संस्नाप्य जलमध्यमे
दशास्त्रं परितोऽभ्यर्च्य गंधपुष्पं च धूपकम् ७
सतैलं रजनीं दत्वा दूर्वाग्रं बिंबमूर्धनि
पश्चाद्भक्तजनेभ्यश्च दत्वातैलं हरिद्रकम् ८
देवं देवीञ्च संगृह्य त्रिशूलेन समन्वितम्
वारि मध्ये तु संस्थाप्य कौतुकं त्याज्यसर्पयोः ९
श्रीरुद्रं पञ्चशांतिं च चमकं रुद्रसूक्तकम्
जपेयुः ब्राह्मणाः सर्वे जलक्रीडां समाचरेत् १०
प्रपामध्ये विशेषेण बिंबान् संस्थापयेत्ततः
स्नपनैरभिषिच्याथ नैवेद्यं दापयेत्ततः ११
तांबूलं दापयेद्विद्वान् धूपदीपादिकं ददेत्
समर्थैः परिचारैर्वा शीघ्रं गत्वालयेऽपि वा १२
ग्रास्थानमराडपे स्थाप्य ब्रह्मघोषसमन्वितम्
तराडुलं रजनीयुक्तं हिमतोयेन सेचयेत् १३
ग्राचार्यहस्तमुद्धृत्य द्विजहस्ते प्रदापयेत्
एतैरग्निं च मंत्रेण ग्राशिषो वाचमब्रवीत् १४
द्विजहस्तात् समादाय देवस्य मकुटं न्यसेत्
पाद्यमाचमनं दत्वा भक्त्यादीनि निवेदयेत् १५
धूपदीपादिकं दत्वा तांबूलं तु निवेदयेत्
वेदध्वनि समायुक्तं स्तोत्रध्वनि समन्वितम् १६
नृत्तगीतं च वाद्यं च मूलस्थाने प्रवेशकम्

सौख्य संध्यार्चनं चैव यागेशं पूजयेत्ततः १७
पूर्णाहुतिं दत्वा कृत्वा स्विष्टांतमाचरेत्
कुण्डेष्वग्निं विसृज्याथ कुंभमध्ये तु योजयेत् १८
नैवेद्यं दापयेद्धीमान् धूपदीपादिकं ददेत्
द्वारदेवान् समभ्यर्च्य क्षुद्रघण्ठा तु ताडयेत् १९
लिंगशुद्धिक्रमं कृत्वा यागधामप्रविश्य च
परिचारकमाहूय मूर्तिदेशे घटं न्यसेत् २०
स्वस्ति सूक्तसमायुक्तं क्ष्वेलनं वा विशेषतः
गीतवाद्यसमायुक्तं दीपमाला समन्वितम् २१
चत्रचामरसंयुक्तं कृत्वा धामप्रदक्षिणम्
गर्भं गेहं प्रविश्याथ स्थापयेत्स्थण्डिलोपरि २२
पाद्यमाचमनं दत्वा दीपधूपं समाचरेत्
कुंभादेव समादाय लिंगमध्ये समर्चयेत् २३
गौरीपीठे समावाह्य कुंभानामभिषेचयेत्
परितो लोकपालानां घटसंस्थानमाचरेत् २४
मंत्रपुष्पं ततो दत्वा मंत्रान्नं च निवेदयेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः २५
दक्षिणां दापयेत् पश्चात् प्रागुक्तविधिना सह
एवं कृत्वा विशेषेण संध्याशेषं समाचरेत् २६
इत्यंशुमान् तंत्रे यागकुंभाभिषेकपटलः

## महोत्सवविधौ ध्वजावरोहणविधि

ध्वजावरोहणं पश्चात् कृत्वा होमावसानके १
ध्वजाग्रे स्थण्डिलं कृत्वा विघ्नेशं पूजयेत्ततः
पुण्याहं वाचयेत्तत्र प्रोक्षयेदस्त्रमंत्रतः २
धूपदीपादिकं दत्वा संतोष्य वृषमूर्तिनम्

ध्वजावरोहणं कृत्वा वृषगायत्रिमंत्रतः ३
अवधार्य पटस्थं च योजयेत् वृषभं वृषे
वृषभ++नं ++ गंधपुष्पादिभिर्यजेत् ४
मुद्गान्नं च निवेद्याथ तांबूलं दापयेत्ततः
धूपदीपादिकं दत्वा संतोष्यवृषमूर्तिनम् ५
इत्यंशुमां तन्त्रे ध्वजावरोहणपटलः

## महोत्सवविधौ मौनोत्सवविधि

अर्धरात्रौ विशेषेण मौनार्थाय बलिं ततः
रक्तान्नं कृसरापूपं मांसं सर्पिदधिप्लुतम् १
जपाकुसुमसंयुक्तं पैशाचस्य प्रियावहम्
कूष्माण्डमिक्षुदण्डं च बृहती फलसंयुतम् २
व्यञ्जनैर्नववस्त्रेण रज++ ग्मचूर्णकम्
मुद्गाण्डे तु विनिक्षिप्य जलेनापूरयेत्ततः ३
मर्दयेत्तु विशेषेण रक्तपानमिति स्मृतम्
द्वारादि दीपपर्यन्तं नित्यवद्बलिमाचरेत् ४
ततो ग्रामबलिं दद्यात् अन्नलिंगसमन्वितम्
त्रिशूलेन समायुक्तं बलिबेरं विनाचरेत् ५
रक्तान्नं रक्तपानं च गन्धपुष्पसमन्वितम्
खड्गखेटकसंयुक्तं चत्रैश्चैव समन्वितम् ६
दृष्णीय घोषसंयुक्तं बहुदीपं विना भवेत्
मौनव्रतधरास्सर्वे संधिदेवान् विसर्जयेत् ७
पाद्यमाचमनं दत्वा गंधपुष्पैस्समर्चयेत्
रक्तान्नं रक्तपानं च बलिं दद्याद्विशेषतः ८
पीठं प्रतिविशेषेण अजं शस्त्रस्य संहरेत्
एवं प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति ९

पादप्रक्षाळनम् कृत्वा भूतपीठे बलिं ददेत्
पुष्पवह्निन्यसेच्छूलं अन्नलिंगं जले न्यसेत् १०
संध्याशेषं ततः कृत्वा चण्डयागं समाचरेत्
चण्डस्याभिमुखे कुर्यात् स्थण्डिलं शालिना कुरु ११
कलशैर्नवसंस्थाप्य स्थापयेच्चण्डमूर्तिनम्
नैवेद्यं दापयेत्तस्मै तांबूलं दापयेत्ततः १२
धूपदीपादिकं दत्वा प्रणिपत्यक्षमापयेत्
ततः प्रभात समये उषापूजावसानके १३
निंगे बेरे वृषे शूले भूतपीठे विशेषतः
प्रायश्चित्तार्थकलशैः प्रभूतहविषं ददेत् १४
एवं यः कुरुते मर्त्यः सोऽन्ते सायुज्यमाप्नुयात्
उत्सवस्य विधिः प्रोक्तः प्रायश्चित्तविधिं शृणु १५

इति मौनोत्सवविधि

इत्यंशुमान् तंत्रे उत्सवविधिपटलः

## वृक्षार्चनविधि

दिव्यवृक्षार्चनं वक्ष्ये श्रूयतां रविसत्तम
आयुरारोग्यजयदं पुत्रश्रीकीर्तिवर्धनम् १
सर्वरोगविनाशार्थं सर्वाभीष्टफलप्रदम्
वृक्षस्सचोद्भवश्चैव वल्मीकस्योद्भवं तथा २
लिंगोद्भवं च तद्वृक्षे तस्य मूले शिवार्चयेत्
प्रासादे मण्डपे वापि कूटाकारमथापि वा ३
पूर्वोक्तविधिमार्गेण कारयेद्देशिकोत्तमः
तन्मूले पीठसंस्थाप्य अगाश्रं वृत्तमेव वा ४
पीठं चैव समायुक्तं पूर्ववत्कारयेत् बुधः
प्रातिष्टा विधि ++++++ विचक्षणः ५

अक्षमोक्षीणहीनं तु ग्रामप्रदक्षिणं विना
शेषकर्म तु सर्वेषु प्रतिष्टाविधिरुच्यते ६
अर्चनं द्विविधं चैव भोगमोक्षफलप्रदम्
तदग्ररूप ++++ माचमनं ददेत् ७
संध्यां प्रतिसमभ्यर्च्य पञ्चांगेनैव देशिकः
स्नानं वस्त्रं च गंधं च पुष्पं नैवेद्यमेव च ८
पञ्चोपचारमेनं तु पूजयेत्तु विशेषतः
++++ समायुक्तं नृत्तांते तु समाचरेत् ९
तद्वृक्षं फलमूलादि तद्रात्रमभिवृद्धये
यं फलं पक्वमेवञ्च भूमौ तु पतितं तथा १०
तन्मूले चैव नैवेद्यं +++++ दितः
सर्वोपचारं कर्तव्यं पूजयेद्देशिकोत्तमः ११
तद्वृक्षं फलहीनं तु तद्राष्ट्रे कलहो भवेत्
तद्वृक्षं शुष्कमेवं तु नृपस्य मरणं भवेत् १२
एवं फलश्रुतिं कृत्वा शिवलोके महीयते
दिव्यवृक्षार्चनं प्रोक्तं वल्मीकस्यार्चनं तथा १३
एवं यः कुरुते मर्त्यः सपुण्यां गतिमाप्नुयात्
इत्यंशुमान् तंत्रे वृक्षार्चनाविधिपटलः

## नित्यार्चनविधि

नित्यसंध्यार्चनं वक्ष्ये श्रूयतां रविसत्तम
श्रीकरं लोकरक्षार्थं विजयं पुत्रवर्धनम् १
ब्रह्महत्यादि नाशार्थं सर्वदोषनिकृन्तनम्
शैवं च द्विविधं प्रोक्तं मात्रार्थं प++र्थकम् २
आत्मार्थं द्वादशं प्रोक्तं परार्थं मूललक्षकम्
सूक्ष्मं वामादितंत्रं च सिद्धांते चैव पूजितम् ३

स्थूलं द्विविधमाख्यातं सौम्यं रौद्रमतः परम्
रौद्रं पाशुपदादीनां षट्कर्मसाम्य ++ नम् ४
वैदिकाचारसंबंधात् सौम्यं श्रेष्टमिति स्मृतम्
सौम्यं सर्वेण संपूज्य भुक्तिमुक्तिप्रदायकम् ५
शिवपूजासमं पूज्यं न भूतं न भविष्यति
द्रव्यसंग्रहणं पूर्वं पश्चाच्छौचं द्वितीयकम् ६
आचमनं तृतीयं चु चतुर्थं स्नानशुद्धिकम्
पञ्चमं सिद्धिकर्मं च षष्टं धामप्रदक्षिणम् ७
सप्तमं पादशुद्धिं च पश्चान्मण्डपवेशनम्
नवमं स्नानशुद्धिं च दशमं भस्मलांचनम् ८
एकादशं भूतशुद्धि न्यासं द्वादशमीरितम्
त्रयोदशं स्नानशुद्धि द्रव्यशुद्धि चतुर्दशम् ९
पचनालयार्चनं पश्चात् षोडशं भानुपूजनम्
स्नानं तन्त्रार्चनं पश्चात् पश्चाद्विघ्नेश्वरार्चनम् १०
तत्परं द्वारपूजां च तत्परं लिंगशुद्धिकम्
कुर्यादावाहनं चैव तत्परं तु निवेद्यकम् ११
पावकाराधनैर्युक्तं बलिं दद्यात्ततः परम्
कुर्यान्मण्डपवेशं च दीपं चैव ततः परम् १२
नृत्तगीतं ततः पश्चात्पुष्पांजलि क्रमं ततः
शुद्धपञ्चपवित्रं च दण्डांगं चण्डपूजितम् १३
तन्त्रक्रममिति प्रोक्तं द्रव्यसंग्रहणं कुरु
जलं वस्त्रं च भस्मं च रुद्राक्षं हिमतोयकम् १४
कर्पूरं कुंकुमं चैव कोष्टं चंदनसंयुतम्
जलबाण्डमर्घ्यपात्रादि हविः पात्रं तथैव च १५
जाती च वकुळं चैव नंद्यावर्तञ्च पाटली
स्थलिकापादसंहितं दर्वी च वलयस्तथा १६

श्वेतार्कं श्वेतपद्मं च पुन्नागं पुष्पदन्तिका
नंदिका उपदंशादि प++ मृत्पात्रग्रहणं तथा १७
कलशं पूजपात्रं च घराटदीपस्य पात्रकम्
बिल्वं च नागनराडीं च भद्रं च शंखिनी तथा १८
गुग्गुलुं च गुळं चैव कुन्दरुष्कं च कृष्णकम्
कर्पूरं च घृतं चैव दीपाधारं तथैव च १९
नित्यदीपादि तैलं च छिन्नवस्त्रं च संयुतम्
श्वेततराडुलसंयुक्तं अष्टद्रोणि समन्वितम् २०
दर्पणं पुष्पपात्रं च छत्रं च बलिपात्रकम्
++ मरं गंधचूर्णं च तैलं च कदळीफलम् २१
कूश्माराडं नालिकेरं च स्मरणं बृहती तथा
कदळीं चैव वेत्राग्रं लवणं गंधपात्रकम् २२
कटुकं च तथाश्मं च जीरकं च घृतं तथा
अपक्वमतिपक्वं च सुपक्वं फलसारकम् २३
आपक्षीरं तिलं चैव सर्षपं यवतराडुलम्
पञ्चगव्यादिपात्रं च गोमूत्रं गोमयं घृतम् २४
सिद्धार्थं च उशीरं च दूर्वासहितकं तथा
त्रिं पू जाति फलं चैव एलालवंगसंयुतम् २५
अपूपं गुळखराडं च अन्यानि फलसारकम्
दधिघृतो पंचदंशादि नारंगं लिकुचं तथा २६
आरार्तिकं गंधतैलं गंधं धूम्रमृगद्वयम्
तांबूलं वस्त्रसंयुक्तं चूर्णजातिफलं तथा २७
क्रमुकस्य फलं चैव भूषणं मधुसारकम्
अन्यद्रव्यादिकैर्युक्तं भक्ष्यादीनां च संग्रहम् २८
पूजोपकरणान् सर्वान् तत्तत्स्थाने तु साधकः
द्रव्यसंग्रहणं प्रोक्तं शौचादीनां विधिं शृणु २९

उत्थाय च बहिर्ग्रामात् स्नात्वा शौचं समाचरेत्
रविदक्षिणतः कृत्वा विण्मूत्रं च वर्जयेत् ३०
विण्मूत्रं हृदयेनैव शौचमस्त्रादि मंत्रकम्
स्नानं कृत्वा विधिवद् यद्वेदायेति मंत्रतः ३१
तर्पणं संधिकर्म च पूर्ववद्देशिकोत्तमः
आर्द्रवस्त्रं विसृज्याथ धौतवस्त्रेण वेष्टयेत् ३२
तत्स्थानोद्वाहनं चैव हर्म्यं प्रदक्षिणक्रमात्
पादप्रक्षालनं कृत्वा महाघण्टां प्रताडयेत् ३३
देवाग्रे दक्षिणे भागे मण्डपं संप्रकल्पयेत्
कूर्मासनं ततः कृत्वा तन्मध्ये देशिकोत्तमः ३४
दशदिग्बंधनं कृत्वा चास्त्रमंत्रेण देशिकः
प्राणायामत्रया++ भूतशुद्धिं ततः कुरु ३५
सकळीकरणं चैव करन्यासांगुळी न्यसेत्
अंगन्यासं ततः कृत्वा गोळकाकुंकुमं न्यसेत् ३६
अष्टत्रिंशत् कलांतं च न्यसेत्पूर्वादितः क्रमात्
ललाटे च ++ त्वा गंधपुष्पं शिरो न्यसेत् ३७
शिवमंत्रं जपेत् भक्त्या शिवोऽहमिति भावयेत्
गृह्याभिषेककलशं शुद्धांबुपरिपूरितम् ३८
अभ्यर्च्य हृदयेनैव प्रोक्षयेदस्त्रमंत्रतः
स्थानशुद्धिं ततः प्रोक्तं द्रव्यशुद्धिं ततः शृणु ३९
दीपादीन् शंखभाण्डां च शुद्धांबु परिपूरितम्
दशबीजं न्यसेत्तत्र कुशकूर्चोपदेशकैः ४०
अभ्यर्च्य गंधपुष्पैश्च गोमुद्रां च +++ येत्
कुशेन प्रोक्षयेद्द्रव्यान् बिंदुवद्बिन्दुमात्रकैः ४१
द्रव्यशुद्धिरिति प्रोक्तं पचनालयार्चनं शृणु
तस्य मण्डपमध्ये तु देव्यग्रे स्थण्डिलं कुरु ४२

शालि +++ स्थरिडलं कृत्वा चतुरश्च समन्वितम्
तन्मध्ये पङ्कजं लिख्य दर्भैश्चैव परिस्तरेत् ४३
तन्मध्ये कलशं स्थाप्य कूर्चतोयेन पूरयेत्
विघ्नेश्वरं समभ्यर्च्य भक्ष्यादीनि निवेदयेत् ४४
पुरायाहं वाचयेत्तत्र प्रोक्षयेत्पुरुषेरा तु
अन्नपूर्णेश्वरीं तत्र स्नानांगैरभिषेचयेत् ४५
चित्रवस्त्रेरा संवेष्ट्य गंधपुष्पैरभ्यर्चयेत्
अष्टमूर्त्यादि शक्त्यादीनां अर्चयेत्तत्र पीठके ४६
भूम्यै चैव श्रियै चैव स्वाहा कीर्तिस्तथैव च
+++++ न्ति च पुष्टिश्च अर्चयेत्पूर्ववद्बुधः ४७
अर्च्यं गंधं च पुष्पं च धूपं दत्वा विशेषतः
चुल्ली मध्ये न्यसेत्तत्र चलाग्निं स्थापयेत्ततः ४८
शरावेराग्निमादाय चुल्ली +++++
अग्निबीजेन संप्रोक्ष्य गंधपुष्पैस्स +++ ४९
श्वेततराडुलसंयुक्तं क्षाळयेदस्त्रमंत्रतः
शोधयित्वा विशेषेरा बीजमंत्रेरा देशिकः ५०
++++ चुल्लीमध्ये न्यसेत्पात्रं हुन्मंत्रं च समुच्चरन्
तद्बाह्ये ++ मभ्यर्च्य काष्टैरग्निं प्रदीपयेत् ५१
उपदंशाकांकांश्चैव मृत्पात्रे ++ येतः
तत्पात्रं च क्रमेरौव संगृह्य परिचारकान् ५२
बाह्य शुद्धिं ततः कृत्वा त्रिपुराड्रं लांछनं ++
तत्पात्रं मुखमावेष्ट्य पुष्पैश्चैव समर्चयेत् ५३
हुंकारेरा तु +++ सर्वमुद्वासयेत् क्रमात्
मार्जनं प्रोक्षरां चैव छत्रपिञ्चसमन्वितम् ५४
शंखध्वनिं समायुक्तं आलयं तु प्रवेशयेत्
मराडपे स्विष्टदेशे वा स्थापयेत्तु पृथक्पृथक् ५५

पचनालयक्रमं प्रोक्तं भानुपूजां +न्तत शृणु
सौरदेवं ततः स्नाप्य वस्त्रं गंध++पुष्पकम् ५६
एकवक्त्रं द्विपादं च वेदहस्तसमन्वितम्
द्विहस्तं पद्मसंयुक्तं वरदाभयसंयुतम् ५७
सर्वाभरणसंयुक्तं करण्डमकुटान्वितम्
मकुटाद्विगुणं नागप्रभामण्डलधारिणम् ५८
उषा च प्रत्युषा देवी सव्यभागे समर्चयेत्
पद्मासनं स्थितं कृत्वा अर्चयेत्तु विशेषतः ५९
ध्यात्वाभ्यर्च्य षडंगेन परिवारसमन्वितम्
अं ++ जाय विद्महे पद्महस्ताय धीमहि । तन्नो
भानुप्रचोदयात् ६०
सोमभौमबुधश्चैव जीवशुक्रे च मंद च
राहुकेतुश्च संपूज्य तत्पीठे तु समर्चयेत् ६१
सोमादि जयचण्डांतं पूर्वादीशांतमर्चयेत्
नैवेद्यं धूपदीपं च प्रणिपत्य क्षमापयेत् ६२
भानालयं विसृज्याथ पादप्रक्षाळनारकम्
आचमनं पुरा कृत्वा मण्डपांते प्रवेशयेत् ६३
देवाग्रे दक्षिणे भागे स्थिरासनमिति स्मृतम्
भूमे शुद्धिं पुरा कृत्वा तत्र स्थण्डिलकल्पनम् ६४
शालिभिः स्थण्डिलं कृत्वा चतुरश्रसमन्वितम्
पीठं परिग्राह्य ++ पात्रसाधनमादिशेत् ६५
पुण्याहं वाचयेत्पश्चात् प्रोक्षयेत्पुरुषेण तु
मध्यशिवपदं पूज्य तत्पूर्वे तु सदाशिवम् ६६
दद्यात् त++ च सौम्ये च पश्चिमे कालतत्वकम्
क्षीरं दधिघृतं चैव गोमूत्रं गोमयान्तकम् ६७
आप्यायस्वेति मंत्रेण दधिक्राविण्णो दधि तथा

शुक्रमसीति मंत्रेण घृतं च स्थाप्य देशिकः ६८
रजनीमग्निदेशे तु ग्रामवी निर्ऋतिं तथा
पिष्टं च याम्य देशे स्यादैशान्यां गंधतैलकम् ६९
ग्रस्त्रमंत्रैस्समभ्यर्च्य हृदयेनैव पूजयेत्
पञ्चब्रह्मेति मंत्रेण एकपात्रेण संग्रहेत् ७०
त्र्यंबकेणैव मंत्रेण कूर्चेनैव विमर्शितम्
ग्रभ्यर्च्य धूपमेवं स्यात् पात्रेणैव तु वेष्टयेत् ७१
विघ्नेश्वरं समभ्यर्च्य नाळिकेरफलैर्युतम्
फलद्विखण्डसंयुक्तं भक्त्या च विनिवेदयेत् ७२
बालविघ्नजगन्नाथ सर्वज्ञानत्वकारक
नित्यं संध्यार्चनाकाले निर्विघ्नत्वं प्रसीद मे ७३
यत्र देशे मुखद्वारान्यस्त्र सप्ताधिदेवता
++ गङ्ग पतंगं च उत्करं त्ववधानकम् ७४
विम्लं च सुबाहुं च श्रीदेवीं तत्र पूजयेत्
ऊर्ध्वाय श्रावयेत् पश्चात् स्तंभे तत्र कवाटयोः ७५
स्कंदं च पट्टिका मध्ये श्रीदेवीं त++र्जयेत्
तत्तत् ध्यानैश्च स्नानैश्चार्चयेत्स्वस्वमंत्रतः ७६
धूपदीपं प्रदातव्यं घण्टारवसमन्वितम्
ध्यानार्चनमिति ख्यातं लिंगशुद्धिं ततः शृणु ७७
स्नानमंत्रं जपित्वा तु प्रविशेन्मध्यमण्डपे
प्रच्छन्नपटमावेष्टयार्चयेद्गजदेविनीम् ७८
गर्भद्वारप्रवेशं च तच्चक्तिं तु प्रपूजयेत्
मूललिंगस्य पीठाग्रे रुद्रमभ्यर्च्य देशिकः ७९
धूपदीपं ददेद्धीमान् मूलमंत्रं समुच्चरन्
पूर्वसंध्यार्चितं पुष्पं ईशानेन विसर्जयेत् ८०
नवपुष्पं तु संगृह्य लिंगमूर्ध्ने तु विन्यसेत्

पीठं स्थलं च संकल्प्य निर्माल्यं वर्जितं भवेत्  ८१
लिंगपीठादिकं चैव ++ गालेपनैर्युतम्
गन्धचूर्णेन संमिश्रं जलेनैवाभिषेचयेत्  ८२
आसनं पूर्ववत्कल्प्य गंधपुष्पैस्समर्चयेत्
धूपदीपं ततः कृत्वा स्नानांगैरभिषेचयेत्  ८३
देवीं व्योममंत्रेण भूसुरान् रुद्रसूक्तिकम्
भक्त्यादिस्तोत्रकं चैव नृत्तगीतादिवाद्यकैः  ८४
सर्वालंकारसंयुक्तं तत्काले तु समाचरेत्
तृप्तार्घ्यं मंत्रपुष्पगंधमंत्रान्नं च निवेदयेत्  ८५
लिंगशुद्धिक्रमं प्रोक्तं आवाहनार्चनं शृणु
वस्त्रेण लिंगपीठं च सम्मार्जनसमन्वितम्  ८६
चित्रवस्त्रेण संयोज्य गंधचंदनलेपनम्
सर्वाभरणसंयुक्तं पुष्पमाल्योपशोभितम्  ८७
प्रभामण्डलसंयुक्तं स्वासीनं परिकल्पयेत्
प्रधानं तत्वसंयुक्तं श्वेतपद्मासनं स्मृतम्  ८८
अर्चये ++ नं पीठे मूर्तिमावाहयेत्ततः
सद्यः पश्चिमतोऽन्यस्य वामदेवं तथोत्तरे  ८९
अघोरं दक्षिणेऽभ्यर्च्य पुरुषं पूर्वतोन्यसेत्
ईशानमीशदिग्भागे न्यस्त्वाभ्यर्चनमारभेत्  ९०
नेत्रमीशानदिग्भागे अर्चयेत्तु विशेषतः
अंबी गणांबिका चैव गंगागौरी उमा तथा  ९१
वमी नीली च चक्री च पाशांगी खड्गमेव च
++ र्भावरणं प्रोक्तं अष्टमूर्त्यर्चनं शृणु  ९२
अनंतं पूर्ववत्स्नाप्य आग्नेयं तु त्रिमूर्तिनम्
सूक्ष्मं तु निर्ऋतौ चैव श्रीकण्ठं वायुगोचरे  ९३
शिवोत्तमं तु वारुण्ये शिखण्डीन्त्वीशगोचरे

एकनेत्रं तु याम्ये तु एकरुद्रं तु चोत्तरे ९४
भूमिं चैव स्मृतिश्चैव स्वाहाकीर्तिस्तथैव च
मेधाकांतिश्च पुष्टिश्च अर्चयेदंतराळके ९५
+++ शमीशभागे तु षरामुखं चाग्निदेशके
भद्रा च कुंदळी चैव भृंगी चैव वदन्त्य च ९६
देवयानी च स्वाहायै गौरी च ++ णी तथा
शक्त्यादि शक्तिपर्यन्तं अंतराले समर्चयेत् ९७
तृतीयावरणं प्रोक्तं इन्द्राद्यावरणं शृणु
इत्थं वै चेन्द्रदेशे तु आग्नेय्यां वह्निमूर्तिनम् ९८
याम्ये तु धर्मराजं च ++ निर्ऋतिं तथा
वरुणं वारुणे देशे अनिलं वायुगोचरे ९९
कुबेरं सौम्यदेशे तु ईशानस्त्वीशगोचरे
ब्रह्माणं निर्ऋतौ यष्ट्वा ईशे विष्णुमर्चयेत् १००
देहिनी चैव स्वाहा च कालकर्णी च दाहिनी
नागानी चैव घोरी च डागिनी मोहिनी तथा १०१
इन्द्रादीशानपर्यन्तं अन्तराळे समर्चयेत्
इन्द्रावरणं प्रोक्तं वज्राद्यावरणं शृणु १०२
वज्रं च पूर्वदेशे तु शक्तिं चैवाग्निदेशके
गदा वै चोत्तरे देशे त्रिशूलं त्वीशगोचरे १०३
इन्द्रमीशानयोर्मध्ये पद्मं च कुंभमर्चयेत्
+++ पद्मा च शक्तिश्च गोपात्रा च गुणात्मनि १०४
कोमणात्माज्व जाया च वृषाणी विकृतात्मनि
महात्मी चक्रशक्ती च मंगल्याद्यब्ज शक्तयः १०५
सद्यादिपद्मपर्यन्तं अर्चयेदन्तराळके
पाद्यमाचमनं चार्घ्यं तत्तदावरणांतकम् १०६
हृन्मंत्रेण समभ्यर्च्य धूपदीपादिकं ददेत्

निवेद्यास्थानसंयुक्तं करशोधनमञ्जनम्  १०७
चतुरश्रा लेपनं चैव प्रोक्षयेत्तु शिवांभसा
तन्मध्ये पादमभ्यर्च्य स्थलिकामध्यदेशतः  १०८
नैवेद्यं पूरयेत्पात्रे तदूर्ध्वे चोपदंशकम्
पूर्णचंद्रसमाकार गुल्माषेण गुळेन च  १०९
++ लेनाज्येन दधिना चोपदंशेन युक्ततः
अमृतार्ध्यं निवेद्यं स्यात् पानीयाचमनं ददेत्  ११०
अग्निस्थानप्रवेशं च कुण्डेस्थण्डिलकल्पनम्
भूमिभूम्नेतिमंत्रेण कुण्डं संप्रोक्ष्य देशिकः  १११
शरावेणाग्निमादाय हृदयेन समर्चयेत्
अघोरेणैव तु संप्रोक्ष्य हृदयेन प्रतिष्टितम्  ११२
तत्तन्मध्ये समावाह्य शिवं संपरिवारकम्
दर्भं चैव परिस्तीर्य मंत्रं पाशुपतं जपेत्  ११३
परिषेचनं ततः कृत्वा अदिलेन्वादिमंत्रकैः
इन्दनादि चतुर्द्रव्यं नित्यसंध्यादिहोमकम्  ११४
इन्धनं हृदयेनैव आज्यं नेत्रेण मंत्रवित्
समिधा ईशमंत्रेण चरुं तत्पुरुषेण तु  ११५
विकारसंख्यया हुत्वा समिदाज्य चरुं गुरुः
गंधपुष्पैश्च धूपैश्च कुर्याच्च परिषेचनम्  ११६
कुण्डेन नैर्ऋते देशे अष्टमूर्तिबलिं यजेत्
परिस्तरणमादाय अग्नौ निक्षिप्य देशिकः  ११७
तच्चूर्णं चैव संगृह्य ललाटे तिलकं कुरु
निष्टुरेणाग्निमादाय स्थानशक्तिं सुयोजयेत्  ११८
तच्छक्तिं तु निवेद्यैव धूपदीपादिकं ददेत्
तस्थानोद्वाहनं चैव मण्डपं तु प्रवेशयेत्  ११९
वाद्यकस्ताडयेद्भेरीं तत्काले घोषयेत्ततः

बलिलिंगे विशेषेण चंद्रशेखरमूर्तिनम् १२०
खेटकासनसंयुक्तं अलंकृत्य विशेषतः
पीठप्रक्षाळनं कृत्वा मद्दासीं परिकल्पयेत् १२१
अनेकदीपसंयुक्तं नानाछत्रध्वजै +++
+++ शिवमाधवैर्युक्तं शिवलोके तु जीवितम् १२२
ब्रह्महत्यादिदोषघ्नं प्रजा ऋद्धिकरं परम्
शिवपूजासमं पुण्यं न भूतो न भविष्यति १२३
शौचादि स्नानकर्मान्तं +++++
मण्डपांते प्रविश्याथ पादप्रक्षाळनं कुरु १२४
चित्रवस्त्रं समादाय स्थिरासनमिति स्मृतम्
भस्मन्यासं ततः कृत्वा ब्रह्माणं स्कन्दनायकम् १२५
ईश्वरं चैव विष्णुं च ब्रह्माणं चक्र+++++
तत्तन्मंत्रेण तत्स्थाने संप्रदायं समाचरेत् १२६
दिग्बंधनं ततः कृत्वा प्राणायामं समाचरेत्
भूतशुध्यादिकं चैव अष्टत्रिंशत्कलांतकम् १२७
ललाटे गंधलेपैश्च मूर्ध्नि पुष्पं समाचरेत्
शिवबीजं समुच्चार्य शिवोऽहं भावयेत्क्रमात् १२८
शंखे तोयं च चंपूर्य समभ्यर्च्य विशेषतः
प्रेक्षणं बहुरूपेण स्थानशुद्धिं ततः ++++ १२९
प्रासादे मण्डपे चैव वर्मेण प्रोक्षयेद्धृदा
स्थानशुद्धिरिति प्रोक्तं द्रव्यशुद्धिं ततः शृणु १३०
शालिभिः स्थण्डिलं कृत्वा चतुरश्रसमन्वितम्
तन्मध्ये ++++ लिख्य साष्टपत्रं सकर्णिकम् १३१
पुण्याहं वाचयित्वा तु प्रोक्षयेत्तु शिवांभसा
पञ्चामृतैश्च स्नपनैः संकल्प्यात्रैव देशिकः १३२
व्योम पक्षा ++++ ख्याच घृतस्नानादिकं कुरु

ताम्रेणैव शरावेण मृद्भाण्डे स्वर्णपात्रके १३३
शरावेण तु नैवेद्यं ताम्रपात्रे जलं गृहेत्
उ +++++ केणैव मृद्भाण्डानि समाचरेत् १३४
तद्भेदं मृद्घटे चैव पानीयं च विशेषतः
नैवेद्याद्यभिषेकं स्यात् स्वर्णपात्रेण देशिकः १३५
++++ पात्रे प्रकर्तव्यं +++ निध्यकं कुरु
सिततण्डुलसंयुक्तं चतुर्द्रोणसमन्वितम् १३६
अथवान्य प्रकारेण द्वादशादित्य संख्यया
उपदंश क्रमेणैव कारयेद्देशिकोत्तमः १३७
मुद्गभि +++++ चैव जीरकेण तु मिश्रितम्
उर्वारुकैश्च बृहती नाळिकेरफलैर्युतम् १३८
कारवल्ली च वेत्राग्रं क्रोशातकी तथैव च
नारंगी चं चैव आम्रसर्ष +++++ १३९
+++ ज्य मधुफलैश्चैव पायसादिविशेषतः
अष्टसंख्या पयश्चैव शिवसंख्या च मर्दयेत् १४०
यागोपकरणद्रव्यैः प्रोक्षये ++++ षेण तु
विघ्नेश्वरं समभ्यर्च्य भक्ष्यादीनि निवेदयेत् १४१
देव देव जगन्नाथ शिवलोकस्य नायका
मध्याह्नाराधनं चैव निर्विघ्नं कुरुनायक १४२
द्वारं संपूज्य विधिवत् +++ क्षरीं समर्चयेत्
गंधद्वारं समाश्रित्य गर्भदेवान् समर्चयेत् १४३
रुद्रराजं समभ्यर्च्य धूपं दत्वा समूलतः
नवपुष्पं तु संगृह्य नादमंत्रमनुस्मरन् १४४
निर्माल्यं तु ++++ थ चण्डेशस्य स्थानदेशके
स्थानद्रव्यं तु संगृह्य गंधतैलाभिषेचनम् १४५
आचार्यशिष्यसंयुक्तं लिंगपीठादि लेपनम्

घृतद्युष्णादि वस्त्रांतं पूजयेद्देशिकोत्तमः १४६
दुकूलचित्रवस्त्राद्यैः अलंकृत्य विशेषतः
करवीरं चंपकञ्चैव वकुळं शतपुष्पकम् १४७
मदनाष्टकपुष्पैश्च शतदूर्वै समाचरेत्
पाद्यमाचनं पश्चात् पत्रपुष्पं समर्चयेत् १४८
आसनं पूजयेत्पश्चात् अर्चयेत्तु क्रमेण तु
नैवेद्यं दापयेत्तत्र पावकं पूजयेत्ततः १४९
अत्र किंचिद्विशेषेण बलिं दद्यात्समाहितः
वृषादि बलिपीठांतं बलिदेवांश्च पूजयेत् १५०
भुतबल्यंतकाले च गीतवाद्यसमन्वितम्
पदं ++++ शेषेण गानवाद्यैश्च कारयेत् १५१
शनैः प्रदक्षिणं कुर्यात् देवमावरणं प्रति
पाद्यमाचमनं दत्वा मण्डपांते प्रवेशयेत् १५२
स्वासने कल्पयेत् +++ नीराजनमथाचरेत्
मूलबिंबे विशेषेण धूपदीपं समाचरेत् १५३
गणाद्युत्सवदेवानां धूपदीपं विवर्जयेत्
तांबूलं मुखवासं स्यात् शिव +++ कैर्युतम् १५४
वेदैः स्तोत्रैश्च नृत्तैश्च गीतवाद्य समन्वितम्
मूललिंगे विशेषेण पूजयेत्परमेश्वरम् १५५
स्नानादि चण्डपर्यन्तं पूजयेन्मत्रपूर्वकम्
++++ चारवत् सर्वं महाशाग्रे समाचरेत् १५६
गीतवाद्य समायुक्तं बहुरूपक्रमेण तु
सौचकस्यावसाने च सायरक्षा समाचरेत् १५७
मध्याह्नाराधनं प्रोक्तं चंद्रस्याराधनं शृणु
शिवपूजाविधिं वक्ष्यं सायं संध्यार्चनं क्रमात् १५८
आयुः कीर्ति ऋद्धिंश्च विजयं पुत्रवर्धनम्

पञ्चपातकदोषघ्नं धनधान्यसमृद्धिदम् १५९
शिवपूजासमं पुरायं न भूतो न भविष्यति
ग्रात्मार्थं च परार्थं च पूजयेत्रिविधं स्मृतम् १६०
ग्रात्मार्थं स्वस्वदेशे तु परार्थं स्थापनादिकम्
प्रतिष्टाद्युत्सवे चैव स्थापितं पूजयेत्क्रमात् १६१
चंद्रादि चराडपर्यन्तं +++ गांगं च लयांगकम्
शौचमाचमनं स्नानं तर्पणं विधिपूर्वकम् १६२
ततो देवालयं गत्वा प्रदक्षिरामथाचरेत्
पादौ प्रक्षाल्य तोयेन मराडपं च प्र +++ त् १६३
भस्मन्यासादिकं कृत्वा शिवध्यानपरायणः
स्थानशुद्धिं ततः कृत्वा ग्रस्त्रमंत्रेण देशिकः १६४
एकवक्त्रं द्विपादं स्यात् वेदहस्तसमायुतम्
सितपद्मसमायुक्तं माल्याभरणभूषितम् १६५
उपवीतसमायुक्तं वरदाभयसंयुतम्
द्विहस्तं कुमुदं चैव प्रभामराडलधारिणम् १६६
ग्रासनं परिवारं च ग्रर्चयेत् पूर्ववद्बुधः
सितान्नं पायसं चैव धूपदीपं हृदार्चयेत् १६७
देव देव जगन्नाथ त्रैलोक्यस्य च राक्षसान्
सायरक्षादि यजनैः प्रणमाभ्यनुग्रहाय च १६८
ग्रालयं विना चेत्तु देवाग्रे मराडलैस्थितः
सायरक्षां प्रकर्तव्यं पूर्ववत् संप्रपूजयेत् १६९
शालिभिः स्थरिडलं कुर्यात् चतुरश्रसमायुतम्
मध्ये पीठे पदं ग्राह्य पुरायाहं तत्र वाचयेत् १७०
यागोपकरणद्रव्यैः संगृहेद्देशिकोत्तमः
पञ्चगव्यं तु संकल्प्य पात्रशुद्धिं समाचरेत् १७१
तत्तत्क्रमेण संकल्प्य विघ्नराजं समर्चयेत्

+++ समभ्यर्च्य पूर्वे +++++ क्रमात् १७२
यवनिका परित्यज्य यंत्रराजं समर्चयेत्
गर्भद्वारं समभ्यर्च्य पूजयेत्तु विशेषतः १७३
गर्भगेहं प्रविश्याथ भीमरुद्रं प्रपूजयेत्
निर्माल्यं च विसृज्याथ ++++ विनिक्षिपेत् १७४
तैलं च पिष्टामलकैरजनीं च जलेन तु
एलालंवगकैश्चैव इक्षुसारैश्च पाद्यकैः १७५
नालिकेरामृ +++ गुलैश्च स्पनै ++++
++++ दकं च शुद्धोदैः स्नापयेत्तु विशेषतः १७६
लिंगपीठस्थले चैव जलेनैवाभिषेचयेत्
आचार्यश्शिष्यसंयुक्तः जपध्यानपरायणः १७७
आचार्यास्त्रिमंत्रैश्च ++ शिवध्यान परायणः
श्रीसूक्तं स्कंदसूक्तं च चमकं च जपेत्ततः १७८
स्तोत्रनृत्तादि वाद्यैश्च गानभाषोध्वगैस्सह
स्नानादि +++ मान्तः बलिकाले विवर्जयेत् १७९
स्नानांते मंत्रपुष्पं स्यात् मन्त्रान्नं हृदयेन तु
लिंगपीठस्थले चैव जलेनैवाभिषेचयेत् १८०
स्नानं च मंत्र++ञ्च पुष्पान्ते तु निवेद्यकम्
वस्त्रखण्डेन संमार्ज्य लिंगपीठजलेन च १८१
सितवस्त्रैरलंकृत्य गंधमाल्यैर्विचित्रयेत्
संकल्प्यासनमारभ्य पद्मासन++मर्चयेत् १८२
तस्योर्ध्वे मूर्तिमावाह्य पूजयेत्तु विशेषतः
सद्यादि पद्मपर्यन्तमर्चयेत्पूर्ववत्क्रमात् १८३
अर्ध्यं हृदयमंत्रेण अर्चयेत्तु दशाक्षरम्
++ नवेद्यं चोपदंशं स्यात् पानीयं हृदयेन तु १८४
पाद्यमाचमनीयं च मुखवासं ददेत्प्रभोः

उत्सवस्याधिदेवानां नैवेद्यं दापयेत्क्रमात् १८५
किंचिद्भेदं विशेषेण वलिहोमविवर्जितम्
द्वारादि क्षेत्रपर्यन्तं भोगांगमिति विद्यते १८६
भोगांगं पूजनं चैव तत्काले भूतनायिका
पूज +++ क्रमेणैव सौभाग्यमिति विद्यते १८७
मूलबिंबैर्विशेषेण धूपदीपं ततः क्रमात्
नीराजनं ततो दद्यात् तिलकं दापयेत्ततः १८८
तांबूलं दापयेत् प+++ सामवेदध्वनिर्युतम्
स्तोत्रनृत्तादिवाद्यैश्च गानं तत् गुणसंख्यया १८९
स्थलिका मध्यके चैव वस्त्रं तच्चतुरश्रकम्
तन्मध्ये वृषमावाह्य तस्ये +++++ १९०
++++ पूर्ववत्कल्पयेद्बुधः
अष्टदिग्दहनं चैव तद्भस्मं च विवर्जयेत् १९१
शुद्धदेशे मृदं ग्राह्य पूर्णं समतलं कुरु
स्थानशुद्धिं ++++ गोमयालेपनं कुरु १९२
+++ षु सर्वेषु पूर्ववत्कल्पयेद्बुधः
अष्टदिग्दहनं चैव तद्भस्मं च विवर्जयेत् १९३
+++ षु सर्वेषु प्राकारे गर्भगेहके
एकरात्रं त्रिरात्रं च भो निवासनमेव च १९४
तत्स्थानमार्जनं कृत्वा गोमयेनोपलेपयेत्
विप्राय वेदविदुषे स वत्सांगां +++ त् १९५
बेरशुद्धिं ततः कृत्वा अमंत्रमभिषेचनम्
क्षीरं च फलसंयुक्तं सगुळं च निवेदयेत् १९६
स्थानशुद्धिं ततः कृत्वा पर्यग्निकरणं कुरु
अंकुराण्यर्पयेद्धीमान् +++ धिमाचरेत् १९७
तैलाभ्यंगं च विप्राणां तद्दिनात्प्राक् दिनत्रये

प्राकारमराडपे चैव ब्राह्मणान् भोजयेत्ततः १९८
तत्स्थानमार्जनं कृत्वा +++ भोजनं कुरु
शुद्धैरुत्थेति मंत्रेण प्रोक्षयेत्पञ्चगव्यकम् १९९
स्थानशुद्धिक्रमं प्रोक्तं प्रासादशुद्धिमाचरेत्
विघ्नेश्वरं समभ्यर्च्य पुरायाहं वाचयेत्ततः २००
शिवाग्रे स्थरिडलं कृत्वा नवकोष्टं प्रकल्पयेत्
मध्यादि पदपञ्चेषु स्थापयेत्पञ्चगव्यकम् २०१
आग्नेय्यादिषु कोरोषु शुध्यर्थं द्रव्यसंग्रहम्
नालिकेळं मुष्टिराग्नेय्यां दिशि विन्यसेत् २०२
श्रीपत्रं दर्भमुष्टिं च नैर्ऋते विन्यसेद्बुधः
विन्यसेद्वायुभागे स्थालीं तन्मध्यमे न्यसेत् २०३
पूर्वसिद्धांतकं चैव ++ क्षीरसंयुतम्
तन्तुनादर्भमालां च नववस्त्रेण संयुताम् २०४
विन्यसेत्वीशदेशे तु हृदयादि चतुष्टये
पञ्चगव्येन संप्रोक्ष्य वायुबीजेन मार्जनम् २०५
शोधनव श्रीपत्रै +++++++
क्षीरमिश्रेण तद्रव्यं विकिरारयस्त्रमंत्रतः २०६
कवचेन तु संवेष्ट्य तन्तुना दर्भ ++++
रूपालंब्यतलाभ ++++++++ २०७
+++++++रारक्षनाशार्थं + तमाचरेत्
प्रासादपूर्वदिग्भागेऽथवा दक्षिणेऽपि वा २०८
विघ्नेश्वरं ++++++++++ तः
स्थरिडलं तत्र कुर्वीत चाष्टकर्णिकम् २०९
तन्मध्ये विन्यस्य +++ वारघटं विना
कुंभमध्ये तु संपूज्य ध्यायेद्रक्षोघ्नमंत्रतः २१०
देवतः । कपालं डमरुं चैव त्रिशूलं परशुं तथा

बिभ्राणं ++ षत्रिणेत्रं चन्द्रशेखरं +++ २११
+++ व्याळ विलसत् भ्रुकुटी कुटिलाननम्
भूतप्रेतपिशाचादीन् भक्षयंतं महाप्रभुम् २१२
वडबामुखाग्निसदृशं भावयेत्तु विचक्षणः
गन्धपुष्पैरभ्यर्च्य साष्टपत्रं सकर्णिकम् २१३
दक्षिणे नाळिकेरं तु खड्गमुत्तरभागतः
दारुपीठं न्यसेन्मध्ये वस्त्रं तस्योपरि न्यसेत् २१४
दक्षिणे सितवस्त्रं तु उत्तरे रक्तवस्त्रकम्
तदूर्ध्वे +न्यस्य साष्टपत्रं सकर्णिकम् २१५
दक्षिणे नाळिकेरन्तु खड्गमुत्तरभागतः
शक्त्यादि शक्तिपर्यन्तं आसनस्थं सदाशिवम् २१६
गंधैः पुष्पैस्समभ्यर्च्य पञ्चमावरणं ++++
नैवेद्यं धूपदीपं च तांबूलं दापयेत्ततः २१७
पश्चादुत्तरपीठे तु खड्गरापणमर्चयेत्
महादेवी च यां देवी पार्वती कृत्तिका धनी २१८
महेच्छिष्ट+++ त्तिका कालिका चण्डिका धनी
तन्मध्ये वीरशक्तिं च अर्चयेत्तु विचक्षणः २१९
नवशक्तिं समावाह्य रवन्तं मध्यमे न्यसेत्
खड्गेशं मूर्तिमावाह्य तन्मूलं मंत्र ++++ २२०
करवालकपालाद्य करं शार्दूलवाससम्
अट्टहासोल्लसद्वक्त्रं पर्परो मुखरस्वरम् २२१
रत्नकुण्डलकेयूरज्वलत्पावकसन्निभम्
एवं ध्यात्वा +++ चाभ्यर्च्य खड्गेशं मंत्रवित्तमः २२२
असितांगोरुरुचण्डः क्रोध उन्मत्तभैरवः
कपालभीषणं चैव संहारं चाष्टभैरवः २२३
पूर्वादीशानपर्यन्तं अर्चयित्वा ++++

नैवेद्यं धूपदीपञ्च अस्त्रमंत्रेण देशिकः २२४
कुंभाग्रे स्थण्डिलं कल्प्य नवकोष्टं प्रकल्पयेत्
मध्ये रक्षोघ्नमावाह्य रक्तपुष्पैस्समर्चयेत् २२५
ब्राह्मादि +++ तं स्वस्वनामभिरर्चयेत्
पाद्यमाचमनं चार्घ्यं गुळान्नं च बलिं ददेत् २२६
बलिमण्डलपूर्वे तु अग्निकार्यं समाचरेत्
आधानादि विवाहांतं अग्निकार्योक्तमाचरेत् २२७
रक्षोघ्नमूर्तिमावाह्य बलिमध्ये तु कल्पयेत्
द्रव्यं प्रतिविशेषेण तन्मूलेनैव होमयेत् २२८
राक्षोघ्नमूर्तिमंत्रेण +++++
+++++ मंत्रेण तन्मूलेनैव संयुतम् २२९
क्रमादाज्येन हुत्वा तु संपादं गृह्य बुद्धिमान्
पूर्णाहुतिं ततः कृत्वा स्विष्टांतं होममाचरेत् २३०
वह्निं संपूज्य देवेशं कुंभ+++ यजयेत्
कुंभस्थं पीठसंयुक्तं खड्गस्थं स्वहृदे याजेत् २३१
प्रासादशुद्धिहोमं तु तज्जलं प्रोक्ष्य चास्त्रतः
बिंबशुद्धिक्रमं कृत्वा चतुः शुद्धिक्रमं ततः २३२
शिवा +++++ लं कल्प्य युगकोष्टं च कल्पयेत्
सकळीकरणं कृत्वा पुण्याहं वाचयेत्ततः २३३
आग्नेयादि चतुष्कंभान् स्थापयेत्तु विचक्षणः
वृषशृंगे च सुते +++ मुद्रे गजदन्तके २३४
पर्वते च नदीतीरे वल्मीके कीकटावटे
मृताष्टकं जलैर्युक्तं बीजमुख्येन मंत्रतः २३५
पालाशोदुंबराश्वत्थ मधूकप्लक्षपंकजम्
जंबुत्वग्भिस्समायुक्तं दशबीजं न्यसेत्ततः २३६
गोक्षीरासहदेवी च विष्णुक्रांती च मल्लिका

रात्रिचूर्णसंयुक्त छुरिकामंत्रमुच्चरन्  २३७
दूर्वा +++ शाग्रञ्च स्थलपाटलसर्षपम्
भद्री च द्रोणपुष्पं च संहितामुच्चरन्  २३८
तत्तत्स्थापनमंत्रेण बेरञ्चैवाभिषेचनम्
तन्मूलेनैव कर्तव्यं पुष्पं मूर्ध्नि च विन्यसेत्  २३९
बेरशुद्धिक्रमं ह्येवं फलादीनि निवेदयेत्
चतुश्शुद्धिक्रमं अवग्राहक्रमं ततः  २४०
पञ्चगव्येन संस्थाप्य पञ्चब्रह्ममनुस्मरन्
एकरात्रि त्रिरात्रिं च ++ गे चैवावगाहनम्  २४१
औदुंबराश्वत्थवृक्षं च पनसैश्च विशेषतः
गोळकारखतः सम्यक्कृत्वा मस्तकवर्जितम्  २४२
कर्मांगं उत्तमं चैव तुर्य +++ मम्
अधमं त्र्यंगुलं चैव विवरं चैव कल्पयेत्  २४३
दारुणा यन्त्रमेवं च पीठोर्ध्वे स्वप्रमाणतः
मुद्गचूर्णं च पुण्यं च +++ बंधयेत्  २४४
अव ++++क्तं लेपनद्रव्यसंग्रहम्
एलालवंगकच्चोल तिंबुजातिफलं क्रमम्  २४५
चंदन अगरुकर्पूरमुशीरं कुंकुमैर्युतम्
प्रोक्षणं कृत्वा हिमतोयेन ++++  २४६
कुंभस्य लेपनं कृत्वा एकाहं चोषतो निशि
अपरे दिनमारभ्योदकस्नानमाचरेत्  २४७
स्थापयेन्नवकुंभन्तु नवशक्ताधिदेशता
++ रन् सापिधानांश्च सर्वालंकारसंयुतान्  २४८
सपल्लवसमोपेतान् नालिकेरफलैर्युतान्
उदकोदकमेवं तु पुत्रोदकमिति स्मृतम्  २४९
गंधोदकक्रमं चैव +++ फलोदकम्

वल्कलोदकमेवं च पुष्पोदकमिति स्मृतम् २५०
शांत्योदकं ततः पश्चात् मान्योदकमतः परम्
आमकुंभजलं चैव हिमतोयसमन्वितम् २५१
+++ रोदकञ्चैव उदकोदकमुच्यते
तुलसीबिल्वपत्रं च धातकी च तपस्विनी २५२
अपामार्गं समिच्चैव वस्त्रोदकमिहोच्यते
चन्दनं कृष्णलो +++ क्षीरकुंकुमम् २५३
हरिबेरं च कर्पूरं कोहं जातिफलं मुरम्
उदगेन समायुक्तं गंधोदकमिहोच्यते २५४
उत्पलस्य तु कंदं च नीलोत्पल ++++
कुमुदस्य तु कंदञ्च रक्तपद्मस्य कन्दकम् २५५
उशीरमिति बेरञ्च युक्तमूलोदकं भवेत्
पनसं नाळिकेरञ्च मातुलंगद्वयं तथा २५६
नारंगं लिकुचं चैव ++++ उत्पलोदकम्
माधूरं चतुरंगुल्यं बिल्वं चैव कपित्थकम् २५७
निर्घुण्डिका च पञ्चैव एकस्स्यात्वल्कलोदकम्
पुन्नागं कुरवं चैव नंद्यावर्तञ्च धूर्धुरम् २५८
++++ वकुलैर्युक्तं पुष्पोदकमिहोच्यते
कीट्टं च कूटजं मेघं चन्दनं कुंकुमं तथा २५९
कस्तूरोशीरसंयुक्तं शान्त्योदकमिहोच्यते
+++ यारमालती चैव गोरोचनमनश्शिला २६०
निघण्डुगिरिकर्णी च युक्तमान्योदकं भवेत्
नवोदकक्रमं प्रोक्तं जलधारां समाचरेत् २६१
++++++++++++ न्यसेत्
पद्मनाळसमायुक्तं धारापात्रं च विन्यसेत् २६२
हेमनाळसमायोज्य जलधारां समाचरेत्

उदयाद्य +++++++++++++++ २६३
++++++++++++++++++++++
+++++++++++ प्रोक्तं वेदपारायणम् परम् २६४
शिवसंकल्पमेवञ्च ततो मारुद्रसूक्तकम्
श्रीसूक्तं पावमानं च पुरुषसूक्तं त्र्यंबकम् २६५
स्कन्दसूक्तं ++++ विष्णुसूक्तं तथैव च
वेदपारायणं प्रोक्तं शांतिहोमं ततः परम् २६६
मूर्तिहोमं दिशा होमं पश्चात् कौतुकबंधनम्
अष्टगंधञ्च संयुक्तं लेपयेल्लिंगमस्तकात् २६७
कौतुकं बंधयेद्धीमान् पूर्वोक्तविधिना सह
लिंगे च रुद्रभागे च पीठे च नाळमध्यमे २६८
बिल्वैश्च चंपकैश्चैव अशोकं पाटली तथा
नन्द्यावर्तं पलाशं च +++ मल्लिकैः २६९
रक्तपद्मं च कल्हारं नीलोत्पलं च दान्तकम्
श्वेतार्कं चैव धूर्धूरं श्वेतमन्दारमेव च २७०
पीठालिंगावसानं च पूरयेल्लिंग +++ त्
++++ पीठावसानं च नववस्त्रेण वेष्टयेत् २७१
मण्डपस्यार्चनं चैव पूर्वोक्तविधिमाचरेत्
ततो बालगृहं गत्वा स्नपनैरभिषेचयेत् २७२
++++++++++ धूपदीपं समाचरेत्
यात्राहोमसमायुक्तं पूर्वोक्तविधिमाचरेत् २७३
लिंगाग्रे स्थण्डिलं कल्प्य पद्ममष्टदळं लिखेत्
स्थण्डिले +++++++++ के २७४
सकूर्चपल्लवोपेतां नवरत्नसमन्वितान्
वस्त्रेणैवसमायुक्तं कुंभमध्ये तु वेष्टनम् २७५
उदकेन समायुक्तं नालिकेरफलान्वितम्

++++++++मध्ये तु विन्यसेत्  २७६
पीठाद्देवीं समावाह्य तत्तद्बीजसमन्वितम्
जीर्णोद्धारक्रमञ्चैव अथवाग्नि देशके  २७७
सर्व +++++++++++++
+++ कोपरि संस्थाप्य ईशानेन तु मंत्रतः  २७८
तस्य वामे तुवर्धन्यां स्थापयेद्धृदयेन तु
+++++++++++++++++++++  २७९
++++++++++++ अर्चयेत्तु विचक्षणः
ऋग्वेदं पूर्वदिग्भागे यजुर्वेदं तु याम्यके  २८०
पश्चिमे सामवेदं तु अथर्वोञ्चोत्तरे दिशि
++++++++++++++ विन्यसेत्  २८१
कुंभं प्रतिविशेषेण चत्वारो वेदपारगान्
तत्तन्मंत्रं जपित्वा तु कुंभं संस्पर्शयेत्ततः  २८२
शिवसंप्रोक्षणं कृत्वा +++++++
+++++++ प्रोक्तमग्निकार्यं समाचरेत्  २८३
सद्येन समिधा हुत्वा मूलेनाज्यं तु होमयेत्
अघोरेण चरून् हुत्वा लाजं तत्पुरुषेण तु  २८४
++++++++++++++++++++++
++++++++++++++++++++ हुनेत्  २८५
नेत्रमंत्रं यवं कृत्वा तिलान् वामेन हूयते
शालिमीशानमंत्रेण गोधूमं चास्त्रमंत्रतः  २८६
शिखामंत्रेण नीवारं +++++++++
पाशुपतेन सिद्धार्थं बीजमुख्यैर्हुनेद्धधि  २८७
दशाक्षरेण मंत्रेण दुग्धं तु जुहुयात्ततः
गुळं हृदयमंत्रेण दशाक्षरफल ++++ २८८
नालिकेरं शिखा हुत्वा मंत्रैर्वेदिकसंयुतम्

संपाताहुतिमेवं च स्पर्शाहुतिमथाचरेत्  २८९
दशाष्टद्रव्यसंयुक्तं होमयेद्देशिकोत्तमः
++++ जागरणं रात्रौ प्रभाते स्नानमाचरेत्  २९०
अस्मन्यासादिकं कृत्वा सकळीकरणं कुरु
मण्डपस्यार्चनं कुर्यात् अग्निकार्यं समाचरेत्  २९१
जयादिरभ्याथानं च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिं च शिरसा स्विष्टमग्नेति मंत्रतः  २९२
कुण्डाद्देवं समावाह्य कुण्डमर्च्येत्तु योजयेत्
मुहूर्तान् पूजयित्वा तु वाटोद्य समन्वितम्  २९३
शंखदुंदुभिनादैश्च सर्वघोषसमन्वितम्
स्वस्तिवाचकसंयुक्तं शिवसंकल्पमेव च  २९४
ब्रह्मघोषसमायुक्तं शिवसंकल्पमेव च
ब्रह्मघोषसमायुक्तं नानाभक्तजनैर्युतम्  २९५
+++ भानुद्धत्य शिरसा कृत्वा धामप्रदक्षिणम्
गर्भगेहं प्रविश्याथ लिंगाग्रे चैव विन्यसेत्  २९६
मन्त्रन्यासादिकं कृत्वा ++++++++++
++++++++++++++++++++  २९७
असंपूर्णम्

इति अंशुमत्तन्त्रे नित्यसंध्यार्चनाविधिपटलः

## बाणलिङ्गविधि

अथातः संप्रवक्ष्यामि बाणलिंगमिहोच्यते
बाणलिंगार्चनं पुण्यं भोगमोक्षप्रसाधिकम्  १
ग्रामे वा नगरे वापि पत्तने राजधानिके
नदीतीरे समीपे स्याच्चैत्यं वृक्षसमीपके  २
ग्रामस्यैशानदेशे तु आलये ग्राममध्यमे

स्थापनं संप्रवक्ष्यामि लक्षणं तु विधीयते ३
कूश्माण्डस्य फलाकारं पनसाफलरूपकम्
मातुलंगफलाकारं बिल्वं चेति फलाकृतिम् ४
तालीफलवदाकारं नालीकेरफलाकृतिम्
लिंगस्य मध्यमे स्थाने सूत्रनाळं तु वेष्टयेत् ५
ब्रह्मांगं ब्रह्मसूत्रं च आयादि वैष्णवं तथा
आयादिं तालपर्यन्तं कर्ता जन्मक्षयेऽपि वा ६
ग्रामक्षयेऽवतानां च आलयं तु प्रवेष्टयेत्
ब्रह्मांगं ब्रह्मसूत्रं च वर्जयेत्तु प्रजापते ७
वृत्तं वा चतुरश्रं वा लिंगसूत्रं तु तत्समम्
योगशक्तिविधातव्यं तत्सूत्रं चैव तत्समम् ८
स्वयंभु देविकं चैव आर्षणं बाणमेव च
पीठप्रासादिरूपं तु तथैवाष्टमकारयेत् ९
पीठतो वाससाद्गर्भं द्विगुणं त्रिगुणं तु च
चतुष्पञ्चगुणं वापि गर्भगेहे विशालकम् १०
विमलाकृतिच्छन्नं वापूर्वशास्त्रेव कारयेत्
एवं चतुर्विधं लिंगं शक्तीनां लक्षणं भवेत् ११
योगं भोगं च वीरं च शक्तित्रयमिति स्मृतम्
योगशक्तिरुमा भागी पीठकाकृतिरुच्यते १२
भोगशक्तिविधिं वक्ष्ये किरीटं श्यामवर्णकम्
उत्पलं दक्षिणे हस्ते वामहस्ते प्रलंबयेत् १३
दक्षिणे स्वस्थितं पादं वामपादे तु कुञ्चितम्
नदीपङ्कस्य सूत्राणां शिल्पशास्त्रेण कारयेत् १४
भोगशक्तिरिति ख्यातं वीरशक्तिरथ शृणु
अभयं वरदं चैव शंखचक्रधरान्वितम् १५
द्विपादं स्थितमेवोक्तं वीरशक्त्यै विधीयते

उत्तरायणकाले तु शुक्लपक्षे शुभे दिने १६
शुभवारादिभिर्युक्तं प्रतिष्टासम्यगोचरे
नवाहं वाथ सप्ताहं पञ्चाहं त्र्यहं तु वा १७
अंकुरार्पणयेद्धीमान् देशिकस्य विचक्षणः
गणेशं पूजयेत्तत्र पुण्याहं तु विधीयते १८
पञ्चगव्येन शुद्धिः स्यात् सप्तशुद्धिमथ शृणु
तिलसर्षपमुद्गं च माषचिंबाढकस्तथा १९
कुलुत्थ यवसप्तेते बीजक्षीरेण सेचयेत्
शरावं पालिका चैव घटिकाद्येन योजयेत् २०
द्रोणद्वयं च शालीनां तदर्धं तण्डुलं तु वा
तदर्धैश्च तिलैश्चैव तदर्धैर्लाजपूरितम् २१
एवं लक्षयेद्धीमान् सोमकुंभं प्रतिष्टितम्
तथैवास्तु बलिं दद्यात् शालिभिस्तण्डुलैः तिलैः २२
वास्तुहोमं तथा कृत्वा वास्तुशुद्धिं ततः शृणु
प्रवेशे बलिमित्याहुः राक्षोघ्नं होममाचरेत् २३
बाललिंगं विना कुर्यात् प्रतिष्टां सम्यगाचरेत्
लिंगे सदाशिवं चिन्त्येत्स्थापयेद्द्वारदिग्मुखः २४
बाणलिंगादि रोहानां पिण्डिकां स्थापयेत्पुरा
अथ मानुषलिंगानां नंद्यावर्तं शिरोपरि २५
रत्नविन्यासमेवं तु प्राणचक्रं च तत्परम्
तदूर्ध्वे स्थापयेल्लिंगं पिण्डिकां स्थापयेत्पुनः २६
सुदृढं बंधनं चैव विधिवद्देशिकोत्तमः
बाणलिंगे विशेषेण स्थापनस्य विचक्षणः २७
पीठमूले तु रत्नादीन् चक्रादीन् लिंगमूलके
स्थापयेत्तु विशेषेण बन्धनादीन् विचक्षणः २८
परीक्ष्य शिल्पिभिः पश्चात्समं कृत्वा विसर्जयेत्

पुण्याहं प्रोक्षणं कृत्वा पञ्चगव्याभिषेचयेत् २९
मृत्तिकालेपनं कुर्यात्पञ्चामृतमिहोच्यते
तैलस्नानादिकं सर्वान् शेषकर्म तु पूर्वकम् ३०
द्वादशस्तंभसंयुक्तं षोडशस्तंभमुच्यते
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ३१
पीतध्वजसमायुक्तं कदळीपूगसन्निभम्
वेद्यूर्ध्वस्थण्डिलं कृत्वा अष्टद्रोणैश्च शालिभिः ३२
तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि
तदर्धैर्लाजपूर्णैश्चालंकृत्य विशेषतः ३३
परिवारादिकं सर्वान् द्रोणैश्शालीश्च शोभितान्
तेन कुंभे क्रमं स्थाप्य वेदकुंभे च शोभितान् ३४
नवाग्निं वाथ पञ्चाग्निं एकाग्निं क्रमथापि वा
खदिरं च पलाशं च अश्वत्थं बिल्वमेव च ३५
आज्यं हविश्च लाजं च सर्षपं च यवं तिलान्
वेणुवद्मुद्गमाषं च पिष्टापूपगुळान्वितम् ३६
सद्यादीशानपर्यन्तं मूलमंत्रेण होमयेत्
जयादिरभ्याथानं च प्रायश्चित्तमिति स्मृतम् ३७
पूर्णाहुतिं च शिरसा होमयेद्देशिकोत्तमः
योजयेत्कुंभमध्ये तु हविं दद्याद्विचक्षणः ३८
तांबूलादीनि वेद्याथ पूजयेत्तु विशेषतः
गोभूहिरण्मयादीनां दापयेत्तु द्विजाय वै ३९
प्राप्ते सुलग्नकाले तु मूर्तिपैस्सह देशिकः
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः ४०
ग्रामप्रदक्षिणं कृत्वा आलये तु प्रवेशयेत्
कुंभाद्देवं समावाह्य मूललिंगस्य मध्यमे ४१
हृदमूलं समुच्चार्य ध्यानयुक्तसमन्वितम्

योजयेत्सूक्ष्मदेशे तु मयूराण्डे मयूरवत् ४२
मनोन्मन्येव वर्धन्यां पिण्डिकायां च योजयेत्
प्रायश्चित्तार्थकुंभन्तु स्थापयेत्वदनंतरम् ४३
अनन्तादि शिखण्डांतं क्रमेणैव तु विन्यसेत्
तत्तत्कुंभोदकै स्नाप्य अर्चनोक्तं समर्चयेत् ४४
प्रायश्चित्तार्थकुंभं तु स्थापयेत्तु जनांतरम्
मन्त्रांनं पायसादीनां मन्त्रपुष्पाणि दापयेत् ४५
वस्त्रमाल्यैरलंकृत्य चंदनैस्सह देशिकः
नाम एव प्रकर्तव्यं काञ्चनैः स्वर्णपङ्कजैः ४६
लिंगमूर्ध्नि समभ्यर्च्य प्रभूतहविषं ददेत्
सर्वस्तोत्रसमायुक्तं धूपदीपं प्रदापयेत् ४७
ताण्डवं प्रदास्याथ पूर्वोक्तविधिना सह
भूसुरान् भोजयेत्पश्चात् घृतक्षीराभिषेचयेत् ४८
यात्रां प्रति विशेषेण पूजयेत्रिदिनं तथा
पञ्चषट्सप्तमासांतं शंभोर्धाराभिषेचयेत् ४९
त्रिपञ्चमथवा कुर्यात्पक्षांतं +++ विधीयते
आचार्यं पूजयेद्धीमान् वस्त्रहेमांगुळीयकैः ५०
भक्तानां परिचाराणां दक्षिणां संप्रदाय च
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ५१
इत्यंशुमान् तन्त्रे बाणलिंगस्थापनविधिपटलः

## भूपरिग्रहविधि

+++ थ प्रभात्ते स्वीकारं कुर्याद्धातोऽवभूषितः
वसनोरूतनं वस्त्रं उत्तरीयसमन्वितम् १
सुप्रलिप्तं महीं मध्य सर्वथाऽन्योपरि स्थितम्
सितचन्दनलिप्ताङ्गं लूतश्वत्थं दलाननम् २

सर्वरत्नौषधीर्भाग्यं निम्नगार्हप्रपूरितम्
ततो वस्त्रसमायुक्तं सितसूत्रेण वेष्टितम् ३
पूजयित्वा विधानेन गन्धपुष्पाक्षतैर्गुरुः
ततः कुंभं समुत्क्षिप्य दिशि मूर्ध्नि निधापयेत् ४
वेदातोऽद्य कुलस्त्रीणां ++ स्व निभस्ततः
ततः कनकनिर्गच्छदच्छिन्नजलधारया ५
जात्या प्रजाङ्किते क्षिप्रं परिषिञ्चेत्प्रदक्षिणम्
नयेत्पूर्वसन्मानं +++ विलंब्य च ६
तस्मादग्नेः पलाशस्य प्राणेशाय ययोस्तथा
शीघ्रं नीत्वा ततः प्राचीं नयेद्भूमिं परिग्रहेत् ७
देशाध्यक्षो दशे क्षिप्रं यजमानकरे ततः
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ८
भूपरीक्षाविधिं प्रोक्तं जातिनिर्णयविधिं शृणु
इत्यंशुमान् तन्त्रे भूपरिग्रहविधिः पटलः

## शान्तिकर्म

अतः परं प्रवक्ष्यामि शान्तिकर्म समासतः
भिन्नप्रासादकरणे गोपुरादिविधौ तथा १
रोगाद्युपद्रवः कर्तुः जायते तन्निवृत्तये
शान्तिः प्रथमतः कृत्वा प्रतिष्ठां कारयेत्ततः २
आचार्यं वरयेत्तत्र वेदज्ञं शान्तिकर्मणि
धान्यतण्डुलसंयुक्तः स्थण्डिले स्थाप्य कुंभकम् ३
उमामहेशप्रतिमां दशनिष्कविनिर्मिताम्
कुंभस्योपरि विन्यस्य प्रासादेन तु देशिकः ४
आवाह्य देवमृत्त्विग्भिः सहितो जपमाचरेत्
प्रासादञ्चाप्युमासूक्तं वेदादींश्छतरुद्रियम् ५

शिवसूक्तं पञ्चशान्तिं मुञ्चामित्वेति सूक्तकम्
ममो ब्रह्मेत्यृचं जप्त्वा पुनः पूजां समाचरेत् ६
उद्वास्य देवमाचार्यः कर्तारमभिषेचयेत्
आचार्याय ततो दद्यात् प्रतिमां वस्त्रसंयुताम् ७
दक्षिणाभिश्च सहितां गां च दद्यात्पयस्विनीम्
ऋत्विग्भ्यो दक्षिणां दद्यात् दश दानञ्च कारयेत् ८
ब्राह्मणान् भोजयेत्पश्चात् प्रष्ठोङ्कारयेत्ततः
एवं यः कुरुते शान्तिं पित्तशाठ्यविवर्णितः ९
तस्यापचारं सहते ज्ञानाज्ञानकृतं शिवम्
देहाद्युपद्रवैर्मुक्तो दीर्घायुश्च भवेन्नरः १०
इति शान्ति पटलः

## कोटिबिल्वार्चनम्

अथातः संप्रवक्ष्यामि कोटिबिल्वार्चनं रवेः
पुत्रार्थी रोगनाशार्थी ऐश्वर्यार्थी समाहितः १
महारोगाभिभूतो वा शतृभिः पीडितोऽपि वा
असाध्यरोगयुक्तो वा महापापयुतोऽपि वा २
बिल्वैरभ्यर्च्य देवेशं सर्वरोगैः विमुच्यते
अच्छिद्रैः कृमिभिर्हीनैः निदलैः कोमलैर्दलैः ३
सहस्रनामभिः कुर्यात् कोटिबिल्वार्चनं रवेः
चरलिङ्गार्चनाच्छ्रेष्ठं स्थिरलिङ्गे समर्चनम् ४
स्वायंभुवेऽर्चनं लिङ्गे कोटिजन्मतपः फलम्
कोटिबिल्वार्चनं पुंसां जन्मकोटिषु दुष्करम् ५
कोटिबिल्वार्चनान्मर्त्यो मुच्यते भवबन्धनात्
सहस्रनामभिः कुर्यात् प्रतिनाम शिवार्चनम् ६
सहस्रनामभिर्हीनमर्च++++ हि तत्

अर्चनान्ते प्रतिदिनं नैवेद्यञ्चापि कारयेत् ७
कोटिबिल्वार्चनाजन्य फलप्राप्त्यै समाहितैः
समपितवसे कार्यमुद्यापनमतन्द्रितैः ८
लिङ्गस्योत्तरदिग्भागे षोडशस्तंभसंयुतम्
मराटपं कारयेच्छुभ्रं सर्वालङ्कारशोभितम् ९
तन्मध्ये वेदिकां कुर्यात् कुंभस्थापनकर्मणः
स्थरिडलं रङ्गवल्याद्यैः अलङ्कृत्य समाहितः १०
द्रोणद्वयं तदुपरि निक्षिपेच्छालिधान्यकम्
तदर्धं तराडुलांस्तत्र तदर्धांश्च तिलानपि ११
कुंभं तदुपरि स्थाप्य वस्त्रगन्धाद्यलङ्कृतम्
उमामहेशप्रतिमां शतनिष्कविनिर्मिताम् १२
कुंभस्योपरि संस्थाप्य बिल्वैरभ्यर्च्य भक्तितः
अष्टदिक्पालपूजार्थं स्थापयेत्कलशाष्टकम् १३
दिक्पालप्रतिमास्तेषु कलशेषु निधाय च
सांबमूर्तिं हृदि ध्यात्वा कुर्यात्सङ्कल्पमेव च १४
आचार्यं वृणुयात्पश्चात् वेदवेदान्तपारगः
शिवभक्तं सदा शान्तं भूतिरुद्राक्षधारिणम् १५
ऋत्विजो वृणुयादष्टौ वेदवेदाङ्गपारगान्
कुर्यात्सङ्कल्पमाचार्यो ऋत्त्विग्भिः सहधर्मवित् १६
स्वात्मानं शिवरूपेण ध्यात्वा चार्यस्समाहितः
प्रासादेनैव मन्त्रेण शिवसूक्तेन मन्त्रवित् १७
आवाहयेदुमाकान्तं प्रतिमायां सहोमया
षोडशैरुपचारैश्च पूजयित्वा जगत्पतिम् १८
सकलीकरणं कृत्वा जपं पश्चात्समाचरेत्
जपेत्सहस्त्रं प्रासादं शिवसूक्तं ततः परम् १९
इतरे च द्विजस्तत्र कलशेषु समाहिताः

++नाष्टदिक्पालान् तत्तन्मन्त्रेण पूज्य च २०
आचार्यसहितास्सर्वे जपं कुर्यादतन्द्रिताः
वेदादींश्छतरुद्रीयं +++ महामनुम् २१
ब्रह्मसूक्तं विष्णुसूक्तं रुद्रसूक्तं तथैव च
वारुणं पौरुषं सूक्तं घृतसूक्तं तथैव च २२
मुञ्चामित्वेति सूक्तञ्च मृत्युसूक्तं तथैव च
जपेदथर्वशिरसं शिखांमासूक्तमेव च २३
पञ्चशान्तिं जपेत्पश्चात् नमो ब्रह्मेत्यृचं ततः
पुनः पूजां ततः कुर्यात् उद्यापनमथाचरेत् २४
कुंभस्य पश्चिमे भागे होमकुण्डं विधाय च
अग्निं तत्र प्रतिष्ठाप्य मुखान्तं होममाचरेत् २५
ततो बिल्वदलैश्शुद्धैः त्रिदलैः कृमिवर्जितैः
घृताक्तैराचरेद्धोमं ऋत्विग्भिस्सह देशिकः २६
सहस्रनामभिः कुर्यात् अयुतं प्रणवान्वितैः
पायसेन हुनेदष्टशतं प्रासादं मन्त्रतः २७
त्र्यंबकेन मन्त्रेण हुनेदापस्समन्वितः
तिलहोमन्तु गायत्र्या रौद्रया शतमाचरेत् २८
होमकर्म समाप्याथ कुर्यात्कुंभाभिषेचनम्
कुंभाभिषेचनात्पूर्वं पयोमधुघृतादिभिः २९
नारिकेलजलैश्चापि इक्षुकाण्डरसैस्तथा
गन्धोदकैश्च कर्पूरैः कुङ्कुमादिसमन्वितैः ३०
अभिषिच्य महादेवं कुर्यात्कुंभाभिषेचनम्
कर्पूरकुङ्कमयुतैः दिव्यगन्धैः शरीरिणाम् ३१
+++ इत्युक्तस्स पीठकम्
लेपयेदादराल्लिङ्गं नैवेद्यं सम्यगाचरेत् ३२
बिल्वैरभ्यर्चयेत्पश्चात् कोटिसंख्या च दक्षिणा

+++++++++++++++++++ भिपूर्तये ३३
कुर्याद्विशिष्य नैवेद्यं पायसापूपसंयुतम्
मनोरथं प्रार्थयित्वा ग्राचार्यं पूजयेत्ततः ३४
++++++++++++++++ जीव उच्यते
वस्त्रैराभरणैर्गन्धैः पुष्पैरभ्यर्च्य देशिकः ३५
पतिमान् दक्षिणायुक्तान् दद्याद्वस्त्रसमन्वितान्
दक्षिणा +++ रुद्रो लोभवर्जितः ३६
दशांशं ऋत्त्विजां प्रोक्ता भूरिभोजनदक्षिणा
ग्राचार्यस्सम ++ यागी ++++ ३७
इत्यंशुमत्तंत्रे कोटिबिल्वार्चनम्

## बिल्वार्चनविधि

बिल्वार्चनविधिं वक्ष्ये सर्वाभीष्टप्रदं नृणाम्
पुत्रार्थी रोगनाशार्थी ऐश्वर्यार्थी समाहितः १
बिल्बैरभ्यर्चयेच्छंभुं त्रिदलैः कृमिवर्जितैः
ग्रच्छिद्रैः कोमलैश्चैव कुर्यादभ्यर्चनं शिवः २
चरलिङ्गार्चनाच्छ्रेष्ठं स्थिरलिङ्गसमर्चनम्
स्वायंभुवेऽर्चनं लिङ्गे कोटिजन्मतपः फलम् ३
कोटिबिल्वार्चनं पुंसां जन्मकोटिषु दुर्लभम्
कोटिबिल्वार्चनं शंभोः यः कुर्याद्भक्तिसंयुतम् ४
तस्य पुरायफलं वक्तुं ब्रह्मणापि न शक्यते
सहस्त्रनामभिः कुर्यात् प्रतिनामं शिवार्चनम् ५
सहस्त्रनामार्चनं मध्यमं हि तत्
कोटिबिल्वार्चनं कुर्वन् कुर्यात्सङ्कल्पमादितः ६
ग्रर्चनान्ते प्रतिदिनं नैवेद्यञ्चापि कारयेत्
कोटिबिल्वार्चनाजन्यफलप्राप्त्यै द्विजातिभिः ७

समाप्तिदिवसे कार्यमुद्यामनमतन्द्रितैः
पयस्विनीञ्च गां दद्यात् दिव्यालङ्कारशोभिताम् ८
ऋत्त्विग्भ्यो दक्षिणां दद्यात् दश दानानि कारयेत्
अयुतं भोजयेद्विप्रान् सहस्रं वाऽथवा शतम् ९
प्रदक्षिणनमस्कारैः प्रीणयित्वा द्विजोत्तमान्
कृताशीर्वचनो विप्रैः तोषयित्वा ततोर्चकम् १०
वस्त्रैराभरणैर्द्रव्यैः पश्चाद्भोजनमाचरेत्
एवं यः कुरुते भक्त्या जन्ममध्ये शिवार्चनम् ११
कोटिबिल्वदलैस्तस्य सफलं जन्मभूतले
व्याधयस्तस्य नश्यन्ति क्षिप्रारोग्यञ्च जायते १२
अपमृत्युर्नाशमेति दीर्घायुष्यञ्च जायते
उक्तेन विधिना जुर्यात् कोटिबिल्वार्चनं नरः १३
लोभेन विधिना हीनं कुर्वन्नैवाप्नुयात्फलम्
तस्माच्छास्त्रोक्तमार्गेण कोटिबिल्वार्चनं चरन् १४
इह लोके शतं जीवेत् आधिव्याधिविवर्जितः
मोहान्ते शिवसायुज्यमाप्नुयान्नात्र संशयः १५
इत्यंशुमान् तन्त्रे कोटिबिल्वार्चनविधिः पटलः

## अष्टम्याराधनम्

अष्टम्याराधनं वक्ष्ये श्रूयतां रविसत्तम
सर्वलोकहितं पुण्यं सर्वैश्वर्यप्रदायकम् १
इष्टकाम्यार्थसिद्ध्यर्थं भोगमोक्षं फलप्रदम्
सर्वशतृक्षयकरं सर्वपापविनाशनम् २
व्रतानामुत्तमं ज्ञेयं कृष्णाष्टम्यां यजेच्छिवम्
मार्गशीर्षमासे तु कृष्णपक्षेऽष्टमी तिथौ ३
पुरत्रयजयान्ते तु कृष्णशान्त्यर्थकारणम्

रात्रौ प्रथमयामे तु सर्वदेवैस्सुपूजितम् ४
कपिलाया घृतेनैव क्षीरेणैवाभिषेचनम्
स्तुत्वा द्वादशभिर्नामैः संपूज्य परमेश्वरम् ५
एवं क्रमेण संपूज्य कृष्णाष्टम्यां महाव्रतम्
पूर्वविच्छैव कर्तव्या बुधैः कृष्णाष्टमी तिथिः ६
सायं सन्ध्यार्चने युक्तः घृतस्नानं विशेषतः
प्रोक्षणं लेपनं स्नानं घृतस्नानं त्रिधा भवेत् ७
प्रोक्षणं प्रस्थसंख्या च प्रस्थार्धञ्चैव लेपनम्
द्विप्रस्थादिघृतञ्चैव स्नानमेवं प्रकीर्तितम् ८
प्रस्थं प्रस्तार्थकञ्चैव आयुरारोग्यवर्धनम्
द्विप्रस्थादिघृतैस्स्नाप्य सर्वपापविनाशनम् ९
चतुःप्रस्थघृतञ्चैव सर्वैश्वर्यप्रदायकम्
अष्टसंख्याघृतञ्चैव सर्वदानफलप्रदम् १०
द्वादशप्रस्थसंख्या च सर्वयज्ञफलप्रदम्
षोडश प्रस्थसंख्या च इष्टकाम्यार्थसिद्धिदम् ११
एकविंशद्धृतञ्चैव भोगमोक्षफलप्रदम्
पञ्चविंशद्धृतञ्चैव पुत्रपौत्रविवर्द्धनम् १२
पञ्चाशत्संख्यया च सारूप्यञ्च तथा भवेत्
अष्टोत्तरशतञ्चैव रुद्रलोके महीयते १३
घृतं पञ्चशतं स्नात्वा शिवसायुज्यमाप्नुयात्
भक्त्या वित्तानुसारेण तावत्संख्याभिषेचनम् १४
कपिलाया घृतं श्रेष्ठं रक्ताया मध्यमं भवेत्
अलाभे सर्ववर्णानां घृतं सङ्गृह्य बुद्धिमान् १५
शालिभिस्थण्डिलं कृत्वा शिवाग्रे वाऽथ याम्यके
सङ्कल्प्य चैव पुण्याहं पञ्चामृतन्तु तत्र वै १६
स्नपनोक्तक्रमेणैव कलशस्थापनं कुरु

वस्त्रपूतञ्च शुद्धञ्च घृतं वै स्थाप्य देशिकः १७
घृतं सद्याधिवासञ्च दर्भैराच्छाद्य मन्त्रवित्
द्वारपूजां ततः कृत्वा गर्भगेहं प्रविश्य च १८
निर्माल्यन्तु विसृज्याथ अभिषेकं समाचरेत्
पञ्चामृतन्तु संस्नाप्य घृतस्नानान्तरान्तरे १९
घृतं मिक्षेति मन्त्रेण घृतसूक्तेन मन्त्रतः
चमकं नमकञ्चैव पुरुषसूक्तं त्र्यंबकम् २०
शिवमन्त्रं समुच्चार्य कनिष्ठाङ्गुलिधारया
मन्दोष्णेन समायुक्तं घृतेनैवाभिषेचयेत् २१
उष्णोदकाभिषेकञ्च मुद्गचूर्णञ्च दापयेत्
नालिकेरफलञ्चैव कदलीफलसंयुतम् २२
मधुना गुलसंयुक्तं मर्दयेल्लिङ्गपीठयोः
क्षीरेणैवाभिषेकञ्च गन्धतोयाभिषेचनम् २३
स्थापितैः कलशैः स्नाप्य मन्तान्नञ्च निवेदयेत्
वस्त्राभरणमाल्यैश्च गन्धपुष्पैः समर्चयेत् २४
महाहविर्निवेद्याथ सन्ध्याशेषं समाचरेत्
स्तुत्वा प्रणम्य देवेशं उपोष्य रजनीन्ततः २५
मुमुक्षूणां प्रकर्तव्यं अन्येषाञ्च विशेषतः
अक्षारलवणं पाकं वन्यमूलफलादिकम् २६
रक्तान्नन्तु प्रकर्तव्यं भोगमोक्षफलार्थिभिः
एतत्सामान्यमित्युक्तं व्रतीनान्तु विशेषतः २७
प्रातस्नानादिकं कृत्वा सन्ध्यावन्दनमाचरेत्
शिवध्यानपरो भूत्वा व्रतं सङ्कल्प्य बुद्धिमान् २८
प्रदक्षिणञ्च मध्याह्ने सायाह्ने यजनं कुरु
पूर्वोक्तविधिना युक्तमर्चयेत्तु विशेषतः २९
मूर्तिमन्तं समुच्चार्य मासं प्रति विशेषतः

शङ्करश्शंभुमहेशो वा महादेवस्तथैव च ३०
स्थाणुः शिवः पशुपतिः शर्वःशर्वस्तथैव च
मन्त्रेश्वरः ततः प्रोक्तं ईश्वरो रुद्र उच्यते ३१
द्वादशेतानि नामानि मार्गशीर्षादितः क्रमात्
प्रणवादिचतुर्थ्यन्तं स्वनामपदमध्यमम् ३२
नन्द्यावर्तं कारवीरं बिल्वपुष्पञ्च पद्मकम्
पुन्नागं कर्णिकारञ्च द्रोणं श्वेतार्कपुष्पकम् ३३
जातिचंपकपुष्पञ्च उत्पलं द्वादश क्रमात्
नीलोत्पलञ्च पुष्पाणि शङ्करादीन्यथार्चयेत् ३४
तत्तन्नाम्ना समभ्यर्च्य संपूज्य निधिना बुधः
पायसान्नं गुलान्नञ्च घृतान्नञ्च निवेदयेत् ३५
मुद्गान्नञ्च तिलान्नञ्च श्यामाकं कुरबेरकम्
बेरवञ्च हरिद्रान्नं सिद्धान्नं कोद्रवानकम् ३६
पायसान्नञ्च नैवेद्यं आर्द्रादिवृश्चिकान्तकम्
प्रस्थादि घृतसंख्या तु युगसंख्यावसानकम् ३७
आढकञ्चैव नैवेद्यं तत्तद्द्रव्यञ्च संयुतम्
पञ्च प्रस्थं समारभ्य घृतसंख्या तु यावधि ३८
प्रस्थस्य प्रस्थनैवेद्यं तत्तद्द्रव्यञ्च संयुतम्
जलेनैव समायुक्तं मार्गशीर्षादिषु क्रमात् ३९
गोमूत्रं गोघृतं क्षीरं तिलं गोधूममेव च
कुशोदकञ्च शृङ्गोदं गोमयोदकमेव च ४०
पिण्ड्याकं बिल्वषत्रोदं तण्डुलस्योदकं दधि
गोकर्णाकृतिहस्तेन प्राशयेत्स्वस्व मन्त्रतः ४१
एवं क्रमेण विधिवत् वृश्चिकान्तं व्रतं चरेत्
निश्चित्य व्रतकाले तु आशौचदिवसं भवेत् ४२
जन्माशौचं मृताशौचं व्रतीनान्तु भवेद्यदि

प्रतिकृत्यञ्च पूजा च न कर्तव्या कदाचन ४३
तत्तथा उपवासन्तु अन्नप्राशनमात्रकम्
कर्तव्यं परमासे तु द्विगुणञ्चैव सङ्ग्रहेत् ४४
तत्तिथौ यजनं कुर्यात् तन्मासद्रव्यसंयुतम्
एतत्तस्य मध्ये तु स्त्रीणाञ्चैव रजस्वला ४५
भर्तारञ्चैव पुत्रं वा उपोषित्वा यथाविधि
तद्दिने उपवासन्तु स्त्रीणां व्रतमुपास्यति ४६
एवं क्रमेण विधिवत् वृश्चिकान्तं समाचरेत्
अन्तर्याराधनं प्रोक्तं प्रदोषयजनं शृणु ४७
इत्यंशुमान् तन्त्रे अष्टमीपूजाविधिः पटलः

## प्रदोषयजनम्

प्रदोषस्य विधिं वक्ष्ये श्रूयतां रविसत्तम
सर्वपापहरं पुण्यं सर्वदोषविनाशनम् १
प्रदोषकाले कर्तव्यं यजनञ्च विशेषतः
त्रयोदशी दिने सायं क्षीराब्धिमथनोद्भवम् २
कबलीकृतवान् रुद्रः कालाग्निसदृशं विषम्
देवानाञ्च हितार्थाय वृषमारुह्य सत्वरम् ३
तस्मिन्काले मया पीतं गरलं लोकरक्षया
करोति मत्तु यत्पूजां सर्वपापैः प्रमुच्यते ४
तस्मात्सर्वप्रयत्नेन शिवपूजां समारभेत्
त्रयोदशीयुतं सायं सर्वदोषावहं स्मृतम् ५
सितासिते त्रयोदश्यां यजनं वृषपूर्वकम्
उदयाद्युदयान्तञ्च त्रयोदश्युत्तमा भवेत् ६
भास्करोदयमारभ्य यावदस्तमनान्तकम्
तद्दिने यजनं कुर्यान्मध्यमञ्चेति कीर्तितम् ७

सप्तविंशति नाड्यान्तु यजनञ्चाधमं भवेत्
दिवसः परतः कालाद्येकयामा त्रयोदश ८
अर्थधामा भवेत्सा च एकनाडी त्रयोदशी
तद्दिनस्यावसाने तु प्रदोष इति निश्चितः ९
तस्मादहोऽष्टभागे तु मध्ये मध्ये तदन्तके
दृश्यतेऽत्र त्रयोदश्यां शिवं संपूजयेद्बुधः १०
मासे शुक्लत्रयोदश्यां उत्तमोत्तममिष्यते
तद्दिने यजनं कुर्यात् सर्वमासफलं भवेत् ११
आचार्यश्शिष्यसंयुक्तं पूर्ववत्स्नानमाचरेत्
शुक्लवस्त्रेण संवेष्ट्य आर्द्रवस्त्रं परित्यजेत् १२
ततो देवालयं गत्वा प्रदक्षिणमथाचरेत्
पादप्रक्षालनं कृत्वा मण्डपान्ते प्रवेशयेत् १३
रुचिरासनं ततः कृत्वा उत्तराभिमुखो भवेत्
भस्मन्यासादिकं कुर्यात् देहन्यासादिकं ततः १४
गोमयालेपितां भूमिं चतुरश्रसमन्विताम्
शालिभि स्थण्डिलं कृत्वा नवकोष्ठं समालिखेत् १५
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः
पञ्चगव्यन्तु संस्थाप्य पूर्वोक्तविधिमाचरेत् १६
वृषभं पूजयेत्तत्र तैलेनाभ्यर्च्य मर्दयेत्
ततो येन संस्थाप्य पञ्चगव्याभिषेचनम् १७
शृङ्गमध्ये न्यसेत्पुष्पं वस्त्रेणैव तु वेष्टयेत्
गन्धपुष्पञ्च माल्यञ्च विन्यसेत्तु विचक्षणः १८
तिलान्नञ्च निवेद्याथ शिवपूजां समारभेत्
शिवाग्रे स्थण्डिलं कल्प्य पद्ममष्टदलं लिखेत् १९
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेत्ततः
स्नपनोक्तप्रकारेण कलशं स्थापयेत्ततः २०

पञ्चगव्यन्तु संस्थाप्य पञ्चामृतं तदन्तके
स्नाद्रव्यं समाहृत्य प्रोक्षयेच्छुद्धवारिणा  २१
विघ्नेश्वरं समभ्यर्च्य द्वारदेवान् समर्चयेत्
प्रच्छन्नपटमावेष्ट्य गर्भगेहं प्रवेश्यथ  २२
धूपं न्यस्त्वा विशेषेण निर्माल्यन्तु विसर्जयेत्
तैलाभ्यङ्गं ततः कृत्वा लिङ्गपीठे च मर्दयेत्  २३
यवतण्डुलचूर्णेन मुद्गचूर्णेन लेपयेत्
++++++++ पीठशुद्धिमतः परम्  २४
पञ्चगव्याभिषेकञ्च शुद्धतोयाभिषेचनम्
चमकं नमकञ्चैव पुरुषसूक्तं तथैव च  २५
वर्जयित्वान्यमन्त्राणी शुद्धाद्भिरभिषेचयेत्
घृतेन स्नापयेद्धीमान् स्नानद्रव्यं तदन्तके  २६
सुपुष्पं मूर्ध्निविन्यस्य वस्त्रेणैव तु वेष्टयेत्
ततः कुंभान् समादाय शिवाग्रे स्थापयेत्क्रमात्  २७
मन्त्रन्यासादिकं कृत्वा धूपदीपादिकं ददेत्
कुंभाद्बीजं समादाय लिङ्गं मूर्ध्नि च विन्यसेत्  २८
वर्धनीं कलशांश्चैव तत्तत्स्थानेऽभिषेचयेत्
मन्त्रंपुष्पं ततो दत्वा मन्त्रान्नन्तु निवेदयेत्  २९
खण्डवस्त्रेण संमार्ज्य लिङ्गपीठं विशेषतः
वस्त्रेण वेष्टयेल्लिङ्गं चित्रवस्त्रेण संयुतम्  ३०
गन्धमाल्यैरलङ्कृत्य भूषयेद्भूषणादिभिः
पाद्यमाचमनं चार्घ्यं धूपदीपं ददेत्ततः  ३१
नैवेद्यं दापयेत्पश्चात् हृदयेन तु मन्त्रतः
पानीयं दापयित्वा तु मुखवासं तदन्तके  ३२
अग्निकार्यक्रमं कृत्वा बलिदानं समाचरेत्
बलिबेरन्तु विन्यस्य अरातिकमथाचरेत्  ३३

मूलबेरे विशेषेण धूपदीपादिकं ददेत्
आरात्रिकं ददेत्पश्चात् तांबूलन्तु निवेदयेत्  ३४
भसितं दर्पणं छत्रं चामरन्तु प्रदापयेत्
वेदैस्तोत्रैश्च नृत्तैश्च सन्तोष्य परमेश्वरम्  ३५
पूजान्ते च विशेषेण वृषभं पूजयेत्ततः
तांबूलन्तु निवेद्याथ धूपदीपादिकं ददेत्  ३६
शृङ्गमध्ये शिवं दृष्ट्वा स्मरेत्त्र्यंबकमूर्त्तनम्
एवं संपूज्य विधिवत् पूजां संयक्समापयेत्  ३७
वृषादिस्नानपर्यन्तं घटिकैका विधीयते
नैवेद्यञ्च उत्सवाद्यञ्च पक्षनाडी प्रकीर्तिता  ३८
धूपादिवृषपर्यन्तं +++ दन्तु विधीयते
प्रदोषयजनान्ते तु सायरक्षां समाचरेत्  ३९
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
प्रदोषस्य विधिः प्रोक्तः गौर्यार्चनविधिं शृणु  ४०
इत्यंशुमान् तन्त्रे प्रदोषपूजाविधिः पटलः

## वेत्रादानविधि

अतः परं प्रवक्ष्यामि वेत्रादानविधिक्रमम्
पट्टनाभिषेके देवस्य हेमवेत्रं नराधिपः  १
शंभोः प्रसादबुध्या तु गृह्णीयाद्भिक्तिसंयुतः
शिवप्रसादरूपं तत् वेत्रस्वीकारमङ्गलम्  २
नचोपेक्षितनृपतिर्य इच्छेदात्मनश्शुभम्
अर्चको हेमवेत्रं तन्नवरत्नविभूषितः  ३
सन्निधौ देवदेवस्य दद्यादुत्तरतो मुखः
दीर्यमानं हेमवेत्रं देशिकेन नराधिपः  ४
शुद्ध्या प्रतिगृह्णीयात् ध्यात्वा सांबं महेश्वरम्

संप्रार्थयेत्स्वयं राजा राज्यरक्षामखण्डिताम् ५
दीर्घमायुस्तथारोग्यं पुत्रपौत्रादिसंपदः
स्वायंभुवस्य देवस्य शंभोस्सन्निधिमण्टपे ६
वितानपुष्पमाल्याद्यैः धूपदीपैः सुपूजिते
अविमुक्ते च हालास्ये तथा विजयपट्टणे ७
राज्यं यद्यकरोच्छंभुः लोकानुग्रहतत्परः
अखण्डैश्वर्यदं तत्र वेत्रस्वीकारमङ्गलम् ८
++ अभिषेकं शंभोः कृत्वा विभवविस्तरम्
महानैवेद्यमपि च कृत्वा श्रद्धासमन्वितम् ९
द्वादश प्रतिमं दद्यात् दशनिष्कविनिर्मिताम्
महादेवाद्यर्पितास्तास्ताः तन्नामा सुपूजिताः १०
ब्राह्मणेभ्यो वेदविद्भ्यो दद्याद्दक्षिणया युताः
इत्थं यः कुरुते भक्त्या वेत्रास्वीकारमङ्गलम् ११
शंभोरनुग्रहमथ हेमवेत्रपरिग्रहात्
नराधिपोऽसौ देवस्य प्रसादात्सुखमाप्नुयात् १२
अखण्डं लभते राज्यं दीर्घायुष्यमरोगताम्
पुत्रपौत्राभिवृद्धिञ्च महदैश्वर्यमेव च १३
++ शाति वोऽस्य रणे भग्नाः पलायन्ते दिशो दश
गृहभूतपिशाचाद्याः महारोगादयस्तथा १४
यत्र तन्त्राभिचारादि सर्वोपद्रववर्जितः
अरोगदृढगात्रश्च शतं जीवेत्सुलक्षणः १५
महाराजो महेन्द्रेण तुल्यैश्वर्यसमन्वितः १६
इत्यंशुमान् तन्त्रे वेत्रस्वीकारविधिः पटलः

## महाभिषेचनविधि

शस्त्रपातेन विप्राणां रक्तस्त्रावश्शिवालये

त्रिधा भवति तद्द्राष्ट्रं दुर्भिक्षं भयपीडितम् १
नित्योत्सवविहीने च मारोत्सवविहीनके
नित्यपूजाविलोपे च मासपूजाविलोपके २
भूगाङ्गपूजाविलोपे च नैवेद्यस्य विहीनके
नित्यनैमित्तिके वाऽपि लुप्ते स्नपनकर्मणि ३
भेरीताडनहीने च पुष्पमालाविहीनके
वाद्यादीनां विलोपे तु उपचारविहीनके ४
सायरक्षाविहीने च राज्ञो मृत्युभयं ध्रुवम्
कलहस्सर्वतो राज्ञां क्षामपीडा प्रजाक्षयः ५
सेनापतेर्मान्तीणोर्वा जायते सुमहद्भयम्
अतस्तद्दोषनाशार्थं संप्रोक्षणपुरस्सरम् ६
महाभिषेचनं शंभोः कुर्यान्मासत्रयं नृपः
कुंभाभिषेचनात्पूर्वं पयोमधुघृतादिभिः ७
नालिकेरजलैर्वापि इक्षुकाण्डरसैस्तथा
गन्धोदकैश्च कर्पूरकुङ्कुमादिसमन्वितैः ८
अभिषिच्य महादेवं कुंभात्कुंभाभिषेचनम्
कर्पूरकुङ्कुमयुतैः दिव्यगन्धैस्सपीठकम् ९
पुष्कलं गन्धमापाद्य लेपयेल्लिङ्गमादरात्
महानिवेदनं कुर्यात् श्रद्धाभक्तिसमन्वितः १०
भोजयेदयुतं विप्रान् षड्रसैर्देवपारगान्
पञ्चाक्षरजपं कुर्यात् अयुतं सावधानतः ११
वेदादीन् शतरुद्रीयं त्र्यंबकमहामनुम्
रुद्रसूक्तमुमासूक्तं भूतसूक्तं तथैव च १२
पञ्चशान्तिं भजेत्पश्चात् शिवसङ्कल्पमेव च
एवं प्रतिदिनं कुर्यात् अभिषेकसमाहितः १३
प्रत्यहञ्च जपं कार्यं शान्तिहोमसमन्वितम्

आचार्यं पूजयेद्राज्ञः वस्त्रचन्दनभूषणैः  १४
ऋत्विग्भ्यो दक्षिणां दद्यात् दश दानानि कारयेत्
एवमारभ्य विधिना पुनरुत्सवमाचरेत्  १५
उक्तेन विधिना कुर्यात् अभिषेकं नराधिपः
लोभेन विधिना हीनः कुर्वन्नेवाप्नुयात्फलम्  १६
तस्माच्छास्त्रोक्तमार्गेण प्रायश्चित्तं समाचरेत्
मासादूर्ध्वं विहीने च जलसंप्रोक्षणं नयेत्  १७
एवं कृते सुखी राजा सर्वदोषविवर्णितः
अममृत्युमतिक्रम्य शतञ्जीवेन्न संशयः  १८
अष्टबन्धे तु विश्लिष्टे राज्य शैथिल्यमादिशेत्
अ++ बन्धं त्रिबन्धं वा कृत्वान्ते स्नपनं नयेत्  १९
महाभिषेचनं शंभोः कुर्यादामण्डलं नृपः
प्रत्यहञ्च जपं कार्यं शान्तिहोमसमन्वितम्  २०
वैकले मण्डले जाते राजराष्ट्रस्य दोषकृत्
तत्प्रमाणेन तद्रूपं कारयित्वा विशेषतः  २१
महाभिषेकं कुर्वीत सावधानेन भूमिपः
एवं कृते सुराणाञ्च सर्वदोषविवर्जितः  २२
सर्वरोगविनिर्मुक्तो दीर्घमायुरवाप्नुयात्
इति प्रायश्चित्तविधिः पटलः

## कोटिबिल्वार्चनम्

आचार्यं शृणुयात्तत्र वेदवेदान्तपारगम्
उमामहेशप्रतिमां त्रिंशन्निष्कविनिर्मिताम्
तदर्थेनाथवा कुर्यात् वित्तशाठ्यविवर्जितः  १
स्थण्डिलं नागवल्याद्यैरलङ्कृत्य समाहितः
द्रोणद्वयं तदुपरि निक्षिपेच्छालिधान्यकम्  २

तदर्धं तण्डुलांस्तत्र तदर्धांश्च तिलानपि
कुंभं तदुपरि स्थाप्य वस्त्रगन्धाद्यलङ्कृतम् ३
उमामहेशप्रतिमां कुंभोपरि निधाय च
स्वात्मानं शिवरूपेण ध्यात्वाचार्यसमाहितः ४
प्रसादेनैव मन्त्रेण शिवशूक्तेन मन्त्रवित्
आवाहयेदुमाकान्तं प्रतिमायां सहोमया ५
षोडशैरुपवासैश्च पूजयित्वा जगत्पतिम्
जपेत्सहस्रं प्रासादमाचार्यो ध्यानतत्परः ६
हुतौ च ऋत्त्विजौ कुर्युः ब्राह्मणा वेदपारगाः
वेदादीन् शतरुद्रीयं त्र्यंबकमहामनुः ७
रुद्रसूक्तं विष्णुसूक्तं ब्रह्मसूक्तञ्च वारुणम्
जपेयुः पौरुषं सूक्ष्मं घृतसूक्तं तथैव च ८
मुञ्चामित्त्वेति सूक्तञ्च शिवसूक्तं तथैव च
पञ्चशान्तिजपं पश्चात् नमो ब्रह्मेत्यृचं जपेत् ९
पुनः पूजां ततः कुर्यादुद्यापनमथाचरेत्
कुंभाभिषेकं कुर्वीत ऋत्त्विग्भिः सहितस्तदा १०
कुंभाभिषेचनात्पूर्वं पयोमधुघृतादिभिः
अभिषिच्य महादेवं पश्चात्कुंभाभिषेचनम् ११
दिव्यगन्धैरलङ्कृत्य लिङ्गं कर्पूरसंयुतैः
बिल्वैरभ्यर्चयेत् कोटिसंख्याभिपूर्तये १२
कुर्याद्विशिष्य नैवेद्यं पायसापूपसंयुतम्
मनोरथं पूरयित्वा आचार्यं पूजयेत्ततः १३
वस्त्रैराभरणैः पुष्पैः गन्धैराचार्यमर्चयेत्
प्रतिमां दक्षिणायुक्तामाचार्याय प्रदापयेत् १४
ऋत्त्विग्भ्यो दक्षिणां दद्यात् ब्राह्मणान् भोजयेच्छतम्
प्रदक्षिणनमस्कारैः अपचारं क्षमाप्य च १५

कृताशीर्वचनैर्विप्रैः पश्चाद्भोजनमाचरेत्
एवं यः कुरुते भक्त्या जन्ममध्ये शिवार्चनम् १६
कोटिबिल्वैस्तस्य जन्म सफलं नात्र संशयः
व्याधयस्तस्य नश्यन्ति विप्रारोग्यञ्च जायते १७
ऐश्वर्यं पुत्रलाभञ्च आरोग्यञ्च जायते
उक्तेन विधिना कार्यं कोटिबिल्वार्चनं द्विजैः १८
विधिहीनं निष्फलं स्यादपचारश्च जायते
तस्माच्छास्त्रोक्तमार्गेण कोटिबिल्वार्चनं चरेत् १९
इह लोके शतञ्जीवे आधिव्याधिविवर्जितः
देहान्ते शिवसायुज्यमाप्नुयान्नात्र संशयः २०
इत्यंशुमत्तंत्रे कोटिबिल्वार्चनं पटलः

## गौर्युत्सवविधि

गौर्युत्सवविधिं वक्ष्ये श्रूयतां रविसत्तमः
प्रपञ्चरक्षणार्थाय तद्राष्टविजयार्थकम् १
सर्वकामार्थसिध्यर्थं भोगमोक्षफलप्रदम्
योगं भोगञ्च वीरञ्च शक्तित्रयमिहोच्यते २
योगं पीठसमायुक्तं भोगं ++ मे समन्वितम्
वीरस्वतन्त्रमित्युक्तं शक्तिरेवं निधा भवेत् ३
वीरं द्विविधमित्युक्तं स्वप्रधानञ्च केवलम्
एवं क्रमेण शिववत्केवलं द्विविधं भवेत् ४
मण्डपस्योत्तरे देशे स्थापनञ्च विशेषतः
शिवस्याराधनञ्चैव तत्तत्कर्मावसानके ५
सज्ञनादिक्रमञ्चैव सहमेवं समाचरेत्
नित्योत्सवविहीने च भोगाङ्गञ्च विहीनके ६
एवं क्रमेण विधिवत् तद्देव्याञ्च विशेषतः

आलयाश्रितपार्श्वे च तच्छक्तिं स्थापयेत्ततः ७
गौर्यार्चनाक्रमञ्चैव नित्योत्सवं समाचरेत्
भोगाङ्गाराधनञ्चैव तद्रक्षयजनन्ततः ८
शिवोत्सवादितन्त्रञ्च तद्देव्याश्च समाचरेत्
तदुत्सवस्य तत्काले निल्पिषेधामाचरेत् ९
स्वकरगठोत्सवहीने च केवलन्त्वसु नोच्यते
स्वप्रधानञ्च शक्तीनां द्विविधञ्चैवमेव च १०
पञ्चप्रकारबाह्ये वा अन्तर्वस्थानमेव च
स्वतन्त्रालयमेवं स्यात् स्थापनं शास्त्रवद्बुधः ११
शिवसामाङ्गदेवी च षट्समायादिरावृतम्
परिवारसमायुक्तं द्वात्रिंशद्धर्मसंयुतम् १२
तद्देव्यार्चनमेवञ्च नित्योत्सवमहोत्सवम्
भोगाङ्गायतनञ्चैव देवाङ्गयजनादिकम् १३
महोत्सवविधानञ्च सन्ताख्यं तदुत्सवम्
दमनो रोहणञ्चैव पवित्रारोहणं तथा १४
मासपूजाविधानञ्च कृत्तिकादीपमेव च
आर्द्राव्रतविधानञ्च नव नैवेद्यकर्म च १५
गौरीव्रतविधानञ्च तत्तद्द्रक्ष्यविधानकम्
एवं क्रमेण विधिवत् उत्सवस्य विधिं शृणु १६
साकल्यं पावनं शान्तं मङ्गल्यं देविकं तथा
साकल्यञ्चैकमेव स्यात् पावनं त्रिदिनं भवेत् १७
पञ्चाहं शान्तिकञ्चैव मङ्गल्यं दिनसप्तकम्
नवाहं दैविकं प्रोक्तमुत्सवं पञ्चधा विदुः १८
पूर्वफाल्गुनिनक्षत्रे तीर्थान्तं वासमाचरेत्
तद्रक्षस्यावसानञ्च नृप ऋक्षावसानकम् १९
ध्वजारोहणपूर्वञ्च भेरीताडनपूर्वकम्

अङ्कुरार्पणपूर्वञ्च उत्सवं त्रिविधं भवेत्  २०
पुष्कलं विजयं सौख्यं बलिस+++ क्रमेण तु
तत्त्वन्तु कौशिकञ्चैव धर्मञ्च भुवनं तथा  २१
स्मृतिसंख्याबलिञ्चैव पुष्कलञ्च विधीयते
चन्द्रकोलकनागाश्च चतुष्षोडश संख्यया  २२
विजयस्य क्रमञ्चैव बलिसंख्या प्रकीर्तिताः
वेदनागश्च सूर्यश्च विकारञ्चैव विंशतिः  २३
सौख्यस्य ++ म बलिसंख्याक्रमेण तु
ध्वजारोहादितीर्थान्तं शिवोत्सवक्रमेण तु  २४
किञ्चिद्भेदं विशेषेण देव्युत्सवक्रमं ततः
सिंह+वृषभं वाऽपि पटे चैव समालिखेत्  २५
चक्रं वा शूलमेवं वा वज्रं वा अस्त्रमेव वा
उत्सवप्रतिमा देव्याः पूर्वलक्षणमाचरेत्  २६
चतुर्भुजां त्रिणेत्राञ्च करण्डमकुटान्विताम्
वरदाभयसंयुक्तां पाशाङ्कुशकरान्विताम्  २७
शुक्रोत्पलकरां वापि शूलपालकरान्विताम्
पत्रोत्पलधरां देवीं वरदाभयपाणिनीम्  २८
शङ्खचक्रधराञ्चैव वरदाभयमेव च
द्विभुजाञ्चोत्पलकरां वामहस्तप्रसारिताम्  २९
मूलबेरस्य यद्रूपं तद्रूपं यानमाचरेत्
एवं क्रमेण विधिवत् शक्तीनाञ्च विशेषतः  ३०
तच्छक्तिं चैव कर्तव्यं शिवोत्सयानमाचरेत्
देव्युत्सवस्य देवानां यानमेवन्न कारयेत्  ३१
तच्छक्तिवास्तुविन्यासं तद्देवबलिमाचरेत्
तत्रैव यानमेवं स्यात् सर्वालङ्कारसंयुतम्  ३२
स्थानसङ्कटसंयुक्तं शिवयानञ्च वास्तुके

कृतकौतुकदेव्यास्तु तद्ग्रामाग्निचमो न हि ३३
प्रथमादीनि वाहान्तं शक्तीनां यानमाचरेत्
एवं क्रमेण विधिवत् यानकर्ममिहोच्यते ३४
पञ्चास्यं प्रथमञ्चैव द्वितीयं महिषं तथा
प्रेतारूढं तृतीयन्तु चतुर्थञ्चोऽक्षमेव च ३५
पञ्चमं पुष्पधामञ्च धाममोरणसंयुतम्
मद्वास्याढोलनञ्चैव गौरीलीलां समाचरेत् ३६
षट् दिने हंसमेवञ्च प्लवङ्गं सप्तमं तथा
कृष्णमृगाष्टमञ्चैव तद्दिनेयं त्रयध्वरम् ३७
नानाश्चर्यसमायुक्तं दारुणं यन्त्रमेव च
नवकन्तु रथारोहं दशमे तीर्थकर्मणि ३८
एवं क्रमेण विधिवत् उत्सवारंभमेव च
आरंभं त्रिविधं तेषां ध्वजभेर्यङ्कुरादिकम् ३९
केत्वङ्कुरन्तु प्रथमं द्वितीयं वृषयागकम्
प्रदक्षिणं तृतीयं स्याच्चतुर्थं दण्डशुद्धिकम् ४०
पञ्चमं केतुकं कर्म कलशस्नानषष्ठकम्
सप्तमं चण्डपूजाञ्च अष्टमञ्चास्त्रपूजनम् ४१
नवमं भेरियागाञ्च दशमं देवता बुधः
एकादशं बलं दद्यात् द्वादशं +++ वा कुशम् ४२
रक्षाबन्धं ततः प्रोक्तं षट् दशं यागकर्मणि
सप्तादशं हुतं विद्धि बलि कर्ममतः परम् ४३
पर +++ कं दशन्तु यानस्यादास्थानमण्टपं ततः
निराजनञ्च विंशञ्च सन्ध्याशेषमतः परम् ४४
तीर्थाङ्कुरं ततः पश्चात् तीर्थकौतुकमेव च
तीर्थाधिवासनञ्चैव पूर्णक्रममतः परम् ४५
अभृथञ्च पञ्चविंशत् पूर्णाहुतिमथाचरेत्

एतं द्वात्रिंशदेशेन प्रोत्सवन्तु प्रकीर्तितः ४६
अङ्कुरं वृषयागादि पूर्वोक्तविधिमाचरेत्
उत्सवस्य विधिं प्रोक्तं गौरीव्रतविधिं शृणु ४७
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इत्यंशुमान् तन्त्रे गौर्युत्सवविधिः पटलः

## पार्थिवलिङ्गपूजाविधि

करकृतमपराधं क्षन्तुमर्हन्ति सन्तः
सांबशिवाय नमः । विनायकाय नमः १
अथातः संप्रवक्ष्यामि शिवपूजाविधेः फलम्
शिवलिङ्गे पूजनन्तु शिवप्रीतिकरं सदा २
तत्रापि पार्थिवे लिङ्गे पूजा सर्वेषु सिद्धिदाः ३
सर्वरोगा विनश्यन्ति पार्थिवे शिवपूजनात्
शतसाहस्रलिङ्गानां पार्थिवानां प्रपूजया ४
क्षयरोगाद्विमुच्येत किंपुनस्यान्यरोगतः
षष्टिसाहस्रलिङ्गानां पूजाऽपस्मारनाशिनी ५
अपस्मारप्रतिकृतिं दद्यात्तद्रोगशान्तये
चत्वारिंशत् सहस्राणां पार्थिवानाञ्च पूजया ६
ज्वररोगाद्विमुच्येत ज्वरमन्त्रायुतं जपेत्
ज्वरप्रतिकृतिं दद्यात् ब्राह्मणाय सदक्षिणम् ७
त्रिंशत्सहस्रलिङ्गानां पार्थिवानां सुपूजनम्
बाधिर्यरोगशान्त्यर्थं अश्विभ्यान्तु पुरं कृतम् ८
अश्विनोरष्टवाक्यञ्च जपेत्त्रिंशत्सहस्रकम्
अश्विनोः प्रतिमां दद्यात् ब्राह्मणाय स दक्षिणाम् ९
अक्षि +++ पनमथाचरेत्
रोगार्तं स्नपयेत्तत्र प्रोक्षणं वा समाचरेत् १०

कुंभस्य पश्चिमे भागे होमकर्म समाचरेत्
शिखान्ते समिधन्नाज्यैः अष्टोत्तरसहस्रकैः ११
पञ्चाक्षरेण मन्त्रेण हुत्वा होमं समर्पयेत्
शिवाग्नावेव कर्तव्यं अन्यथा विफलं भवेत् १२
होमान्ते यजमानन्तु सङ्कल्प्यं ज्वरमोचनम्
आरोग्यं दीर्घमायुष्यं प्रतिमादानमाचरेत् १३
आचार्यं दिव्यवस्त्रेण अङ्गुलीकण्ठभूषणैः
गन्धपुष्पैश्च संपूज्य प्रतिमां वस्त्रसंयुताम् १४
समन्वितां दक्षिणया +++ निष्कप्रमाणतः
दद्यान्मन्त्रेण चानेन श्रद्धाभक्तिसमन्वितः १५
सदाशिवदयासिन्धोः ज्वराद्यामयनाशनम्
दानेनानेन मे सद्यः ज्वरपीडां विनाशय १६
देहि मे दिव्यमायुश्च अरोगदृढगात्रताम्
लिङ्गपूजां ततः कुर्याद्वस्त्रभूषाद्यलङ्कृतैः १७
प्रतिमाञ्च ततो दद्यात् दक्षिणाभिस्समन्विताः
महाभिषेकं कुर्वीत शंभोर्न्नैवेद्यसंयुतः १८
शिवभक्तास्समाहूय वेदशास्त्रार्थपारगान्
तेभ्यो दिव्यानि वस्त्राणि दद्यादायुष्यवृद्धये १९
मृत्युञ्जयमहामन्त्रं भक्त्या जपेत्क्षणात्
ब्राह्मणान् भोजयेत्पश्चात् दिव्यान्नैश्च पायसैः २०
कुतार्थी च मनो विप्रै स्वयं भोजनमाचरेत्
एवं पञ्चाक्षरजपाद्यथोक्तविधिना कृतात् २१
रोगी ज्वरादिभिस्सर्वैः रोगैस्सद्यो विमुच्यते
दीर्घमायुश्च लभते पुत्रपौत्रधनादिकम् २२
सर्वाभीष्टसमायुक्तं शतञ्जीवेन्न संशयः
सर्वरोगप्रशान्त्यर्थं कुर्यात्पूजां समाहितः २३

विंशच्छाहस्रलिङ्गानां पार्थिवानां यथाविधि
सौरमष्टाकरं नित्यं जपेत्पञ्च सहस्रकम्  २४
दद्याच्च प्रतिमां भक्त्या भास्करस्य स दक्षिणाम्
अतीसारमचलनां शान्तिकामस्समाहितः  २५
दश साहस्रलिङ्गानि पार्थिवानि प्रपूजयेत्
वात आवातु मन्त्रञ्च जपेद्दश सहस्रकम्  २६
दद्याच्च वायुप्रतिमां सत्त्रितान्नरः
ब्राह्मणान् दश साहस्रं भोजयेन्द्याधिशान्तये  २७
एवं पार्थिवलिङ्गानां पूजया रोगनाशनम्
जायते सर्वमर्त्यानामिष्टसिद्धिश्च सर्वदा  २८
तत्तद्रोगप्रतिकृतिं प्रतिमां लोहवर्जितः
शतनिष्कं प्रकुर्वीत तदर्धेनाथवा पुनः  २९
स्थण्डिलं कल्पयित्वा तु व्रीहितण्डुलसंयुतम्
तत्र कुंभं प्रतिष्ठाप्य प्रतिमां तस्य चोपरि  ३०
संजाप्य तत्वमन्त्रेण षोडशैरुपचारकैः
पूरयित्वा ततो दद्यात् आचार्यायाथ दक्षिणम्  ३१
प्रतिमां भक्तिसंयुक्तः तत्तद्रोगनिवृत्तये
दश दानं ततः कुर्यात् आज्यावेक्षिणदानकम्  ३२
फलतांबूलदानञ्च कुर्याच्छतसमन्वितः
ब्राह्मणान् भोजयेत्पश्चात् आशीर्वादञ्च कारयेत्  ३३
बन्धुभिः सहितः पश्चात् स्वयं भुञ्जीत मानवः
एवं कृते पार्थिवानां लिङ्गानां पूजने शुभे  ३४
तत्तद्रोगनिवृत्तिः स्यात् आयुर्वृद्धिश्च जायते
महदैश्वर्यमाप्नोति सन्ततिश्चाभिवर्धते  ३५
शत्रवो नाशमायान्ति मनस्तुष्टिश्च जायते
अपस ++ न्तितं दृष्ट्या गृहभूतादिजन्तवः  ३६

इह लोके महाभोगान् भुङ्क्ते जीवेच्छतं समाः
इति पार्थिवलिङ्गपूजाविधिः पटलः

## सोमवारव्रत

सामवायव्रतं वक्ष्ये श्रूयतां रविसत्तमः १
श्रीकरं विजयं पुरयं ग्रायुरारोग्यवर्धनम्
सर्वरोगविनाशार्थं सर्वैश्वर्यप्रदायकम् २
यजनं त्रिविधं प्रोक्तं श्रेष्ठं मध्यमकं न्यसेत्
पुष्यमासादिरारभ्य धनुष्यन्तं व्रतञ्चरेत् ३
मासं प्रति विशेषेण चन्द्रवारं प्रति प्रति
तद्दिने चोपवासी च शिवमानाययेद्बुधः ४
दन्तसंशोधनं कृत्वा प्रभाते स्नानमाचरेत्
पूर्वाह्ने तर्पणं कुर्यात् मध्याह्ने तु प्रदक्षिणम् ५
सायाह्ने च जपं कुर्यात् रात्रौ पूजां समारभेत्
गृहे शिवालये वाऽपि इष्टदेशे मनोरमे ६
मराटपं पूजयेद्विद्वान् पूर्वयामे विशेषतः
ग्रात्मार्थं पूजयेद्धीमान् पूर्वोक्तविधिना सह ७
पञ्चगव्यामृतै स्नाप्य तैलपिष्टामलादिना
क्षीरं दधिघृतञ्चैव क्षौद्रञ्च कदलीफलम् ८
शर्करानालिकेरञ्च इक्षुक्षीरं तथैव च
ब्रह्माङ्गैनैव मन्त्रेण स्नापयेत्तु विशेषतः ९
तत्तद्द्रव्यान्तके धीमान् शुद्धतोयाभिषेचयेत्
गन्धोदकेन संस्नाप्य शिवगायत्र्य वै बुधः १०
मूल ++++++++++++++ पयेत्
पद्मासने समभ्यर्च्य गन्धपुष्पसृगादिभिः ११
श्वेतार्करक्तपद्मञ्च नन्द्यावर्तञ्च पाटली

धुर्धूरं करवीरञ्च तुलसीबिल्वपत्रकम् १२
जातीनीलोत्पलञ्चैव द्रोणपुष्पाक्षत ++
+++++++++++मूलेनैव समर्चयेत् १३
अथ द्वादशभिर्दूर्वा बिल्वपत्रैस्समर्चयेत्
अपूपं इक्षुखण्डञ्च पायसान्नं निवेदयेत् १४
सर्वोपचारैस्सन्तोष्य प्रणिपत्य क्षमा ++
+++++++++++ शायेनाति विवर्जितः १५
एवं व्रतं समापाद्य धनुष्यन्ते विशेषतः
सोमवारे तु तद्द्रात्रिं भूतसंख्या विभाजिते १६
स्नानद्रव्यञ्च पुष्पञ्च सन्ध्यां प्रति समाचरेत्
पायसं कू ++++++++++++ १७
++ र्म प्रति विशेषेण नैवेद्यं दापयेद्गृता
धूपदीपादिकं दत्वा तांबूलञ्च निवेदयेत् १८
सर्वोपचारैस्सन्तोष्य तस्यैव ++++
तस्यैव चोत्तरे भागे स्थण्डिलं शालिना कुरु १९
तन्मध्ये विन्यसेत्कुंभं शिवमावाहयेत्ततः
तदग्रे स्थण्डिलं कृत्वा पद्मं वा स्वस्तिकन्तु वा २०
तस्योर्ध्वे शिवमावाह्य धूपदीपादिकं ददेत्
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत् २१
भूतशुद्धिं ततः कृत्वा पर्यूषितं विसर्जयेत्
पश्चात्कुंभं समादाय स्नापयेद्वृषभेश्वरम् २२
दूर्वाक्षतैश्च बिल्वैश्च शृङ्गमध्ये समर्चयेत्
इत्यंशुमत्तंत्रे सोमवारव्रतः पटलः

## मधुस्नानविधि

++ततस्संप्रवक्ष्यामि मधुस्नानविधिक्रमम्

कासश्वासक्षयाद्यैस्तु महारोगैर्निपीडितः १
संस्थाप्य मधुना शंभुं सद्यो रोगैर्विमुच्यते
कीर्तिदं विजयं पुरायमायुरारोग्यदं सदा २
सर्वदानफलञ्चैव सर्वयज्ञफलप्रदम्
आलयस्योत्तरे भागे दक्षिणामूर्तिसन्निधौ ३
मराटपं वा प्रपां वापि निच्छिद्रां कारयेद्बुधः
वितानाद्यैरलङ्कृत्य स्थरिडलं तत्र कारयेत् ४
गोमयेन समालिप्ते रङ्गवल्याद्यलङ्कृते
चतुर्द्रोणप्रमाणेन धान्यराशिभिरावृते ५
तन्तुना वेष्टितं कुंभं स्थापयित्वा सुधूपितः
तन्तुसंवेष्टितानष्ट कलशांश्च सुधूपितान् ६
प्रधानकुंभमधुना वस्त्रपूतेन पूरयेत्
गन्धकुङ्कुमकस्तूर नारिकेलजलैस्तथा ७
क्षीराज्यदधितोयैश्च पूरयेत्कलशाष्टकम्
वस्त्रादिभिरलङ्कृत्य + दै ++++ ८
+++++ हेम शतनिष्कविनिर्मितम्
प्रधानकुंभे संस्थाप्य ++++++++ ९
++++++++++++++++++++
+++++++++++ राजाभिषेचयेत् १०
आचार्यं वृणुयात्तत्र सर्वं तेनैव कारयेत्
ब्राह्मणान्वृणुयादष्ट ऋत्त्विजो वेदपारगान् ११
देशिकः स्तोत्रं कुर्वीत पूजां ऋत्त्विक् समन्वितः
षोडशैरुपचारैश्च पूजयेदघोरमन्त्रतः १२
अष्टोत्तरसहस्रन्तु जपेत्प्रासादमन्त्रकम्
वेदादीन् शतरुद्रीयं त्रयंबकमहामनुम् १३
शिवसूक्तं रुद्रसूक्तं शिवसङ्कल्पमेव च

मुञ्चामित्वेति सूक्तञ्च जपेत्पाशुपतास्त्रकम् १४
एकादश मनुञ्चैव घृतसूक्तं तथैव च
जपं समाप्य तु ततो होमं कुर्यात्समाहितः १५
शिवाग्निं जनयित्वा तु तत्रावाह्य महेश्वरम्
शक्त्यादिशक्तिपर्यन्तं समभ्यर्च्य विधानतः १६
प्रासादेनैव मन्त्रेण पलाशसमिधा हुनेत्
चर्वाज्यमधुलाजैश्च शर्कराभिस्तिलैस्तथा १७
अष्टोत्तरसहस्रन्तु प्रत्येकं होममाचरेत्
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् १८
पूर्णाहुतिं ततो हुत्वा ब्राह्मणञ्च समर्चयेत् १९
इत्यंशुमत्तंत्रे मधुस्नानविधिः पटलः

पञ्चाषरजपः

अथातः संप्रवक्ष्यामि पञ्चाक्षरजपः फलम्
पञ्चाक्षरजपेनैव पञ्च पापैः प्रमुच्यते १
नित्यमष्टोत्तरशतं कुर्याद्वासरं जप्यमर्चयेत्
अष्टोत्तरसहस्रन्तु साष्टिमुक्तिप्रदं वि++ २
नित्यं द्वादश साहस्रं जप्त्वा सायुज्यमाप्नुयात्
स्वयं जप्तुमशक्तस्तु शिवभक्तेन पूरयेत् ३
पञ्चाक्षरजपाद्रोगी यथोक्तविधिना कृतात्
सद्यो रोगाद्विमुच्ये+ श्रद्धायुक्तो न संशयः ४
ज्वरपीडासमायुक्तः दीर्घरोगसमन्वितः
दशलक्षजपात्सद्यो यथोक्तविधिना कृतात् ५
ज्वरपीडाविनिर्मुक्तो दीर्घमायुरवाप्नुयात्
शिवभक्तियुतान् शुद्धान् भूतिरुद्राक्षधारिणः ६
++ माहूय द्विजानष्ट षट् द्विजानथ पञ्च वा

तान् प्रार्थयित्वा संपूज्य स्राचार्यस्सुसमाहितः ७
स्राचार्यमुखतो +++ योगपूर्वकम्
स्राचार्यो यजमानस्य सङ्कल्प्य ज्वरमोचनम् ८
ऋत्विग्भिः सहितः कुर्यात् दश +++ शुचिः
स्रयुतं तर्पणं कुर्यात् सहस्रं होमकर्मणि ९
जपान्ते स्थण्डिले शुद्धे कुंभं स्थाप्य स्वलङ्कृतम्
स्रष्टदिक्ष्वष्टकलशान् स्थापयित्वा स्वलङ्कृतात् १०
त्रिंशन्निष्कप्रमाणेन सुवर्णेन विनिर्मिताम्
सदाशिवस्य प्रतिमां प्रधानकलशेऽर्चयेत् ११
प्रतिमांश्चोक्तमूर्ति निष्कैकैकविनिर्मिताम्
स्थापयित्वाऽष्टकलशेष्वष्टमूर्तीस्समर्चयेत् १२
पञ्चाक्षरेण मन्त्रेण षोडशैरुपचारकैः
पूजयित्वा जपं कुर्यात् पञ्चाक्षरसहस्रकम् १३
वेदादींश्छतद्रुद्रीयं पौरुषं सूक्तमेव च
रुद्रसूक्तं विष्णुसूक्तं ब्रह्मसूक्तं जपं तथा १४
कृत्वा पश्चात्पुनः पूजां +++++++++++
इत्यंशुमत्तंत्रे पञ्चाषरजपः पटलः

मध्वभिषेचनम्

वह्निं विसृज्य देवेशं कुंभमध्ये नियोजयेत् १९
नैवेद्यं दापयेत्पश्चात् पत्रैः पुष्पैस्समर्चयेत्
धूपदीपादिकं दत्वा तांबूलञ्च निवेदयेत् २०
परिचारकमाहूय सोष्णीषं सोत्तरीयकम्
शिवकुंभं समुद्धृत्य उपकुंभान् समुद्धरेत् २१
हर्म्यं प्रदक्षिणीकृत्य शिवलिङ्गान्तिकं व्रजेत्
महाभिषेकं प्रथमं कृत्वा पश्चात्तु देशिकः २२

कुंभाभिषेचनं कुर्यात् कलशैश्चाभिषेचयेत्
अलङ्कृत्य महादेवं दिव्यांबरविभूषणैः २३
कर्पूरकुङ्कुमयुतं गन्धमापाद्य यत्नतः
तेन लिङ्गं समालिप्य पङ्कजाभिरर्चयेत् २४
महानिवेदनं कुर्यात् धूपदीपादिकं ददेत्
रोगशान्तिं प्रार्थयित्वा नमः कृत्वा महेश्वरम् २५
प्रतिमां वस्त्रसंयुक्तां दक्षिणासहितां ततः
अलङ्कृताय विप्राय दद्यान्मन्त्रपुरस्कृतम् २६
अर्धनारीशभगवन् मम देहे व्यवस्थितान्
क्षयकाशश्वासरोगान् स ++++++ २७
++++++++मायुष्यवृद्धये
ब्राह्मणान् भोजयेत्पश्चात् पायसापूपलड्डुकैः २८
कृताशीर्वचनो विप्रैः वाद्यघोषसमन्वितः
स्वगृहं प्राप्य आदितो भुञ्जीत सह ++ भिः २९
दीनान्धकुपणञ्चैव भक्तांश्च परिचारकान्
भोजयेद्दक्षिणां तेभ्यो दद्याद्वित्तानुसारतः ३०
एवं यः कुरुते भक्तः शंभोर्मध्वभिषेचनम्
कासश्वासक्षयादिभ्यो रोगेभ्यो हि निवर्त्य च ३१
मुच्यते पातकैस्सर्वैः दीर्घमायुरवाप्नुयात्
महाभिषेचनं शंभोः तथा मध्वभिषेचनम् ३२
सर्वैश्वर्यप्रदं पुंसां आयुरारोग्यदं सदा
सर्वाभीष्टप्रदं चैव राज्ञां शतृनिबर्हणम् ३३
पुत्रपौत्रप्रदञ्चैव सर्वोपद्रवनाशनम्
इत्थं देवस्य कुर्वाणः शंभोर्भक्त्या जपार्चनम् ३४
आयुरारोग्यसौभाग्यमिष्टान् कामानवाप्नुयात् ३५
इत्यंशुमान् तन्त्रे मधुस्नानविधिः पटलः

## क्षीरस्नानविधि

अथातस्संप्रवक्ष्यामि क्षीरस्नानविधिक्रमम्
क्षीराभिषेकं देवस्य यः करोति सकृन्नरः १
तस्याभिपारदोषस्तु सहसैव विनश्यति
कासस्श्वासक्षयाद्यैस्तु महारोगैर्निपीडितः २
संस्नाप्य पयसा शंभुं सर्वरोगैर्विमुच्यते
कीर्तिदं विजयं पुण्यमायुरारोग्यदं सदा ३
सर्वदानफलञ्चैव सर्वयज्ञफलप्रदम्
उत्तमं कपिलाक्षीरं कृष्ण +++++ ४
अलाभे सर्ववर्णानां गवां क्षीरं प्रशस्यते
प्रस्थमानं समारभ्य पापद्रोणावधिक्रमात् ५
नित्यमानमिति ज्ञेयमाप्यायस्वेति मन्त्रतः
अष्टोत्तरसहस्रैस्तु प्रस्थक्षीराभिषेचनात् ६
सर्वरोगविनिर्मुक्तः सर्वान् कामानवाप्नुयात्
प्रस्थं प्रस्थार्धकञ्चैव सर्वरोगविनाशनम् ७
प्रस्थरादिपयस्नानमायुरारोग्यवर्धनम्
चतुः प्रस्थपयस्नानं सर्वैश्वर्यप्रदायकम् ८
अष्टप्रस्थपयस्नानं ++ दानफलप्रदम्
द्वादशप्रस्थसंख्यातं सर्वयज्ञफलप्रदम् ९
षोडशप्रस्थसंख्या च इष्टकामार्थसिद्धिदः
एकविंशत्पयश्चैव भोगमोक्षफलप्रदम् १०
पञ्चविंशत्पयश्चैव पुत्रपौत्रविवर्धनम्
पञ्चाशत्संख्यया चैव सारूप्यञ्च तथा भवेत् ११
अष्टोत्तरशतञ्चैव रुद्रलोके महीयते
द्विशतं प्रस्थपयसा शिवसामीप्यमाप्नुयात् १२
पयः पञ्चशतं स्नाप्य शिवसायुज्यमाप्नुयात्

सहस्रप्रस्थपयसा योऽभिषिञ्चेच्छदाशिवम् १३
स सर्वदोषविनिर्मुक्तः सर्वान् कामानवाप्नुयात्
स सर्वसंपदाधारः सर्वैश्वर्यसमृद्धिमान् १४
सर्वरोगविनिर्मुक्तः सर्वलोकनमस्कृतः
मृत्युञ्जयप्रसादेन कालमृत्युञ्जयत्यसौ १५
किमत्र बहुनोक्तेन भक्त्या वित्तानुसारतः
क्षीराभिषेचनं कुर्वन् मर्त्यो मर्त्यो भवेद्ध्रुवम् १६
आलस्योत्तरे भागे दक्षिणामूर्तिसन्निधौ
मण्टपं वा प्रपां वापि निच्छिद्रां कारयेद्बुधः १७
वितानाद्यैरलङ्कृत्य स्थण्डिलं तत्र कारयेत्
गोमयेन समालिप्ते रङ्गवल्याद्यलङ्कृते १८
चतुर्द्रोणप्रमाणेन धान्यराशिभिरावृते
तन्तुना वेष्टितं कुंभं स्थापयित्वा सुधूपितम् १९
तन्तुसंवेष्टितानष्ठ कलांश्चापि सुधूपितान्
प्रधानकुंभं पयसा वस्त्रपूतेन पूरयेत् २०
गन्धकुङ्कुमकर्पूरनारिकेलजलैस्तथा
मध्वाज्यदधितोयैश्च पूरयेत्कलशाष्टकम् २१
वस्त्रादिभिरलङ्कृत्य फलपुष्पैर्विकीर्य च
अर्धनारीश्वरीहोमशतनिष्कविनिर्मितम् २२
प्रधानकुंभे संस्थाप्य प्रासादेन सुपूजयेत्
भवादीनष्टमूर्तीस्तु धर्माय दश निष्कतः २३
कलशेष्वष्ट संस्थाप्य प्रासादेन सुपूजयेत्
कलशेष्वष्टसंस्थाप्य तत्तन्नाम्ना सुपूजयेत् २४
वेदान्तपारगं शुद्धं शिवभक्तं जितेन्द्रियम्
आचार्यं वृणुयादत्र सर्वं तेनैव कारयेत् २५
ब्राह्मणान् वृणुयादष्टौ ऋत्विजो वेदपारगान्

देशिकस्तत्र कुर्वीत पूजामृत्त्विक् समन्वितः २६
षोडशैरुपचारैश्च पूजयेद्धारमन्त्रतः
अष्टोत्तरसहस्रन्तु जप्त्वा प्रासादमन्त्रकम् २७
आचार्यो ऋत्त्विजश्चैव पूजां कुर्याद्यथा विधि
अथान्यैर्जापयेत्कर्ता ब्राह्मणैर्वेदपारगैः २८
वेदादींश्छतरुद्रीयं त्रयंबकमहामनुम्
शिवसूक्तं रुद्रसूक्तं शिवसङ्कल्पमेव च २९
मुञ्चामित्वेति सूक्तञ्च तथा पाशुपतास्त्रकम्
एकादशमनुञ्चैव घृतसूक्तं तथैव च ३०
जपं समाप्य चाचार्यः होमं कुर्यात्समाहितः
शिवाग्निं जनयित्वा तु तत्रावाह्य महेश्वरम् ३१
शक्त्यादिशक्तिपर्यन्तं समभ्यर्च्य विधानतः
प्रासादेनैव मन्त्रेण पालाशसमिधो हुनेत् ३२
चर्वाज्यमधुलाजैश्च शर्कराभिस्तिलैस्तथा
अष्टोत्तरसहस्रन्तु प्रत्येकं होममाचरेत् ३३
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिं ततो हुत्वा ब्राह्मणाञ्च समर्चयेत् ३४
++ शुभं विसृज्य देवेशं कुंभमध्ये नियोजयेत्
नैवेद्यं दापयेत्पश्चात् पत्रैः पुष्पैस्समर्चयेत् ३५
धूपदीपादिकं दत्वा तांबूलञ्च निवेदयेत्
परिचारकमाहूय सोष्णीषं सोत्तरीयकम् ३६
शिवकुंभं समुद्धृत्य उपकुंभान् समुद्धरेत्
हर्म्यं प्रदक्षिणी कृत्य शिवलिङ्गान्तिकं व्रजेत् ३७
महाभिषेकं प्रथमं कृत्वा पश्चात्तु देशिकः
कुंभाभिषेचनं कुर्यात् कलशैश्चाभिषेचयेत् ३८
अलङ्कृत्य महादेवं दिव्यांबरविभूषणैः

कर्पूरं कुङ्कमयुतं गन्धमापाद्य यत्नतः   ३९
तेन लिङ्गं समालिप्य पङ्कजादिभिरर्चयेत्
महानिवेदनं कुर्यात् धूपदीपादिकं ददेत्  ४०
महाभीष्टं प्रार्थयित्वा नमस्कृत्वा महेश्वरम्
प्रतिमां वस्त्रसंयुक्तां दक्षिणासहितां ततः   ४१
ग्रलङ्कता +++++ कृतम्
ग्रर्धनारीशभगवन् मम देहे व्यवस्थितान्  ४२
काशश्वासादिरोगान् सद्यो नाशय शङ्कर
तत्तन्नाम्नोपकुंभस्थ प्रतिमांश्च स दक्षिणाः   ४३
ग्रलङ्कतेभ्यो विप्रेभ्यो दद्याद्भक्तिसमन्वितः
ग्राचार्य ऋत्विजश्चैव सन्तोष्याभरणादिभिः   ४४
वस्त्रगोभूमिधान्यादीन् दद्यादायुष्यवर्धये
ब्राह्मणान् भोजयेत्पश्चात् पायसापूपलड्डुकैः   ४५
कृताशीर्वचनो विप्रैः वा योषसमन्वितः
स्वगृहं प्राप्यमभितो भुञ्जीत सह बन्धुभिः   ४६
दीनान्धकृपणांश्चैव भक्तांश्च परिचारकान्
भोजयेद्दक्षिणां तेभ्यो दद्याद्वित्तानुसारतः   ४७
एवं यः कुरुतो भक्त्या शंभो ++ ध्याभिषेचनम्
कासश्वासक्षयादिभ्यो +++ त्वया  ४८
मुच्यते पातकैस्सर्वैः दीर्घमायुरवाप्नुयात्
महाभिषेचनं शंभोः तथा क्षीराभिषेचनम्  ४९
सर्वैश्वर्यप्रदं पुंसां ग्रायुरारोग्यदं सदा
सर्वाभीष्टप्रदञ्चैव राज्ञां शतृनिबर्हणम्  ५०
पुत्रपौत्रप्रदञ्चैव सर्वोपद्रवनाशनम्
इत्थं देवस्य कुर्वाणः शंभोर्भक्त्याभिषेचनम्  ५१
ग्रायुरारोग्यसौभाग्यमिष्टान् कामानवाप्नुयात्

मराडलं मराडलार्धं वा पादमराडलमेव वा ५२
त्रिदिनं द्विदिनं वापि दिनमेकमथापि वा
स जित्वा सकलान् शतॄन् सर्वान् कामानवाप्नुयात् ५३
इत्यंशुमान् तन्त्रे पयस्नानविधिः पटलः

क्षीरस्नानविधिफलश्रुति

एवं यः कुरुते मर्त्यः जन्ममध्ये सकृन्नरः
क्षीराभिषेचनं तस्य सफलं जन्मभूतले १
ग्रपमृत्युर्नाशमेति दीर्घमायुश्च जायते
मृत्युञ्जयप्रसादेन सन्ततिश्च विवर्धते २
व्याधयस्तस्य नश्यन्ति क्षिप्रारोग्यञ्च जायते
किमत्र बहुनोक्तेन भक्त्या वित्तानुसारतः ३
क्षीराभिषेचनं कुर्यान्नान्यो मर्त्यो भवेद्ध्रुवम्
इति सर्व +++ पुंसः क्षीराभिषेचयेत् ४
+++ दक्षिणां दद्यात् दश दानानि कारयेत्
सहस्रं भोजयेद्विप्रान् द्विशतं शतमेव वा ५
प्रदक्षिणनमस्कारैः सन्तोष्य ब्राह्मणोत्तमान्
कृताशीर्वचनो विप्रैः पश्चाद्भोजनमाचरेत् ६
सहस्रं प्रथपयसा एकस्त्रीन्वा दिनद्वये
दिनत्रयेऽपि वा कुर्यात् ग्रभिषेकं यथोचितम् ७
दिनत्रयं यथा कुर्यात् +++++
+++++ गवाक्षीरं प्रशस्यते
++++++ मारभ्य यावद्रोणावधिक्रमात् ८
नित्यमानमिति ज्ञेयमाप्यायस्वेति मन्त्रतः
ग्रष्टोत्तरसहस्रैस्तु प्रस्थक्षीराभिषेचनात् ९
सर्वरोगविनिर्मुक्तः सर्वान् कामानवाप्नुयात्

पयः प्रस्थार्धकञ्चैव सर्वरोगविनाशकम्
अथामूलाङ्गपूजायां क्षीरस्नानविधिक्रमम्  १०
क्षीराभिषेकं देवस्य यः करोति सकृन्नरः
भक्त्याभिचारदोषस्तु सहसैव विनश्यति  ११
कासश्वासक्षयाद्यैस्तु महारोगैर्निपीडितः
संस्नाप्य पयसा शंभुं सर्वरोगैः प्रमुच्यते  १२
कीर्तिदं विजयं पुंसां +++ रोग्यपुष्टिदम्
सर्वदानफलञ्चैव सर्वयज्ञफलप्रदम्  १३
सर्वसंपदाधारे सर्वलोकनमस्कृतः
इह भुक्त्वाऽखिलान् भोगान् पुत्रपौत्रसमन्वितः  १४
देहान्ते शिवसायुज्यं आप्नुयान्नात्र संशयः
गोमयेन समालिप्ते रङ्गवल्याद्यलङ्कृते  १५
वितानाद्यैरलङ्कृत्य स्थण्डिलं तत्र कारयेत्
चतुर्द्रोणप्रमाणेन धान्यं तत्र विनिक्षिपेत्  १६
तन्तुना वेष्टितं कुंभं स्थापयित्वा सुधूपितान्
आप्यायस्वेति मन्त्रेण परितः +++++  १७
तस्योपरि तदर्धांश्च तण्डुलान् शालिसंभवान्
तस्योपरि तदर्धांश्च तिलान् कृष्णान्विनिक्षिपेत्  १८
द्वित्रिप्रस्थपयस्नानमायुरारोग्यवर्धनम्
चतुः प्रस्थपयस्नानं सर्वैश्वर्यप्रदायकम्  १९
द्वादश प्रस्थसंख्याता सर्वदानफलप्रदम्
शतप्रस्थपयस्नानं पुत्रपौत्रविवर्धनम्  २०
द्विशतप्रस्थपयसा रुद्रलोके महीयते
पयः पञ्चशतं स्नाप्य शिवसामीप्यमाप्नुयात्  २१
सहस्रप्रस्थपयसा योऽभिषिञ्चेच्छदाशिवम्
+++ ति मन्त्रेण पयसा पूरयेद्धटम्  २२

वस्त्रादिभिरलङ्कृत्य गन्धपुष्पैर्विकीर्य च
भस्मरुद्राक्षमालाभिः अलङ्कृत्य कलेबरम् २३
सदाशिवं हृदि ध्यात्वा ततस्सङ्कल्प्यमेव च
शिवभक्तान् सदा शान्तान् भूतिरुद्राक्षधारिणः २४
ब्राह्मणान्वृणुयात्पश्चात् दश द्वादश वा ततः
पुनः कुर्याच्च सङ्कल्पं ब्राह्मणैस्सह धर्मवत् २५
स्वात्मानं शिवरूपेण ध्यात्वा कर्ता समाहितः
अन्तर्यागं प्रथमतः कृत्वा यागं बहिश्च यः २६
सङ्कलीकरणं कुर्यात् पश्चात्पूजां समाचरेत्
निरीक्षणादिकं कुर्यात् ततः कुंभे यथाक्रमम् २७
अर्धनारीश्वरं देवं दशनिष्कविनिर्मितम्
क्षीरकुंभे तु संस्थाप्य प्रासादेन सुपूजयेत् २८
अष्टपुष्पैश्च कलशं यथाविधि समर्चयेत्
षोडशानुपचारांश्च कृत्वा प्रासादमन्त्रतः २९
अष्टोत्तरसहस्रन्तु जपेत्प्रासादमन्त्रकम्
इतरे तु द्विजास्सर्वे मृत्युञ्जयमहामनुम् ३०
सदाशिवं हृदि ध्यात्वा जपं कुर्यादतन्द्रिताः
वेदादि शतरुद्रीयं मुञ्चामित्वेति सूक्तकम् ३१
ब्रह्मसूक्तं विष्णुसूक्तं रुद्रसूक्तमथापि च
वारुणं पौरुषं सूक्तं घृतसूक्तं तथैव च ३२
पञ्च शान्ति जपेत्पश्चात् नमो ब्रह्मेत्यृचं जपेत्
पुनः पूजां ततः कुर्यात् अद्यापनमथाचरेत् ३३
आगमोक्तविधानेन होमं कुर्याद्विचक्षणः
ततः कुंभाभिषेकात्प्राक् नित्यपूजां समाचरेत् ३४
शुद्धोदकैर्वस्त्रपूतैः दध्याज्यमधुशर्करैः
नारिकेलजलैश्चापि इक्षुकाण्डरसैस्तथा ३५

गन्धोदकैश्च कर्पूरकुङ्कुमादि समन्वितैः
अभिषिच्य महालिङ्गं ततः कुंभाभिषेचनम् ३६
अप्यायस्वेति मन्त्रेण कुर्यात्क्षीराभिषेचनम्
पश्चाच्छुद्धोदकैर्लिङ्गमभिषिच्य पुनस्ततः ३७
कर्पूरकुङ्कुमयुतैः दिव्यगन्धैः सपीठकम्
मनोरथं प्रार्थयित्वा ब्राह्मणान् भोजयेत्ततः ३८
प्रतिमां दक्षिणायुक्तां दद्याद्वस्त्रसमन्वितः
+++++++++++++ शिवभक्तस्य कस्यचित् ३९
प्रतिमां दक्षिणायुक्तां दद्याद्वस्त्रसमन्विताम्
+++++++++ शिवभक्तस्य कस्यचित् ४०
प्रदक्षिणविहीने च यः करोति शिवोत्सवम्
वृथा भवति तत्कर्म अवश्यं कारयेत्सुधीः ४१
तस्यायुर्वर्धते श्रीमान् सर्वत्र विजयी भवेत् ४२
इत्यंशुमत्तंत्रे क्षीरस्नानविधिफलश्रुति

## सकळार्चनै

सकळस्यार्चनं वक्ष्ये श्रूयतां रविसत्तमा
आयुरारोग्यजयदं पुत्रश्रीकीर्तिवर्द्धनम् १
सृष्ट्यर्थं लोकरक्षार्थं लोकस्योत्पत्तिकारणम्
साधकानां हितार्थन्तु स्वेच्छया गृह्यते तनुम् २
साधनं द्विविधं चेति प्रोक्तस्सकलनिष्कलः
सकळन्तु तथाज्ञेयं मुच्यते क्रमशस्तथा ३
सर्वावयवसंयुक्ता सकळञ्चेति कीर्तितम्
तद्बिम्बं द्विविधं प्रोक्तं चलञ्चैवाचलं तथा ४
लोहञ्च पटचित्रञ्च रत्नजं बाणलिङ्गकम्
चलमेवं समाख्यातं शैलजं मृण्मयं तथा ५

दारुजं भित्तिचित्रञ्च अचलञ्चेति कीर्तितम्
भित्तिचित्रस्य बिम्बस्य चित्रयुक्तोपलस्य च ६
मृण्मयस्य विशेषेण कर्मार्चायां सहार्चयेत्
आर्द्रीकृतन्तु यद्बिम्बं कर्मार्च्च प्रतिमं विना ७
आर्द्रायां प्रोक्षणं वाऽथ लोहजेन समर्चयेत्
लोहजेन महास्नानं कुर्यात्पर्वणि पर्वणि ८
केवलं सहजञ्चैव पौनः पुण्यं तथा स्मृतम्
स्वतन्त्रं केवलं प्रोक्तं परिचारादिभिर्युतम् ९
सर्वोपचारसंयुक्तं तत्तन्त्रोक्तवदर्चयेत्
केवल्स्यार्चनं प्रोक्तं सहजं परिवारकम् १०
परिवारैर्विशेषेण हविष्यं तं यजेत्ततः
यद्वेदादेति मन्त्रेण स्नानार्थं प्रोक्षयेद्बुधः ११
गन्धपुष्पञ्च नैवेद्यं धूपदीपं तथैव च
षडङ्गमिति विख्यातं लोहजानां समर्चयेत् १२
सहजस्यार्चनं प्रोक्तं पौनः पुण्यार्चनं शृणु
यद्ध्रुवं मूलबिम्बञ्च तद्ध्रुवस्यानुकूलतः १३
उत्सवस्य प्रधानञ्च पौनः पुण्यमिति स्मृतम्
अरुणोदयवेळायां अर्चयेत्तु महेश्वरम् १४
पाद्यमाचमनं दत्वा निर्माल्यमपनीय च
गन्धपुष्पं ददेच्छम्भोः नैवेद्यं दापयेत्ततः १५
एवमभ्यर्चयेद्विद्वानरुणोदयपूजनम्
ततस्सन्ध्यावसाने तु महेशस्याग्रदेशके १६
संशोद्ध्य बहुरूपेण प्रोक्षयेत्पुरुषेण तु
शङ्खञ्च जलभाण्डञ्च पुत्राधारञ्च पादुकम् १७
अन्यद्राजोपचारस्य चिह्नानि विविधान्नि च
बिम्बाग्रे विन्यसेद्धीमान् प्रोक्षयेदस्त्रवारिणा १८

पाद्यमाचमनं चार्घ्यं कल्पयेद्विधिपूर्वकम्
स्नानार्थमुदकं ग्राह्य शुद्धिं कृत्वा तु देशिकः १९
प्रोक्षयेदस्त्रमन्त्रेण कल्पयेद्द्रचमानसम्
आवाहयेत्ततो देवं हृन्मन्त्रेण समर्चयेत् २०
पाद्यमाचमनञ्चार्घ्यं दापयेत्तु महेश्वरम्
पूर्वसन्ध्यार्चनं पुष्पमीशानेन विवर्जयेत् २१
दर्पणं दर्शयेद्विद्वान् स्नानवेद्युपरि न्यसेत्
रुद्रसूक्तमनुञ्चजप्त्वा दर्पणे स्नानमाचरेत्
गौरीमिमाय मन्त्रेण देव्या स्नानञ्च पूर्ववत् २२
प्रोक्षयेद्बीजमुख्येन शुद्धतोयेन देशिकः
खण्डवस्त्रेण संमृज्य वस्त्रपुष्पगतादिभिः २३
भूषणाद्यैरलङ्कृत्य कलामन्त्रैस्समर्चयेत्
अङ्गमन्त्रेण चाभ्यर्च्य नैवेद्यादि निवेदयेत् २४
धूपदीपं ददेत्पश्चात् भसितं दापयेद्बुधः
छत्रञ्च चामरं खड्गं दापयेन्मूलमन्त्रतः २५
सर्वोपचारैस्सन्तोष्य पूजयेत्तु महेश्वरम्
एककालद्विकालं वा अर्चयेत्सिद्धपूर्वकम् २६
नैवेद्यं मूलबिम्बस्य नैवेद्यन्ते निवेदयेत्
दीपान्ते दीपदानं स्यात् तदन्ते भसितं ददेत् २७
पुनः पुण्यार्चनं प्रोक्तमाश्रयस्यार्चनं शृणु
स्नानान्ते स्नानकर्मञ्च नैवेद्यान्ते निवेदकम् २८
तदन्ते दीपदानं स्यात् स्तोत्रादींश्चैव तोषयेत्
एवमेवं प्रकारेण सकलाराधनं कुरु २९
संशोध्य मृण्मयं बिम्बं वस्त्रबिम्बेन वायुना
आभासं चित्रबिम्बैश्च शिखिं बिम्बैश्च शोधयेत् ३०
रात्रिशेषसुवर्णञ्च रजतं लवणेन तु

ताम्रमाम्लेन शुद्धि स्यात् अस्त्रमन्त्रेन सुव्रतः ३१
एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात्
सकळाराधनं प्रोक्तं नैवेद्यस्य विधिं शृणु ३२
इत्यंशुमान् तन्त्रे सकळार्चना विधिः पटलः

## अयुतधाराभिषेकम्

वक्ष्येऽयुतं महाधारां श्रूयतां रविसत्तमा
श्रीकरं विजयं पुरायं आयुरारोग्यवर्द्धनम् १
सर्वरोगविनाशार्थं सर्वाभीष्टफलप्रदम्
एवमाद्यभिवृद्ध्यै चायुतधारां समाचरेत् २
हेम्ना वा रजतैर्वाऽपि ताम्रैर्वा कल्पयेद्धृदा
पात्रनाहसमं वृत्तं तन्मध्ये चोन्नतं भवेत् ३
तस्य विस्तारमुद्धृत्य भूतांशं विभजेत्ततः
एकांशमुन्नतञ्चैव पार्श्वे शेषांशमुन्नतम् ४
तन्मानं सप्तविंशञ्च मध्ये पञ्चांशमेव च
एकांशं मध्यवृत्तञ्च दळानि परिकल्पयेत् ५
तन्मध्ये सुषिरन्त्वेकं माषमात्रप्रमाणतः
तत्तच्छुषिरमध्ये तु हेमनाळसमन्वितम् ६
अष्टरत्नसमायुक्तं बाह्ये मुक्ताभिरावृतम्
पञ्चांशवृत्तसंयुक्तपद्मबाह्ये प्रकल्पयेत् ७
वसुषोडशसंख्याद्यैरष्टाष्टौ वृद्धितः क्रमात्
एवं विंशति पर्यन्तं तत्संख्यादिक्रमात्ततः ८
अष्टाष्टवृत्तिसंख्या च पञ्चविंशावसानकम्
सूच्यग्रसुषिरञ्चैव वायुसंख्यावसानकम् ९
अब्धिर्वलयसंयुक्तं शृङ्खलासहितं ततः
अयुताख्यं महाधाराद्धटं कुर्याद्विचक्षणः १०

रुद्रानुवाकमन्त्रेण कुर्याद्धाराभिषेचनम्
तज्जलैरभिषेकञ्च सर्वदोषनिकृन्दति ११
धारापात्रन्तु संयोज्य स्नानान्ते चाभिषेचयेत्
अयुताख्यं महाधारा विधिः प्रोक्ताभिवृद्धये १२
इत्यंशुमान् तन्त्रे अयुतधाराभिषेकविधिः पटलः

## शताभिषेचनम्

शताभिषेकं वक्ष्यामि प्रोक्तं शुद्धोत्सवं विधिम्
अङ्कुराद्यादिकर्मान्ते अवभृतस्नानपूर्वके १
उत्सवान्ते विशेषेण शताभिषेचनं कुरु
स्वर्णं रजतताम्रेण गजजृम्भेण कारयेत् २
उग्रं सप्ताङ्गुलन्यासं मूलं तदर्द्धविस्तृतम्
अग्रव्यासन्ति भागैकं हीनं तस्या शिखोदयम् ३
अग्रे +++ मूलपर्यन्तं शिखां तत्रैव निक्षिपेत्
पार्थवाष्टकञ्च सङ्गृह्य सुगन्धकुसुमैर्युतम् ४
जलचन्दनकल्लोल लवङ्गोशीरकुङ्कमम्
अगरुश्चन्द्रसंयुक्तं पङ्काष्टकमिहोच्यते ५
हिमतोयेन संयुक्तं अश्मनापेक्षयेत्ततः
गौरीमिमाय मन्त्रेण मध्ये मृगमदं न्यसेत् ६
शन्नो देवीति मन्त्रेण जलञ्चैव तु विन्यसेत्
गन्धद्वारेति मन्त्रेण आमकर्पूरविन्यसेत् ७
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
शताभिषेचनं प्रोक्तं पञ्चगव्यविधिं शृणु ८
इत्यंशुमान् तन्त्रे शताभिषेकविधिः पटलः

## नित्यपूजाप्रायश्चित्तम्

प्रायश्चित्तविधिं वक्ष्ये श्रूयतां रविसत्तम
प्रायोविनाशमित्युक्तं चित्तं सन्धानमुच्यते १
विनाशस्य तु सन्धानं प्रायश्चित्तमिति स्मृतम्
ब्राह्मं मुहूर्तमारभ्य क्षेत्रपालार्चनान्तकम् २
क्रियायां करणे चैव व्यत्यासे विपरीतके
विस्तृते द्रव्यहीने च प्रायश्चित्तं विधीयते ३
वैरिञ्चेति मुहूर्ते तु आचार्योत्थापनं न चेत्
तस्य चायुर्भवेद्धीनं सावित्रीन्तु शतञ्जपेत् ४
मूलमन्त्रशतं जप्त्वा तद्दोषशमनं कुरु
विद्ध्युक्तस्नानहीने च महामारी प्रवर्तते ५
तद्दोषशमनार्थाय पवमानं जपेद्गुरुः
मन्त्रस्नानं ततः कृत्वा पूर्ववत्स्नानमाचरेत् ६
देवादितर्पणे हीने पुत्राणां दोषकृद्भवेत्
तद्दोषशमनार्थाय पुनस्स्नानं समाचरेत् ७
तर्पणं पूर्ववत्कृत्वा विधिना देशिकोत्तमः
सन्ध्यावन्दनकाले तु मन्त्राणां विपरीतके ८
क्रियाणां विपरीते तु कालातिक्रमणे सति
सावित्र्या जपहीने च ब्रह्मतेजः प्रणश्यति ९
विनाशस्य तु सन्धानं प्रायश्चित्तमिति स्मृतम्
ब्राह्मं मुहूर्तमारभ्य क्षेत्रपालार्चनान्तकम् १०
क्रियायां करणे चैव व्यत्यासे विपरीतके
विस्तृते द्रव्यहीने च प्रायश्चित्तं विधीयते ११
वैरिञ्चेति मुहूर्ते तु आचार्योत्थापनं न चेत्
तस्य चायुर्भवेद्धीनं सावित्रीन्तु शतञ्जपेत् १२
मूलमन्त्रशतं जप्त्वा तद्दोषशमनं कुरु

विद्ध्युक्तस्नानहीने च महामारी प्रवर्तते १३
तद्दोषशमनार्थाय पवमानं जपेद्गुरुः
मन्त्रस्नानं ततः कृत्वा पूर्ववत्स्नानमाचरेत् १४
देवादितर्पणे हीने पुत्राणां दोषकृद्भवेत्
तद्दोषशमनार्थाय पुनस्नानं समाचरेत् १५
तर्पणं पूर्ववत्कृत्वा विधिना देशिकोत्तमः
सन्ध्यावन्दनकाले तु मन्त्राणां विपरीतके १६
क्रियाणां विपरीते तु कालातिक्रमणे सति
सावित्र्या जपहीने च ब्रह्मतेजः प्रणश्यति १७
तद्दोषशमनार्थाय पुनस्नानं समाचरेत्
दश कृत्त्वोऽभिमन्त्र्यापि साकिया च पिबेद्बुधः १८
पुनरेवमनुष्ठेयं तदहश्चोपवासयेत्
आर्द्रवस्त्रेण संयुक्तं कर्म कुर्यादतन्द्रितः १९
वृथा भवति तत्कर्म पुनस्नानेन शुद्ध्यति
पूर्वास्य उत्तरास्यो वा सर्वं कुर्याद्विचक्षणः २०
याम्ये च पश्चिमे चैव निष्फलं तदवाप्नुयात्
भस्म न्यासविहीने च सकळीकरणहीनके २१
प्रदक्षिणविहीने च आचार्यं नाशयेद्ध्रुवम्
तद्दोषशान्तये धीमान् मूलमन्त्रं शतञ्जपेत् २२
भस्म न्यासादिकं सर्वं पुनः कुर्याद्विशेषतः
पञ्चघोषविहीने च सामान्यार्घ्यविहीनके २३
द्वारपालार्चनाहीने भोगाङ्गलयहीनके
इत्यंशुमत्तंत्रे नित्यपूजाप्रायश्चित्तविधिः

## शिवरात्रिपूजा विधिः

शिवरात्रिविधिं वक्ष्ये श्रूयतां रविसत्तम

सर्वदानफलञ्चैव सर्वयज्ञफलप्रदम् १
शिवरात्रिसमं पुण्यं नास्तीति भुवनत्रये
सर्वमासेषु कर्तव्यं माघमासे प्रशस्यते २
कृतत्रेतायुगे चैव द्वापरे च कलौ युगे
युगे युगे तु सम्पूज्यं कृते किन्तु गुहो यजेत् ३
त्रेतायां विघ्नराजश्च द्वापरे माधवो यजेत्
ब्रह्मेन्दुमुनिभिश्चैव कलौ संपूजितो हरिः ४
शिवरात्रिस्समुद्दिष्टं तिथिनिर्णय उच्यते
एतच्चतुर्विधं प्रोक्तं पक्षसिद्धान्तमेव हि ५
पूर्वसिद्धान्तमेवं स्यात् सिद्धान्तं पक्षमेव हि
परसिद्धान्तमेवं हि तद्भेदं शृणु सुव्रत ६
एकमासे द्विपक्षे तु दोषयुक्ता न संभवेत्
तद्रात्रि शिवरात्रिस्स्यात् सिद्धान्तं पक्षमेव हि ७
परसिद्धान्तमेवं हि बलानामभिवर्द्धयेत्
दीपकालं समारभ्य विंशन्यूनं चतुर्दशि ८
तद्रात्रिसकलं प्रोक्तं पर्वदोषो न विद्यते
तद्रात्रिशिवरात्रिस्स्यात् शिवपूजा समारभेत् ९
परसिद्धान्तमेवं हि सर्वप्राणिहितावहम्
यामद्वयञ्चतुर्दश्यां पर्वयामद्वयं भवेत् १०
शिवपूजा न कर्तव्या सर्वदोषकरं भवेत्
कृष्णपक्षे विशेषेण पूजा नियतमुच्यते ११
व्रतीनां पारणं कुर्यात् चतुर्दश्यां महत्फलम्
तिथ्यन्ते पारणं कुर्यात् विना शैवचतुर्दशीम् १२
यामद्वयमतीतश्चेत् पूर्वाह्ने पारणं कुरु
एवं तिथिक्रमं प्रोक्तं सन्धिक्रममथ शृणु १३
अस्तमनं समारभ्य त्रिपदेश्चन्द्रनायिका

नित्यपूजां समाप्नोति शिवरात्रिं समारभेत् १४
एकयामं ततः पश्चात् यामद्वयञ्च संग्रहेत्
सन्धिद्वयञ्च पूजाञ्च यथोक्तं कारयेत्सुधीः १५
चतुर्थयामे कर्तव्या त्रिपादेन त्रिनाडिका
चतुर्थपूजा कर्तव्या मध्ययामत्रिनाडिका १६
शेषनाडीञ्च भोगार्थं शेषं प्राग्वत्समाचरेत्
एवं सन्धिक्रमं प्रोक्तं यजनं क्रममेव हि १७
तद्दिनस्य तु पूर्वे तु मण्टपं शोधयेत्ततः
पञ्चगव्येन संपूज्य कौतुकं बन्धयेत्ततः १८
बिल्वपत्रन्तु संपूज्य सर्वगन्धसमन्वितम्
वस्त्रेणाच्छादयेद्धीमान् बिल्वपत्राधिवासनम् १९
प्रभाते विमले धीमन् देशिकस्नानमाचरेत्
पूर्वाह्णे तर्पणञ्चैव मध्याह्ने तु प्रदक्षिणम् २०
सायाह्ने पूजनं कृत्वा एवमेवं व्रतञ्चरेत्
ब्रह्मक्षत्रियविट्च्छद्राद्युपवाससमन्वितम् २१
द्विजानां शिवभक्तानां सर्वेषां प्राणिनामपि
सर्वेषाञ्चैव नारीणां उपवासं तथैव च २२
अमङ्गल्योप्युवासी च पुनर्जन्मसुमङ्गली
अपत्नीकोप्युवासी च पुनः पद्मसमन्वितम् २३
इष्टकाम्यफलं कुर्यात् शिवरात्रिमुपासते
निद्रायान्तु फलं हीनं निद्राहीनन्तु तत्फलम् २४
तस्मात्सर्वप्रयत्नेन उपवासमनिद्रकम्
विघ्नेशं पूजयेत्पूर्वं सौरपूजामतः परम् २५
पूर्वे तु स्नपनं प्रोक्तं अष्टोत्तरशतं भवेत्
गव्यञ्च बिल्वपत्रञ्च मुद्गान्नं पूर्वयामके २६
द्वितीये स्नपनं प्रोक्तं एकाशीति प्रकल्पयेत्

पञ्चामृतारविन्दञ्च कृसरान्नद्वितीयकम् २७
तृतीये स्नपनं प्रोक्तं पञ्चाशस्नपनसंभवेत्
मा+++जातिश्च कर्तव्यं शुद्धान्नञ्च तृतीयके २८
चतुर्थे स्नपनं प्रोक्तं पञ्चविंशति संख्यया
इक्षुसारं तथावर्तं गुळान्नञ्च चतुर्थके २९
चतुस्सन्ध्यार्चने कुर्यात् बिल्वपत्रैस्समन्वितम्
यामं प्रति विशेषेण नववस्त्रेण वेष्टयेत् ३०
पयोदधिघृतञ्चैव नाळिकेरक्रमेण तु
अन्यानि रसवस्तूनि स्नानकालेऽभिषेचयेत् ३१
चित्रवस्त्रैरलङ्कृत्य सर्वपुष्पै स्वदापयेत्
शुद्धान्नं व्यञ्जनोपेतं यामं प्रति निवेदयेत् ३२
यामं प्रतिविशेषेण बलिहोमं समाचरेत्
पूजाविधानमेवं स्यात् नाडिकालक्षणं शृणु ३३
अहोरात्रमष्टसन्धी च वेदयामन्तु तन्निशि
अस्तमनं समारभ्य सार्द्धेन सप्तनाडिका ३४
द्यामयामियमिश्चैव त्रिपादेन त्रिनाडिका
सायरक्षा समारभ्य निशि पूजां समारभेत् ३५
किञ्चिद्भेदं विशेषोऽस्ति चण्डक्षेत्रविहीनकम्
शेषं त्रिपादनाडी च शिवरात्रि समाचरेत् ३६
सन्ध्यादिक्रमणादोषं न्यूनञ्चेत्तु न दोषभाक्
पञ्चगव्यं समारभ्य साधयेच्छिवनाडिका ३७
द्वारपूजां ततः कृत्वा घटिका पादसंयुतम्
स्नानमेकञ्च कर्तव्यमर्चनद्वयनाडिका ३८
नाडिकार्थनिवेद्यन्तु तदर्द्धं होममाचरेत्
अन्तर्बलिं तदर्द्धञ्च बहिर्बल्येकनाडिका ३९
तत्समं धूपदीपादि पादार्धं क्षेत्रपूजनम्

एवं विशेषतः कार्यं वेदयामन्तु तन्निशि ४०
अर्द्धयामं विशेषेण द्वितीये मिश्रपूजनम्
यामान्ते तु विशेषेण भोगाङ्गञ्चैकनाडिका ४१
अरुणसन्धिञ्च कर्तव्यं सार्धनाडीं समाचरेत्
एवमेव क्रमेणैव उदयान्तं समाचरेत् ४२
शिवरात्रिविधिं प्रोक्तं मासपूजाविधिं शृणु
इत्यंशुमान् तन्त्रे शिवरात्रिपूजाविधिः पटलः

## आत्मार्थपरार्थं पवित्रारम्भणम्

पवित्रारोहणं वक्ष्ये श्रूयतां रविसत्तमः
मनसा कर्मणा वाचा यन्यूनं कर्मणामपि १
पतनत्त्रायते यस्मात् पवित्रान्तमिहोच्यते
स्वसिद्धिं सर्वसिद्धिञ्च तद्वयं स्यात्पवित्रकम् २
आत्मार्थयजनं कुर्यात् स्वसिद्धिरिति चोच्यते
परार्थे चार्चयेद्धीमान् सर्वसिद्धिरिति स्मृतम् ३
एतेषां सर्वसिद्धैश्च पूजां वक्ष्ये यथाक्रमम्
आषाढे श्रावणे मासे प्रोष्ठमासस्तथैव च ४
अश्विनीकृत्तिकामासे पवित्रारोहणं कुरु
पूर्वपक्षे चतुर्दश्यामाषाढे च पवित्रकम्
अन्येषु सर्वमासेषु पक्षयोस्सितकृष्णयोः ५
चतुर्दश्यामथाष्टम्यां पवित्रं विधिवत्कुरु
कृत्तिकादीपतः पश्चान्नाचरेत्तु पवित्रकम् ६
मेषादि+++ कैषु यदा दर्शद्वयं भवेत्
अब्दान्तरे यावदावश्यं मिथुनार्के हरिः स्वपेत् ७
कर्कटार्कादिके वा यद्द्वादश्याञ्च द्वयं भवेत्
अब्दान्तरे तदावश्य कर्कटार्के हरिस्वपेत् ८

शेते विष्णुस्सदाषाढे भाद्रे च परिवर्तते
कार्तिके संप्रबुद्ध्येत शुक्लपक्षे शुभे दिने ९
ते मैत्रश्रवणोपेते पावने परिकीर्तिते
आषाढासितपक्षेषु मैत्रश्रवणरेवती १०
आदिमध्यावसानेषु भवेषु द्वादशेषु च
ते पावनस्वधा योगाः कथ्यते रविसत्तम ११
आषाढपक्षे द्वादश्यां वर्णमास्यामथापि वा
सुप्ते तदा तु कर्तव्यं पवित्रारोहणं कुरु १२
क्षौमं कार्पासजं वाऽथ सूत्रमेव परिग्रहेत्
त्रिगुणं त्रिगुणीकृत्य अस्त्रमन्त्रेण शोषयेत् १३
द्वारोज्यन्तु विसृज्याथ क्षाळयेदस्त्रमन्त्रतः
शोषणं हृदयेनैव पवित्रं कारयेत्सुधीः १४
वामाद्या नवशक्तिश्च नवसूत्राधिदेवता
तन्त्रनाद्विगुणीकृत्य दशवृद्ध्या ततः क्रमात् १५
शतमष्टोत्तरञ्चैव तन्तूनामुत्तमं भवेत्
तन्तुना द्वादशैनैव द्वादशादित्यदेवताः १६
पञ्चाशत्तन्तुसंख्याता तन्तूनां मध्यमा मता
तन्तूनाञ्च त्रिसंख्यानां त्रिमूर्तिरधिदेवता १७
पञ्चविंशति संख्याता तन्तूनां कन्यसास्तथा
अथवाऽन्यप्रकारेण तन्तुसंख्यां शृणुष्वथ १८
एकाद्येकैकवृद्ध्या तु तन्तुने++ ष्टसंख्यया
श्रद्धया तन्तुसंख्याता यथेष्टग्रन्थिसंयुता १९
एकद्वित्र्यङ्गुला वाऽपि ग्रन्थिमानं प्रकल्पयेत्
गन्धस्विष्टकृदेशे वा कल्पयेत्कल्पवित्तमः २०
यो हि लक्षणसंयुक्तं कुर्याद्ग्रन्थिपवित्रकम्
महापवित्रं वक्ष्यामि गङ्गागौरी अवतारकम् २१

ग्रन्थयस्तन्तुसंख्या द्वा गङ्गावतारमेव च
कुर्यादष्टादश ग्रन्थयुक्तं गौरीवतारकम्  २२
गङ्गावतारमात्मार्थं यजने तु पवित्रकम्
परार्थयजनार्थाय तन्तुगौरीवतारकम्  २३
पञ्चग्रन्थिसमायुक्तमामन्त्रेण पवित्रकम्
दूर्वाक्षतैस्समभ्यर्च्य तस्मान्नित्यपवित्रकम्  २४
गैरिकागरुकाश्मीरचन्दनै रक्तचन्दनैः
हरिद्राकृष्णकर्पूरैरञ्जयेद्ग्रन्थिमध्यमे  २५
आत्मविद्याशिवेनैव त्रितयं लिङ्गमूर्धनि
पवित्रं पिण्डिकेत्त्वेकं परिवारामरादिषु  २६
पवित्रमेकं कर्तव्यं महेशं तद्विशेषतः
शिरोमाला उरोमाला बाहुमालोपवीतकम्  २७
मणिबन्धाक्षमाला च सकळे व्योममाचरेत्
पवित्रमेवं सर्वेषां अल्पतन्तु विधीयते  २८
प्रासादं यागशाला च प्रासादं पचनालयम्
त्रिगुणं त्रिगुणीकृत्य तन्तुना वेष्ट्य देशिकः  २९
निश्चित्य दिवसात्पूर्वे अङ्कुरार्पणमाचरेत्
प्रासादस्याग्रदेशे वा वामे वा दक्षिणेऽपि वा  ३०
रुद्रहस्तं समारभ्य द्विद्विहस्तविवर्द्धनात्
त्रयोविंशत्करान्तञ्च समञ्च चतुरश्रकम्  ३१
तं त्रिभागैकभागेन वेदिका संप्रकल्पयेत्
हस्तमानं समुत्सेधं दर्पणोदरसन्निभम्  ३२
वेदिकायां पुरोभागे कुण्डं कुर्यात्सलक्षणम्
सर्वालङ्कारसंयुक्तं मण्टपं भूषयेत्सुधीः  ३३
गोमयालेपनं कृत्वा पुण्याहप्रोक्षणं कुरु
शालिभिस्थण्डिलं कृत्वा तन्मध्येऽब्जं समालिखेत्  ३४

तण्डुलैस्तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत्
पञ्चचूर्णैरलङ्कृत्य आचार्यस्नानमाचरेत् ३५
सकळीकरणं कृत्वा सामान्यार्घ्यञ्च कल्पयेत्
तद्दिनस्याथ पूर्वेद्युरधिवासरमारभेत् ३६
पञ्चगव्यामृतेनैव स्नपनैरभिषेचयेत्
नैवेद्यं दापयेच्छम्भोः धूपदीपादिकं ददेत् ३७
विघ्नेश्वरं समभ्यर्च्य भक्ष्यापूपादिकं ददेत्
देवदेवं नमस्कृत्वा ज्ञापयेच्च पवित्रकम् ३८
मण्टपन्तु समभ्यर्च्य भान्वादिगुरुमन्तकम्
वेद्यूर्ध्वे च शिवं यष्ट्वा परिवारसमन्वितम् ३९
गन्धपुष्पादिनाऽभ्यर्च्य धूपदीपादिकं ददेत्
विघ्नेश्वरं समभ्यर्च्य उपचारसमायुतम् ४०
अष्टमङ्गळरूपाणि वेदिबाह्ये समर्चयेत्
जलकुम्भस्य सव्ये तु स्थापयेत्तु पवित्रकम् ४१
संस्थाप्यश्चोदकेनैव प्रोक्ष्य संहितयाणुभिः
कुम्भस्योत्तरदेशे तु न्यसेद्गन्धपवित्रकम् ४२
आमन्त्रेण पवित्रन्तु कुंभस्याग्रे विनिक्षिपेत्
कुम्भस्य मध्यमे भागे न्यसेन्नित्यपवित्रकम् ४३
अस्त्रेणैव तु संप्रोक्ष्य कवचेनावकुण्ठयेत्
अभ्यर्च्य हृदयेनैव धेनुमुद्रां प्रदर्शयेत् ४४
नववस्त्रेण सञ्छाद्य बाहुरूपमनुस्मरन्
मण्डलस्थं शिवं यष्ट्वा पश्चिमे तु विशेषतः ४५
पद्मं वा स्वस्तिकं वाऽपि गौरीतिलकमेव वा
लिङ्गं वै षण्णवत्या वा मण्डले तु समर्चयेत् ४६
कन्त्रिकादन्तकाष्ठञ्च तालुबोधनमेव च
सूचिका श्रोत्रशोधीशशाखशोधनमेव च ४७

पूर्वभागे न्यसेद्धीमान् पौरुषं मन्त्रमुच्चरन्
कौपीनं खण्डवस्त्रञ्च तैलमामलकं तथा ४८
रजनीं पञ्चगयञ्च पञ्चामृतञ्च दक्षिणे
बहुरूपमनुस्मृत्य अर्चयेद्देशिकोत्तमः ४९
+++++++++++++ केशशोधनमञ्जनम्
वसायज्ञोपवीतञ्च पुष्पमाभरणं तथा ५०
चन्दनं पश्चिमे देशे स्थापयेत्सद्यमन्त्रकैः
ओड्याणं पट्टबन्धञ्च भिक्षापात्रं कमण्डलुम् ५१
व्याघ्राजिनं वेणुदण्डञ्च चामरं छत्रदर्पणम्
भासितं पादुकञ्चैव मात्रादण्डञ्च खड्गकम् ५२
उत्तरे विन्यसेद्धीमान् वामदेवमनुस्मरन्
अस्त्रमन्त्रैस्समभ्यर्च्य पश्चात्कुण्डान्तिकं व्रजेत् ५३
अग्निकार्योक्तमार्गेण अग्निकार्यं समाचरेत्
समिदाज्यचरू लाजान् तिलापूपफलांस्तथा ५४
मुद्गं गौळं यवञ्चैव सक्तुं सर्षपमेव च
संहितेनैव जुहुयात् मूलेन सर्षपं हुनेत् ५५
स्थालीपाकविधानोक्तमार्गेणैव चरुं पचेत्
चरन्तं भागतं कृत्वा शिवांशञ्चाग्निभागकम् ५६
वल्यर्थं स्यादथैकांशं कल्पयेत्कल्पवित्तमः
द्रव्यान्ते व्याहृतिं कृत्वा अस्त्रेणैव शतं हुनेत् ५७
सौरादिगुरुपर्यन्तं दद्यान्नित्यपवित्रकम्
द्वारदेवान् समभ्यर्च्य स्नानेनैव प्रदापयेत् ५८
आमन्त्रेण पवित्रन्तु दद्याल्लिङ्गस्य मूर्द्धनि
परिवारामरादीनां दद्यान्मन्त्रपवित्रकम् ५९
निवेदयेच्छिवांशन्तु गन्धपुष्पैस्समर्चयेत्
अघोरेण शतं हुत्वा अस्त्रेणैव शतं हुनेत् ६०

मूलेनाष्टशतं हुत्वा त्त्वष्टगन्धपवित्रकम्
भान्वादिगुरुपर्यन्तं दद्याद्गन्धपवित्रकम् ६१
सर्वालङ्कारसंयुक्तं सर्ववाद्यसमन्वितम्
दीपज्वालासमायुक्तं हर्म्यप्रदक्षिणं कुरु ६२
द्वारपालान् समभ्यर्च्य दद्याद्गन्धपवित्रकम्
स्वनाममन्त्रैरभ्यर्च्य प्रविशेद्गर्भगेहकम् ६३
पाद्यमाचमनं दत्वा मूलमन्त्रेण देशिकः
दद्याद्गन्धपवित्रन्तु धूपदीपादिकं ददेत् ६४
पश्चान्नित्याग्निकार्यादि सन्ध्याशेषं समाचरेत्
एवं रात्रौ प्रकर्तव्यौ प्रभाते स्नानमाचरेत् ६५
सकळीकरणं कृत्वा सामान्यार्घ्यं करो गुरु
संप्रोक्ष्य बहुरूपेण पवित्राण्यवरोपयेत् ६६
तानीशमण्डले यात्रे चण्डेशार्थं प्रगृह्यताम्
अष्टपुष्पिकया देवं समभ्यर्च्य हृदाणुना ६७
यागशालां प्रविश्याथ सकलीकरणं कुरु
सामान्यार्घ्यञ्च सङ्कल्प्य प्रोक्षयेदस्त्रमन्त्रतः ६८
भास्वादि गुरुपर्यन्तं अर्चयेद्देशिकोत्तमः
कुण्डमस्त्रेण संप्रोक्ष्य हृदयेन समर्चयेत् ६९
प्रज्वाल्य वक्त्रमन्त्रेण अघोरेन शतं हुनेत्
अस्त्रेणैव शतं हुत्वा स्पृष्ट्वा गौरीवतारकम् ७०
मूलेनाज्येन जुहुयात् संपातं पञ्चविंशतिः
सर्वद्रव्यं समाहृत्य स्विष्टकृद्धोममाचरेत् ७१
नैवेद्यं दापयेच्छम्भोः धूपदीपादिकं ददेत्
भान्वादिगुरुपर्यन्तं दद्याद्गौरीवतारकम् ७२
ब्रह्मकुम्भे च वर्द्धन्यां दद्याद्गौरीवतारकम्
पञ्चगव्यामृतं कल्प्य स्नपनं कल्प्य देशिकः ७३

विघ्नेश्वरं समभ्यर्च्य द्वारदेवान् समर्चयेत्
गर्भगृहं प्रविश्याथ लिङ्गपीठस्थलेन च ७४
क्षाळनञ्चास्त्रमन्त्रेण शिवमन्त्रैस्समर्चयेत्
पूर्वभागे न्यसेद्द्रव्यमानीयं तत्प्रविश्य च ७५
कस्त्रिकाहृदनैवेद्यं दद्यान्नेनैव देशिकः
शिरसा दन्तकाष्ठञ्च शिखया तालुशोधनम् ७६
सूचिकाकवचेनैव नेत्रेण श्रोत्रशोधनम्
नखशोधनमस्त्रेण दद्यात्तेनैव देशिकः ७७
दक्षिणे स्थापितद्द्रव्यमानीयान्तं प्रविश्य च
कौपीनादिरजन्यन्तं सद्यादीशान्तकं ददेत् ७८
व्योमव्यापि समुच्चार्य पञ्चगव्यामृतेन च
संस्नाप्य देवदेवेशं स्नपनैरभिषेचयेत् ७९
वस्त्रखण्डेन सम्मृज्य लिङ्गपीठे विशेषतः
पश्चिमे स्थाप्य यद्द्रव्यं संगृह्यान्तः प्रविश्य च ८०
ईक्षाहारहृदा चैव यूकहारास्त्रमन्त्रतः
दद्यादघोरमन्त्रेण केशशोधनमञ्जनम् ८१
युवं वस्त्रेति मन्त्रेण वस्त्रेणाच्छादयेत्प्रभुः
यज्ञोपवीतं हृदया पुष्पमाभरणं तथा ८२
चन्दनेन समालिप्य गन्धद्वारेति मन्त्रतः
नैवेद्यं दापयेच्छम्भोः धूपदीपादिकं ददेत् ८३
पश्चान्मण्टपमाविश्य हृदया षोडशं हुनेत्
परिचारकमाहूय सोष्णीषस्सोत्तरीयकः ८४
पवित्रं वाहयित्वा तु सर्वालङ्कारसंयुतम्
हर्म्यप्रदक्षिणं कृत्वा द्वारदेशं प्रविश्य च ८५
द्वारदेवान् समभ्यर्च्य दद्याद्गौरीवतारकाम्
गर्भगेहं प्रविश्याथ पूजयेत्परमेश्वरम् ८६

आत्मविद्यादिभिस्तत्वैर्दद्याद्गौरीवतारकम्
शङ्खघोषसमायुक्तं सर्वालङ्कारसंयुतम् ८७
महेशप्रतिमादीनां परिवारामरादिषु
प्राकारे बलिपीठे च दद्याद्गङ्गावतारकम् ८८
प्रभूतहविषं दत्वा धूपदीपादिकं ददेत्
ओड्याणमीशमन्त्रेण पुरुषे योगवेष्टनम् ८९
भिक्षापात्रमघोरेण वामेनैव कमण्डलुम्
व्याघ्राजिनन्तु सद्येन हृदा च वेत्रदण्डकम् ९०
चामरं शिरसा चैव छत्रं वै शिखयाणुभिः
भसितं कवचेनैव पादुकं नेत्रमन्त्रतः ९१
मात्रादण्डञ्च मस्त्रेण खड्गमूलेन दापयेत्
दद्यान्नित्यपवित्रन्तु अस्त्रमन्त्रेण देशिकः ९२
पश्चान्नित्याग्निकार्यादि सन्ध्याशेषं समाचरेत्
महेश्वरं समभ्यर्च्य गन्धपुष्पहृदादिभिः ९३
सर्वालङ्कारसंयुक्तं बल्यन्तं चोत्सवं कुरु
एकाहं त्र्यहं वाऽपि पञ्चसप्ताहमेव वा ९४
नवाहं वा प्रकर्तव्यं यानमेवं समाचरेत्
लिङ्गात्पवित्रमुद्धार्य क्षाळयेदस्त्रमन्त्रतः ९५
तेन मन्त्रेण जुहुयात् समिदाज्यान्नकैस्सह
शतमर्द्धं तदर्द्धं वा प्रत्येकं जुहुयात्क्रमात् ९६
एवं दिने दिने कुर्यात् क्रियामेनां समाचरेत्
अवरोहदिने प्राप्ते नित्यपूजां समाचरेत् ९७
जयादिरभ्याधानञ्च राष्ट्रभृद्धोममाचरेत्
कुण्डेष्वग्निं विसृज्याथ कुम्भमध्ये तु योजयेत् ९८
पश्चात्कुम्भं समुद्धृत्य गर्भगेहं प्रविश्य च
संस्नाप्य देवदेवेशं प्रभूतहविषं ददेत् ९९

ततो होमं प्रकर्तव्यं स्थण्डिले तु विशेषतः
विलापत्यग्निमार्गेण होमं कुर्याद्यथा विधि १००
अग्निमध्ये यजेच्चण्डं तन्मन्त्रेण हुनेत्क्रमात्
मनसा पूज्य चण्डेशं दिवा पूजावसानके १०१
पवित्राणि गुणेत्तत्र चण्डनाथं विवर्जयेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः १०२
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्
पवित्रारोहणं प्रोक्तं गौरीपवित्रकं शृणु १०३
इत्यंशुमान्तन्त्रे पवित्रारोहणविधिः पटलः

## शूकाभिषेकविधिः

शूकाभिषेचनं वक्ष्ये श्रूयतां रविसत्तम
अङ्कुराद्यादिकर्मान्ते अवभृतस्नानपूर्वके १
उत्सवान्ते विशेषेण शूकाभिषेचनं शृणु
स्वर्णं रजतताम्रेण गजशृङ्गेण कारयेत् २
अग्रसप्ताङ्गुलव्यासं मूलन्तदर्द्धविस्तृतम्
अग्रव्यासं त्रिभागैकं हीनं तस्या शिखोदयम् ३
अग्रोदं मूलपर्यन्तं क्रमात्क्षीणञ्च लाघवम्
नानाचित्रसमायुक्तं नानारत्नविभूषितम् ४
अथवा वेणुखण्डञ्च प्रस्थं प्रस्था च मानतः
शूकाद्यष्टौ च सङ्गृह्य अणिमाद्यष्टशक्तिकम् ५
शिवाग्रे स्थण्डिलं कृत्वा पुण्याहं वाचयेत्ततः
शालिभिः स्थण्डिलं कल्प्य नवकोष्ठं समालिखेत् ६
पात्राधारं न्यसेन्मध्ये स्वर्णपात्रञ्च निक्षिपेत्
शूकाष्टकन्तु सङ्गृह्य क्षाळयेदस्त्रमन्त्रतः ७
इन्द्रादीशानपर्यन्तं शूकं तत्रैव निक्षिपेत्

पक्त्वाष्टकञ्च सङ्गृह्य सुगन्धकुसुमैर्युतम् ८
जलञ्चन्दनकञ्चोललवङ्गोशीरकुङ्कुमम्
अगरुं चन्द्रसंयुक्तपक्त्वाष्टकमिहोच्यते ९
हिमतोयेन संयुक्तं तिग्मना पेषयेत्ततः
गौरीमिमाय मन्त्रेण मध्ये मृगमदं न्यसेत् १०
शन्नोदेवीति मन्त्रेण ज्वलञ्चैव तु विन्यसेत्
गन्धद्वारेति मन्त्रेण चन्दनञ्चैव संयुतम् ११
एषामीशेति मन्त्रेण कञ्चोलञ्चैवमेव च
कितवासेति मन्त्रेण योजयेत्तु लवङ्गकम् १२
भूमिर्भूम्नेति मन्त्रेण उशीरञ्चैव विन्यसेत्
तत्वायेति च मन्त्रेण कुङ्कुमञ्चैव संयुतम् १३
शूभिके शिरमन्त्रेण अगरुञ्चैवमेव च
यद्वाघातेति मन्त्रेण आमकपूरविन्यसेत् १४
हिमतोयञ्च सङ्गृह्य पूरयेच्छूकमष्टकौ
ततो भक्तजनास्सर्वे शूकलीलां समाचरेत्
पङ्काष्टकं यजेद्धीमान् नवशक्तिञ्च संयुतम् १५
स्नानं विशप्य विधिवत् स्नानकर्म समाचरेत्
शुद्धोदकञ्च संस्नाप्य गन्धञ्चैव तु लेपयेत्
सुगन्धादाममेवञ्च धारां मृगमदेन तु १६
हिमतोयाभिषेकञ्च धूपदीपादिकं ददेत्
तत्तन्मन्त्रमनुस्मृत्य स्नापयेच्छूकमष्टकम् १७
ततो भक्तजनास्सर्वे शूकलीलां समाचरेत्
एवं यः कुरुते मर्त्यस्स पुण्यां गतिमाप्नुयात् १८
शूकाभिषेचनं प्रोक्तं श्रद्धोत्सवविधिं शृणु

इत्यंशुमान्तन्त्रे शूकाभिषेकविधिः पटलः

## दिव्यवृक्षप्रतिष्ठाविधिपटलः

दिव्यवृक्षार्चनं वक्ष्ये श्रूयतां रविसत्तम
आयुरारोग्यमैश्वर्यं पुत्रश्रीकीर्तिवर्धनम् १
सर्वरोगविनाशार्थं सर्वाभीष्टफलप्रदम्
नरेण चोद्भवन्तत्र वल्मीकञ्चोद्भवन्तथा २
लिङ्गोद्भवञ्च तद्वृक्षे तस्य कूले शिवं यजेत्
प्रासादपूर्वदिग्भागे दक्षिणे चोत्तरेऽपि वा ३
ऐशान्ये वा प्रकर्तव्यं पुण्यस्थाने प्रकल्पयेत्
अथवा दिव्यवृक्षस्य तत्स्थाने तु समर्चयेत् ४
प्रासादे मण्टपे वाऽपि +++ कारमथाऽपि वा
पूर्वोक्त विधिमार्गेण कारयेद्देशिकोत्तमः ५
तत्र लेणाष्णसंस्थाप्य युगाश्रं वृत्त +++
वेदितोरणसंयुक्तं वृत्तकुण्डन्तु कारयेत् ६
पर्यग्निकरणं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः
नवकुम्भान् समादाय ससूत्रान्वस्त्रसंयुतान् ७
सरत्वहेमसंयुक्तान् स्थण्डिलोपरिविन्यसेत्
वृक्षस्वनाममूलेन मध्यकुम्भे न्यसेद्बुधः ८
इन्द्रादिलोकपालानां पूर्वादिकलशे यजेत्
अग्निमाराध्य कुण्डे तु वृक्षस्वनामहोमयेत् ९
पूर्णाहुतिं च होमान्ते हुत्वा संयोज्य कुम्भके
तन्मूले धृष्णिसंस्थाप्य युगाश्रं वृत्तमेव च १०
पीठं नाळसमायुक्तं पूर्ववत्कारयेद्बुधः
प्रतिष्ठाविधिमार्गेण कारयेत्तु विचक्षणः ११
अक्षिमोऽक्षणमेवन्तु ग्रामप्रदक्षिणं विना
शेषकर्मन्तु सर्वेषु प्रतिष्ठोक्तन्तु वच्चरेत् १२
वेदिकुम्भान् समादाय वृक्षमूलेऽभिषेचयेत्

अर्चनन्द्विविधञ्चैव भोगमोक्षफलप्रदम् १३
तद्रूपं मध्यमेऽभ्यर्च्य पाद्यमाचमनं ददेत्
सन्ध्यां प्रति समभ्यर्च्य पञ्चाङ्गेनैव देशिकः १४
यजनं वस्त्रगन्धं च पुष्पं नैवेद्यमेव च
पञ्चोपचारमेवं तु पूजयेत्तु विशेषतः १५
ब्रह्माणं वृक्षमूले तु विष्णुं मध्ये समर्चयेत्
वृक्षाग्रे रुद्रमभ्यर्च्य शाखासु यक्षभूतकान् १६
नागा गरुडगन्धर्वसिद्धविद्याधरार्चयेत्
धूपदीपसमायुक्तं नृत्तान्ते तु समाचरेत् १७
तद्वृक्षफलमूलादि तद्राष्ट्रमभिवृद्धये
यत्फलं पक्वमेवं च भूमौ तु पतितन्तथा १८
तन्मूले चैव नैवेद्यमपूपादि निवेदिता
सर्वोपचारं कर्तव्यं पूजयेद्देशिकोत्तमः १९
तद्वृक्षे फलहीनन्तु तद्राष्ट्रे कलहो भवेत्
तद्वृक्षं शुष्कमेवन्तु नृपस्य मरणं भवेत् २०
एवं फलश्रुतिं कृत्वा शिवलोके महीयते
दिव्य वृक्षार्चनं प्रोक्तं वल्मीकस्यार्चनन्तथा २१
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इत्यंशुमत्तन्त्रे क्रियापादे वृक्षप्रतिष्ठा विधिपटलः

## उपचारविधिः

उपचारविधिं वक्ष्ये श्रूयतां रविसत्तम
भुक्तिमुक्तिप्रदातव्यं पुत्रपौत्रसमृद्धिदम् १
सावश्यञ्च सौभाग्यं सौख्यं शौचक्रमेव च
चतुर्विधापचारेण अर्चयेद्देशिकोत्तमः २
आसनावाहनञ्चैव पाद्यमाचमनार्घ्यकम्

स्नानं वस्त्रगन्धञ्च पुष्पं नैवेद्यमेव च ३
देशोपचारविख्यातमावश्यकमिति स्मृतम्
आसनावाहनं पाद्यं आचम्यार्घ्यं तथैव च ४
ताम्बूलं धूपदीपं स्यात् शास्त्रोक्तेन समन्वितम्
आरात्र्या भसितञ्चैव चुलुकोदकमिति स्मृतम् ५
षोडशैवोपचारेण सौभाग्यमिति स्मृतम्
आसनावाहनञ्चैव पाद्यमाचमनार्घ्यकम् ६
सुस्नानं वस्त्रगन्धञ्च पुष्पमाभरणं तथा
वेदस्तोत्रध्वनिर्युक्तं नानानृत्तञ्च वाद्यकम् ७
तालं गीतञ्च गानञ्च पञ्चविंशमिति स्मृतम्
आसनावाहनञ्चैव सान्निध्यं पाद्यमेव च ८
आचम्यमर्घ्यदानञ्च स्नानं वस्त्रोपवीतकम्
भूषणं गन्धपुष्पञ्च तथैवामनमर्चनम् ९
नैवेद्यञ्चैव पानीयं करोद्वर्तनमेव च
मुखवासञ्च ताम्बूलं हुतनित्योत्सवं तथा १०
धूपदीपमथारात्र्यामञ्जनञ्चामरं तथा
छत्रञ्च दर्पणं वेदं स्तोत्रगानञ्च नर्तकम् ११
गीतवाद्यञ्च पञ्चाङ्गं श्रावणं भस्ममेव च
मन्त्रार्पणञ्चाष्टपुष्पं अर्चकं चुलुकोदकम् १२
षट् त्रिंशैवोपचारेण शौचं किं त्वति विद्यते
स्नानादौ च तदन्तं चेत् नैवेद्यादौ तदन्तिके १३
धूपादौ च विशेषेण पाद्यमाचमनं ददेत्
पञ्चकालेषु मतिमान् पाद्यमाचमनं कुरु १४
पूजादौ चाभिषेकान्त्ये पूजान्त्ये तु विशेषतः
त्रिकालेष्वर्घ्यदानं स्यात् तत्काले गन्धमाचरेत् १५
आवाहनस्य काले च स्नानान्ते धूपकालके

विलेपने च नैवेद्ये चोत्सवान्ते विशेषतः १६
पूजान्ते तु प्रयोक्तव्यं पुष्पमष्टसु योजयेत्
स्नानान्ते चार्चनान्ते च नैवेद्यस्य कालके १७
पूजाकाले तु तत्पूर्वे स्नानान्ते चार्चनान्त्यके
उत्सवान्ते विशेषेण धूपदीपं समाचरेत् १८
चत्वारि काले मतिमान् धूपदीपं ददेत् प्रभो
स्नानादौ च तदन्ते च अर्चनान्ते तथैव च १९
निवेद्यादौ चोत्सवान्ते तदन्ते नर्तनान्तिके
तत्काले च प्रयोक्तव्यं महाघण्टान्तु ताडयेत् २०
स्नानकाले निवेद्यञ्च बलिभ्रमणकल्पके
धूपदीपादिकाले च सर्ववाद्यसमन्वितम् २१
बलिभ्रमणकाले चाभ्युषःकाले तथैव च
पञ्चकाले विशेषेण शङ्खध्वनिसमाचरेत् २२
स्नानकाले निवेद्यञ्च धूपदीपावसानके
ऋगाऽध्ययनं कुर्यात् त्रिकालेनैव बुद्धिमान् २३
स्नाने नैवेद्य धूपे च पूजायाञ्च विशेषतः
भक्त्यादि स्तोत्रभान्ते च चतुष्कालं समाचरेत् २४
स्नानकाले निवेद्ये च चोत्सवे धूपकालके
पटावरोहं कर्तव्यं चतुष्काले तु बुद्धिमान् २५
एतन्नान्योपचारेण एककाले विशेषतः
एवं क्रमेण विधिवत् सन्ध्येकेन समाचरेत् २६
त्रिपादेन त्रिघटिका साऽवश्यमिति स्मृतम्
सौभाग्य पञ्चघटिका सौख्यकं याममेव च २७
शौचकं दशनाडी स्यात् एवं संपूज्य देशिकः
कालादिक्रमणाद्दोषहीनञ्चोक्तं न दोषभाक् २८
एवं क्रमेण चाभ्यर्च्य सर्वसंपत् समृद्धिदम्

इत्येवं अंशुमान् तन्त्रे उपचारविधिक्रमम् २९
इत्यंशुमान् तन्त्रे उपचारविधिः पटलः

## नित्याग्निकार्यविधिः

नित्याग्नियजनं वक्ष्ये श्रूयतां रविसत्तम
पचनालये तथा देवस्याग्नेये वा विशेषतः १
वृत्तं वा चतुरश्रं वा कुण्डमेकं तथैव च
तस्यालये विशेषेण ईशे योनिनिभं कुरु २
प्राक्सूत्रं न्यसेत्पूर्वं मध्यमं दक्षिणोत्तरे
पश्चात्पश्चिमपूर्वन्तु यावत्कुण्डस्य विस्तरम् ३
कुण्डविस्तारमानेन चतुर्विंशाङ्गुलं भवेत्
अब्धिसंख्या च निम्नन्तु खण्डं व्योमाङ्गमेव च ४
मेखला शक्तिसंख्या च योन्यां संयममेव च
विस्तारं धातु संख्या च नाभिरष्टाङ्गुलं भवेत् ५
अङ्गमामिदं प्रोक्तं नित्यकुण्डं विशेषतः
सद्येन शोधयेत्कुण्डं क्षालयेन्नाममन्त्रतः ६
शोषणं घोरमन्त्रेण वचनं पुरुषेण तु
प्रोक्षणस्पर्शमन्त्रेण हृदयेन समर्चयेत् ७
शरावेणाग्निमादाय क्रव्यादांशं परित्यजेत्
अर्घ्यं शिरसि मन्त्रेण पुष्पेणाभ्यर्च्य देशिकः ८
कवचेनाग्निमादाय मूलेनैव प्रतिष्ठितम्
तस्य मध्ये समावाह्य शिवं सपरिवारकम् ९
हृण्मन्त्रेण समभ्यर्च्य पाद्यमाचमनं ददेत्
अर्घ्यं गन्धञ्च पुष्पञ्च धूपं दत्वा स मूलतः १०
दर्भेणैव परिस्तीर्य अधिदेवादिमन्त्रकैः
इन्धनादि चतुर्द्रव्यं नित्यसन्ध्यादिहोमकम् ११

इन्धनं हृदयेनैव आज्यं नेत्रमन्त्रवित्
समिधं ईशमन्त्रेण चरुं तत्पुरुषेण तु १२
अष्टादशाहुतिं हुत्वा विकारं दश संख्यया
गन्धपुष्पैः समभ्यर्च्य कुर्याद्वै परिषेचनम् १३
कुण्डस्य नैर्ऋते देशे अष्टमूर्तिबलिं क्षिपेत्
परिस्तरणमानीय अग्नौ निक्षिप्य देशिकः १४
तद्भस्मा सङ्गृहीत्वा तु ललाटे चाङ्गुलिं न्यसेत्
निष्ठुरेणाग्निमादाय मूललिङ्गे समर्चयेत् १५
नित्याग्नियजनं प्रोक्तं नित्योत्सवविधिं शृणु १६
इत्यंशुमान् तन्त्रे नित्याग्निविधिः पटलः

भोगाङ्गविधिः

भोगाङ्गाराधनं वक्ष्ये श्रूयतां रविसत्तम
भोगमोक्षफलञ्चैव पुत्रपौत्रविवर्द्धनम् १
सर्वपापविनाशार्थं ब्रह्महत्यादि नाशनम्
सर्वलोकवशीकारं धनधान्यसमृद्धिदम् २
वेदाग्रे दक्षिणे भागे मण्टपं संप्रकल्पयेत्
सम्मार्ज्य मण्टपेनैव हुङ्कारं मन्त्रमुच्चरन् ३
गोमयालेपनं कृत्वा भूबीजे तु मन्त्रतः
स्नानशुद्धिरिति प्रोक्तं द्रव्यशुद्धिं ततः शृणु ४
तैलेन पिष्टचूर्णेन रजनीञ्च जलेन तु
वस्त्रैर्माल्यैश्च धूपैश्च चन्दनैर्हिमतोयकैः ५
कुङ्कुमं हरिबेरं स्यात् गुग्गुलुं हरिचन्दनम्
गोक्षीरं दीपतैलं स्यात् गुलमात्रफलैर्युतम् ६
नैवेद्यञ्चोपदंशं स्यात् अपूपं कन्दमूलकम्
फलस्य त्रिगुणं पत्रं चूर्णयुक्तं स तैलकम् ७

सुगन्धतोयकैश्चैव शतपुष्पं स मल्लिकाम्
शतपत्रद्विगुणी च दीप्यपुष्पं सुगन्धकैः ८
चिह्नवस्त्रसमायुक्तं शतद्वीपद्वयं भवेत्
शतार्द्धसंख्यया चैव अथवा पञ्चविंशतः ९
दीपज्वालासमायुक्तं चतुस्त्रिंशत्यङ्गुलायुतम्
स्थलिकापात्ररहिते तत्तत्पात्रे तु संग्रहेत् १०
पञ्चामृतेन कर्तव्यं अन्यभक्तयादिकैर्युतम्
यागोपकरणद्रव्यैः अस्त्रेण प्रोक्ष्य देशिकः ११
पुण्याहं वाचयेत्तत्र प्रोक्षयेच्छिवमस्त्रतः
वीरविघ्नजगन्नाथ त्रैलोक्यजगनायकः १२
भोगाङ्गपूजनञ्चैव निर्विघ्नं ++ प्रसीद मे
देवदेवं नमस्कृत्वा द्वारदेवान् प्रपूजयेत् १३
ध्वनिकाञ्च परित्यज्य गर्भद्वारं समर्चयेत्
भीमरुद्रां समभ्यर्च्य धूपं दत्वा विशेषतः १४
निर्माल्यन्तु विसृज्याथ पुष्पमूर्ध्नि विनिक्षिपेत्
लिङ्गपीठं स्थले चैव जलेनैवाभिषेचयेत् १५
स्नानान्तमन्त्रपुष्पञ्च पुष्पान्ते तु निवेद्यकम्
वस्त्रे खण्डेन सम्मार्ज्य लिङ्गपीठे स्थलेन च १६
सितवस्त्रैरलङ्कृत्य गन्धमालैर्विचित्रयेत्
किञ्चिद्भेदं विशेषेण बलिहोमं विवर्जितम् १७
द्वारादिक्षेत्रपर्यन्तं भोगाङ्गमिति विद्यते
भोगाङ्गपूजनञ्चैव तत्काले भूतनाडिका १८
पूजयेत्तु क्रमेणैव सौभाग्यमिति विद्यते
मूलबिंबे विशेषेण धूपदीपं ततः क्रमात् १९
नीराञ्जनं ततो दद्यात् तिलकं दापयेत्ततः
ताम्बूलं दापयेत्पश्चात् सामवेदं ध्वनिर्युतम् २०

स्तोत्रनृत्तादि वाद्यैश्च गानं तद्गुणसंख्यया
स्थलिका मध्यके चैव वस्त्रं तच्चतुरस्त्रकम्   २१
स्थलिका मध्यके चैव वस्त्रं तच्चतुरस्त्रकम्
तन्मध्ये वृषमावाह्य तस्योर्ध्वे पादुकेन तु   २२
तन्मध्ये शिवमावाह्य शङ्खघोषसमन्वितम्
काहलस्तालशङ्खैश्च वीणावेणुध्वजैस्तथा   २३
नानादीपसमायुक्तं नानाच्छत्रसमन्वितम्
नानावाद्यसमायुक्तं नानास्त्रीपरिसेवितम्   २४
चामरं तालबृन्दञ्च दासिकैश्च प्रदापयेत्
गणिकापञ्चविंशश्च गानभाषोत्थकैस्सह   २५
परिचारकमाहूय शिबिकाय प्रदापयेत्
शिबिकोर्ध्वे समादाय आचार्यस्सहितो भवेत्   २६
पदं प्रतिविशेषेण नृत्तगीतादिवाद्यकैः
देवाग्रे भोगशक्त्याग्रे स्तोत्रनृत्तैर्विशेषतः   २७
पाद्यं पादतले चैव पुष्पमर्घ्यं प्रणम्य च
शयनस्थानके चैव आचार्यं मूलमन्त्रतः   २८
पर्यङ्के शिवमावाह्य वस्त्रयुग्मं ततोपरि
गर्भगेहं प्रविश्याथ वीरशक्तिं समर्चयेत्   २९
स्थलिका मध्यमे चैव वस्त्रं तच्चतुरश्रकम्
तन्मध्ये वृषमावाह्य तस्योर्ध्वे पादुकेन तु   ३०
तन्मध्ये गौरीमावाह्य पुष्पेणैव समर्चयेत्
शयनस्थानप्रवेशञ्च पर्यङ्के तु समर्पयेत्   ३१
पाद्यमाचमनं दद्यात् नैवेद्यं दापयेत्ततः
अपूपादिनिवेद्यं स्यात् ताम्बूलं क्रमुकादिकम्   ३२
धूपदीपं समभ्यर्च्य आरात्र्यं भस्मकं भवेत्
कवाटबन्धनं कृत्वा कामराजं समर्पयेत्   ३३

देशिकः शिष्यसंयुक्तं क्षेत्रपालं समर्चयेत्
नैवेद्यं दापयित्वा तु धूपदीपादिकं ददेत् ३४
तिलकं दापयित्वा तु लोकरक्षार्थकं भवेत्
क्षेत्रेशं क्षेत्ररक्षार्थं पूजा स्यादर्द्धयामके ३५
ज्ञानातिरिक्तं विज्ञाप्य क्षमस्वेति प्रणामयेत्
ग्रादेशिकः शिष्यसंयुक्तं स्वगृहं प्रविशेत्ततः ३६
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ३७
इत्यंशुमान् तन्त्रे भोगाङ्गार्चनाविधिः पटलः

## नित्यपूजाविधिः

ग्रतः परं प्रवक्ष्यामि नित्यपूजाविधिक्रमम्
सप्तजायामयुक्तश्चेत्तस्य भेदं च वक्ष्यते १
सार्धेन नाडिका सप्त यामं तत्सन्धिरुच्यते
सन्धयोष्टौ समाख्यातमहोरात्रमिति स्मृतम् २
उदये चैव मध्याह्ने प्रदोषे वार्धयामके
महासन्धिरिति ख्यात उपसन्धिचतुष्टयम् ३
ग्ररुणसन्धिं समारभ्य महासन्ध्यान्तरान्तरे
ग्ररुणपूजां समारभ्य तत्पूजामेव कथ्यते ४
भास्करस्योदयात्पूर्वे नाडिकापञ्चकं मतम्
उत्थाय कृत्वा स्नानादि पूर्वोक्तविधिना नयेत् ५
महामण्टपमास्थाय पूजोपकरणं यथा
एवं सर्वं समापाद्य शुद्धिं कृत्वा महीतले ६
विघ्नेशं पूजयेत्पूर्वं द्वारपानि प्रार्थयेद्गुरुः
पूर्वं बध्व कवाटं च नीत्वा हृदयमन्त्रतः ७
स्वगुरुं प्रार्थयित्वा तु देवेशं प्रार्थयेत्ततः
शंखध्वनिसमायुक्तं देव्यालयं प्रवेश्य च ८

द्वाररक्षान्समाहूय शीघ्रं नीत्वा कपाटकम्
देवदेवीं नमस्कृत्वा पूजां विज्ञाप्य देशिकः ९
स्थलिकोर्ध्वे समारोप्य वस्त्रेणावेष्टयेत्ततः
समस्तैः परिवारैश्च शीघ्रं गत्वा समाविशेत् १०
मूललिङ्गे समायोज्य उपांगं दक्षिणे न्यसेत्
शन्नो देवीति मन्त्रेण प्रत्यंगं नैर्ऋते स्थिताम् ११
शुद्धद्वारं च संप्राप्य विघ्नेशं देहळीं न्यसेत्
लिंगशुद्धिः ततः कृत्वा प्रासादं मन्त्रमुच्चरन् १२
क्षीराभिषेकं कर्तव्यं शुद्धतोयाभिषेचयेत्
मृत्युञ्जयं समुच्चार्य शुद्धतोयाभिषेचनम् १३
मूलमन्त्रमनुस्मृत्य मन्त्रपुष्पं च दापयेत्
पायसान्नं निवेद्याथ धूपदीपं ददेद्गुरुः १४
सकळादिषु बेराणां पूर्वपुष्पं व्यपोह्य च
पायसं लाजनैवेद्यं चार्घ्यं दद्यात्क्रमेण तु १५
चण्डपूजां विना कुर्यादुपसन्धिरिति स्मृतम्
प्रातस्सन्धिविशेषेण सौरपूजाविधिं शृणु १६
तत्पुरुषार्थं प्रकर्तव्यमघोरं वाचक्रमेव वा
प्राणायामत्रयं कृत्वा प्रत्येकं दशमात्रकम् १७
रेचकं पूरकं चैव कुम्भकं च क्रमेण तु
रेचकादित्रयं प्रोक्तं सर्वदोषनिवारणम् १८
प्राणायामात्परं पुण्यं न भूतो न भविष्यति
गुरुप्रसादहीने च तत्फलं नैव लभ्यते १९
करन्यासं तु तत्पूर्वं मंगन्यासमतः परम्
तलपृष्ठद्विधायामं सकृत्सव्यं समालभेत् २०
अस्त्रवह्निशिखादण्डौ शक्त्या संप्रापयेत्करौ
अंगुष्ठादिकनिष्ठान्तं सृष्टिन्यासमुदां हृतम् २१

कनिष्ठाद्यंगुष्ठान्तं यत् संहारन्यासमुच्यते
दक्षिणांगुष्ठमादिः स्यात्कनिष्ठादितरे ततः २२
दशबीजं न्यसेद्धीमान् सन्धिन्यासमितः परम्
तर्जन्यन्तं तु मध्यादि क्रमादंगानि विन्यसेत् २३
न्यसेद्धस्ततले नेत्रं तर्जन्यामस्त्रकं न्यसेत्
स्थितिन्यासमिति प्रोक्तं न्यासत्रयमिति स्मृतम् २४
ब्रह्मचारिगृहस्थानां सृष्टिश्च स्थितिरेव वा
अपत्नीको वनस्थश्चेत् संहारन्यासमुच्यते २५
करन्यासं समाख्यातमंगन्यासमतः परम्
मूर्धादिसृष्टिदं प्रोक्तं पादादि संहृतिर्भवेत् २६
हृदयादि षडंगं चेत् स्थितिन्यासमितः परम्
ईशानं मूर्ध्नि विन्यस्य मुखे तत्पुरुषं न्यसेत् २७
अघोरं हृदि विन्यस्य वामदेवं तु गुह्यके
सद्यो जातं तु जानुभ्यां हृदयं हृदि विन्यसेत् २८
शिरश्शिरसि विन्यस्य शिखायां तु शिखां न्यसेत्
वौषडन्तेन मन्त्रेण कवचं स्तनमध्यतः २९
लोचनेषु न्यसेन्नेत्रं अस्त्रं हस्तप्रदेशतः
ईशानाद्यस्त्रपर्यन्तमधिदेवांस्ततः शृणु ३०
ईशानश्च महादेवः पुरुषः परशुधारिणः
अघोरो रुद्रमूर्तिश्च वामदेवो महेश्वरः ३१
सद्योजातश्शिवः प्रोक्तः पञ्चब्रह्मादिमूर्तयः
शिवरूपी जटाधारी कर्पदी कालकण्ठकः ३२
पाशांगी परशुपाणिश्च षडंगाधिपमूर्तयः
हृत्पद्मे कल्पयेद्देवं पञ्चब्रह्मकलामयम् ३३
ब्रह्मांगं विन्यसेत्पूर्वं विद्यांगानि ततो न्यसेत्
अंगुष्ठमात्रमचलं ध्यायेदोंकारमीश्वरम् ३४

आसनानि च सर्वाणि तथैवाभरणानि च
हृत्पद्मे कल्पयेद्धीमान् अन्यथोक्तं तथा भवेत् ३५
गन्धाद्यैरुपचारैस्तु मनसा कल्प्य पूजयेत्
सौरादि चण्डपर्यन्तं दिवा पूजां समापयेत् ३६
चन्द्रादि चण्डपर्यन्तं निशि पूजां समापयेत्
द्वारादि क्षेत्रपालान्तं भोगांगानि समर्पयेत् ३७
अरुणसन्ध्यार्चनान्ते तु प्रातस्सन्धिरिहोच्यते
प्रथमं भूतशुद्धिं च अन्तर्यागमतः परम् ३८
सौरं च भूतशुद्धिं च ध्यानपूजासमन्वितम्
मातृकां च कलान्यासं तत्पूर्वं विन्यसेद्बुधः ३९
निशि पूजाविशेषोऽस्ति सकळीकरणमात्रकम्
प्रणवार्घ्यं च संकल्प्य पञ्चवारं जपेद्बुधः ४०
पूर्वास्यश्चोत्तरास्यश्च भानुं संपूजयेत्ततः
दण्डिनं पिंगळं चैव गणेशं गुरुमेव च ४१
प्रभूतासनमेवं च विमलासनमेव च
सौरायाचमनं चैव आराध्यं परमाध्य च ४२
सुखासनपरप्रोक्तं पद्मासनमिति स्मृतम्
कर्णिकां च यजेन्मध्ये पूजयेत्तु यथा क्रमम् ४३
दीप्तायै चैव सूक्ष्मायै जयायै च नमोऽन्तकम्
भद्रायै च विभूत्यै च विमलायै नमोनमः ४४
अमोघविद्युता चैव सर्वतो मुख्यमेव च
गन्धैः पुष्पैश्च मध्यादि ईशानान्तं समर्चयेत् ४५
दक्षिणे उत्तरे चैव उषान्तं प्रत्युषामपि
तदन्ते त्वासनं कल्प्य मूर्तिध्यानमनुस्मरन् ४६
श्वेतारविन्दमध्यस्थं जपाकुसुमसन्निभम्
भास्वद्रुधिरसंकाशं तेजो मण्डलमध्यगम् ४७

भुजासक्तसमुत्फुल्लसनाळोब्जं द्विहस्तकम्
एकवक्त्रं रविं ध्यायेद्रक्तवस्त्रं द्विनेत्रकम् ४८
मूर्तिमूलं च विन्यस्यादावाहनादि मुद्रया
धेनुमुद्रां महामुद्रां पद्ममुद्रां प्रदर्शयेत् ४९
विस्फुरामुद्रया चैव सौरपूजां समर्पयेत्
किंचिद्भेदविशेषोऽस्य चक्रं वा बेरमेव वा ५०
बेरं चेत्तु विशेषेण नैवेद्यं धूपदीपकम्
क्रियापूर्तिनिमित्ताय विघ्नेशं प्रार्थयेद्गुरुः ५१
दर्भद्वयं सु संग्राह्य द्वादशांगुलमायतम्
आचार्यदक्षिणे हस्ते नामिकायां तु बन्धयेत् ५२
प्राणायामत्रयं कृत्वा प्रणवेन समन्वितम्
वामहस्तेन संयोज्य दक्षजानूपरि न्यसेत् ५३
एतत्कर्म करिष्यामि दर्भौद्वासनमुत्तरे
जलोपस्पर्शनं कृत्वा दर्भौ दत्वाथ देशिकः ५४
पात्रमुद्धरणं कृत्वा गन्धतोयेन पूरयेत्
आपो वा इति मन्त्रेण अस्त्रेणैवाथ कारयेत् ५५
ब्रह्मा विष्णुश्च रुद्रश्च नन्दिकाळौ तथैव च
पूर्वाद्युत्तरपर्यन्तं स्वस्वनाम्ना समर्चयेत् ५६
गंगे च यमुने चैव गोदावरि सरस्वति
नर्मदा सिन्धुकावेरी जलेऽस्मिन्संनिधिं कुरु ५७
स्वस्वमन्त्रैस्समभ्यर्च्य गन्धैः पुष्पैश्च पूजयेत्
शिवतण्डुलमुत्कृष्टं मध्यमं तु तदर्धकम् ५८
द्विप्रस्थमधमं प्रोक्तं तण्डुलैरुडुसन्निभैः
कांस्य पात्रेण संस्थाप्य ताम्बूलं फलसंयुतम् ५९
बृहतीफलसंयुक्तं दर्भपुष्पसमन्वितम्
स्थलिकां चन्द्रमभ्यर्च्य तण्डुलैस्तारका अपि ६०

पुण्याहं वाचयिष्येति भवद्भिः पदपूर्वकम्
प्राग्गुरुर्वाचयित्वा तु वाच्यतामिति विप्रकाः ६१
आपप्रयोगमाचार्यश्शिवापस्सन्तु वाक्यकम्
गन्धाश्चमिति आचार्यः सुगन्धाः प्रतिवाचकम् ६२
देशिकस्सुमनाश्चैव सौमनस्यं तु विप्रकाः
अक्षितं देशिकश्चैव विप्रैस्तु प्रतिवाचकम् ६३
अन्याहार्यस्तथा मन्त्री सोऽन्याहार्योऽस्तु भूसुराः
देशिको दक्षिणां दत्वा विप्रैस्तु प्रतिवाचकम् ६४
बहूदयस्तु आचार्यः विप्रैस्तु प्रतिवाचकम्
देशिकस्तु जपित्वा तु जपेयु ब्राह्मणैस्सह ६५
वर्धनीं हृत्समुत्थाय चोर्ध्वे तण्डुलपात्रकम्
मनस्समाधीयतेत्यादि ब्राह्मणैः प्रतिवाचकम् ६६
प्रीयतां देवमित्युक्त्वा प्रीयतां ब्राह्मणैस्सह
यद्देवोद्दिश्यं पुण्याहं तद्देवः प्रीयतामिति ६७
स्वस्तिमध्ये तु यत्कर्म तत्कर्मस्वस्तिवाचकम्
साधकस्तद्द्विजः कृत्वा अस्तु तत्कर्म विप्रकाः ६८
ऋद्धियाचक्रमाचार्यो ऋध्यतामिति भूसुराः
घ्राणेन स्त्रावयेत्तोयं पूर्वे वा चोत्तरेऽपि वा ६९
तेनैव राक्षसाद्याश्च तृप्तिमाप्नोति ते ध्रुवम्
स्थापयेत्तण्डुलोर्ध्वे पुनश्चासनमर्चयेत् ७०
आपोहिष्ठेति मन्त्रेण हिरण्यं पावमानकम्
जपान्ते शान्तिमित्युक्त्वा धूपदीपादिनार्चयेत् ७१
एवं क्रमेण पुण्याहं पञ्चगव्यं च कथ्यते
तण्डुलैः स्थण्डिलं कृत्वा शस्त्रमन्त्रमनुस्मरन् ७२
प्रागग्रमुदगग्रं च वेदसूत्राणि लेखयेत्
मध्यमेकपदं चैव पूर्वाद्यष्टपदं भवेत् ७३

मध्यमे शिवतत्वं तु पूर्वकोष्ठे सदाशिवः
विद्यातत्वं तु दक्षिरगयां पुरुषं तत्वमुत्तरे ७४
पश्चिमे कालतत्वं तु पृथ्वीतत्वं तु पार्श्वके
आप्तत्वं निर्ऋती कोष्ठे गन्धपुष्पादि नार्चयेत् ७५
सुप्रतिष्ठासुशान्तं च तेजावद्रत्नतामृतम्
अव्यक्तं कालनियतिः कलास्थानं प्रकल्पयेत् ७६
क्षीरदध्याज्यगोमूत्रं गोमयान्तक्रमेण तु
मध्यादीशानपर्यन्तं ईशानादीनि पूजयेत् ७७
सुप्रतिष्ठेति पात्रं च मूलमन्त्रेण योजयेत्
अथ मन्त्रप्रकारं च सावित्रीं च जपेद्बुधः ७८
धूपदीपसमायुक्तं दर्भैराच्छाद्य देशिकः
पञ्चगव्यमिदं प्रोक्तं पञ्चामृतविधिं शृणु ७९
शालिभिः स्थण्डिलं कृत्वा पञ्चकोष्ठं समालिखेत्
पूर्वाग्रं चोत्तराग्रं च द्विधासूत्रं प्रसारयेत् ८०
पूर्वाद्युत्तरपर्यन्तं सूत्राग्रे तिर्यगालिखेत्
पृथिव्यापस्तेजावायुराकाशान्संप्रपूजयेत् ८१
मध्यमे गन्धतत्वं तु रसतत्वं तु पूर्वके
दक्षिणे रूपतत्वम् तु स्पर्शतत्वं तु पश्चिमे ८२
उत्तरे शब्दतत्वं तु पञ्चपात्रेषु पूजयेत्
मध्यपात्रे मधुन्यस्य क्षीरं पूर्वे तु विन्यसेत् ८३
दक्षिणे दधिविन्यस्य चोत्तरे घृतमेव च
पश्चिमे शर्करादि स्यात् पञ्चब्रह्मप्रपूजयेत् ८४
मध्वादि शर्करान्तं च कुडुवाद्विगुणवर्धनात्
धूपदीपसमायुक्तं तोयस्नानान्तरान्तरे ८५
पञ्चामृतमिति प्रोक्तं द्वारपूजा विधिं शृणु
शुद्धद्वारं च संप्राप्य गणेशं च समर्चयेत् ८६

पतंगं च भुवंगं च चोर्ध्वाधस्संप्रपूजयेत्
पतंगोर्ध्वे गणेशं च तस्य वामे सरस्वतीम् ८७
मध्यमे तु महालक्ष्मीं पूजयेत्तु विशेषतः
द्वारस्य दक्षिणे नन्दिं गंगां चैव तदुत्तरे ८८
वामभागे महाकाळं यमुनां तस्य दक्षिणे
विमलं च सुबाहुं च पूजयेत्तु कवाटयोः ८९
तत्स्कन्दपट्टिका मध्ये श्रीदेवीं तत्र विन्यसेत्
पूर्वे तु वृषभं यष्ट्वा विघ्नोच्चाटनमस्त्रकैः ९०
घण्टां तु ताडयेद्धीमान् अस्त्रमन्त्रमनुस्मरन्
पादांगुष्ठेन कर्तव्यं भूमिं तत्रैव घातयेत् ९१
दक्षिणं पादमुद्धृत्य मण्टपान्तः प्रवेशयेत्
निर्माल्यं तु विसृज्याथ अनन्तासनमर्चयेत् ९२
आधारशक्तिराख्याता अनन्तं वासुकिं तथा
तक्षकं पद्मकं चैव महाब्जं शंखपालकम् ९३
कार्कोटं गुळिकं चैव अनन्तासनमिष्यते
धर्मं ज्ञानं च वैराग्यं ऐश्वर्यं च चतुष्टयम् ९४
अधर्माज्ञानावैराग्यं अनैश्वर्यं तथा भवेत्
सिंहासनमिदं प्रोक्तं योगासनमथ शृणु ९५
कृतत्रेतायुगं चैव द्वापरं च कलौ युगम्
अव्यक्तं केशवं चैव निश्वतं कालमेव च ९६
कलये चैव कर्तव्यमूर्ध्वाधश्छदनं तु वा
एवं योगासनं प्रोक्तं पद्मासनमथोच्यते ९७
कन्दमंकुरमेवं च नाळं च मुकुळं तथा
कण्टकं दळके सर्यं कर्णिका बीजमेव च ९८
वामादिशक्तयश्चाष्टौ मनोन्मन्यन्तमर्चयेत्
पद्मासनमिदं प्रोक्तं विमलं चासनं शृणु ९९

सूर्यश्च ब्रह्मणश्चैव सोमो विष्णुस्तथैव च
अग्निश्चैव तथा रुद्रः शक्तिश्शिव इति स्मृतम् १००
आसनानि च संस्नाप्य पिष्टामलकमर्दयेत्
रजनी मुगचूर्णैश्च कर्षयेच्च पुनः पुनः १०१
ऋगाद्यध्ययनं कुर्याद् भूसुरेण जपेत्सह
शुद्धतोयेन संस्नाप्य बीजमुख्यमनुस्मरन् १०२
शुद्धतोयेन संस्नाप्य प्रासादं मन्त्रमुच्चरन् १०३
अभ्यंगपिष्टामलकादिगव्यममृताय दुग्धं दधिमेव सर्पिः
मधुश्च इक्षुः फलनाळिकेरं सुगन्धधारास्नपनेन शंखम् १०४
वस्त्रेणोद्वर्तनं कुर्याद् बलिपीठं विशेषतः १०५
तदन्ते मन्त्रपुष्पं च प्रतिमन्त्रेण योजयेत्
आत्मविद्या शिवाख्यं च नमोन्तैरर्चयेच्छिवम् १०६
मन्त्रान्नं च निवेद्याथ शिवमन्त्रमनुस्मरन्
वस्त्रैराभरणाद्यैश्च अलंकृत्य विशेषतः १०७
अर्कारविन्दबिल्वं च नन्द्यावर्तं तु पाटलम्
चाम्पेयं करवीरं तु चेन्दीबरमथाष्टकम् १०८
पीठशक्तिशिवांगानां पूजासान्त्यष्टपुष्पकान्
मकुटे मूर्ध्नि कण्ठे च हृदये नाभिगुह्ययोः १०९
जानुनोः पादयोश्चैव अष्टपुष्पाणि पूजयेत्
पञ्चावरणमार्गेण अर्चयित्वा स्वनामतः ११०
ईशतत्पुरुषाघोरवामसद्य क्रमेण तु
अम्बीं चैव गणाम्बीं च गंगां गौरीमुमां तथा १११
हृदयं च शिरश्चैव शिखाकवचमेव च
नेत्रमस्त्रं च कर्तव्यं शंकीणां च क्रमेण तु ११२
वामी नीली च चक्री च पाशांगी खड्गजृम्भिका
अनन्तेशस्तथा सूक्ष्मः शिवोत्तमश्चैकनेत्रकः ११३

एकरुद्रस्त्रिमूर्तिस्तु श्रीकराठश्च शिखरिाडकः
भूमिः स्वाहा स्वधा क्षान्ति प्रभा पुष्टिः श्रुतिस्तथा ११४
कीर्तिर्मेधा च कर्तव्यं तत्तद्वामे समर्चयेत्
गौरी चराडेशनन्दीशो महाकाळवृषस्तथा ११५
गरोशश्चैव भृंगेशो महासेनो गरोश्वरः
भद्रा च देवयानी च कुन्दळी च तथैव च ११६
भृंगिराी गादिनी चैव रूपिराी च सरस्वती
स्वस्वनाम्ना समभ्यर्च्य तृतीयावरगं कुरु ११७
इन्द्रश्शची च विपुलमग्निः स्वाहा स्वधा तथा
यमी च काळकराठी च नीली च ॠतिस्तथा ११८
जाता चैव सुकेशी च वरुरां ह्लादिनी तथा
हर्षिरायपि च कर्तव्यं वायुं च महिषं तथा ११९
मंगळीं चैव सोमं च शुद्धिं चैव स बृत्ययुक्
ईशानं च जितं चैव स्वस्वरूपिरामेव च १२०
विष्णुं श्रीभूमिसहितं विधिं सावित्रिमेव च
सरस्वतीं च कर्तव्यं तत्तन्नाम्ना प्रपूजयेत् १२१
वज्रं शक्तिं च दराडं च खड्गं पाशांकुशं तथा
गदा त्रिशूलं पद्मं च चक्रं चेति दशायुधम् १२२
प्रसन्नां चैव कोपां च गुरात्मीं कोमळात्मिकाम्
विषात्मी विकृतां चैव माता चैव महात्मिका १२३
मंगळां चैव कर्तव्यं स्वस्वनाम्ना समर्चयेत्
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा १२४
वाराही चैव माहेन्द्री चामुराडी सप्तमातरः
वीरभद्रं च विघ्नेशं रक्षार्थं मातृपार्श्वयोः १२५
दळाग्रे वृषविघ्नेशान् पीठकस्य गरोश्वरः
पीठपादे महेन्द्रादीन् तदस्त्राणि शिलोपरि १२६

धूपदीपसमायुक्तं नैवेद्यं च प्रदापयेत्
गणानान्त्वेति मन्त्रेण गणेशस्य निवेदयेत् १२७
शाम्भवीं मन्त्रमुच्चार्य शिवस्य च निवेदयेत्
अहमस्मीति मन्त्रेण भूसुरैश्च जपेत्ततः १२८
आचमनं च कर्तव्य महासा च निवेदयेत्
सकळादिषु कर्तव्यं नैवेद्यं च यथाक्रमम् १२९
नित्याग्नियजनं पश्चादैशान्ये सौम्यकेऽपि वा
आग्नेयादि विशेषं वा चुल्यै वाथ प्रकल्पयेत् १३०
कुण्डे वा स्थण्डिले वापि होमयेत्तु विचक्षणः
प्रथमं शोधयेत्कुण्डं पञ्चसंस्कारमाचरेत् १३१
अग्निबीजमनुस्मृत्य अग्निं प्रज्वाल्य देशिकः
परिषेचनं ततः कृत्वा अदितेन्वादिमन्त्रकैः १३२
व्याहृतिं होमयेत्तत्र इध्मं पञ्चसकूर्चने
आज्यं हुत्वा हृदामन्त्री हविषं चावहूतये १३३
प्रत्येकं दशसंख्येन सप्तधाख्याभिरेव वा
ब्रह्मांगेन ततो हुत्वा पूर्णाहुतिमथाचरेत् १३४
प्रणीताघारसमिधब्रह्मकूर्चैर्विनाचरेत्
त्रिकालं वा द्विकालं वा एककालमथाचरेत् १३५
बलिबेरं समभ्यर्च्य विज्ञापनमथाचरेत्
तत्काले ताडयेद्भेरीं शुद्धपारशिवा स्मृताः १३६
सर्ववाद्यसमायुक्तं घण्टानादसमन्वितम्
द्वारस्य दक्षिणे पार्श्वे नन्दीं तस्य बलिं ददेत् १३७
वामभागे महाकाळं स्वस्वमन्त्रेण दापयेत्
वृषस्य बृषताळेन वृषमन्त्रेण दापयेत् १३८
आग्नेय्यामग्निमन्त्रेण भृंगिनी ताळमेव च
गणदेवबलिं दद्यात् स्वस्वनाम्नैव देशिकः १३९

मन्त्रणा चराडवाद्यं च विघ्नेशस्य तु भृंगनी
षरामुखं कटताळेन ज्येष्ठायां पुन्निताळकम्  १४०
तट्प्रभारदुर्गायां विषमच्छिन्नचराडके
प्रथमे च म पीठे भास्करस्य बलिं ददेत्  १४१
गोपुरद्वारपार्श्वे तु दरािडमुरािडबलिं ददेत्
वृषस्य वृषताळं च इन्द्रस्य समताळकम्  १४२
गान्धारं भुजगं नृत्तं बलिं दद्यात्क्रमेरा तु
आग्नेयां दिशि यं च स्तुत्वा बध्वा वर्णं तथा  १४३
कोल्लिं सुस्त्यकृतं चैव भृंगिरायां कौशिकं तथा
दराडपादं च कर्तव्यं धर्मराजबलिं ददेत्  १४४
नैर्ऋते मल्ळताळं च श्रीकामरमिति स्मृतम्
वृत्तनीनृत्तमाख्यातं बलिं दद्यात्क्रमेरा तु  १४५
वरुणे नवताळं तु प्राश्रीकामरं तथा
नृत्तं कुञ्चितमाख्यातं वरुणं बलिं ददेत्  १४६
वायव्ये बलिताळं च तक्केशी भ्रमरी तथा
कोटिकं दक्करागेरा आलीढनृत्तमेव च  १४७
धननाथस्य मन्त्रेरा बलिरित्यभिधीयते
ईशाने शंकरी चैव साळापाणि भुजंगकम्  १४८
ब्रह्माविष्णुश्च कर्तव्यं सर्ववाद्यसमन्वितम्
ईशानं दक्षिणे ब्रह्म निर्ऋतिर्वामेन विष्णुजः  १४९
वामवाथ प्रकर्तव्यं दम्पती सूत्रमध्यमे
पीठस्यावृतकर्तव्यं वज्रादीनां बलिं ददेत्  १५०
आमोदादि दळाग्रेषु तन्मूलेव बलिं क्षिपेत्
आमोदश्च प्रमोदश्च सुमुखो दुर्मुखस्तथा  १५१
अविघ्नो विघ्नकर्तारः षडेते भूतनायकाः
शाम्बरी मेघरागं च भुजंगत्रासनृत्तकम्  १५२

बलिदानं च कर्तव्यं विशेषः कथ्यते धुना
ध्यानम् । मुखपञ्च समवक्त्रसमनासिनयनम् १५३
दशकर्ण दशबाहु दशदृग्गळमेकहृदयं तु अतिरक्तवर्णम्
द्वयपादमिति भूतबलिपीठबलिधृक् १५४
शालिमण्टयुक्तं चेद् अन्तस्थं परिवारकम्
बाह्ये पीठं च संस्थाप्य बलिं तत्रैव कारयेत् १५५
अशिवाबेरपीठं च बाह्योस्थापनमेव च
पंक्तियोगं च कर्तव्यं क्रमयोगमथापि च १५६
पंक्तियोगे विशेषं च ब्रह्मविष्णू विना चरेत्
दण्डमुण्डवृषं चैव भास्करस्य बलिं विना १५७
महापीठं च कर्तव्यमामोदाद्यष्टमूर्तयः
आमोदं पूर्वभागे तु आग्नेय्यां तु प्रमोदकम् १५८
सुमुखं दक्षिणे चैव दुर्मुखं नैर्ऋते तथा
अविघ्नं वायुदिग्भागे सात्विके वायुदिग्गतम् १५९
तामसं सोमदिग्भागे ऐशान्ये राजसं भवेत्
विघ्नकर्तारमूर्ध्वे तु स्वस्वनाम्ना प्रदापयेत् १६०
गीतनृत्तसमायुक्तं बल्यन्ते वा विशेषतः
शनैः प्रदक्षिणं कृत्वा गीतवाद्य समन्वितम् १६१
पादप्रक्षाळनं कृत्वा पूर्वस्थाने निवेशयेत्
पाद्यमाचमनं चार्घ्यमपूपादि निवेदयेत् १६२
आरात्रिकं च कर्तव्यं भस्मानि दापयेत्ततः
मूलदेवं च संप्राप्य धूपदीपं ददेत् क्रमात् १६३
ताम्बूलं दर्पणं चैव छत्रं चामरमेव च
अंजनादीनि सर्वाणि हृदयेन प्रदापयेत् १६४
ऋग्वेदादि पुराणान्तं भूसुराणाञ्चयेत्ततः
गणिका नृत्तगीतं च वाद्यं पारशिवाः स्मृताः १६५

दशोपचारकर्तव्यं महेशस्य प्रदापयेत्
मध्याह्नपूजा कर्तव्या तिथीनामूर्ध्वतः क्रमात् १६६
विभवश्चेद्विशेषेण पुण्याहं पंचगव्यकम्
पञ्चामृतं च कर्तव्यं नवकं शान्तिहोमकम् १६७
द्वारादि चोत्सवान्तं च पूर्ववत्परिकल्पयेत्
धूपं दत्वा तदन्ते तु चण्डपूजां समाचरेत् १६८
नृत्तान्तं पूजयेत्पूर्वं पूर्वोक्तविधिना सह
सायाह्ने तु प्रकर्तव्यं सायरक्षां समारभेत् १६९
अर्धास्तमयमारभ्य एकद्वित्रि च नाडिका
नृत्तमूर्त्यग्रपार्श्वे तु सन्ध्या नृत्तं तु वादयेत् १७०
देवालये विशेषेण तत्काले ज्वलदीपयेत्
मण्टपस्यैशदिग्भागे दक्षिणे वाथ कारयेत् १७१
अग्रे वाथ प्रकर्तव्यं शालिभिः स्थण्डिलं कुरु
कृत्वा तु भूतपात्राणि संग्राह्यात्रैव विन्यसेत् १७२
शालिपिष्टमये वाथ दीपाधारं च कल्पयेत्
देशिकस्सकळीकृत्य पुण्याहं वाचयेत्ततः १७३
अग्निं हुत्वा विशेषेण दीपं संग्राह्य बुद्धिमान्
शालिभिः स्थण्डिलं कृत्वा तन्मध्ये नळिनं लिखेत् १७४
दीपाधारं न्यसेन्मध्ये महालक्ष्मीं प्रपूजयेत्
आदिबीजं समुच्चार्य एकपात्रे तिलं न्यसेत् १७५
सर्षपं चैकपात्रेऽस्मिन्महाबीजमनुस्मरन्
ऋजिकालवणान्यासा एकपात्रे तिलं न्यसेत् १७६
कार्पासबीजमेकस्मिन् बीजमुख्यमनुस्मरन्
एकपात्रे तु कर्तव्यं निम्बपत्रं च गुह्यकम् १७७
स्थापयेच्च महाशासु पूर्वभागे द्विपात्रकम्
तत्तन्मन्त्रेण संप्रोक्ष्य दीपं तत्रैव पूजयेत् १७८

मूललिंगं च संप्राप्य पाद्यमाचमनार्घ्यकम्
धूपदीपौ हृदा दत्वा नेत्रं चास्त्रमनुस्मरन् १७९
आरात्रिकं त्रिधाभ्राम्य शिखामन्त्रेण बुद्धिमान्
वादित्रलयसंयुक्तं गणिका नृत्तमाचरेत् १८०
द्रव्याण्यथ क्रमेणैव आवृत्यावृत्त्य लिंगके
भस्मानि दापयेच्छंभुं दिग्बन्धं चास्त्रमन्त्रतः १८१
दर्पणादीनि सर्वाणि दर्शयेत्तु यथाक्रमम्
तिलादिनिम्बपत्रं तु तदग्नौ निक्षिपेत्ततः १८२
मत्कन्या गणिका वापि ग्राहयेद्दीपपात्रकम्
सर्ववाद्यसमायुक्तं बलिं पीठाग्रके क्षिपेत् १८३
ध्वजदण्डस्य तत्पूर्वे रक्षाभूतबलिं ददेत्
सकळादिषु बेरेषु धूपदीपं ददेत्क्रमात् १८४
तद्भस्म सर्वसिद्धि स्यात् सायुज्यमिति निश्चितम्
सर्वभक्तश्च सर्वांश्च तद्भस्म दापयेत्ततः १८५
महेशाग्रे बलिं गेव वास्तु गीतं च वाद्यकम्
देवालयस्वरूपं यः कारयेच्छिवसन्निधौ १८६
दीपपूजावसाने तु च्छिवपूजां समारभेत्
पूर्ववद्वारमभ्यर्च्य लिंगशुद्धिं ततः कुरु १८७
आसनावरणादीनि पूर्ववत्परिकल्पयेत्
निवेद्यादीनि चण्डान्तं पूर्ववत्परिकल्पयेत् १८८
अर्धयामं च कर्तव्यं आचार्यस्सकळीकृतः
पुण्याहं तु पुनः कृत्वा पञ्चामृतं च कल्पयेत् १८९
फलानां तु रसस्थाने नवद्रव्यं च साध्येत्
द्वाररक्षान्समभ्यर्च्य स्नानं पूर्ववदाचरेत् १९०
शुद्धान्नं व्यंजनोपेतं पायसान्नमपूपकम्
ताम्बूलं मुखवासं च तत्तन्मन्त्रेण दापयेत् १९१

धूपदीपसमायुक्तं उपचारैर्विनाचरेत्
ताम्बूलं च निवेद्याथ शिवगायत्रिमुच्चरन् १९२
भोगांगयजनार्थं तु शिवं विज्ञाप्य देशिकः
उमया सह देवेशं भोगांगार्थं गमिष्यताम् १९३
पादुके च ततो रम्ये सुवर्णादिविनिर्मितम्
स्थलिकायां तु विन्यस्य तत्र देवं समर्चयेत् १९४
रंगे वा शिबिकायां वा आरोप्याच्छाद्य वस्त्रकम्
वस्त्रं शस्त्रं तथा पुष्पं गन्धादीन्संगृहेत्ततः १९५
गेयनृत्तसमायुक्तं शंखकाहळघोषकैः
वेदध्वनिसमायुक्तं गणिकादिभिरावृतम् १९६
ताळवृन्तं तथायुक्तं क्षुद्रगत्या समाविशेत्
पादप्रक्षाळनं कृत्वा आलयं तु प्रवेशयेत् १९७
भोगस्थाने न देशस्य देव्यनुग्रहकारणम्
मण्टपे शयनं कल्प्य कक्षोर्ध्वे पञ्चतल्पकम् १९८
अण्डजाद्यैस्तु संछाद्य ऊर्ध्वाधश्च नयेद्गुरुः
पयोदधिसमायुक्तं शुद्धान्नं व्यंजनैर्युतम् १९९
सर्वोपचारैस्संपूज्य सत्क्रमेणैव बुद्धिमान्
अथवापूपभक्ष्यादि दापयेत्तु विशेषतः २००
गौरीहस्तेन संयोज्य ताम्बूलं दापयेत्ततः
धूपदीपादिना तोष्य भस्मानि दापयेत्ततः २०१
पुष्पांजलिं ततः कृत्वा क्षिपेद्यवनिकां ततः
तदन्ते क्षेत्रपालस्य पूजनं सम्यगाचरेत् २०२
द्वारपार्श्वे तु कर्तव्यमानन्दं मण्डभैरवम्
वारुणे पूर्वदिग्भागे अर्चयित्वा स्वनामतः २०३
क्षेत्रपालं सुसंस्नाप्य पुष्पैरभ्यर्च्य मूलतः
आसनं मूर्तिमूलं च तद्बीजं सहितं तु यत् २०४

तत्तद्धृदादिमन्त्रेण न्यासं कृत्वा तु मन्त्रतः
पूर्वादीशानपर्यन्तं मण्टपाद्यं मुहूर्तयत् २०५
अण्डमुण्डं च विकृतं प्रहोदाकाहलोमवत्
कपालं नागमेवं च क्रोधमित्यभिधीयते २०६
इत्येतैरेव कर्तव्यं नैवेद्यं धूपदीपकम्
घोषयेत्सर्ववाद्यांश्च प्रार्थयित्वा विचक्षणः २०७
तस्मात्सर्वप्रयत्नेन इमां पूजां समर्पयेत्
इत्येवमंशुमान्तन्त्रे नित्यपूजाविधिक्रमः २०८
हरिः ओम् शुभमस्तु

## नित्याग्निविधिः

नित्याग्नियजनं वक्ष्ये श्रूयतां रविसत्तम
पचनालये तथा देवस्याग्नेये वा विशेषतः १
वृत्तं वा चतुरश्रं वा कुण्डमेकं तथैव च
तस्यालये विशेषेण ईशे योनिनिभं कुरु २
प्राक्सूत्रं च न्यसेत्पूर्वं मध्यमं दक्षिणोत्तरे
पश्चात्पश्चिमपूर्वं तु यावत्कुण्डस्य विस्तरः ३
हस्तं वा रत्निमात्रं वा मुष्टिमात्रमथापि वा
आचार्यहस्तमात्रेण कुर्यात्कुण्डस्य विस्तरम् ४
कुण्डविस्तारमानेन चतुर्विंशाङ्गुलं भवेत्
अब्धिसंख्या च निम्नं तु खण्डं व्योमांगुलं तथा ५
मेखला शक्तिसंख्या च योन्यां संयममेव च
विस्तारं धातुसंख्या च नाभिरष्टाङ्गुलं भवेत् ६
अंगमानमिदं प्रोक्तं नित्यकुण्डं विशेषतः
सद्येन शोधयेत्कुण्डं क्षाळनं वाममन्त्रतः ७
शोषणं घोरमन्त्रेण पचनं पुरुषेण तु

प्रोक्षणं त्वीशमन्त्रेण हृदयेन समर्चयेत् ८
शरावेणाग्निमादाय क्रव्यादांशं परित्यजेत्
अर्घ्यं शिरसि मन्त्रेण पुष्पेणाभ्यर्च्य देशिकः ९
कवचेनाग्निमादाय मूलेनैव प्रतिष्ठितम्
तस्य मध्ये समावाह्य शिवं सपरिवारकम् १०
हृन्मन्त्रेण समभ्यर्च्य पाद्यमाचमनं ददेत्
अर्घ्यं गन्धं च पुष्पं च धूपं दत्वा सुमूलतः ११
दर्भेणैव परिस्तीर्य अधिदेवादिमन्त्रकैः
इन्धनादिचतुर्द्रव्यं नित्यसन्ध्यादि होमकम् १२
इन्धनं हृदयेनैव आज्यं नेत्रेण मन्त्रवित्
समिधमीशमन्त्रेण चरुं तत्पुरुषेण तु १३
अष्टादशाहुतीर्युत्वा विकारं दशसख्यया
गन्धपुष्पैस्समभ्यर्च्य कुर्याद्वै परिषेचनम् १४
कुण्डस्य नैर्ऋते देशे अष्टमूर्तिबलिं क्षिपेत्
परिस्तरणमानीय अग्नौ निक्षिप्य देशिकः १५
तद्भस्म संगृहीत्वा तु ललाटे चाङ्गुलीं न्यसेत्
निष्ठुरेणाग्निमादाय मूललिंगे समर्चयेत् १६
नित्याग्नियजनं प्रोक्तं नित्योत्सवविधिं शृणु

इत्यंशुमान्तन्त्रे नित्याग्निविधिपटलः

Reference:
Paper transcripts of manuscripts of the French Institute of Pondicherry from the Muktabodha on-line digital library, titled Aṁśumadāgama, Aṁśumānāgama and Aṁśumattantra, Manuscript numbers T0003, T0004, T0005, T0136, T0273, T0745a, and T0889. Data entry, formatting and proofing by Peter Freund.